१३ १४ १५ ब्रुवतोध्यापकस्यकथांकथयतोमुखात्श्रुतम् १६ श्रुतश्चायमितिहासः कृष्णस्यव्यासस्य नृगकथांकथयतोवासुदेवस्यवामुखात् श्रुतोयमर्थः १७
१८ आशावंध्याशा १९ २० अक्षस्यपित्र्यर्थसुदिष्टंदानंभुंक्तेउत्सक्षस्यभुगग्निः २१ अगदसंकाशःचिकित्सकतुल्यः २२ शांतिरिष्टेन शांत्याहितेनक्षेमेण
शिष्टंक्षेमेइतिमेदिनी २३ २४ २५ २६ इतःअस्मिन्लोके ब्राह्मणएवदानपात्रमितिप्रयत्नःकार्यः २७ तीर्थमपिब्राह्मणएवेत्याहमहर्षिरिति

तत्रऽहंपापकींयोनिमापन्नोस्मिप्लवंगम तस्मादेवविधंभक्ष्यंभक्षयामिबुभुक्षितः १३ भीष्मउवाच शृगालोवानरंप्राहपु
नरेववनरोत्तम किंत्वयापातकंकर्मकृतंयेनासिवानरः १४ वानरउवाच सदाचारफलाहारोब्राह्मणानांप्लवंगमः तस्मान्न
ब्राह्मणस्वंतुहर्तव्यंविदुषासदा समंविवादोमोक्तव्योदातव्यंचप्रतिश्रुतम् १५ भीष्मउवाच इत्येतद्ब्रुवतोराजन्ब्राह्मणस्य
मयाश्रुतम् कथांकथयतःपुण्यांधर्मज्ञस्यपुरातनीम् १६ श्रुतश्चापिमयाभूयःकृष्णस्यापिविशांपते कथांकथयतःपूर्वंब्राह्मण-
प्रतिमंडवं १७ नहर्तव्यंविप्रधनंक्षन्तव्यंतेषुनित्यशः बालाश्चनावमन्तव्यादरिद्राःकृपणाअपि १८ एवमेवचमानित्यंब्राह्म-
णाःसंदिशन्तिवै प्रतिश्रुत्यभवेद्देयंनाशाकार्याद्विजोत्तमे १९ ब्राह्मणोह्याशयापूर्वंकृतयापृथिवीपते सुसमिद्धोयथादीप्तःपावक
स्तद्विधःस्मृतः २० यंनिरीक्षेतसंक्रुद्धआशयापूर्वजातया प्रदहेच्चहितंराजन्कक्षमक्षय्यभुग्यथा २१ सएवहियदातुष्टोवचसा
प्रतिनंदति भवत्यगदसंकाशोविषयेतस्यभारत २२ पुत्रान्पौत्रान्पशूंश्चैवबांधवान्सचिवांस्तथा पुरंजनपदंचैवशांतिरिष्टेन
पोषयेत् २३ एतद्धिपरमंतेजोब्राह्मणस्येहदृश्यते सहस्रकिरणस्येवसवितुर्धरणीतले २४ तस्माद्दातव्यमेवेहप्रतिश्रुत्ययुधि
ष्ठिर यदीच्छेच्छोभनांजातिंप्राप्तुंभरतसत्तम २५ ब्राह्मणस्यहिदत्तेनध्रुवंस्वर्गोह्यनुत्तमः शक्यःप्राप्तुंविशेषेणदानंहिमहतीक्रि
या २६ इतोदत्तेनजीवन्तिदेवताःपितरस्तथा तस्माद्दानानिदेयानिब्राह्मणेभ्योविजानता २७ महद्धिभरतश्रेष्ठब्राह्मणस्तीर्थ
मुच्यते वेलायांनतुकस्यांचिद्गच्छेद्धिप्रोत्यपूजितः २८ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेशृगालवानरसंवादेन
वमोऽध्यायः ९ युधिष्ठिरउवाच मित्रसौहार्दयोगेनउपदेशंकरोतियः जात्याधमस्यराजर्षेदोषस्तस्यभवेन्नवा १ एतदि
च्छामितत्त्वेनव्याख्यातंवैपितामह सूक्ष्मागतिर्हिधर्मस्ययत्रमुह्यन्तिमानवाः २ भीष्मउवाच अत्रतेवर्णयिष्यामिशृणुराजन्यथा
क्रमम् ऋषीणांवदतांपूर्वंश्रुतमासीद्यथापुरा ३

२८ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायांनवमोऽध्यायः ९ मित्रसौहार्दस्य
ध्यायेनन्नीचायधर्मरहस्यंनदद्यादित्युक्तंमित्रंउपकारमपेक्ष्यउपकर्त्ता सुहृत्तुउपकारमनपेक्ष्योपकर्त्ता लोभात्कृपयावेत्यर्थः १ २ ३ ४ ५

उपाध्यायस्यउपदेशकर्तुः भाष्येऽनशूद्रायमतिंदद्यादित्यादिशास्त्रेण ४ दुरुक्तंदुःखस्थंनीचंप्रतिउक्तंवचनं ५ ६ ७ व्रतिभिर्ब्रह्मचारिभिः नागसे-
वनिप्रस्थैः ८ ९ यतिभिः सन्यासिभिः १० दयान्वितः सर्वभूताभयदानेनप्रव्रज्यांकृतवानित्यर्थः ११ दीक्षांनियमं १२ तपस्येतपः कर्मण्ये
१३ वक्तुंअधिगंतुंव्रजगंतावित्यस्यरूपम् प्रव्राजयितुंविधिवत्स्वोचितंकर्मत्याजयितुम् १४ १५ लिंगंसन्यासिचिन्हं सेवकस्यतवप्राव्राज्यान



उपदेशोनकर्त्तव्योजातिहीनस्यकस्यचित् उपदेशेमहान्दोषउपाध्यायस्यभाष्यते ४ निदर्शनमिदंराजन्शृणुमेभरतर्षभ दुरुक्त
वचनेराजन्यथापूर्वंयुधिष्ठिर ५ ब्रह्माश्रमपदेवृत्तंपार्श्वेहिमवतःशुभे तत्राश्रमपदंपुण्यंनानावृक्षगणायुतम् ६ नानागुल्मल
ताकीर्णंमृगद्विजनिषेवितम् सिद्धचारणसंयुक्तंरम्यंपुष्पितकाननम् ७ व्रतिभिर्बहुभिःकीर्णंतापसैरुपसेवितम् ब्राह्मणैश्चम-
हाभागैःसूर्यज्वलनसन्निभैः ८ नियमव्रतसंपन्नैःसमाकीर्णंतपस्विभिः दीक्षितैर्भरतश्रेष्ठयताहारैःकृतात्मभिः ९ तपोध्यय
नघोषैश्चनादितंभरतर्षभ वालखिल्यैश्चबहुभिर्यतिभिश्चनिषेवितम् १० तत्रकश्चित्समुत्साहंकृत्वाशूद्रोदयान्वितः आगतो-
ह्याश्रमपदंपूजितश्चतपस्विभिः ११ तांस्तुदृष्ट्वामुनिगणान्देवकल्पान्महौजसः विविधावहतोदीक्षासंप्रहृष्यतभारत १२ अथा
स्यबुद्धिरभवत्तपस्येभरतर्षभ ततोऽब्रवीत्कुलपतिंपादौसंगृह्यभारत १३ भवत्प्रसादादिच्छामिधर्मंवक्तुंद्विजर्षभ तन्मांत्वंभग
वन्वक्तुंप्रव्राजयितुमर्हसि १४ वर्णावरोहंभगवन्शूद्रोजात्यास्मिसत्तम शुश्रूषांकर्तुमिच्छामिप्रपन्नायप्रसीदमे १५ कुलप-
तिरुवाच न शक्यमिहशूद्रेणलिंगमाश्रित्यवर्त्तितुम् आस्यतांयदितेबुद्धिःशुश्रूषानिरतोभव १६ शुश्रूषयापरांल्लोकानवाप्स्य
सिनसंशयः १७ भीष्मउवाच एवमुक्तस्तुमुनिनासशूद्रोचिंतयन्नृप कथमत्रमयाकार्यंश्रद्धाधर्मपराचमे १८ विज्ञातमेवंभ
वतुकरिष्येप्रियमात्मनः गत्वाश्रमपदात्दूरमुटजंकृतवांस्तुसः १९ तत्रवेदींचभूमिंचदेवतायतनानिच निवेश्यभरतश्रेष्ठनियमस्थो-
भवन्मुनिः २० अभिषेकांश्चनियमान्देवतायतनेषुच बलिंचकृत्वाहुत्वाचदेवतांचाप्यपूजयत् २१ संकल्पनियमोपेतःफलाहारो
जितेंद्रियः नित्यंसन्निहिताभिस्तुओषधीभिःफलैस्तथा २२ अतिथीन्पूजयामासयथावत्समुपागतान् एवंहिसुमहान्कालोव्य
त्यक्रामततस्यवै २३ अथास्यमुनिरागच्छत्संगत्यावैतमाश्रमम् संपूज्यस्वागतेनर्षिर्विधिवत्समतोषयत् २४

धिकारान्नयुक्तम् १६ १७ १८ आत्मनःप्रियंविक्षेपकस्यशुश्रूषाख्यस्यस्वधर्मस्यत्यागम् लिंगधारणानधिकारेपित्यागमात्रेसर्वस्याधिकारान्
उटजंपर्णशालाम् १९ वेदींपूजार्थं भूमिंशयनाद्यर्थं २० अभिषेकान्त्रिसंध्यस्नानानि २१ संकल्पस्यनियमोनिग्रहः चित्तवृत्तिनिरोधइतियावत्तेनजपे
नः २२ २३ २४

२५ २६ २७ २८ २९ बृसीं चरमशीर्षिकाम् आसनं कूर्चपश्चिमाग्रम् ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ वेदेऋ

अनुकूलाः कथाः कृत्वा यथागतमपृच्छत ऋषिः परमतेजस्वी धर्मात्मा संशितव्रतः २५ एवं सुबहुशस्तस्य शूद्रस्य भरतर्षभ सोऽगच्छ-
दाश्रमम् ऋषिः शूद्रं द्रष्टुं नरर्षभ २६ अथ तं तापसं शूद्रः सोऽब्रवीद्भरतर्षभ पितृकार्यं करिष्यामि तत्र मेऽनुग्रहं कुरु २७ बाढमित्येव तं वि-
प्र उवाच भरतर्षभ शुचिर्भूत्वा स शूद्रस्तु तस्यर्षेः पाद्यमानयत् २८ अथ दर्भांश्च वन्यांश्च ओषधीर्भरतर्षभ पवित्रमासनं चैव बृसीं च
समुपानयत् २९ अथ दक्षिणमावृत्य बृसीं चरमशीर्षिकाम् कृतामन्यायतो दृष्ट्वा ततः शूद्रमृषिरब्रवीत् ३० कुरुष्वैतां पूर्वशीर्षां भवा-
श्चोदङ्मुखः शुचिः स च तत्कृतवान् शूद्रः सर्वं यदृषिरब्रवीत् ३१ यथोपदिष्टं मेधावी दर्भार्घ्यादि यथातथम् हव्यकव्यविधिं कृत्स्न-
मुक्तं तेन तपस्विना ३२ ऋषिणा पितृकार्ये च स च धर्मपथे स्थितः पितृकार्ये कृते चापि विसृष्टः स जगाम ह ३३ अथ दीर्घस्य कालस्य-
स्य स तप्यन् शूद्रतापसः वने पञ्चत्वमगमत् सुकृतेन च तेन वै ३४ अजायत महाराजवंशे स च महाद्युतिः ३५ तथैव स ऋषिस्ता-
त कालधर्ममवाप ह ३६ पुरोहितकुले विप्र आजातो भरतर्षभ एवं तौ तत्र संभूतावुभौ शूद्रमुनी तदा ३७ क्रमेण वर्धितौ चापि
विद्यासु कुशलावुभौ अथर्ववेदे वेदे च बभूवर्षिः सुनिष्ठितः कल्पप्रयोगे चोत्पन्ने ज्योतिषे च परं गतः ३८ सांख्ये चैव परा प्रीति-
स्तस्य चैवं व्यवर्धत पितर्युपरते चापि कृतशौचस्तु पार्थिवः ३९ अभिषिक्तः प्रकृतिभी राजपुत्रः स पार्थिवः अभिषिक्तेन स ऋषिर-
भिषिक्तः पुरोहितः ४० स तं पुरोधाय सुखमवसद्भरतर्षभ राज्यं शशास धर्मेण प्रजाश्च परिपालयन् ४१ पुण्याहवाचने नित्यं
धर्मकार्येषु चासकृत् उत्स्मयन् प्राहसच्चापि दृष्ट्वा राजा पुरोहितम् ४२ एवं स बहुशो राजन् पुरोधसमुपाहसत् लक्षयित्वा पुरो-
धास्तु बहुशस्तं नराधिपम् ४३ उत्स्मयन्तं च सततं दृष्ट्वा सोऽमन्युमाविशत् अथ शून्ये पुरोधास्तु सह राज्ञा समागतः ४४ कथाभि-
रनुकूलाभी राजानं चाभ्यरामयत् ततोऽब्रवीन्नरेन्द्रं स पुरोधा भरतर्षभ ४५ वरमिच्छाम्यहं त्वेकं त्वया दत्तं महाद्युते ४६ राजो-
वाच वराणां ते शतं दद्यां किं बतैकं द्विजोत्तम स्नेहाच्च बहुमानाच्च नास्त्यदेयं हि मे तव ४७ पुरोहित उवाच एकं वै वरमिच्छा-
मि यदि तुष्टोऽसि पार्थिव प्रतिजानीहि तावत्त्वं सत्यं यद्वद नानृतम् ४८ भीष्म उवाच बाढमित्येव तं राजा प्रत्युवाच युधिष्ठिर
यदि ज्ञास्यामि वक्ष्यामि अजानन्न तु संवदे ४९ पुरोहित उवाच पुण्याहवाचने नित्यं धर्मकृत्येषु चासकृत् शान्तिहोमेषु च सदा किं त्वं
हससि वीक्ष्य माम् ५०

वेदादित्रये कल्पप्रयोगो सूत्रोक्तयज्ञप्रयोगे ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५०

५१ ५२ ५३ ५४ ५५ ५६ ५७ मत्कृतस्यमत्संस्कृतस्य ५८ ५९ विपर्ययेणशूद्रोप्यहंजातिस्मरोजातःमुनिरपित्वंपुरोहितोजातइति
वैपरीत्येन मन्युर्दैन्यम् ६० भवेभवनिमित्तं ६१ ६२ ६३ ६४ ६५ ६६ ६७ ६८ ६९ ७० ७१ ७२ सत्यानृ

सव्रीडइवेभृशंतिष्ठिमनोमेहसतात्वया कामयाशापितोराजन्नान्यथावक्तुमर्हसि ५१ सुव्यक्तंकारणंत्वत्रनतेहास्यमकारणम् कौ
तूहलंमेसुभृशंतत्त्वेनकथयस्वमे ५२ राजोवाच एवमुक्तेत्वयाविप्रयदवाच्यंभवेदपि अवश्यमेववक्तव्यंशृणुष्वैकमनाद्वि-
ज ५३ पूर्वदेहेयथावृत्तंतन्निबोधद्विजोत्तम जातिंस्मराम्यहंब्रह्मन्नवधानेनमेशृणु ५४ शूद्रोहमभवंपूर्वंतपस्वीभृशसंयु
तः ऋषिरुग्रतपास्त्वंचतदाभूर्द्विजसत्तम ५५ प्रीयताहितदाब्रह्मन्ममानुग्रहबुद्धिना पितृकार्येत्वयापूर्वमुपदेशःकृतोनघ ५६
बृस्यांदर्भेषुहव्येचकव्येचमुनिसत्तम एतेनकर्मदोषेणपुरोधास्त्वमजायथाः ५७ अहंराजाचविप्रेंद्रपश्यकालस्यपर्ययम् म
त्कृतस्योपदेशस्यत्वयावाप्तमिदंफलम् ५८ एतस्मात्कारणाद्ब्रह्मन्प्रहसेत्वांद्विजोत्तम नत्वांपरिभवन्ब्रह्मन्प्रहसामिगुरुर्भवान् ५९ वि
पर्ययेणमेमन्युस्तेनसंतप्यतेमनः जातिंस्मराम्यहंतुभ्यमतस्त्वांप्रहसामिवै ६० एवंतवोग्रंहितपउपदेशेननाशितम् पुरोहितत्वमु-
त्सृज्ययतस्वत्वंपुनर्भवे ६१ इतस्त्वमधमामन्यांमायोनिंप्राप्स्यसेद्विज गृह्यतांद्रविणंविप्रपूतात्माभवसत्तम ६२ भीष्मउवाच

ततोविसृष्टोराज्ञातुविप्रोदानान्यनेकशः ब्राह्मणेभ्योददौवित्तंभूमिग्रामांश्चसर्वशः ६३ कृच्छ्राणिचीर्त्वाचततोयथोक्तानिद्वि-
जोत्तमैः तीर्थानिचापिगत्वावैदानानिविविधानिच ६४ दत्वागाश्चैवविप्रेभ्यःपूतात्माभवदात्मवान् तमेवचाश्रमंगत्वाचचारविपुलं
तपः ६५ ततःसिद्धिंपरांप्राप्तोब्राह्मणोराजसत्तम संमतश्चाभवत्तेषामाश्रमेतन्निवासिनाम् ६६ एवंप्राप्तोमहत्कृच्छ्रमृषिःसन्नृप
सत्तम ब्राह्मणेननवक्तव्यंतस्माद्वर्णावरेजने ६७ ब्राह्मणाःक्षत्रियावैश्यास्त्रयोवर्णाद्विजातयः एतेषुकथयन्राजन्ब्राह्मणोनप्रदुष्य
ति ६८ तस्मात्सद्भिर्नवक्तव्यंकस्यचित्किंचिदग्रतः सूक्ष्मागतिर्हिधर्मस्यदुर्ज्ञेयात्वकृतात्मभिः ६९ तस्मान्मौनेनमुनयोदीक्षांकुर्वंति
चादृताः दुरुक्तस्यभयाद्राजन्नाभाषंतेचकिंचन ७० धार्मिकागुणसंपन्नाःसत्यार्जवसमन्विताः दुरुक्तवाचाभिहितैःप्राप्नुवंतीहदु
ष्कृतम् ७१ उपदेशोनकर्तव्यःकदाचिदपिकस्यचित् उपदेशाद्धितत्पापंब्राह्मणःसमवाप्नुयात् ७२ विमृश्यतस्मात्प्राज्ञेनकर्तव्यं
धर्ममिच्छता सत्यानृतेनहिकृतउपदेशोहिनस्तिहि ७३ वक्तव्यमिहपृष्टेनविनिश्चित्यविनिश्चयम् सचोपदेशःकर्तव्योयेनधर्मम-
वाप्नुयात् ७४

तेन वाणिज्येनधनलोभेनेत्यर्थः सत्यानृतंतुवाणिज्यमितिस्मृतिः ७३ विनिश्चयंनिश्चेतव्यम् ७४ ७५ ७६ ७७ ७८

७५ इतिश्रीमहाभारते आनुशासनिके पर्वणि टीकायां दशमोऽध्यायः १० ॥ १ कीदृशेइति श्रीमानेव ददातीति श्रीकरान्योगान् कथयितुमध्यायः श्रीः रू-
पौदार्यादिशोभा तद्युता पद्माधनसमृद्धिः श्रीः पद्मेत्युच्यते १ पर्यपृच्छत श्रियमित्यपकृष्यते २ ३ उपसेवसे गजतुरगादिरूपेण संतिष्ठसे धैर्यौदार्यसौं-
दर्यशौर्यादिरूपेण पुरुषे वससि ४ देव्या रुक्मिण्या ५ प्रगल्भे वाग्मिनि दक्षे अनलसे देवपरे देवाराधननिष्ठे ६ नृशंसवर्णे निष्ठुराक्षरभाषिणि असू-

एतत्ते सर्वमाख्यातमुपदेशकृते मया महान् क्लेशो हि भवति तस्मान्नोपदिशेदिह ७५ इतिश्रीमहाभारते आनुशासनिके पर्वणि दानधर्मे
भृङ्गमुनिसंवादे दशमोऽध्यायः १० युधिष्ठिरउवाच कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह
१ भीष्मउवाच अत्र ते वर्णयिष्यामि यथावृत्तं यथाश्रुतम् रुक्मिणी देवकीपुत्रसन्निधौ पर्यपृच्छत २ नारायणस्याङ्कगतां ज्वल-
न्तीं दृष्ट्वा श्रियं पद्मसमानवर्णाम् कौतूहलाद्विस्मितचारुनेत्रा पप्रच्छ मातां मकरध्वजस्य ३ कानीह भूतान्युपसेवसे त्वं संतिष्ठसे कानि
वसेव सेत्वम् तानि त्रिलोकेश्वरभूतकान्ते तत्त्वेन मे ब्रूहि महर्षिकल्पे ४ एवं तदा श्रीरभिभाष्यमाणा देव्या समक्षं गरुडध्वजस्य उवाच
वाक्यं मधुराभिधानं मनोहरं चन्द्रमुखी प्रसन्ना ५ श्रीरुवाच वसामि नित्यं सुभगे प्रगल्भे दक्षे नरे कर्मणि वर्तमाने अक्रोधने दे-
वपरे कृतज्ञे जितेन्द्रिये नित्यमुदीर्णसत्वे ६ नाकर्मशीले पुरुषे वसामि न नास्तिके सांकरिके कृतघ्ने न भिन्नवृत्ते न नृशंसवर्णे न चापि चौ-
रे न गुरुष्वसूये ७ ये चाल्पतेजोबलसत्त्वमानाः क्लिश्यन्ति कुप्यन्ति च यत्र तत्र न चैव तिष्ठामि तथाविधेषु नरेषु संगुप्तमनोरथेषु ८ य-
श्चात्मनि प्रार्थयते न किंचिद्यश्च स्वभावोपहतान्तरात्मा तेष्वल्पसंतोषपरेषु नित्यं नरेषु नाहं निवसामि सम्यक् ९ स्वधर्मशीलेषु च धर्मवित्सु
वृद्धोपसेवानिरते च दान्ते कृतात्मनि क्षान्तिपरे समर्थे क्षान्तासु दान्तासु तथाबलासु १० सत्यस्वभावार्जवसंयुतासु वसामि देवद्विजपूजिका-
सु प्रकीर्णभाण्डामनवेक्ष्यकारिणीं सदा च भर्तुः प्रतिकूलवादिनीम् ११ परस्य वेश्माभिरतामलज्जामेवंविधां तां परिवर्जयामि पापामचो-
क्षामवलेहिनीं च व्यपेतधैर्यां कलहप्रियां च १२ निद्राभिभूतां सततं शयानामेवंविधां तां परिवर्जयामि सत्यासु नित्यं प्रियदर्शनासु सौभा-
ग्ययुक्तासु गुणान्वितासु १३ वसामि नारीषु पतिव्रतासु कल्याणशीलासु विभूषितासु यानेषु कन्यासु विभूषणेषु यज्ञेषु मेघेषु च वृष्टि-
मत्सु १४ वसामि फुल्लासु च पद्मिनीषु नक्षत्रवीथीषु च शारदीषु गजेषु गोष्ठेषु तथासनेषु सरःसु फुल्लोत्पलपङ्कजेषु १५

येअसूयावति ७
तेजः शौर्यं सत्त्वं बुद्धिः यत्र तत्र विशिष्टपुरुषे संगुप्तमनोरथेषु अन्यतः प्राप्तं अन्यत् दर्शयन्ति तादृशेषु ८ स्वभावेन्यादे सौढ्योपहतचित्त इत्यर्थः ९ स्वधर्मेति-
सार्द्धश्लोकः १० ११ पापा निर्दया अचोक्षा अशुचिः अवलेहिनी नाम सृक्किणी लेढि इति हीना सदाकुरूपा इत्यर्थः १२ १३ यानादिषु रमणीयेषु सर्वेषु वसामीत्यर्थः १४
१५

१६ १७ यस्मिन्नितिलक्ष्मीरामुमुपायाएतदित्यर्थः १८ १९ भावेनआदरेण शरीरभूताशरीरवती २० नाहमितिनारायणादन्यत्रधर्मादिवृद्धिरूपेणैव
वसामिनशरीरेणेत्यर्थः २१ इतिश्रीमहाभारतेअनुशासनपर्वणिटीकायांएकादशोऽध्यायः ११ ७ स्त्रीपुंसयोरिति पूर्वाध्यायांतेसंवर्द्धतेधर्मयशोर्थका
मैरितिकामसुखवृद्धिरपिलक्ष्मीवत्त्वस्त्युक्तंतत्रस्त्रीपुंसमर्थेक्षयाकामसुखवृद्धिरस्तीतिलक्ष्मीकामेनकामिन्यःप्रीतिमत्योलक्ष्मीबुद्ध्यापूजनीयाइत्यध्याय

नदीषुहंसस्वननादितासुक्रौंचावघुष्टस्वरशोभितासु विकीर्णकूलद्रुमराजितासुतपस्विसिद्धद्विजसेवितासु १६ वसामिनित्यंसुबहूदका
सुसिंहैर्गजैश्चाकुलितोदकासु मत्तेगजेगोवृषभेनरेंद्रेसिंहासनेसत्पुरुषेषुनित्यम् १७ यस्मिन्जनोहव्यभुजंजुहोतिगोब्राह्मणंचार्च
तिदेवताश्च कालेचपुष्पैर्बलयःक्रियंतेतस्मिन्गृहेनित्यमुपैमिवासम् १८ स्वाध्यायनित्येषुसदाद्विजेषुक्षत्रेचधर्माभिरतेसदैव वैश्ये
चकृष्याभिरतेवसामिशूद्रेचशुश्रूषणनित्ययुक्ते १९ नारायणेत्वेकमनावसामिसर्वेणभावेनशरीरभूता तस्मिन्हिधर्मःसुमहान्निविष्टो
ब्रह्मण्यताचात्रतथाप्रियत्वं २० नाहंशरीरेणवसामिदेविनैवंमयाशक्यमिहाभिधातुम् भावेनयस्मिन्निवसामिपुंसिसंवर्द्धतेधर्मय-
शोर्थकामैः २१ इतिश्रीमहाभारतेअनुशासनपर्वणिदानधर्मेश्रीरुक्मिणीसंवादेएकादशोऽध्यायः ११ युधिष्ठिरउवाच स्त्री
पुंसयोःसंप्रयोगेस्पर्शःकस्याधिकोभवेत् एतस्मिन्संशयेराजन्यथावद्वक्तुमर्हसि १ भीष्मउवाच अत्राप्युदाहरंतीममितिहा-
सपुरातनम् भंगास्वनेनशक्रस्ययथावैरमभूत्पुरा २ पुराभंगास्वनोनामराजर्षिरतिधार्मिकः अपुत्रःपुरुषव्याघ्रपुत्रार्थंयज्ञमाह
रत् ३ अग्निष्टुतंसराजर्षिरिंद्रद्विष्टंमहाबलः प्रायश्चित्तेषुमर्त्यानांपुत्रकामेषुचेष्यते ४ इंद्रोज्ञात्वातुतंयज्ञंमहाभागःसुरेश्वरः अं
तरंतस्यराजर्षेरन्विच्छन्नियतात्मनः ५ नचैवास्यांतरंराजन्सददर्शमहात्मनः कस्यचित्त्वथकालस्यमृगयांगतवान्नृपः ६ इदमंत
रमित्येवशक्रोनृपममोहयत् एकाश्वेनचराजर्षिर्भ्रांतइंद्रेणमोहितः ७ नदिशोविंदतन्नृपःक्षुत्पिपासार्दितस्तदा इतश्चेतश्चवैराजन्
श्रमतृष्णान्वितोनृप ८ सरोपश्यत्सुरुचिरंपूर्णंपरमवारिणा सोवगाह्यसरस्तातपाययामासवाजिनम् ९ अथपीतोदकंसोश्वं-
वृक्षेबध्वानृपोत्तमः अवगाह्यततस्नातस्तत्रस्त्रीत्वमवाप्तवान् १० आत्मानंस्त्रीकृतंदृष्ट्वाव्रीडितोनृपसत्तमः चिंतानुगतसर्वात्मा
व्याकुलेंद्रियचेतनः ११ आरोहिष्येकथंत्वश्वंकथंयास्यामिवैपुरम् इष्टेनाग्निष्टुताचापिपुत्राणांशतमौरसम् १२ जातंमहाबलानां
मेतान्प्रवक्ष्यामिकिंत्वहम् दारेषुचात्मकीयेषुपौरजानपदेषुच १३

तात्पर्यम् स्पर्शःवैषयिकंसुखं १ २ ३ वैरमूलमाहाग्निष्टुतमिति त्रिगुणतोग्नि १८
ष्टोमोऽग्निष्टुत् तत्रत्याग्निरेवस्तूयतेसचपुत्रंददातिदाशुषइतिमंत्रवर्णात्पुत्रप्रदःक्रतुः सचेंद्रद्विष्टस्तत्रेंद्रस्यप्राधान्याभावात् ४ यज्ञंकृतमितिशेषः ५ ६ ७
८ ९ १० ११ १२ १३

मृदुत्वादयः स्त्रीगुणा आगताः १४ कर्कशत्वादयः पुरुषगुणा नष्टाः केन निमित्तेन मे मम स्त्रीत्वमभवदिति संबंधः १५ १६ स्त्रीकृतः इंद्रेण स्त्रीत्वं प्रापितः १७
१८ १९ २० २१ २२ प्रत्यपद्यत भर्तृत्वेन स्वीकृतवती २३ २४ २५ २६ स्त्रीत्वदानेन द्विगुणितपुत्रप्राप्तिरूप उपकार एव जातो न-

मृदुत्वं च तनुत्वं च विक्लवत्वं तथैव च स्त्रीगुणा ऋषिभिः प्रोक्ता धर्मतत्त्वार्थदर्शिभिः १४ व्यायामे कर्कशत्वं च वीर्यं च पुरुषे गुणाः पौरुषं वि-
प्रनष्टं वै स्त्रीत्वं केनापि मेऽभवत् १५ स्त्रीभावात्पुनरश्वं तं कथमारोढुमुत्सहे महता त्वथ यत्नेन आरुह्याश्वं नराधिपः १६ पुनराया-
त्पुरं तात स्त्रीकृतो नृपसत्तमः पुत्रा दाराश्च भृत्याश्च पौरजानपदाश्च ते १७ किं न्विदं त्विति विज्ञाय विस्मयं परमं गताः अथोवाच सरा-
जर्षिः स्त्रीभूतो वदतां वरः १८ मृगयामस्मि निर्यातो बलैः परिवृतो दृढम् उद्भ्रान्तः प्राविशं घोरामटवीं दैवचोदितः १९ अटव्यां च सु-
घोरायां तृष्णार्तो नष्टचेतनः सरः सुरुचिरप्रख्यमपश्यं पक्षिभिर्वृतम् २० तत्रावगाढः स्त्रीभूतो दैवेनाहं कृतः पुरा नामगोत्राणि
चाभाष्य दाराणां मन्त्रिणां तथा २१ आह पुत्रांस्ततः सोऽथ स्त्रीभूतः पार्थिवोत्तमः संप्रीत्या भुज्यतां राज्यं वनं यास्यामि पुत्रकाः २२ ए-
वमुक्त्वा पुत्रशतं वनमेव जगाम ह गत्वा चैवाश्रमं सा तु तापसं प्रत्यपद्यत २३ तापसेनास्य पुत्राणामाश्रमेष्वभवच्छतम् अथ सादाय
तान्सर्वान्पूर्वपुत्रानभाषत २४ पुरुषत्वे सुता यूयं स्त्रीत्वे चेमे शतं सुताः एकत्र भुज्यतां राज्यं भ्रातृभावेन पुत्रकाः २५ सहिता भ्रात-
रस्ते तु राज्यं बुभुजिरे तदा तान्दृष्ट्वा भ्रातृभावेन भुञ्जानान्राज्यमुत्तमम् २६ चिन्तयामास देवेन्द्रो मन्युनाथ परिप्लुतः उपकारोऽस्य रा-
जर्षेः कृतो नापकृतं मया २७ ततो ब्राह्मणरूपेण देवराजः शतक्रतुः भेदयामास तान्गत्वा नगरं वै नृपात्मजान् २८ भ्रातॄणां नास्ति
सौभ्रात्रं येऽप्येकस्य पितुः सुताः राज्यहेतोर्विवदिताः कश्यपस्य सुरासुराः २९ यूयं भङ्गास्वनापत्यास्तापसस्येतरे सुताः कश्यपस्य-
सुराश्चैव असुराश्च सुतास्तथा ३० युष्माकं पैत्रिकं राज्यं भुज्यते तापसात्मजैः इन्द्रेण भेदितास्ते तु युद्धेऽन्योन्यमपातयन् ३१ तच्छ्रुत्वा
तापसी चापि संतप्ता प्ररुरोद ह ब्राह्मणच्छद्मनाभ्येत्य तामिन्द्रोऽथान्वपृच्छत ३२ केन दुःखेन संतप्ता रोदिषि त्वं वरानने ब्राह्मणं तत-
तो दृष्ट्वा सा स्त्री करुणमब्रवीत् ३३ पुत्राणां द्वे शते ब्रह्मन्कालेन विनिपातिते अहं राजाभवं विप्र तत्र पुत्रशतं मम ३४ समुत्पन्नं स्व-
रूपाणां पुत्राणां ब्राह्मणोत्तम कदाचिन्मृगयां यात उद्भ्रान्तो गहने वने ३५ अवगाढश्च सरसि स्त्रीभूतो ब्राह्मणोत्तम पुत्रान्राज्ये प्रति-
ष्ठाप्य वनमस्मि ततो गतः ३६ स्त्रियाश्च मे पुत्रशतं तापसेन महात्मना आश्रमे जनितं ब्रह्मन्नीतं तन्नगरं मया ३७

स्त्रीत्वकृतोऽपकार इत्य-
र्थः २७ २८ २९ ३० ३१ ३२ ३३ ३४ स्वरूपाणां सर्वस्यैव रूपयेषां तेषां ३५ ३६ स्त्रियाः स्त्रीभूतस्य मे मम ३७ ७ ७ ७

३८ ३९ इंद्रद्विष्टेन अग्निष्टुतायज्ञेन धिष्ण्यं अधिष्ठितं क्रतूनितिशेषः ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१
अध्यायतात्पर्यमाह स्त्रियाइति ५२ ५३ ५४ इतिश्रीमहाभारते आनुशासनिके पर्वणि टीकायां द्वादशोऽध्यायः १२ ७ तदेवं गौतमीसुदर्शनशक्र
प्रभृतीनामाख्यानैर्यदृच्छोपगतेषु दुःखेषु अनुद्विग्नमना अतिथिभक्त आनृशंस्यादिधर्मवान् श्रियं प्राप्नोति तस्याश्च फलंकामः इंद्रियप्रीतिरूपः साचस्त्री-

तेषांचवैरमुत्पन्नं कालयोगेन वै द्विज एकच्छोचाम्यहं ब्रह्मन्दैवेन समभिप्लुता ३८ इंद्रस्तांदुःखितांदृष्ट्वा अब्रवीत्परुषंवचः पुरासु
दुःसहं भद्रे मम दुःखंत्वयाकृतम् ३९ इंद्रद्विष्टेन यजता मामनादृत्य धिष्ठितम् इंद्रोहमस्मि दुर्बुद्धे वैरंते पातितंमया ४० इंद्रंदृष्ट्वा-
तुराजर्षिः पादयोः शिरसागतः प्रसीदत्रिदशश्रेष्ठ पुत्रकामेन सक्रतुः ४१ इष्टस्त्रिदशशार्दूल तत्रमेक्षंतुमर्हसि प्रणिपातेन तस्येंद्रः परि
तुष्टो वरंददौ ४२ पुत्रास्ते कतमे राजन्जीवंतु तवसत्तम स्त्रीभूतस्य हि ये जाताः पुरुषस्याथ ये भवन् ४३ तापसी तु ततः शक्रमुवाच
प्रयतांजलिः स्त्रीभूतस्य हि ये पुत्रास्ते मे जीवंतु वासव ४४ इंद्रस्तु विस्मितो दृष्ट्वा स्त्रियं पप्रच्छ तां पुनः पुरुषोत्पादिता ये ते कथं द्वेष्याः
सुतास्तव ४५ स्त्रीभूतस्य हि ये जाताः स्नेहस्तेभ्योधिकः कथम् कारणं श्रोतुमिच्छामि तन्मे वक्तुमिहार्हसि ४६ स्त्र्युवाच स्त्रि
यास्त्वभ्यधिकः स्नेहो न तथा पुरुषस्य वै तस्मात्ते शक्र जीवंतु ये जाताः स्त्रीकृतस्य वै ४७ भीष्मउवाच एवमुक्तस्ततस्त्विंद्रः प्रीतो-
वाक्यमुवाच ह सर्व एवेह जीवंतु पुत्रास्ते सत्यवादिनि ४८ वरंच वृणु राजेंद्र यंत्वमिच्छसि सुव्रत पुरुषत्वमथस्त्रीत्वं मत्तो यदभिकां
क्षसि ४९ स्त्र्युवाच स्त्रीत्वमेव वृणे शक्र पुंस्त्वंनेच्छामि वासव एवमुक्तस्तु देवेंद्रस्तां स्त्रियं प्रत्युवाच ह ५० पुरुषत्वं कथं त्यक्त्वा स्त्री
त्वं चोदयसे विभो एवमुक्तः प्रत्युवाच स्त्रीभूतो राजसत्तमः ५१ स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा एतस्मात्कारणाच्छक्र स्त्री
त्वमेव वृणोम्यहम् ५२ रमिताभ्यधिकं स्त्रीत्वे सत्यं वै देवसत्तम स्त्रीभावेन हि तुष्यामि गम्यतां त्रिदशाधिप ५३ एवमस्त्विति चोक्त्वा
तामापृच्छ्य त्रिदिवंगतः एवं स्त्रिया महाराज अधिका प्रीतिरुच्यते ५४ इतिश्रीमहाभारते आनुशासनिके पर्वणि दानधर्मे द्वादशोऽ
ध्यायः १२ युधिष्ठिरउवाच किं कर्तव्यं मनुष्येण लोकयात्राहितार्थिना कथं वै लोकयात्रां तु किंशीलश्च समाचरेत् १ भीष्मउवा०
कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम् मनसा त्रिविधं चैव दशकर्मपथांस्त्यजेत् २

णामेव भूयसी पुंसस्त्वल्पतरेत्येतावतायंथेनोक्तं तमिमंकामं
तुच्छीकृत्य परमस्रवावाप्तिकामस्य पूर्वोक्तानतुद्वेगादीनुपासीनस्य वक्ष्यमाणविधिना परमेश्वरमाराधयिष्यतो हेयं दोषजातं वक्तुमयमध्यायं आरभ्यते किमिति
लोकयात्रां ऐहिकशिष्टव्यवहारं हितंच पारलौकिकंश्रेयः तदर्थिना किं कर्तव्यं किमवश्यमनुष्ठेयं लोकयात्रां लोकद्वयश्रेयःसाधनं १ कर्मपथान्स्वाभाविककर्ममार्गान् २

प्राणातिपातः हिंसा ३ असत्प्रलापं ग्राम्यवार्तादि पारुष्यं निष्ठुरभाषणं पैशून्यं राजद्वारादौ परदोषसूचनं अनृतं मिथ्यावादः परपीडाकरः मनसाप्येवं वदि-
ष्यामीति नानुचिंतयेत् ४ अनभिध्येति श्लोकेन परद्रव्ये अभिध्यानं परस्यानिष्टचिंतनम् वेदवादेषु नास्तिक्यमिति त्रीणि त्याज्यानि लक्षयेत् दशत्यजेदित्यु-
पक्रमात् ५ शुभं अहिंसादि आस्तिक्यांतं अशुभं अहिंसादि नास्तिक्यांतं फलं भयदुःखादि स्वर्गनरकांतम् ६ इति श्री आनुशासनिके पर्वणि टीका-
यां त्रयोदशोऽध्यायः १३ ७ अशुभानि परित्यज्य शुभान्याचरता यज्ज्ञेयं तज्ज्ञानेन स्वयमेव पृच्छति त्वयेति आपगेय गांगेय पितामहस्यापि ईशाय
अंतर्यामिणे सर्वत्र षष्ठ्यर्थे चतुर्थी शंभुः सं भवत्यस्मादित्यानंदाविर्भावार्थः १ बभ्रवे विशालाय बभ्रुर्वैश्वानर इत्यादि विशाले पिंगलेत्यपि वादिति मेदिनी महाभा-
ग्यं ऐश्वर्यं गुरावित्यादिः सप्तम्यपि षष्ठ्यर्थे अव्यक्तं जगत्कारणं अव्याकृताख्यं तस्य योनये उत्पत्तिप्रलयस्थानाय २ योहीति सर्वगतः सर्वोपादान-

प्राणातिपातः स्तैन्यं च परदारमथापि च त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ३ असत्प्रलापं पारुष्यं पैशून्यमनृतं तथा चत्वारि
वाचा राजेंद्र न जल्पेन्नानुचिंतयेत् ४ अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् कर्मणां फलमस्तीति त्रिविधं मनसाचरेत् ५ त-
स्माद्वाक्कायमनसा नाचरेदशुभं नरः शुभाशुभान्याचरन्हि तस्य तस्याश्नुते फलम् ६ इति श्रीमहाभारते आनुशासनिके पर्वणि दा-
नधर्मे लोकयात्राकथने त्रयोदशोऽध्यायः १३ युधिष्ठिर उवाच त्वयापगेय नामानि श्रुतानीह जगत्पतेः पितामहेशाय विभो
नामान्याचक्ष्व शंभवे १ बभ्रवे विश्वरूपाय महाभाग्यं च तत्त्वतः सुरासुरगुरो देवे शंकरेऽव्यक्तयोनये २ भीष्म उवाच अश-
क्तोऽहं गुणान्वक्तुं महादेवस्य धीमतः यो हि सर्वगतो देवो न च सर्वत्र दृश्यते ३ ब्रह्मविष्णुसुरेशानां स्रष्टा च प्रभुरेव च ब्रह्मादयः
पिशाचांता यं हि देवा उपासते ४ प्रकृतीनां परत्वेन पुरुषस्य च यः परः ५ चिंत्यते यो योगविद्भिरृषिभिस्तत्त्वदर्शिभिः अक्षरं
परमं ब्रह्म असच्च सदसच्च यः ६

त्वात् सर्वत्र न दृश्यते दृश्यत्वे शरीरत्वादात्मत्वाच्च ३ ब्रह्मा विराट् विष्णुः सूत्रात्मा सुरेशा त्रा-
णास्तेषां स्रष्टा उपादानं प्रभुर्निमित्तं उपासते स्वस्वोपाधित्यागेन अधिगच्छंति ४ प्रकृतीनां पंचतन्मात्राहंकारमहदव्यक्तानां विश्वकारणानां पुरुष-
संज्ञितात् भोक्तुरित्यर्थः पंचम्यर्थे षष्ठी इंद्रियाणि पराण्याहुरिंद्रियेभ्यः परं मनः मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः महतः परमव्यक्तमव्यक्ता-
त्पुरुषः परः पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिरिति आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति च श्रुतेः स्यमनेभ्यः परः निष्कलः ५ चिंत्य
ते न किंचिदपि चिंतयेदिति स्मृतेः सर्वचिंतात्यागेन प्राप्यते योगविद्भिः योगी बुध्याद्यसंगस्तादृग्भिः अक्षरं अपरिणामि परं ब्रह्म अत्यंतपरिच्छेदत्रयशू-
न्यम् तदेव असत् अव्याकृतादव्यकारणम् सदसत् रज्जुसर्पवद्भासमानमप्यसत् अनिर्वचनीयमित्यर्थः ६ ७ ७ ७ ७ ७

३० ३१ आराध्यस्थमाहात्म्यंवासुदेवंउवाचशुश्रूषध्वमित्यादिना ननुमन्मनाभवमामेवशरणंव्रजेतिस्वस्यैवोपेयत्ववंदतः कथमन्यआराध्यःस्यादि-तिचेन्न मामेवविजानीहीतिवत्शास्त्रदृष्ट्यापरमात्मनोप्यस्मदर्थत्वोपपत्तेर्मामुपास्स्वेतिवदतस्तद्रूप्येवदेवस्योपेयत्वाभावात् उपाधिनिष्कृष्टस्योपेयत्वंत्व-स्मदादिसाधारणेनवासुदेवस्योत्कर्षमर्हतीति वस्तुतस्तुयत्सर्वोपाधिशून्यंब्रह्म अस्मदाद्येनरनरनदेवमुख्यमस्मच्छब्दालंबनंवासुदेवशब्दितंमाययामा-नुषवद्भूत्वास्वप्राप्त्युपायभूतंमुपास्यरूपमात्मनःस्वशास्त्रतत्वंस्वयमेवलोकानुग्रहार्थमुपदिशतीति ननयोर्भेदगंधोपीति ३२ ३३ नेत्वया ३४ ३५

शूरंबलवतांश्रेष्ठंकांतरूपमकल्मषम् आत्मतुल्यंममसुतंप्रयच्छाच्युतमाचिरम् ३० नहितेप्राप्यमस्तीहत्रिषुलोकेषुकिंचन लोकान् सृजेस्त्वमपरानिच्छन्यदुकुलोद्वह ३१ त्वयाद्वादशवर्षाणिव्रतीभूतेनशुष्यता आराध्यपशुभर्तारंरुक्मिण्याजनिताःसुताः ३२ चा-रुदेष्णःसुचारुश्चचारुवेषोयशोधरः चारुश्रवाश्चारुयशाःप्रद्युम्नःशंभुरेवच ३३ यथातेजनिताःपुत्राःरुक्मिण्यांचारुविक्रमाः त-थाममापितनयंप्रयच्छमधुसूदन ३४ इत्येवंचोदितोदेव्यातामवोचंसुमध्यमाम् अनुजानीहिमांराज्ञिकरिष्येवचनंतव ३५ सा-चमामब्रवीद्गच्छशिवायविजयायच ब्रह्माशिवःकाश्यपश्चनद्योदेवामनोनुगाः ३६ क्षेत्रौषध्योयज्ञवाहाश्छंदांस्यृषिगणाध्वराः समुद्रादक्षिणास्तोभाऋक्षाणिपितरोग्रहाः देवपत्न्योदेवकन्यादेवमातरएवच ३७ मन्वंतराणिगावश्चचंद्रमाःसविताहरिः ३८ सावित्रीब्रह्मविद्याचऋतवोवत्सरास्तथा क्षणालवामुहूर्त्ताश्चनिमेषायुगपर्ययाः ३९ रक्षंतुसर्वत्रगतंत्वांयादवसुखायच अरि-ष्टंगच्छपंथानमप्रमत्तोभवानघ ४० एवंकृतस्वस्त्ययनस्तयाहंततोभ्यनुज्ञायनरेंद्रपुत्रीम् पितुःसमीपंनरसत्तमस्यमातुश्चराज्ञ-श्चतथाहुकस्य गत्वासमावेद्ययदब्रवीन्मांविद्याधरेंद्रस्यसुताभृशार्त्ता ४१ तानभ्यनुज्ञायतदातिदुःखाद्गदंतथैवातिबलंचरामम् अथोचतुःप्रीतियुतौतदानींतपःसमृद्धिर्भवतोस्त्वविघ्नम् ४२ प्राप्यानुज्ञांगुरुजनादहंतार्क्ष्यमचिंतयम् सोवहद्धिमवंतंमांप्राप्यचैनं व्यसर्जयम् ४३ तत्राहमद्भुतान्भावानपश्यंगिरिसत्तमे क्षेत्रंचतपसांश्रेष्ठंपश्याम्यद्भुतमुत्तमम् ४४ दिव्यंवैयाघ्रपद्यस्यउपम-न्योर्महात्मनः पूजितंदेवगंधर्वैर्ब्राह्म्यालक्ष्म्यासमावृतम् ४५ धवककुभकदंबनारिकेलैःकुरबककेतकजंबुपाटलाभिः वटवरु-णकवत्सनाभबिल्वैःसरलकपित्थप्रियालसालतालैः ४६

३६ यज्ञवाहाइतिच्छंदसामेवविशेषणम् छंदांसिवैदेवेभ्योहव्यमूढ्वेतिब्राह्मणा-त तेषांयज्ञवाहत्वसिद्धिः सस्तोभाःसामपूरणान्यक्षराणि हुंमाइत्यादीनि ३७ ३८ ३९ ४० नरेंद्रपुत्रीऋक्षराजस्यजांबवतोदुहितरं क-पींद्रेत्यपिपाठः पत्नीमितिपाठेहेनरेंद्रेतिसंबोधनम् ४१ अथोचतुरित्यर्द्धः ४२ ४३ तपसांधर्मिणांतपस्विनांवा ४४ ४५ ४६

४७ ४८ भस्मराशिभिरिति भस्मच्छन्नैरग्निभिः ४९ ५० ५१ ५२ ५३ ५४ संप्रक्षालैः मैत्र्यादिभिश्चित्तशोधनं कुर्वद्भिः ५५ गोचारिणः गोवन्मुखेनैव चरन्तः हस्तव्यापारशून्या इत्यर्थः मरीचिपाः अर्कदृष्टिपानेनैव जीवन्तः ५६ ५७ नास्तान्म हत इति पाठे व हत इत्यध्याहारः ५८

बदरीकुंदपुन्नागैरशोकाम्रातिमुक्तकैः मधुकैः कोविदारैश्च चंपकैः पनसैस्तथा ४७ वन्यैर्बहुविधैर्वृक्षैः फलपुष्पप्रदैर्युतम् पुष्पगुल्मलताकीर्णं कदलीखंडशोभितम् ४८ नानाशकुनिसंभोज्यैः फलैर्वृक्षैरलंकृतम् यथास्थानविनिक्षिप्तैर्भूषितं भस्मराशिभिः ४९ रुरुवानरशार्दूलसिंहद्वीपिसमाकुलम् कुरंगबर्हिणाकीर्णं मार्जारभुजगावृतम् ५० पूगैश्च मृगजातीनां महिषर्क्षनिषेवितम् सकृत्प्रभिन्नैश्च गजैर्विभूषितं प्रहृष्टनानाविधपक्षिसेवितम् सुपुष्पितैरंबुधरप्रकाशैर्महीरुहाणां च वनैर्विचित्रैः ५० नानापुष्परजोमिश्रो गजदानाधिवासितः दिव्यस्त्रीगीतबहुलो मारुतोऽभिमुखो ववौ ५१ धारानिनादैर्विहगप्रणादैः शुभैस्तथा बृंहितैः कुंजराणाम् गीतैस्तथा किन्नराणामुदारैः शुभैः स्वनैः सामगानां च वीर ५२ अचिंत्यं मनसाप्यन्यैः सरोभिः समलंकृतम् विशालैश्चाग्निशरणैर्भूषितं कुसुमावृतैः ५३ विभूषितं पुण्यपवित्रतोयया सदा च जुष्टं नृप जह्नुकन्यया विभूषितं धर्मभृतां वरिष्ठैर्महात्मभिर्वह्निसमानकल्पैः ५४ वाय्वाहारैरंबुपैर्जप्यनित्यैः संप्रक्षालैर्योगिभिर्ध्याननित्यैः धूमप्राशैरूष्मपैः क्षीरपैश्च संजुष्टं च ब्राह्मणेंद्रैः समंतात् ५५ गोचारिणोऽथाश्मकुट्टा दंतोलूखलिकास्तथा मरीचिपाः फेनपाश्च तथैव मृगचारिणः ५६ अश्वत्थफलभक्षाश्च तथा ह्युदकशायिनः चीरचर्मांबरधरास्तथा वल्कलधारिणः ५७ सुदुःखान्नियमांस्तांस्तान्वहतः सुतपोधनान् पश्यन्मुनीन्बहुविधान्प्रवेष्टुमुपचक्रमे ५८ सुपूजितं देवगणैर्महात्मभिः शिवादिभिर्भारत पुण्यकर्मभिः रराज तच्चाश्रममंडलं सदा दिवीव राजन्शशिमंडलं यथा ५९ क्रीडंति सर्पैर्नकुला मृगैर्व्याघ्राश्च मित्रवत् प्रभावाद्दीप्ततपसां संनिकर्षान्महात्मनाम् ६० तत्राश्रमपदे श्रेष्ठे सर्वभूतमनोरमे सेविते द्विजशार्दूलैर्वेदवेदांगपारगैः ६१ नानानियमविख्यातैरृषिभिः सुमहात्मभिः प्रविशन्नेव चापश्यं जटाचीरधरं प्रभुम् ६२ तेजसा तपसा चैव दीप्यमानं यथानलम् शिष्यैरनुगतं शांतं युवानं ब्राह्मणर्षभम् ६३ शिरसा वंदमानं मामुपमन्युरभाषत ६४ स्वागतं पुंडरीकाक्ष सफलानि तपांसि नः यः पूज्यः पूजयसि मां द्रष्टव्यो द्रष्टुमिच्छसि ६५

५९ क्रीडंतीति अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः इति योगसूत्रात् सर्पनकुलादीनां वैरत्यागलिंगेन तत्रस्थानां मुनीनां अत्यंतं अहिंसादियमनियमानुष्ठानबलं दर्शितम् ६० ६१ नियमाः अंबुपानादयस्तैरेवांबुपैः क्षीरपैः इत्यादिनामभिः ख्यातैः प्रविशन्नेवापश्यं उपमन्युमिति शेषः ६२ ६३ ६४ पूज्यः सगुणः द्रष्टव्यो निर्गुणः ६५ ६६ ६७ ६८

६६ ६७ ६८ ६९ ७० भावान्सप्तकामादीन्चित्ताभिप्रायान्सृजन्नित्यनेनांतर्यामित्वंदर्शितम् ७१ समानांसंवत्सरांशणामर्बुदंसमार्बुदं ७२ ७३
ग्रहस्यमंदारनाम्नः ७४ भगवतामहादेवेन ७५ उत्पादितंतस्यैवदैत्यस्यहननार्थं ७६ नद्रष्टुंशक्यंदुर्दर्शत्वात् ७७ जीर्णजीर्णतृणवद्व्यर्थमित्यर्थः ७८

तमहंप्रांजलिर्भूत्वामृगपक्षिष्वथाग्निषु धर्मेचशिष्यवर्गेचसमपृच्छमनामयम् ६६ ततोमांभगवानाहसाम्नापरमवल्गुना लप्स्यसे
तनयंकृष्ण आत्मतुल्यमसंशयम् ६७ तपःसुमहदास्थायतोषयेशानमीश्वरम् इहदेवःसपत्नीकःसमाक्रीडत्यधोक्षज ६८ इहै
वदैवतश्रेष्ठंदेवाःसर्षिगणाःपुरा तपसाब्रह्मचर्येणसत्येनचदमेनच ६९ तोषयित्वाशुभान्कामान्प्राप्तवंतोजनार्दन तेजसांतपसां
चैवनिधिःसभगवानिह ७० शुभाशुभान्वितान्भावान्विसृजन्संक्षिपन्नपि आस्तेदेव्यासदाचिंत्योयंप्रार्थयसिशत्रुहन् ७१ हिर-
ण्यकशिपुर्योभूद्दानवोमेरुकंपनः तेनसर्वामरैश्वर्यंशर्वात्प्राप्तंसमार्बुदम् ७२ तस्यैवपुत्रप्रवरोमंदारोनामविश्रुतः महादेववरात्शक्र
वर्षार्बुदमयोधयत् ७३ विष्णोश्चक्रंचतद्घोरंवज्रमाखंडलस्यच शीर्णंपराभवत्तातग्रहस्यांगेषुकेशव ७४ यत्तद्भगवतापूर्वंदत्तंच-
क्रंतवानघ जलांतरचरंहत्वादैत्यंचबलगर्वितम् ७५ उत्पादितंवृषांकेनदीप्तज्वलनसन्निभम् दत्तंभगवतातुभ्यंदुर्धर्षंतेजसाद्भुतम्
७६ नशक्यंद्रष्टुमन्येनवर्जयित्वापिनाकिनम् सुदर्शनंभवत्येवंभवेनोक्तंतदातुतत् ७७ सुदर्शनंतदातस्यलोकेनामप्रतिष्ठितम् तज्जी
र्णमभवत्तातग्रहस्यांगेषुकेशव ७८ ग्रहस्यातिबलस्यांगेवरदत्तस्यधीमतः नशस्त्राणिवहंत्यंगेचक्रवज्रशतान्यपि ७९ अर्द्यमा-
नाश्चविबुधाग्रहेणसुबलीयसा शिवदत्तवरान्जघ्नुरसुरेंद्रान्सुराभृशम् ८० तुष्टोविद्युत्प्रभस्यापित्रिलोकेश्वरतांददौ शतंवर्ष-
सहस्राणांसर्वलोकेश्वरोभवत् ८१ ममैवानुचरोनित्यंभवितासीतिचाब्रवीत् तथापुत्रसहस्राणामयुतंचददौप्रभुः ८२ कुशद्वीपं
चसददौराज्येनभगवानजः तथाशतमुखोनामधात्रासृष्टोमहासुरः ८३ येनवर्षशतंसाग्रमात्ममांसैर्हुतोनलः तंप्राहभगवांस्तुष्टः
किंकरोमीतिशंकरः ८४ तंवैशतमुखःप्राहयोगोभवतुमेद्भुतः बलंचदैवतश्रेष्ठशाश्वतंसंप्रयच्छमे ८५ तथेतिभगवानाहतस्यतद्व
चनंप्रभुः स्वायंभुवःक्रतुश्चापिपुत्रार्थमभवत्पुरा ८६ आविश्ययोगेनात्मानंत्रीणिवर्षशतान्यपि तस्यचोपददौपुत्रान्सहस्रंक्रतु-
संमितान् ८६ योगेश्वरंदेवगीतंवेत्थकृष्णनसंशयः याज्ञवल्क्यइतिख्यातऋषिःपरमधार्मिकः ८७

वरदत्तस्यसर्वशस्त्रावध्यत्वं
भवे तिदत्तवरस्य ७९ अर्द्यमानाःसुराअसुरेंद्रान्जघ्नुःतेऽन्योन्यंकलहमकुर्वन्नित्यर्थः ८० ८१ ८२ ८३ ८४ योगःचंद्रसूर्यपर्जन्यपृथिव्या-
दिसृष्टिसामर्थ्यं शाश्वतंबलंब्रह्मविद्योत्थं ८५ ८६आत्मानंहिरण्यगर्भंआविश्याभवत आविष्टोभूत् सूत्रात्मनोध्यानंकुर्वन्नित्यर्थः ८६ ८७

८८ ८९ ९० ९१ सप्तकपालेनत्र्यंबकदेवत्येनहेतुना देवैःसप्तकपालेनरुद्रमिष्ट्वाआपोनिर्मिताइत्यर्थः देवेनेतिपाठेइंद्रेण ९२ अत्रेरिति पति
द्वेषिण्योपिस्त्रियोमहादेवंप्राप्यकृतकृत्याभवंतीतिभावः ९३ ९४ मुसलेषु अयोग्रेषु अष्टकीलेषु अयोग्रेमुसलंमतमितिविश्वलोचनः ९५ विनेति

आराध्यसमहादेवंप्राप्तवानतुलंयशः वेदव्यासस्त्वयोगात्मा पराशरसुतोमुनिः ८८ सोपिशंकरमाराध्यप्राप्तवानतुलंयशः वाल-
खिल्यामघवताप्यवज्ञाताःपुराकिल ८९ तैःक्रुद्धैर्भगवान्रुद्रस्तपसातोषितोह्यभूत् तांश्चापिदैवतश्रेष्ठःप्राहप्रीतोजगत्पतिः ९०
सुपर्णंसोमहर्तारंतपसोत्पादयिष्यथ महादेवस्यरोषाच्चआपोनष्टाःपराभवन् ९१ ताश्चसप्तकपालेनदेवैरन्याःप्रवर्तिताः ततःपा
नीयमभवत्तस्मिन्त्र्यंबकेभुवि ९२ अत्रेर्भार्यापिभर्तारंसंत्यज्यब्रह्मवादिनी नाहंतस्यमुनेर्भूयोवशगास्यांकथंचन ९३ इत्युक्त्वा
सामहादेवमगच्छच्छरणंकिल निराहाराभयादत्रेस्त्रीणिवर्षशतान्यपि ९४ अशेतमुसलेष्वेवप्रसादार्थंभवस्यसा तामब्रवीद्ध-
सन्देवोभवितावैसुतस्तव ९५ विनाभर्त्राचरुद्रेणभविष्यतिनसंशयः वंशेतवैवनाम्नातुख्यातिंयास्यतिचेप्सिताम् ९६ विकर्णश्च
महादेवंतथाभक्तःसुखावहम् प्रसाद्यभगवान्सिद्धिंप्राप्तवान्मधुसूदन ९७ शाकल्यःसंशितात्मावैनववर्षशतान्यपि आराधयामास
भवंमनोयज्ञेनकेशव ९८ तंचाहभगवांस्तुष्टोग्रंथकारोभविष्यसि वत्साक्षयाचतेकीर्तिस्त्रैलोक्येवैभविष्यति ९९ अक्षयंचकुलंते-
स्तुमहर्षिभिरलंकृतम् भविष्यतिद्विजश्रेष्ठःसूत्रकर्तासुतस्तव १०० सावर्णिश्चापिविख्यातऋषिरासीत्कृतेयुगे इहतेनतपस्तप्तंष
ष्टिवर्षशतान्यथ १०१ तमाहभगवान्रुद्रःसाक्षात्तुष्टोस्मितेनघ ग्रंथकृल्लोकविख्यातोभवितास्यजरामरः २ शक्रेणतुपुरादेवोवा
राणस्यांजनार्दन आराधितोभूद्भक्तेनदिग्वासाभस्मगुंठितः ३ आराध्यसमहादेवंदेवराजमवाप्तवान् नारदेनतुभक्त्यासौभवआ
राधितःपुरा ४ तस्यतुष्टोमहादेवोजगौदेवगुरुर्गुरुः तेजसातपसाकीर्त्यात्वत्समोनभविष्यति ५ गीतेनचादितव्येननित्यंमामनुया
स्यसि मयापिचयथादृष्टोदेवदेवःपुराविभो ६ साक्षात्पशुपतिस्तातंतच्चापिशृणुमाधव यदर्थंचमयादेवःप्रयतेनतथाविभो ७
प्रबोधितोमहातेजास्तच्चापिशृणुविस्तरम् यदवाप्तंचमेपूर्वंदेवदेवान्महेश्वरात् ८ तत्सर्वंनिखिलेनाद्यकथयिष्यामितेनघ पुरा-
कृतयुगेतातऋषिरासीन्महायशाः ९ व्याघ्रपादइतिख्यातोवेदवेदांगपारगः तस्याहमभवंपुत्रोधौम्यश्चापिममानुजः १०

चरुद्रःचरोर्द्रवःमंडइतियावत् चरुशब्दपूर्वेण द्रवतेरन्येभ्योपिदृश्यतइतिडुः भर्त्तारंविनापिचरुद्रवपानमात्रेणतवपुत्रोभविष्यतीत्यर्थः तवैवना-
म्नाअनसूयंइति ९६ ९७ ९८ ९९ १०० १०१ १०२ १०३ १०४ १०५ १०६ १०७ १०८ १०९ ११०

१११ ११२ १३ १४ १५ १६ १७ १८ १९ १२० पावनानांपवनाशिनां वनाशानांअश्मकुट्टानां २१ २२ २३ प्रप द्यप्रपन्नो
भव २४ २५ २६ २७ २८ २९ दुर्विज्ञेयः शास्त्रतोपिज्ञातुमशक्यः दुराधारः शास्त्रात्ज्ञातोपिमनसिधर्तुमशक्यः दुराबाधः ध्रियमाणोपि

कस्यचित्त्वथकालस्य धौम्येनसहमाधव आगच्छमाश्रमंक्रीडन्मुनीनांभावितात्मनाम् १११ तत्रापिचमयादृष्टादुह्यमानापयस्विनी लक्षि
तंचमयाक्षीरस्वादतोह्यमृतोपमम् १२ ततोहमब्रुवंबाल्याज्जननीमात्मनस्तथा क्षीरोदनसमायुक्तंभोजनंहिप्रयच्छमे १३ अभावा
च्चैवदुग्धस्यदुःखिताजननीतदा ततःपिष्टंसमालोड्यतोयेनसहमाधव १४ आवयोःक्षीरमित्येवपानार्थंसमुपानयत् अथगव्यंपय
स्तातकदाचित्प्राशितंमया १५ पित्राहंयज्ञकालेहिनीतोज्ञातिकुलंमहत् तत्रसासुरतेदेवीदिव्यागौःसुरनंदिनी १६ तस्याहंतत्पयः
पीत्वारसेनह्यमृतोपमम् ज्ञात्वाक्षीरगुणांश्चैवउपलभ्याहिसंभवम् १७ सचपिष्टरसस्तातनमेप्रीतिमुपावहत् ततोहमब्रुवंबा
ल्याज्जननीमात्मनस्तदा १८ नेदंक्षीरोदनंमातर्यत्त्वंमेदत्तवत्यसि ततोमामब्रवीन्मातादुःखशोकसमन्विता १८ पुत्रस्नेहात्परि
ष्वज्यमूर्ध्निचाघ्रायमाधव कुतःक्षीरोदनंवत्समुनीनांभावितात्मनाम् १९ वनेनिवसतांनित्यंकंदमूलफलाशिनाम् आस्थितानांन
दीःदिव्यांवालखिल्यैर्निषेविताम् कुतःक्षीरंवनस्थानांमुनीनांगिरिवासिनाम् २० पावनानांवनाशानांवनाश्रमनिवासिनाम् ग्रा-
म्याहारनिवृत्तानामरण्यफलभोगिनाम् २१ नास्तिपुत्रपयोरण्येसुरभीगोत्रवर्जिते नदीगह्वरशैलेषुतीर्थेषुविविधेषुच २२ तप
साजप्यनित्यानांशिवोनःपरमागतिः अप्रसाद्यविरूपाक्षंवरदंस्थाणुमव्ययम् २३ कुतःक्षीरोदनंवत्ससुखानिवसनानिच तंप्र
पद्यसदावत्ससर्वभावेनशंकरम् २४ तत्प्रसादाच्चकामेभ्यःफलंप्राप्स्यसिपुत्रक जनन्यास्तद्वचःश्रुत्वातदाप्रभृतिशत्रुहन् २५ प्रां
जलिःप्रणतोभूत्वाइदमंबामचोदयम् कोयमंबमहादेवःसकथंचप्रसीदति २६ कुत्रवावसतेदेवोद्रष्टव्योवाकथंचन तुष्यतेवाकथं
शर्वोरूपंतस्यचकीदृशम् २७ कथंज्ञेयःप्रसन्नोवादर्शयेज्जननीमम एवमुक्तातदाकृष्णमातामेसुतवत्सला २८ मूर्ध्न्याघ्राय
गोविंदसबाष्पाकुललोचना प्रमार्जतीवगात्राणिममवैमधुसूदन दैन्यमालंब्यजननीइदमाहसुरोत्तम २९ अंबोवाच दुर्वि
ज्ञेयोमहादेवोदुराधारोदुरंतकः दुराबाधश्चदुर्ग्राह्योदुर्दृश्योह्यकृतात्मभिः ३० यस्यरूपाण्यनेकानिप्रवदंतिमनीषिणः स्थानानि
चविचित्राणिप्रसादाश्चाप्यनेकशः ३१

लयविक्षेपादिविघ्नैःसंकटःयतोदुरंतकः दुष्टानिबंधकानियस्मिन्विघ्नाभावेपिदुर्ग्राह्यःदिव्यविषयवैवश्येनपरवैरा
ग्याभावात् सत्यपिवैराग्येदुर्दृश्यः आत्मनीवप्रकृतावपिचेतसोलयस्यसंभवात् ३० एवंनिर्विशेषस्यरूपस्यदुर्ज्ञेयत्वमुक्त्वासविशेषमेवरूपमाह यस्यरूपाण्यनेका
नीत्यादिना ३१

एतत् दूषयत्युपमन्युः सदसदिति प्रवाहानादित्वं मीमांसकमतम् असदिति शून्यं माध्यमिकमतं व्यक्तं परमाणवः तार्किकमतम् अव्यक्तं प्रधानं सांख्यमतम् एतच्चतुष्कमपि यदभिन्नमाहुः ततः नित्यं अविनाशि एकं असंहतं परमशिवाख्यं अनेकं कार्यकारणात्मकं तस्मात् दूरं वृणीमहे अयं भावः यथा बीजशक्ते विलसितं अंकुरकाण्डस्कंधशाखापल्लवपत्रपुष्पफलबीजांतविकारः उत्पत्तिमत्त्वात् तस्य च भक्तिरेवैक्या नित्या सर्वविशेषशून्या मता अस्ति सा च बीजशक्तेः पृथगनेक

उपमन्युरुवाच सदसद्व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः नित्यमेकमनेकं च वरं तस्माद्वृणीमहे
९० अनादिमध्यपर्यंतं ज्ञानैश्वर्यमचिंतितम् आत्मानं परमं यस्माद्दूरं तस्माद्वृणीमहे ९१

रूपा च भवति एवं अव्यक्तादिकम् सर्वं बीजादिस्थानीयं यत्र लीयते तत्परमशिवाख्यं तत्त्वं कारणकारणमस्तीति न तदपह्नोतुं शक्यमिति ९० चिंतितं चिंतया निर्वृत्तं ज्ञेयं इशितव्यं च ताभ्यां रहितं स्वरूपभूतमेव ज्ञानैश्वर्यं परमं च आत्मानं यस्मात्तमाहुर्ब्रह्मवादिनो तस्मात्तस्माद्दूरं वृणीमहे इतरत् ज्ञानैश्वर्यं त्वनात्मभूतमित्यर्थः ९१

एतदेवाह ऐश्वर्यमिति बीजं मायाशबल्यवच्छिन्नं चैतन्यं तस्माज्जातं सकलं ऐश्वर्यं बीजसंभूतं ईशेशितव्यसापेक्षं तच्चाव्ययं संसारप्रवाहाविच्छेदात् अतए-
तत् यस्मात् शिवात् अबीजात् बीजादन्यस्मात् मृत्सामान्यस्थानीयात् अनुत्पादितं तस्मादीश्वरप्राप्तस्तुरीयस्तुरीय इति श्रुतिप्रसिद्धात् वरं वृणीमहे तथा च श्रु-
तौ सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्मेति समष्टिव्यष्टिब्रह्मणी उपक्षिप्य स्थूलसूक्ष्मकारणोपाधित्वसामान्यात् व्यष्टौ समष्टिमन्तर्भाव्य विश्वतैजसप्राज्ञान् चतुष्पा-
द् आत्मनः त्रीन्पादान्निरूप्य प्राज्ञं तृतीयं पादं प्रक्रम्य एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानामिति प्राज्ञस्यैवं पादमपरप-
र्यायं बीजत्वमुक्तं तथा चतुर्थं पादं अबीजं सर्वोपाध्युपहितभिन्नं पंचदशभिर्विशेषणैः पृथग्दर्शयति श्रुतिः नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्र-
ज्ञं न प्रज्ञानघनं अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यं एकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय इति अत्र
जलचन्द्रन्यायेन षडुपहितचैतन्यानि षडुपाधयश्च तेषां मध्ये नान्तःप्रज्ञमिति समष्टिसूक्ष्मोपाध्युपहितस्य सूत्रात्मनो निरासः न बहिःप्रज्ञमिति विराजः नो-
भयतःप्रज्ञमित्यात्मनो निष्कलत्वं सकलत्वं च जानत ईश्वरस्य न प्रज्ञमिति विशेषविज्ञानवतो विश्वस्य नाप्रज्ञमिति प्रज्ञाभिन्नत्वेपि तत्सदृशस्य तैजसस्य ना-

ऐश्वर्यं सकलं यस्मादनुत्पादितमव्ययम् अबीजाद्बीजसंभूतं वरं तस्माद्वृणीमहे १२ तमसः परमं ज्योतिस्तपस्तद्वृत्तिनां परम्
यं ज्ञात्वा नानुशोचन्ति वरं तस्माद्वृणीमहे १३ भूतभावनभावज्ञं सर्वभूताभिभावनम् सर्वगं सर्वदेवं च पूजयामि पुरंदर १४
हेतुवादैर्विनिर्मुक्तं सांख्ययोगार्थदं परम् यमुपासन्ति तत्त्वज्ञा वरं तस्माद्वृणीमहे १५

प्रज्ञानघनमिति प्राज्ञस्य तथा अदृष्टमिति सर्वेन्द्रियग्राह्यस्य विराडुपाधेः अव्यवहार्यमिति वाचिकव्यवहारार्हस्य सूत्रोपाधेः अग्राह्यमिति योगिग्राह्य-
स्य ईश्वरोपाधेः अलक्षणमिति शिरःपाण्यादिलक्षणवतो विश्वोपाधेः अचिन्त्यमिति चिन्तनमात्रनिर्वृत्तस्य तैजसोपाधेः अव्यपदेश्यमिति अहमज्ञ इति व्य-
पदेशार्हस्याज्ञानस्य प्राज्ञोपाधेश्च निरासः एकात्मप्रत्ययसारमिति षण्णामुपहितानां प्रपञ्चोपशम इति षण्णामुपाधीनां अद्वैतमिति सर्वेषां निरासः शिवं स-
र्वबाध्यावधिभूतमानंदमात्रं परिशिनष्टि तस्मादुक्तमुक्तं सकलमैश्वर्यं अबीजादनुत्पादितं बीजसंभूतं चेति तस्मात् कारणकारणस्य शिवस्य सत्त्वे युक्तिः श्रु-
तिश्च प्रमाणमस्तीति भावः १२ १३ एवमीशस्य कारणकारणत्वं निरूप्य इदानीं कारणत्वं कार्यत्वं च निरूपयति भूतभावनेत्यादिना भूतानां खादीनां जीवा-
नां च भावनं रचनं भावं अभिप्रायं सर्वज्ञं सर्वशक्तिं चेत्यर्थः १४ यत्पुनरुक्तं ईशसत्तायां को हेतुरिति तत्राह हेत्विति कारणात्मापि श्रुतिं विना युक्तिमात्रेण न सिद्ध्य-
ति किंपुनः कारणकारणाभिज्ञाधारः सांख्ययोगयोः सम्यगालोचनं सांख्यं वृत्तिनिरोधो योगः तयोरर्थः प्रयोजनं तत्र साक्षात्कारस्तत्प्रदं अतएव उपास्यम् १५ ७

मघवक्तस्त्वमेव आत्मानं जीवानामंतरात्मानमित्यर्थः मघवात्मानमिति वर्णलोप आर्षः नांतमेव वा प्रातिपदिकम् ९६ यत्तवस्तुमृतस्थानीयं तदेव आकाशं बीजभूतमव्याकृतं आपूर्य स्वसत्तया व्याप्य तद्द्वारा पांचभौतिकं अंडं ब्रह्मांडं सृष्ट्वा तदंतर्ब्रह्माणमसृजदित्यन्वयः ९७ अंडसृष्टिक्रममेवाह अग्निरिति अग्न्यादिशब्दैरत्र पंचतन्मात्राणि शब्दतन्मात्रादीनि सूक्ष्मभूतान्युच्यंते बुद्धिरित्यहंकारः मन इत्यव्यक्तं एषां अंडोपादानभूतानाम् ९८ यत्र मनःशब्दितमव्यक्तमुक्तं तदेव महच्छब्दितामतिरहंकारादिकं च तदेवेत्यर्थः एषां मन आदीनां परमं परायणं यः प्रवेत्ता स शिवादन्यः कोन्योस्तीति योजना यथा बीजशक्त्युपहिता मृदेव वृक्षं एवं अज्ञानशक्त्युपहितः शिव एव सर्वं अतो वृक्षस्य मृदिव सर्वस्य शिव एव परायणमपीति भावः ९९ ब्रह्मादिष्वपि जगत्कर्तृत्वसिद्धिः शिवप्रसादायत्तैवेत्याह स्रष्टारमिति एतेन भौक्तिकार्थस्य सूत्रमपि शिवस्यैवेति दर्शितम् २०० भगवन्निति एकैकगुणप्रधानोपाधीनां ब्रह्मविष्णुरुद्राणां स्रष्टा सर्वगुणोमाधोत्तूर्यमूर्त्ती-

मघवन्मघवानात्मानं यं वदंति सुरेश्वरम् सर्वभूतगुरुं देवं वरं तस्माद्वृणीमहे ९६ यत्पूर्वमसृजद्देवं ब्रह्माणं लोकभावनम् अंडमाकाशमापूर्य वरं तस्माद्वृणीमहे ९७ अग्निरापोनिलः पृथ्वी खं बुद्धिश्च मनो महान् स्रष्टा चैषां भवेद्योन्यो ब्रूहि कः परमेश्वरात् ९८ मनोमतिरहंकारस्तन्मात्राणींद्रियाणि च ब्रूहि चैषां भवेच्छक्र कोन्योस्ति परमं शिवात् ९९ स्रष्टारं भुवनस्येह वदंतीह पितामहम् आराध्य स तु देवेशमश्नुते महतीं श्रियम् २०० भगवत्युत्तमैश्वर्यं ब्रह्मविष्णुपुरोगमम् विद्यते वै महादेवाद् ब्रूहि कः परमेश्वरात् २०१ दैत्यदानवमुख्यानामाधिपत्यारिमर्दनात् कोन्यः शक्नोति देवेशाद्दितेः संपादितुं सुतान् २ दिक्कालसूर्यतेजांसि ग्रहवाय्विंदुतारकाः विद्धि त्वेते महादेवात्तु-ब्रूहि कः परमेश्वरात् ३ अथोत्पत्तिविनाशे वा यज्ञस्य त्रिपुरस्य वा दैत्यदानवमुख्यानामाधिपत्यारिमर्दनः ४ किं चात्र बहुभिः सूक्तैर्हेतुवादैः पुरंदर सहस्रनयनं दृष्ट्वा त्वामेव शक्र संत्तम ५ पूजितं सिद्धगंधर्वैर्देवैश्च ऋषिभिस्तथा देवदेवप्रसादेन तत्सर्वं कुशिकोत्तम ६ अव्यक्तमुक्तकेशाय सर्वगस्येदमात्मकम् चेतनाचेतनाद्येषु शक्र विद्धि महेश्वरात् २०७

महेश्वरेपि यदुत्तममैश्वर्यं विद्यते तदपि महादेवादेव तेन प्राप्तमतः कः कस्मात्परमेश्वरादन्य ईश्वरोस्तीति ब्रूहि न कोप्यस्तीति भावः २०१ दितेः सुतान् हिरण्याक्षादीन् संपादितुं ऐश्वर्येण योजयितुं दैत्यादीनां च यत्परपीडानुग्रहसामर्थ्यं तत्सर्वमीश्वरायत्तमेवेति भावः २ ३ यज्ञत्रिपुरयोरुत्पत्तौ विनाशे च तथा दैत्यादीनामुपरि आधिपत्ये एत्य जित्वा अरिमर्दनः परमेश्वरादन्यः कोस्तीति पूर्वेण संबंधः ४ किंचेति देवप्रसादात् देवैः पूजितत्वा दृष्ट्वा बहुभिः सूक्तैः किमिति द्वयोः संबंधः ५ ६ अव्यक्तेति एषु लोकेषु सर्वगस्य व्यापकस्य इदमात्मकं व्याप्यं कृत्स्नं दृश्यं चेतनाचेतनमादिः सजीवं निर्जीवं आदिपदात् परोक्षं स्वर्गादि अहमर्थश्च देहेंद्रियादिः एतत्सर्वं भोग्यं महेश्वरात् महेश्वरानुग्रहात् अव्यक्तकेशाय जीवाय जीवार्थं तस्य भोगाय भवतीति विद्धि हे शक्र अव्यक्तं अस्पष्टं यथा स्यात्तथा मुक्तः त्यक्तः तिरोहितं नित्यमुक्तत्वमस्येत्यर्थः स चासौ केशइव

केशाः शिवांशाः इति अव्यक्तमुक्तकेश यत्किंचिल्लोग्यंय कश्चन नंनु शिवादेवनोतिनान्योभवदादिस्तत्पदइतिभावः ७ पृच्छतिपदंव्याचष्टे भुवाद्येष्विति भू
रादिष्विति द्रष्टव्यंतेन भूर्भुवः स्वर्महः शब्दिनाल्लोकाः भूरितिवा अयंलोक इत्यादिश्रुतिप्रसिद्धाः तथा आलोकाः भूरितिवा अग्निर्भूरितिवाऋच इत्यादिश्रुतिप्रसि
द्धाः तथा अंतराः भूरितिप्राण इत्यांद्यौः सूर्यचंद्रश्च लाडांतास्तेषुविभवेषुदिव्यप्रकेषु अथयदतःपरोदिवोज्योतिर्दीप्यतेविश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुमनेषूत्तमे
षुलोकेष्वितिश्रुतंज्योतिः शब्दितदेवंवदंतेतत्वदर्शिनोवैदिकाइत्यर्थः माद्यश्लोकः ८ भवाहूतिभगवतुल्यामूर्तिंशरणंनामवेतिशेषः ९ अभिघातेषु युद्धेषु अ

भुवाद्येषु महांतेषु लोकालोकांतरेषु च । द्वीपस्थानेषु मेरोश्च विभवेष्वंतरेषु च ८ भगवन्भववन्देवं वदंते तत्त्वदर्शिनः यदिदेवाः सुराः
शक्रपुरोगमास्त्वन्यां भवाकृतिम् ९ किन्नगच्छति शरणं नाहिता श्वासुरैः सुराः अभिघातेषु देवानां सयक्षोरगरक्षसाम् १० परस्पर
विनाशेषु स्वस्थानैश्वर्यदो भवः अंधकस्याथ शुक्रस्य दुंदुभेर्महिषस्य च ११ यक्षेंद्रबलरक्षःसु निवातकवचेषु च वरदानावघा
नाय ब्रूहि कोन्यो महेश्वरात् १२ सुरासुरगुरोर्वक्त्रे कस्य रेतः पुराहुतम् कस्य वान्यस्य रेतस्तद्येन हैमो गिरिः कृतः १३ दिग्वासाः की
र्तितः कोन्यो लोके कश्चोर्ध्वरेतसः कस्य चार्द्धे स्थिता कान्ता अनंगः केन निर्जितः १४ ब्रूहींद्र परमं स्थानं कस्य देवैः प्रशस्यते श्मशाने
कस्य क्रीडार्थं नृत्ते वा कोभिभाष्यते १४ कस्यैश्वर्यं समानं च भूतैः को वापि क्रीडते कस्य तुल्यबला देवगणाश्चैश्वर्यदर्पिताः १५
घुष्यते ह्यचलं स्थानं कस्य त्रैलोक्यपूजितम् वर्षते तपते कोन्यो ज्वलते तेजसा च कः १५ कस्मादोषधिसंपत्तिः को वा धारयते वसु प्रकामं क्री
डते को वा त्रैलोक्ये सचराचरे १६ ज्ञानसिद्धिक्रियायोगैः सेव्यमानश्च योगिभिः ऋषिगंधर्वसिद्धैश्च विहितं कारणं हरे १७ कर्मयज्ञक्रि
यायोगैः सेव्यमानः सुरासुरैः नित्यं कर्मफलैर्हीनं तमहं कारणं वदे १८ स्थूलं सूक्ष्ममनौपम्यमग्राह्यं गुणगोचरम् गुणहीनं गुणाध्य
क्षं परमात्मेश्वरं पदम् १९ स्थित्युत्पत्त्योः कारणं च लोकालोकांतकारणम् भूतं भव्यं भविष्यं च जनकं सर्वकारणम् २० अक्षरं क्षरमव्य
क्तं विद्याविद्ये कृताकृते धर्माधर्मौ यतः शक्रस्तमहं कारणं वदे २१ प्रत्यक्षमिह देवेंद्र पश्य लिंगं भगांकितम् देवदेवेन रुद्रेण सृष्टिसंहार
हेतुना २२ मात्रा पूर्वं ममाख्यातं कारणं लोककारणम् नास्ति चेशात्परं शक्र तं प्रपद्य यदीच्छसि २३

न्योन्यं विनाशवत्सु ऐश्वर्यं नास्ति किं
तु विनाशमेवास्तीत्यर्थः अतः स्वस्थानैश्वर्याभिलक्ष्य भुवनेश्वर्यदो भवनीतिभावः १० ११ वरदानमहितोः यत्नातो विमर्दनं तस्मै समर्थ इतिशेषः १२ सुरेति
रुद्रस्य रेतो वन्हौ स्कन्नं तेन च दृष्टं कनत्सत्कनककलशामीमिति पुराणानंतरम्भाकथासूचिता १३ दिग्वासा इति विग्रहवतोपि शिवस्य चरितं निरुपमं कि
मतां विग्रहस्येति शेषः यंश्चतात्पर्यं १४ १५ १६ १७ १८ १९ २० २१ २२ २३ ७ ७ ७ ७ ७

प्रत्यक्षंननुतेसुरेशविदितंसंयोगलिंगोद्भवंत्रैलोक्यंसविकारनिर्गुणगणंब्रह्मादिरेतोद्भवम् यद्ब्रह्मेंद्रहुताशविष्णुसहितादेवाश्चदैत्या
सुरानान्यंकामसहस्रकल्पितधियःशंसंतियस्मात्परम् २४ तंदेवंसचराचरस्यजगतोव्याख्यातवेद्योत्तमंकामार्थीवरयामिसंयतम
नामोक्षायसर्वशिवम् २५ हेतुभिर्वाकिमन्यैस्तैरीशःकारणकारणम् नशुश्रुमयदन्यस्यलिंगमभ्यर्चितंसुरैः २६ कस्यान्यस्यसु
रैःसर्वैर्लिंगंमुक्त्वासुरेश्वरम् अर्चतेर्चितपूर्वंवाब्रूहियद्यस्तितेश्रुतिः २७ यस्यब्रह्माचविष्णुश्चत्वंचापिसहदैवतैः अर्चयेथाःसदा-
लिंगंतस्माच्छ्रेष्ठतमोहिसः २८ नपद्मांकानचक्रांकानवज्रांकायतःप्रजाः लिंगांकाचभगांकाचतस्मान्माहेश्वरीप्रजा २९ देव्याःकारणरू
पभावजनिताःसर्वाभगांकास्त्रियोलिंगेनापिहरस्यसर्वपुरुषाःप्रत्यक्षचिह्नीकृताः योन्यत्कारणमीश्वरात्प्रवदतेदेव्याचयन्नांकितंत्रैलो-
क्येसचराचरेनसपुमान्मूढोभवेत्दुर्मतिः ३० पुल्लिंगंसर्वमीशानंस्त्रीलिंगंविद्धिचाप्युमाम् द्वाभ्यांतनुभ्यांव्याप्तंहिचराचरमिदंजगत्
३१ तस्माद्वरमहंकांक्षेनिधनंचापिकौशिक गच्छवातिष्ठवाशक्रयथेष्टंबलसूदन ३२ काममेषवरोमेस्तुशापोवाथमहेश्वरात् नचा
न्यांदेवतांकांक्षेसर्वकामफलामपि ३३ एवमुक्त्वातुदेवेंद्रंदुःखादाकुलितेंद्रियः नप्रसीदतिमेदेवःकिमेतदितिचिंतयन् ३४ अथाप
श्यंक्षणेनैवतमेवैरावतंपुनः हंसकुंदेंदुसदृशंमृणालरजतप्रभम् ३५ वृषरूपधरंसाक्षात्क्षीरोदमिवसागरम् कृष्णपुच्छंमहाकायं-
मधुपिंगललोचनम् ३६ वज्रसारमयैःशृंगैर्निष्टप्तकनकप्रभैः सुतीक्ष्णमृदुरक्ताग्रैरुत्किरंतमिवावनिम् ३७ जांबूनदेनदाम्नाच
सर्वतःसमलंकृतम् सुवक्त्रखुरनासंचसुकर्णंसुकटीतटम् ३८ सुपार्श्वंविपुलस्कंधंसुरूपंचारुदर्शनम् ककुदंतस्यचाभातिस्कंधमा
पूर्यधिष्ठितम् ३९ तुषारगिरिकूटाभंसिताभ्रशिखरोपमम् तमास्थितश्चभगवान्देवदेवःसहोमया ४० अशोभतमहादेवःपौर्ण
मास्यामिवोडुराट् तस्यतेजोभवोवन्हिःसमेघःस्तनयित्नुमान् ४१ सहस्रमिवसूर्याणांसर्वमापूर्यधिष्ठितः ईश्वरःसुमहातेजाःसंवर्त
कइवानलः ४२ युगांतेसर्वभूतानांदिधक्षुरिवचोद्यतः तेजसातुतदाव्याप्तंदुर्निरीक्ष्यंसमंततः ४३ पुनरुद्विग्नहृदयःकिमेतदिति
चिंतयम् मुहूर्तमिवतत्तेजोव्याप्तसर्वादिशोदश ४४ प्रशांतंदिक्षुसर्वासुदेवदेवस्यमायया अथापश्यंस्थितंस्थाणुंभगवंतंमहेश्व
रम् ४५ नीलकंठंमहात्मानमसक्तंतेजसांनिधिम् अष्टादशभुजंस्थाणुंसर्वाभरणभूषितम् ४६ शुक्लांबरधरंदेवंशुक्लमाल्यानुले २४
पनम् शुक्लध्वजमनाधृष्यंशुक्लयज्ञोपवीतिनम् ४७

४३ ४४ ४५ ४६ ४७ ७. ७. ७.

गायद्भिर्नृत्यमानैश्च वादयद्भिश्च सर्वशः वृतं पार्श्वचरैर्दिव्यैरात्मतुल्यपराक्रमैः ४८ बालेंदुमुकुटं पांडुं शरच्चंद्रमिवोदितम् त्रिभिर्नेत्रैः
कृतोद्योतं त्रिभिः सूर्यैरिवोदितैः ४९ अशोभत च देवस्य माला गात्रे सितप्रभे जातरूपमयैः पद्मैर्ग्रथिता रत्नभूषिता ५० मूर्त्तिमंति तथा
स्त्राणि सर्वतेजोमयानि च मया दृष्टानि गोविंद भवस्यामिततेजसः ५१ इंद्रायुधसवर्णाभं धनुस्तस्य महात्मनः पिनाकमिति विख्यात
मभवत्पन्नगो महान् ५२ सप्तशीर्षो महाकायस्तीक्ष्णदंष्ट्रो विषोल्बणः ज्यावेष्टितमहाग्रीवः स्थितः पुरुषविग्रहः ५३ शरश्च सूर्यसं
काशः कालानलसमद्युतिः एतदस्त्रं महाघोरं दिव्यं पाशुपतं महत् ५४ अद्वितीयमनिर्देश्यं सर्वभूतभयावहम् सस्फुलिंगं महाकायं
विसृजंतमिवानलम् ५५ एकपादं महादंष्ट्रं सहस्रशिरसोदरम् सहस्रभुजजिह्वाक्षमुद्गिरंतमिवानलम् ५६ ब्राह्म्यान्नारायणा
च्चैंद्रादाग्नेयादपि वारुणात् यद्विशिष्टं महाबाहो सर्वशस्त्रविघातनम् ५७ येन तत्त्रिपुरं दग्ध्वा क्षणाद्भस्मीकृतं पुरा शरेणैकेन गोविं
द महादेवेन लीलया ५८ निर्दहेत च यत्कृत्स्नं त्रैलोक्यं सचराचरम् महेश्वरभुजोत्सृष्टं निमेषार्द्धान्न संशयः ५९ नावध्यो यस्य
लोकेस्मिन् ब्रह्मविष्णुसुरेष्वपि तदहं दृष्टवांस्तत्र आश्चर्यमिदमुत्तमम् ६० गुह्यमस्त्रं परं चान्यत् तत्तुल्यमधिकं हि वा यत्तच्छू-
लमिति ख्यातं सर्वलोकेषु शूलिनः ६१ दारयेद्यां महीं कृत्स्नां शोषयेद्यो महोदधिम् संहरेद्वा जगत्कृत्स्नं विसृष्टं शूलपाणिना यौव-
नाश्वो हतो येन मांधाता सबलः पुरा ६२ चक्रवर्त्ती महातेजास्त्रिलोकविजयी नृपः महाबलो महावीर्यः शक्रतुल्यपराक्रमः करस्थे
नैव गोविंद लवणस्येह रक्षसः ६३ तच्छूलमतितीक्ष्णाग्रं सुभीमं लोमहर्षणम् त्रिशिखां भ्रुकुटिं कृत्वा तर्जमानमिव स्थितम् ६४
विधूमं सार्चिषं कृष्णं कालसूर्यमिवोदितम् सर्पहस्तमनिर्देश्यं पाशहस्तमिवांतकम् ६५ दृष्टवानस्मि गोविंद तदस्त्रं रुद्रसन्निधौ
परशुस्तीक्ष्णधारश्च दत्तो रामस्य यः पुरा ६६ महादेवेन तुष्टेन क्षत्रियाणां क्षयंकरः कार्त्तवीर्यो हतो येन चक्रवर्त्ती महामृधे ६७ त्रिः
सप्तकृत्वः पृथिवी येन निःक्षत्रिया कृता जामदग्न्येन गोविंद रामेणाक्लिष्टकर्मणा ६८ दीप्तधारः सुरौद्रास्यः सर्पकंठाग्रधिष्ठितः अ
भवच्छूलिनोभ्याशे दीप्तवह्निशिखोपमः ६९ असंख्येयानि चास्त्राणि तस्य दिव्यानि धीमतः प्राधान्यतो मयैतानि कीर्त्तितानि तवान
घ ७० सव्यदेशे तु देवस्य ब्रह्मा लोकपितामहः दिव्यं विमानमास्थाय हंसयुक्तं मनोजवम् ७१ वामपार्श्वगतश्चापि तथा नारायणः
स्थितः वैनतेयं समारुह्य शंखचक्रगदाधरः ७२ स्कंदो मयूरमास्थाय स्थितो देव्याः समीपतः शक्तिं घंटे समादाय द्वितीय इव पावकः ७३

पुरस्ताच्चैवदेवस्यनंदिंपश्चाम्नवस्थितम् भूलंविष्टभ्यतिष्ठंतंद्वितीयमिवशंकरम् ७४ स्वायंभुवाद्यामनवोभृग्वाद्याऋषयस्तथा श
क्राद्यादेवताश्चैवसर्वएवसमभ्ययुः ७५ सर्वभूतगणाश्चैवमातरोविविधाःस्थिताः तेभिवाद्यमहात्मानंपरिवार्यसमंततः ७६ अस्तु
वन्विविधैःस्तोत्रैर्महादेवंसुरास्तदा ब्रह्माभवंतदास्तोषीद्रथंतरमुदीरयन् ७७ ज्येष्ठसाम्नाचदेवेशंजगौनारायणस्तदा ७७ गृण
न्ब्रह्मपरंशक्रःशतरुद्रियमुत्तमम् ब्रह्मानारायणश्चैवदेवराजश्चकौशिकः ७८ अशोभंतमहात्मानस्त्रयस्त्रयइवाग्नयः तेषांमध्य
गतोदेवोरराजभगवाञ्छिवः ७९ शरदभ्रविनिर्मुक्तःपरिधिस्थइवांशुमान् अयुतानिचचंद्रार्कानपश्यंतिदिविकेशव ततोहमस्तुवंदे
वविश्वस्यजगतःपतिम् ८० उपमन्युरुवाच नमोदेवाधिदेवायमहादेवायतेनमः शक्ररूपायशक्रायशक्रवेषधरायच ८१
नमस्तेवज्रहस्तायपिंगलायारुणायच पिनाकपाणयेनित्यंशंखशूलधरायच ८२ नमस्तेकृष्णवासायकृष्णकुंचितमूर्द्धजे कृ
ष्णाजिनोत्तरीयायकृष्णाष्टमिरतायच ८३ शुक्लवर्णायशुक्लायशुक्लांबरधरायच शुक्लभस्मावलिप्तायशुक्लकर्मरतायच ८४ न
मोस्तुरक्तवर्णायरक्तांबरधरायच रक्तध्वजपताकायरक्तस्रगनुलेपिने ८५ नमोस्तुपीतवर्णायपीतांबरधरायच नमोस्तूच्छ्रित
छत्रायकिरीटवरधारिणे ८६ अर्धहारार्द्धकेयूरअर्धकुंडलकर्णिने नमःपवनवेगायनमोदेवायवैनमः ८७ सुरेंद्रायमुनींद्रा
यमहेंद्रायनमोस्तुते नमःपद्मार्धमालायउत्पलैर्मिश्रितायच ८८ अर्धचंदनलिप्तायअर्धस्रगनुलेपिने नमआदित्यव
क्त्रायआदित्यनयनायच ८९ नमआदित्यवर्णायआदित्यप्रतिमायच नमःसोमायसौम्यायसौम्यवक्त्रधरायच ९० सौम्यरू
पायमुख्यायसौम्यदंष्ट्राविभूषणे नमःश्यामायगौरायअर्धपीतार्धपांडवे ९१ नारीनरशरीरायस्त्रीपुंसायनमोस्तुते नमोवृषभ
वाहायगजेंद्रगमनायच ९२ दुर्गमायनमस्तुभ्यंमगम्यागमनायच नमोस्तुगणगीतायगणवृंदरतायच ९३ गणानुयातमार्गाय
गणनित्यव्रतायच नमःश्वेताभ्रवर्णायसंध्यारागप्रभायच ९४ अनुद्दिष्टाभिधानायस्वरूपायनमोस्तुते नमोरक्ताग्रवासायरक्त
सूत्रधरायच ९५ रक्तमालाविचित्रायरक्तांबरधरायच मणिभूषितमूर्द्धायनमश्चंद्रार्द्धभूषिणे विचित्रमणिमूर्द्धायकुसुमाष्ट
धरायच ९६ नमोग्निमुखनेत्रायसहस्रशशिलोचने अग्निरूपायकांतायनमोस्तुगहनायच ९७

९८ अधिवासेनपुष्पादिवासनावासिततयासुवाससे प्रतिपत्तिर्ज्ञानंस्कंदनदुभयात्मने ९९ मुकुंदेमुकुंदाय ३०० त्रीणिनेत्राणीवनेत्राणिलोकयात्रा-
निर्वाहकानि अग्निचंद्रसूर्याख्यानिनेत्राणियस्यतस्मैत्रिनेत्रनेत्राय लोचनेलोचनाय १ शंयोर्यज्ञसान्गुण्यकर्त्र्यादेवतायाअभिस्रवंतायप्रसादरूपा-

खचरायनमस्तुभ्यंगोचराभिरतायच भूचरायभुवनायअनंतायशिवायच ९८ नमोदिग्वाससेनित्यमधिवाससुवाससे नमोजग-
न्निवासायप्रतिपत्तिसुखायच ९९ नित्यमुद्बद्धमुकुटेमहाकेयूरधारिणे सर्पकंठोपहारायविचित्राभरणायच ३०० नमस्त्रिनेत्र
नेत्रायसहस्रशतलोचने स्त्रीपुंसायनपुंसायनमःसांख्याययोगिने १ शंयोरभिस्रवंतायअथर्वायनमोनमः नमःसर्वार्त्तिनाशा
यनमःशोकहरायच २ नमोमेघनिनादायबहुमायाधरायच बीजक्षेत्राभिपालायस्रष्टारायनमोनमः ३ नमःसुरासुरेशाय-
विश्वेशायनमोनमः नमःपवनवेगायनमःपवनरूपिणे ४ नमःकांचनमालायगिरिमालायवैनमः नमःसुरारिमालायचंडवेगा
यवैनमः ५ ब्रह्मशिरोपहर्त्रायमहिषघ्नायवैनमः नमःस्त्रीरूपधारायायज्ञविध्वंसनायच ६ नमस्त्रिपुरहर्त्रायययज्ञविध्वंसना-
यच नमःकामांगनाशायकालदंडधरायच ७ नमस्कंदविशाखायब्रह्मदंडायवैनमः नमोभवायशर्वायविश्वरूपायवैनमः ८
ईशानायभवघ्नायनमोस्त्वंधकघातिने नमोविश्वायमायायचिंत्याचिंत्यायवैनमः ९ त्वंनोगतिश्चश्रेष्ठश्चत्वमेवहृदयंतथा त्वंब्र
ह्मासर्वदेवानांरुद्राणांनीललोहितः आत्माचसर्वभूतानांसांख्येपुरुषउच्यते १० ऋषभस्त्वंपवित्राणांयोगिनांनिष्कलःशिवः गृ
हस्थस्त्वमाश्रमिणामीश्वराणांमहेश्वरः ११ कुबेरःसर्वयक्षाणांक्रतूनांविष्णुरुच्यते पर्वतानांभवान्मेरुर्नक्षत्राणांचचंद्रमाः १२
वसिष्ठस्त्वमृषीणांचग्रहाणांसूर्यउच्यते आरण्यानांपशूनांचसिंहस्त्वंपरमेश्वरः १३ ग्राम्याणांगोवृषश्चासिभवाँल्लोकप्रपूजितः आ
दित्यानांभवान्विष्णुर्वसूनांचैवपावकः १४ पक्षिणांवैनतेयस्त्वमनंतोभुजगेषुच सामवेदश्चवेदानांयजुषांशतरुद्रियम् १५ सन
त्कुमारोयोगीनांसांख्यानांकपिलोह्यसि शक्रोसिमरुतांदेवपितॄणांहव्यवाडसि १६ ब्रह्मलोकश्चलोकानांशैलानांहिमवान्गिरिः व-
र्णानांब्राह्मणश्चासिविप्राणांदीक्षितोद्विजः १७ आदिस्त्वमसिलोकानांसंहर्ताकालएवच यच्चान्यदपिलोकेवैसर्वतेजोधिकंस्मृतम्
१८ तत्सर्वंभगवानेवइतिमेनिश्चितामतिः नमस्तेभगवन्देवनमस्तेभक्तवत्सल १९ योगेश्वरनमस्तेस्तुनमस्तेविश्वसंभव प्रसी
दममभक्तस्यदीनस्यकृपणस्यच ३२० ::

य २ स्रष्टारायऔणादिकःसृजेस्तारन् स्रष्टेरत्यर्थः ३ ४ गिरिमालायगिरौक्रीडापराय ५ ६ हर्त्राय
त्रे ७ ८ मायायमायाविने ९ मातःप्रायंस्थानंश्रेष्ठःपूज्यतमः ब्रह्मादिस्तवविभूतिर्विशेषाभिव्यक्तिस्थानं १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०

२१ २२ २३ २४ २५ २६ २७ २८ कामेभ्यः कामान् काम्यमानान् अर्थान् २९ ३० ३१ ३२ ३३ ३४ ३५ ३६
एवंपुरोवर्त्तिमूर्त्तिरूपम् यत् अजं अनाविर्भूतं अक्षरं व्यापकं ज्ञानं तं देव इति एवं प्रकारेण ख्यातं प्रथां गतं विशेषं विशिष्टं देवतां नरापेक्षया सनातनमिति मूर्त्तेर

अनेश्वर्येण युक्तस्य गतिर्भव सनातन यच्चापराधं कृतवानज्ञात्वा परमेश्वर २१ मद्भक्त इति देवेश तत्सर्वं क्षंतुमर्हसि मोहितश्चास्मि देवेश त्वया रूपविपर्ययात् २२ नार्घ्यं तेन मया दत्तं पाद्यं चापि महेश्वर एवं स्तुत्वाहमीशानं पाद्यमर्घ्यं च भक्तितः २३ कृतांजलिपुटो भूत्वा सर्वं तस्मै न्यवेदयम् ततः शीतांबुसंयुक्ता दिव्यगंधसमन्विता २४ पुष्पवृष्टिः शुभा तात निपपात मम मूर्द्धनि दुंदुभिश्च तदा दिव्यस्ताडितो देवकिंकरैः ववौ च मारुतः पुण्यः शुचिगंधः सुखावहः २५ ततः प्रीतो महादेवः सपत्नीको वृषध्वजः अब्रवीत्त्रिदशांस्तत्र हर्षयन्निव मां तदा २६ पश्यध्वं त्रिदशाः सर्वे उपमन्योर्महात्मनः मयि भक्तिं परां नित्यमेकभावादवस्थिताम् २७ एवमुक्तास्तदा कृष्ण सुरास्ते शूलपाणिना ऊचुः प्रांजलयः सर्वे नमस्कृत्वा वृषध्वजम् २८ भगवन् देवदेवेश लोकनाथ जगत्पते लभतां सर्वकामेभ्यः फलं त्वत्तो द्विजोत्तमः २९ एवमुक्तस्ततः शर्वः सुरैर्ब्रह्मादिभिस्तथा आह मां भगवानीशः प्रहसन्निव शंकरः ३० भगवानुवाच वत्सोपमन्यो तुष्टोऽस्मि पश्य मां मुनिपुंगव दृढभक्तोऽसि विप्रर्षे मया जिज्ञासितो ह्यसि ३१ अनया चैव भक्त्या ते अत्यर्थं प्रीतिमानहम् तस्मात्सर्वान्ददाम्यद्य कामांस्तव यथेप्सितान् ३२ एवमुक्तस्य चैवाथ महादेवेन धीमता हर्षादश्रूण्यवर्त्तन्त रोमहर्षश्च अजायत ३३ अब्रुवं च तदा देवं हर्षगद्गदया गिरा जानुभ्यामवनीं गत्वा प्रणम्य च पुनः पुनः ३४ अद्य जातोऽस्म्यहं देव सफलं जन्म चाद्य मे सुरासुरगुरुर्देवो यत्तिष्ठति ममाग्रतः ३५ यं न पश्यन्ति चैवाद्धा देवा ह्यमितविक्रमम् तमहं दृष्टवान्देवं कोऽन्यो धन्यतरो मया ३६ एवं ध्यायन्ति विद्वांसः परं तत्त्वं सनातनम् तद्विशेषमिति ख्यातं यदजं ज्ञानमक्षरम् ३७ स एष भगवान्देवः सर्वसत्त्वादिरव्ययः सर्वतत्त्वविधानज्ञः प्रधानपुरुषः परः ३८ योऽसृजद्दक्षिणादंगाद्ब्रह्माणं लोकसंभवम् वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ३९ युगांते चैव संप्राप्ते रुद्रमीशोऽसृजत्प्रभुः स रुद्रः संहरन्कृत्स्नं जगत्स्थावरजंगमम् ४० कालो भूत्वा महातेजाः संवर्त्तक इवानलः युगांते सर्वभूतानि ग्रसन्निव व्यवस्थितः ४१ एष देवो महादेवो जगत्सृष्ट्वा चराचरम् कल्पांते चैव सर्वेषां स्मृतिमाक्षिप्य तिष्ठति ४२ सर्वगः सर्वभूतात्मा सर्वभूतभवोद्भवः आस्ते सर्वगतो नित्यमदृश्यः सर्वदैवतैः ४३ यदि देयो वरो मह्यं यदि तुष्टोऽसि मे प्रभो भक्तिर्भवतु मे नित्यं त्वयि देव सुरेश्वर ४४

पि नित्यत्वं व्यवहारापेक्षया प्रोक्तं ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ७ ७

४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ षो
डशवरान् सपत्नीकान् महेश्वरात् तत्रापि अष्टौ महेश्वरात् परिशेषात् अष्टौ पत्नीत इति षोडशेत्यर्थः यद्वा अष्टौ पत्नीतः प्रार्थिताः अष्टौ तयाम्नयं दत्ता इति षोडश अ

अतीतानागतंचैव वर्त्तमानंचयद्विभो जानीयामितिमेबुद्धिः प्रसादात्सुरसत्तम ४५ क्षीरोदनंचभुंजीयामक्षयंसहबांधवैः आश्रमेचस
दास्माकंसान्निध्यंपरमस्तुते ४६ एवमुक्तःसमांप्राहभगवाल्लोकपूजितः महेश्वरोमहातेजाश्चराचरगुरुःशिवः ४७ श्रीभगवानुवाच
अजरश्चामरश्चैवभवत्वंदुःखवर्जितः यशस्वीतेजसायुक्तोदिव्यज्ञानसमन्वितः ४८ ऋषीणामभिगम्यश्चमत्प्रसादाद्भविष्यसि शी
लवान्गुणसंपन्नःसर्वज्ञःप्रियदर्शनः ४९ अक्षयंयौवनंतेस्तुतेजश्चैवानलोपमम् क्षीरोदःसागरश्चैवयत्रयत्रेच्छसिप्रियम् ५०
तत्रतेभविताकामंसान्निध्यंपयसोनिधेः क्षीरोदनंचभुंक्ष्वत्वममृतेनसमन्वितम् ५१ बंधुभिःसहितःकल्पंततोमामुपयास्यसि अ
क्षयाबांधवाश्चैवकुलंगोत्रंचतेसदा ५२ भविष्यतिद्विजश्रेष्ठमयिभक्तिश्चशाश्वती सान्निध्यंचाश्रमेनित्यंकरिष्यामिद्विजोत्तम ५३
निश्चवत्सयथाकामंनोत्कंठांचकरिष्यसि स्मृतस्त्वयापुनर्विप्रकरिष्यामिचदर्शनम् ५४ एवमुक्त्वासभगवान्सूर्यकोटिसमप्रभः ईशानः
सुवरान्दत्वातत्रैवांतरधीयत ५५ एवंदृष्टोमयाकृष्णदेवदेवःसमाधिना तदवाप्तंचमेसर्वंयदुक्तंतेनधीमता ५६ प्रत्यक्षंचैवतेकृष्णप
श्यसिद्धान्व्यवस्थितान् ऋषीन्विद्याधरान्यक्षान्गंधर्वाप्सरसस्तथा ५७ पश्यवृक्षलतागुल्मान्सर्वपुष्पफलप्रदान् सर्वर्त्तुकुसुमै
र्युक्तान्सुखपत्रान्सुगंधिनः ५८ सर्वमेतन्महाबाहोदिव्यभावसमन्वितम् प्रसादाद्देवदेवस्यईश्वरस्यमहात्मनः ५९ वासुदेवउवा
च एतच्छ्रुत्वावचस्तस्यप्रत्यक्षमिवदर्शनम् विस्मयंपरमंगत्वाअब्रुवंतंमहामुनिम् ६० धन्यस्त्वमसिविप्रेंद्रकस्त्वदन्योस्तिपु
ण्यकृत् यस्यदेवाधिदेवस्तेसान्निध्यंकुरुतेश्रमे ६१ अपितावन्ममाप्येवंदद्यात्सभगवाञ्छिवः दर्शनंमुनिशार्दूलप्रसादंचापिशंकरः
६२ उपमन्युरुवाच द्रक्ष्यसेपुंडरीकाक्षमहादेवंनसंशयः अचिरेणैवकालेनयथादृष्टोमयानघ ६२ चक्षुषाचैवदिव्येनपश्याम्य
मितविक्रमम् षष्ठेमासिमहादेवंद्रक्ष्यसेपुरुषोत्तम ६३ षोडशाष्टौवरांश्चापिप्राप्स्यसित्वंमहेश्वरात् सपत्नीकाद्यदुश्रेष्ठसत्यमेतद्ब्र
वीमिते ६४ अतीतानागतंचैववर्त्तमानंचनित्यशः विदितंमेमहाबाहोप्रसादात्तस्यधीमतः ६५ एतान्सहस्रशश्चान्यान्समनुध्यात
वान्हरः कस्मात्प्रसादंभगवान्नकुर्यात्तवमाधव त्वादृशेनहिदेवानांश्लाघनीयःसमागमः ६६

श्रेचेत्यर्थः ६४ ६५ एतान् इतः स्थान मुनीन्
समनुध्यानवान् कृपया आलोकितवान् एतेष्वपि दया त्वयि आत्मनि दयां कथं न करिष्यतीत्यर्थः ६६ ६७ ६७ ६७ ६७ ६७ ६७

६७ ६८ ६९ ७० ७१ ७२ तेजोवर्णयति इंद्रेति यस्य तेजसो मध्ये अनेकानि इंद्रधनूंषि विद्युतो नीलमेघाः श्वेतमेघाश्च पर्वत
बलाकारूणा भांति तादृशं चित्ररूपं तेज इत्यर्थः ७३ ७४ ७५ रराजेति नीलेतेजसि सोमसूर्यप्रभो भवानीशंकरो इति भ्राजत इत्यर्थः ७६ ७७ ७८ ७९

ब्रह्मण्येनानृशंसेन श्रद्दधानेन चाप्युत जप्यं तु ते प्रदास्यामि येन द्रक्ष्यसि शंकरम् ६७ विष्णुरुवाच अनुवंतमहं ब्रह्मन् लब्धप्रसादा
महामुने दृष्टवान् दितिजसंघानामर्दनं त्रिदशेश्वरम् ६८ एवं कथयतस्तस्य महादेवाश्रितां कथाम् दिनान्यष्टौ ततो जग्मुर्मुहूर्त्तमिव भारत
६९ दिनेऽष्टमे तु विप्रेण दीक्षितोहं यथाविधि दंडी मुंडी कुशी चीरी घृताक्तो मेखली कृतः ७० मासमेकं फलाहारो द्वितीयं सलिलाशनः तृ-
तीयं च चतुर्थं च पंचमं च जलाशनः ७१ एकपादेन तिष्ठंश्च ऊर्ध्वबाहुरतंद्रितः तेजः सूर्यसहस्रस्य अपश्यं दिवि भारत ७२ तस्य मध्यग-
तं चापि तेजसः पांडुनंदन इंद्रायुधपिनद्धांगं विद्युन्मालागवाक्षकम् ७३ नीलशैलचयप्रख्यं बलाकाभूषितांबरम् ७४ तत्रस्थितश्च
भगवान् देव्या सह महाद्युतिः तपसा तेजसा कांत्या दीप्तया सह भार्यया ७५ रराज भगवांस्तत्र देव्या सह महेश्वरः सोमेन सहितः
सूर्यो यथा मेघस्थितस्तथा ७६ संहृष्टरोमा कौंतेय विस्मयोत्फुल्ललोचनः अपश्यं देवसंघानां गतिमार्त्तिहरं हरम् ७७ किरीटिनं गदि
नं शूलपाणिं व्याघ्राजिनं जटिलं दंडपाणिम् पिनाकिनं वज्रिणं तीक्ष्णदंष्ट्रं शुभांगदं व्यालयज्ञोपवीतम् ७८ दिव्यां मालामुरसानेकवर्णां
समुद्वहंतं गुल्फदेशावलंबां चंद्रं यथा परिविष्टं ससंध्यं वर्षात्यये तद्वदपश्यमेनम् ७९ प्रमथानां गणैश्चैव समंतात्परिवारितम् शरदी
व सुदुःप्रेक्ष्यं परिविष्टं दिवाकरम् ८० एकादशशतान्येवं रुद्राणां वृषवाहनम् अस्तुवं नियतात्मानं कर्मभिः शुभकर्मिणम् ८१ आदि
त्या वसवः साध्या विश्वेदेवास्तथाश्विनौ विश्वाभिः स्तुतिभिर्देवं विश्वदेवं समस्तुवन् ८२ शतक्रतुश्च भगवान् विष्णुश्चादितिनंदनो
ब्रह्मा रथंतरं साम ईरयंति भवांतिके ८३ योगीश्वराः सुबहवो योगदं पितरं गुरुम् ब्रह्मर्षयश्च ससुतास्तथा देवर्षयश्च वै ८४ पृथि
वी चांतरिक्षं च नक्षत्राणि ग्रहास्तथा मासार्द्धमासा ऋतवो रात्रिः संवत्सरः क्षणाः ८५ मुहूर्त्ताश्च निमेषाश्च तथैव युगपर्ययाः दिव्या-
राजन्नमस्यंति विद्याः सर्वविदस्तथा ८६ सनत्कुमारो देवाश्च इतिहासास्तथैव च मरीचिरंगिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ८७
मनवः सप्त सोमश्च अथर्वा सबृहस्पतिः भृगुर्दक्षः कश्यपश्च वसिष्ठः काश्यप एव च ८८ छंदांसि दीक्षा यज्ञाश्च दक्षिणाः पावको हविः
यज्ञोपगानि द्रव्याणि मूर्त्तिमंति युधिष्ठिर ८९ प्रजानां पालकाः सर्वे सरितः पन्नगा नगाः देवानां मातरः सर्वा देवपत्न्यः सकन्यकाः ९०

परिविष्टं परिवेषवंतं ८० ८१ विश्वाभिः ब्रह्मपरत्वेन स्तुतिरेव कृत्स्नस्तुतिः इतरा तु एकदेशस्तुतिरित्यर्थः विश्वदेवं सर्वेश्वरं ८२ ८३ ८४ पृथिव्यादयोऽत्र मूर्त्तिमं
तो ज्ञेयाः ८५ ८६ ८७ ८८ ८९ ९०

शाश्वतोऽपरिणामी सन् सर्वयोनिः ब्रह्मणो वेदस्याधिपः स्वव्यः नपः चिनेंद्रियाणामैकाग्र्यं ९८ धाताईश्वरः त्वष्टारूपनिर्माता विधाता धर्मरूपं धर्म ९९. स्थावराणि चिरकालस्थायीनि महदादीनि चराणि स्थूलभूतादीनि चराचरं लोकप्रसिद्धं ४०० वायवः पंच प्राणाः सप्ताग्नयः गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्याः पंच श्रौताः स्मार्तः षष्ठः लौकिकः सप्तम यद्वा सप्तवायव आवहाद्याः अंतरिक्षे ये भुव आदीन् सत्यांतान् लोकान् धारयंति अग्नय आदित्यादिज्योतींषि भूते सर्वत्र ये च ये देवसंस्थाः देवेषु आत्मनि संस्था समाप्तिर्येषां तेन तथा क्तवदेवताः स्तुतियोग्याः देवाः

सहस्राणि मुनीनां च अयुतान्यर्बुदानि च नमस्यंति प्रभुं शांतं पर्वताः सागरा दिशः गंधर्वाप्सरसश्चैव गीतवादित्रकोविदाः ९१ दिव्यतालेषु गायंतः स्तुवंति भवमद्भुतम् विद्याधरा दानवाश्च गुह्यका राक्षसास्तथा ९२ नमस्यंति महाराज वाङ्मनःकर्मभिर्विभुम् पुरस्तात्स्थितः शर्वो मामासीत्त्रिदशेश्वरः ९३ पुरस्तात्स्थितं दृष्ट्वा मामीशानं च भारत सप्रजापतिशक्रांतं जगन्मामभ्युदैक्षत ९४ ईक्षितुं च महादेवं नमे शक्तिरभूत्तदा ततो मामब्रवीद्देवः पश्य कृष्ण वदस्व च ९५ त्वया ह्याराधितश्चाहं शतशोऽथ सहस्रशः त्वत्समो नास्ति मे कश्चित्त्रिषु लोकेषु वै प्रियः ९६ शिरसा वंदिते देवे देवी प्रीता ह्युमा तदा ततोऽहमब्रुवं स्थाणुं स्तुतं ब्रह्मादिभिः सुरैः ९७ विष्णुरुवाच
नमोऽस्तु ते शाश्वत सर्वयोने ब्रह्माधिपं त्वामृषयो वदंति तपश्च सत्वं च रजस्तमश्च त्वामेव सत्यं च वदंति संतः ९८ त्वं वै ब्रह्मा च रुद्रश्च वरुणोऽग्निर्मनुर्भवः धाता त्वष्टा विधाता च त्वं प्रभुः सर्वतोमुखः ९९ त्वत्तो जातानि भूतानि स्थावराणि चराणि च त्वया सृष्टमिदं कृत्स्नं त्रैलोक्यं सचराचरम् ४०० यानींद्रियाणीह मनश्च कृत्स्नं ये वायवः सप्त तथैव चाग्नयः ये देवसंस्थास्तव देवताश्च तस्मात्परं त्वामृषयो वदंति १ वेदाश्च यज्ञाः सोमश्च दक्षिणा पावको हविः यज्ञोपगं च यत्किंचिद्भगवांस्तदसंशयम् २ इष्टं दत्तमधीतं च व्रतानि नियमाश्च ये ह्रीः कीर्तिः श्रीर्द्युतिस्तुष्टिः सिद्धिश्चैव तदर्पणी ३ कामः क्रोधो भयं लोभो मदः स्तंभोऽथ मत्सरः आधयो व्याधयश्चैव भगवंस्तनयास्तके ४ कृतिर्विकारः प्रणयः प्रधानं बीजमव्ययम् मनसः परमा योनिः प्रभावश्चापि शाश्वतः ४ अव्यक्तः पावनोऽचिंत्यः सहस्रांशुर्हिरण्मयः

तस्मात् एतेषां समुदायात् परं वाचामगोचरं रूपादिहीनं त्वां ऋषयो वदंति १ सुकस्रुवसमित्कुशदेशकालादिकं यज्ञोपगं यज्ञोपयोगि २ सिद्धिर्योगपरिपाकजं दर्पणी तत्स्वरूपव्यापिका ३ ४ कृतिः क्रिया विकारस्तत्फलं सुखदुःखादिः प्रणयस्तदभावः प्रधीयते अस्मिन् सर्वमिति प्रधानं वासना बीजं अज्ञानं तदेवाव्ययं मनसी योनिश्च अन्नमयं हि सोम्य मन इति श्रुतेः अन्नस्यापि मनोयोनित्वं उपचारात् संकल्पमात्रेण नतु मुख्यमिति परमेति योनिविशेषणं प्रभावः ऐश्वर्यं तत् अकर्मजं ४ हिरण्मयः चिज्ज्योतीरूपः गण्यंते संख्यायंते इति गुणास्तत्वानि तेषां अव्यक्तादीनि तेषामादिः जीविताश्रयः नदीसमुद्रवत् सर्वजीवस्य प्राप्यस्थानं ५ ६

महानितिमहदाद्यैश्चतुर्दशभिः पर्यायशब्दैः वेदे महानात्मा परमात्मा भवानेव विभाव्यते विचार्यते वेदार्थविद्भिः एतैः शब्दैस्त्वां वेदाद्बुध्वा मोहं संसारमूलं अज्ञानं नियच्छ
तिनितरां नाशयति ६ हृदयं हृदयस्थः क्षेत्रं महाभूतादि धृत्यंतं तज्ज्ञः तत्प्रकाशकः ऋषिभिर्मंत्रैः स्तुतः स्तुतिमेवाह सर्वत इति ७ प्रभा विश्वतिग्मांशोः कर्मस्फ-
लं स्वर्गसुखं च त्वमसि ८ अणिमा दुर्लक्ष्यसूक्ष्मात्वं महिमा त्रिविधपरिच्छेदशून्यसत्तामात्रं अत्र प्रकृत्यर्थो दुर्लक्ष्यत्वादिः प्रकृत्यर्थः सत्तेति विवेकः ९ सत्यस
त्वाः सत्यसंकल्पाः १० य इति वेदयते जानाति ज्ञात्वा शिष्यान् ज्ञापयतीति वा, विग्रहं विशिष्टानुभवरूपं निष्कलज्ञप्तिमात्रमित्यर्थः ११ विदित्वा उपास्य सप्त

अग्न्यादिगणानां सर्वेषां भवान्वै जीविताश्रयः ५ महानात्मा मतिर्ब्रह्मा विश्वः शंभुः स्वयंभुवः बुद्धिः प्रज्ञोपलब्धिश्च संवित्ख्यातिर्धृतिः स्मृतिः
पर्यायवाचकैः शब्दैर्महानात्मा विभाव्यते त्वां बुद्ध्वा ब्राह्मणो विद्वान् प्रमोहं विनियच्छति ६ हृदयं सर्वभूतानां क्षेत्रज्ञस्त्वमृषिष्टुतः
सर्वतः पाणिपादस्त्वं सर्वतोक्षिशिरोमुखः ७ सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठसि फलं त्वमसि तिग्मांशो निमेषादिषु कर्मसु ८ त्वं
वै प्रभार्चिः पुरुषः सर्वस्य हृदि संश्रितः अणिमा महिमा प्राप्तिरीशानो ज्योतिरव्ययः ९ त्वयि बुद्धिर्मतिर्लोकाः प्रपन्नाः संश्रिताश्च ये ध्या
निनो नित्ययोगाश्च सत्यसत्वा जितेंद्रियाः १० यस्त्वां ध्रुवं वेदयते गुहाशयं प्रभुं पुराणं पुरुषं च विग्रहम् हिरण्मयं बुद्धिमतां परां गतिं स बु
द्धिमान् बुद्धिमतीत्य तिष्ठति ११ विदित्वा सप्त सूक्ष्माणि षडंगं त्वां च मूर्तितः प्रधानविधियोगस्थस्त्वामेव विशते बुधः १२ एवमुक्ते मया पा
र्थ भवे चार्तिविनाशने चराचरं जगत्सर्वं सिंहनादं तदाकरोत् १३ तं विप्रसंघाश्च सुरासुराश्च नागाः पिशाचाः पितरो वयांसि रक्षोगणा
भूतगणाश्च सर्वे महर्षयश्चैव तदा प्रणेमुः १४ मम मूर्ध्नि च दिव्यानां कुसुमानां सुगंधिनाम् राशयो निपतंति स्म वायुश्च सुसुखो ववौ १५
निरीक्ष्य भगवान्देवीं उमां मां च जगद्धितः शतक्रतुं चाभिवीक्ष्य स्वयं मामाह शंकरः १६ विदुः कृष्ण परां भक्तिमस्मासु तव शत्रुहन् क्रि
यतामात्मनः श्रेयः प्रीतिर्हि त्वयि मे परा १७ वृणीष्वाष्टौ वरान् कृष्ण दातास्मि तव सत्तम ब्रूहि यादवशार्दूल यानिच्छसि सुदुर्लभान्
४१८ इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मे मेघवाहनोपाख्याने चतुर्दशोऽध्यायः १४

सूक्ष्माणि महदहंकारपंचतन्मात्राणि षडंगं
सर्वज्ञता तृप्तिरनादिबोधः स्वतंत्रता नित्यमलुप्तशक्तिः अनंतशक्तिश्च विभोर्विधिज्ञाः षडाहुरंगानि महेश्वरस्येति अंगषट्कमुक्तं प्रधानं चित्तसत्वं तस्य आत्माभि
मानत्वेन नित्यं गृहीतं तस्य पृथक्त्वे नाज्ञातं तस्य ज्ञापनविधिः सत्वस्य पुरुषात् भिन्नत्वेन ज्ञानं तद्यस्मात्तादृशो योगो वृत्तिनिरोधस्तत्र स्थः तन्मात्रनिष्ठस्त्वां निष्कलं आवि
शते आरोहक्रमेण योगी भूम्यादीनि महदंतानि तत्वानि जित्वा जयसाधनं धीसत्वमप्यात्मनः पृथक्त्वेन ज्ञात्वा प्रत्यक्त्वमात्रनिष्ठः विलीने सत्वे परं ब्रह्म संपद्यत इत्य
र्थः १२ १३ १४ १५ १६ १७ १८ मेघवाहनः इंद्ररूपी महादेवः तस्य माहात्म्यप्रतिपादकं पर्व मेघवाहनपर्व तत्रायमध्यायः चतुर्दशः इति अनुशासनपर्वणि टीका
यां चतुर्दशोऽध्यायः १४ ६७

मूर्ध्नेति सन्निचयेस्थितमितिशेषः १ योगेनसहितंप्रियत्वंइतिद्वौवरौ २ धारिणीपोषिका ३ ४ ५ ६ एवंभविष्यतीतिप्रार्थितान्वरानभ्यनुज्ञायस्वयं
भवानीवराष्टकंददाति तत्रामरप्रभावेतिसंबोधनेकोवरःसूचितः नाहंमृषाजातुवदेइतित्वमपिमृषामावदेतिद्वितीयः षोडशसहस्रभार्याइतितृतीयः तासु-
प्रियत्वमितिचतुर्थः पूर्वोक्तात्सर्वप्रियत्वादन्यः अक्षयंधनधान्यादीत्यर्थादितिपंचमः ७ अन्यत्त्रयंस्पष्टार्थं एवंचउपक्रमस्थानांषोडशाष्टानांवचनमुपपद्य-
ते ८ ९ १० ११ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिनैलकंठीयेभारतभावदीपेपंचदशोऽध्यायः १५ ७ ऋषिरिति अयमध्यायोयस्मात्पूर्वमुपमन्युनाकृष्णंप्रत्युक्तंज

कृष्णउवाच मूर्ध्नानिपत्यनियतस्तेजःसन्निचयेततः परमंहर्षमागत्यभगवंतमथाब्रुवे १ धर्मेदृढत्वंयुधिशत्रुघातंयशस्तथाग्र्यंपरमं
बलंच योगप्रियत्वंतवसन्निकर्षंवृणेसुतानांचशतंशतानि २ एवमस्त्वितितद्वाक्यंमयोक्तःप्राहशंकरः ततोमाजगतोमाताधारिणीस
र्वपावनी ३ उवाचोमाप्रणिहिताशर्वाणीतपसांनिधिः दत्तोभगवतापुत्रःसांबोनामतवानघ ४ मत्तोप्यष्टौवरानिष्टान्गृहाणत्वंददा
मिते प्रणम्यशिरसासाचमयोक्तापांडुनंदन ५ द्विजेष्वकोपंपितृतःप्रसादंशतंसुतानांपरमंचभोगम् कुलेप्रीतिंमातृतश्चप्रसादंशम-
प्राप्तिंप्रवृणेचापिदाक्ष्यम् ६ उमोवाच एवंभविष्यत्यमरप्रभावनाहंमृषाजातुवदेकदाचित् भार्यासहस्राणिचषोडशैवतासुप्रि
यत्वंचतथाक्षयंच ७ प्रीतिंचाग्र्यांबांधवानांसकाशाद्ददामितेहंवपुषःकाम्यतांच भोक्ष्यंतेवैसप्ततिंवैशतानिगृहेतुभ्यमतिथीनांचनि
त्यम् ८ वासुदेवउवाच एवंदत्त्वावरान्देवोममदेवीचभारत अंतर्हितःक्षणेतस्मिन्सगणोभीमपूर्वज ९ एतदत्यद्भुतंपूर्वंब्रा
ह्मणायामिततेजसे उपमन्यवेमयाकृत्स्नंव्याख्यातंपार्थिवोत्तम नमस्कृत्वातुसप्राहदेवदेवायसुव्रत १० उपमन्युरुवाच नास्ति-
शर्वसमोदेवोनास्तिशर्वसमागतिः नास्तिशर्वसमोदानेनास्तिशर्वसमोरणे ११ इतिश्रीमहाभारतेअनुशासनपर्वणिमेघवाहनोपा
ख्यानेपंचदशोऽध्यायः १५ उपमन्युरुवाच ऋषिरासीत्कृतेतातत्तंडिरित्येवविश्रुतः दशवर्षसहस्राणितेनदेवःसमाधिना १
आराधितोभूद्भक्तेनतस्योदर्कंनिशामय सदृष्टवान्महादेवमस्तौषीच्चस्तवैर्विभुम् २ इतितंडिस्तपोयोगात्परमात्मानमव्ययम् चिं
तयित्वामहात्मानमिदमाहसुविस्मितः ३ यंपठंतिसदासांख्याश्चिंतयंतिचयोगिनः परंप्रधानंपुरुषमधिष्ठातारमीश्वरम् ४ उत्पत्तौच
विनाशेचकारणंयंविदुर्बुधाः देवासुरमुनीनांचपरंयस्मान्नविद्यते ५ अजंतमहमीशानमनादिनिधनंप्रभुम् अत्यंतसुखिनंदेवम
नघंशरणंव्रजे ६

र्थ्यंतुतेप्रदास्यामीतिनंतत्जप्यंशिवसहस्रनामस्तोत्रंविवक्षुरुपमन्युमुखेनतदुपोद्घातार्थमारभ्यते समाधिनाध्यान
योगेन १ उदर्कंफलोदयम् २ इदंवक्ष्यमाणप्रकारेण ३ ४ ५ ६ ७ ७ ७ ७ ७ ७ ७

य पठनात्याद्दस्त्राकन्नग्रध्यानबलात्ताउ नाहृष्टेनदुच्चारणस्यफलमाह एवमिति अन्योप्येतैः श्लोकैः स्तुवन्वक्ष्यमाणरूपमीश्वरंपश्यतीतिभावः शाश्वतंशा
श्वद्भवम् ध्रुवंकूटस्थं ७ निष्कलत्वादेर्व्याख्यानंनिर्गुणत्वादिअक्षरंअविनाशि ८ मनोमयंमनसोधर्मैः कर्तृत्वादिभिर्वशीकृतंजलचंद्रवत् ९ १०
यइतिसार्द्धश्लोकः यःदेवंआत्मानंप्राणवंतंजीवरूपिणंकृत्वातंआवृत्तजीवमनोरूपंज्योतिर्भूत्वाजीवस्थितंबभूवतंदेवं दृष्ट्वातुष्टावेतिसंबंधः ११ पवित्राणांपा
वनानांगंगादीनामपिपावनं तेजसांचक्षुरादीनामपितेजःप्रकाशकं १२ भूरिकल्याणंमोक्षस्तत्प्रद परंसत्यंअत्यंतंअबाध्यं १३ १४ तिस्रस्तनवःकाल्ल
धाएव ब्रह्मविष्णुरुद्राख्या १५ अधीति अत्रसप्तमिराधिपौरुषादिसंहिताभिः कृत्स्नंहेयमुपादेयंचत्वमेवेतिकथ्यतेतथाहि पुरुषःशिरःपाण्यादिमान्देहस्त
मधिकृत्यप्रवृत्तंविज्ञानंअधिपौरुषम् तत्रचमातापूर्वरूपंपितोत्तररूपंप्रजासंधिःप्रजननंसंधानमितिश्रुतेःक्षेत्रबीजरूपाभ्यांमातापितृभ्यांसकाशादन्योन्य
मिथुनीभावेननिमित्तेनअंकुररूपाप्रजाजायते एवंप्रकृतिपुरुषाभ्यां जगदितितत्रमिथुनीभावस्याभावेनब्रह्मचर्येणप्रजावज्जगन्नोत्पद्यतइतिपुंप्रकृत्योर्विवे

एवंस्तुवन्नवतदाददृशातप्रसोनिधिम् तमव्ययमनाद्यन्तमाद्यंशाश्वतंध्रुवम् ७ निष्कलंसकलंब्रह्मनिर्गुणंगुणगोचरम् योगिनां
परमानंदमक्षरंमोक्षसंज्ञितम् ८ मनोरिंद्राग्निमरुतांविश्वस्यब्रह्मणोगतिम् अग्राह्यमचलंशुद्धंबुद्धिग्राह्यंमनोमयम् ९ दु-
र्विज्ञेयमसंख्येयंदुष्प्रापमकृतात्मभिः योनिंविश्वस्यजगतस्तमसःपरतःपरम् ११ यःप्राणवंतमात्मानंज्योतिर्जीवस्थितंमनः तंदेवंदर्श
नाकांक्षीकइन्वर्षगणानृषिः तपस्युग्रेस्थितोभूत्वादृष्ट्वातुष्टावचेश्वरम् ११ तंडिरुवाच पवित्राणांपवित्रस्त्वंगतिर्गतिमतांवर
अत्यंतंतेजसांतेजस्त्वंतपसांपरमंतपः विश्वावसुर्हिरण्याक्षपुरुहूतनमस्कृत १२ भूरिकल्याणदविभोपरंसत्यनमोस्तुते जातीम
रणभीरूणांयतीनांयततांविभो निर्वाणदसहस्रांशोनमस्तेस्तुसुखाश्रय १३ ब्रह्माशतक्रतुर्विष्णुर्विश्वेदेवामहर्षयः नविदुस्त्वां
तुतत्त्वेनकुतोवेत्स्यामहेवयम् त्वत्तःप्रवर्तते सर्वंत्वयिसर्वंप्रतिष्ठितम् १४ कालाख्यःपुरुषाख्यश्चब्रह्माख्यश्चत्वमेवहि तनवस्ते
स्मृतास्तिस्रःपुराणज्ञैःसुरर्षिभिः १५ अधिपौरुषमध्यात्ममधिभूताधिदैवतम् अधिलोकाधिविज्ञानमधियज्ञस्त्वमेवहि १६

कमिच्छताउपस्थनिग्रहःकर्तव्यइतिविधीयते एवंअध्यात्मंआत्मनिदेहे अधराहनुःपूर्वरूपंउत्तराहनुरुत्त
ररूपं वाक्संधिः जिह्वासंधानमितिश्रुतेर्जिह्वानिग्रहेणतूष्णींभावोपिपूर्वोक्तविवेकार्थंविधीयते अन्यथावागादीन्प्रवर्ततोविवेकोनसंपद्यतेऽपितु संसारएवा
नवच्छिन्नोनुतन्यतेइतिएताःसंहितावेदितव्याः तथाअधिभूताधिदैवतं भूतानांदेहाद्यारंभकाणांदेवतानांप्राणचक्षुराद्यधिष्ठात्रीणांभूतदेवतानांचान्योन्या-
श्रयेणमिथुनीभावेनावस्थानंसंसारःतन्मूलंचअधिलोकाधिविज्ञानंलोक्यतइतिलोकोभूतमात्रादशशब्दादयोविषयाःविज्ञानंप्रज्ञामात्राःदशश्रोत्रादीनींद्रि
याणिज्ञानकरणानिउभयेषांमिथुनीभावोयदिभूतमात्रानस्युःनप्रज्ञामात्राःस्युर्यदिप्रज्ञामात्रानस्युर्नभूतमात्राःस्युस्तर्ह्यन्यतरतोरूपंकिंचनसिध्यतीतिश्रुतिप्रसि

द्भः ततश्च ब्रह्मचर्यपूर्वकं वागादिनियहेक्रियमाणे जीवब्रह्मणोर्भेदहेतूनामध्यात्माधिभूताधिदैवानाम् अनुत्पत्तेरधियज्ञो घटनाशे घटाकाशमहाकाशयोरिवतयोः सं
गतिकरणं एकीभावलक्षणो यज्ञो मोक्षापरनामा सिद्ध्यति एतत्सर्वंत्वमेवेतिश्लोकार्थः १६ १७ नवत्वां अनिच्छतः ज्ञातुमितिशेषः जन्ममृत्युश्च अनेकतो अनं
तःपुनःपुनर्भवतीत्यर्थः १८ १९ २६ अस्तिचनास्तिचेतिरज्जुभुजंगाभं प्रतीतिनितोक्तिस्ततो नास्तितादृशं जगत्कारणमज्ञानमुच्यते २१ विश्वाविश्वपरः कार्य
कारणाभ्यामन्यः भावः सत्तामात्ररूपः चिंत्याचिंत्यश्च चिंत्यः सोपाधिकरूपेण अचिंत्यो निरुपाधिकेन २२ २३ २४ अचेतसा अज्ञानेन यत् परं देवं नविद्मः

त्वाविद्धित्वात्मदेहस्थं दुर्विदं दैवतैरपि विद्वांसो यान्तिनिर्मुक्ताः परंभावमनामयम् १७ अनिच्छतस्तव विभो जन्ममृत्युरनेकशः द्वा
रंतुस्वर्गमोक्षाणामाक्षेप्तात्वंददासिच १८ त्वंवैस्वर्गश्चमोक्षश्च कामः क्रोधस्त्वमेवच सत्वंरजस्तमश्चैव अधश्चोर्ध्वंत्वमेवहि १९
ब्रह्माभवश्चविष्णुश्च स्कंदेंद्रौ सविता यमः वरुणेंदूमनुर्धाता विधातात्वंधनेश्वरः २० भूर्वायुः सलिलोग्निश्च खंवाग्बुद्धिः स्थितिर्म
तिः कर्मसत्यानृतेचोभे त्वमेवास्तिचनास्तिच २१ इंद्रियाणींद्रियार्थाश्च प्रकृतिभ्यः परंध्रुवम् विश्वाविश्वपरो भावश्चिंत्याचिंत्यस्त्वमेव
हि २२ यच्चैतत्परमं ब्रह्म यच्चैतत्परमंपदम् यागतिः सांख्ययोगानां सभवान्नात्रसंशयः २३ नूनमद्यकृतार्थाः स्मनूनंप्राप्ताः सतांग
तिम् यांगतिंप्रार्थयंतीह ज्ञाननिर्मलबुद्धयः २४ अहोमूढाः स्मसुचिरमिमंकालमचेतसा यन्नविद्मः परंदेवं शाश्वतंयंविदुर्बुधाः २५
सेयमासादितासाक्षात्त्वद्भक्तिर्जन्मभिर्मया भक्तानुग्रहकृद्देवो यंज्ञात्वामृतमश्नुते २६ देवासुरमुनीनांतु यच्चगुह्यंसनातनम् गु
हायांनिहितंब्रह्म दुर्विज्ञेयंसुरैरपि २७ सएषभगवान्देवः सर्वकृत्सर्वतोमुखः सर्वात्मासर्वदर्शीच सर्वगः सर्ववेदिता २८ देहकृ
द्देहभृद्देही देहभुग्देहिनांगतिः प्राणकृत्प्राणभृत्प्राणी प्राणदः प्राणिनांगतिः २९ अध्यात्मगतिरिष्टानां ध्यायिनामात्मवेदिनाम् अ
पुनर्भवकामानां यागतिः सोयमीश्वरः ३० अयंचसर्वभूतानां शुभाशुभगतिप्रदः अयंचजन्ममरणे विदध्यात्सर्वजंतुषु अयंसंसि
द्धिकामानां यागतिः सोयमीश्वरः ३१ भूराद्यान्सर्वभुवनानुत्पाद्यसदिवौकसः दधातिदेवस्तनुभिरष्टाभिर्योबिभर्तिच ३२ अतः
प्रवर्ततेसर्वमस्मिन्सर्वंप्रतिष्ठितम् अस्मिंश्चप्रलयंयाति अयमेकः सनातनः ३३ अयंससत्यकामानां सत्यलोकः परःसताम् अपव
र्गश्चमुक्तानां कैवल्यंचात्मवेदिनाम् ३४

अतोमूढाः स्मः २५ २६ २७ २८ देहकृत् यज्ञादिः देहभृत् देहपोषको ऽन्नादिः देहीजीवः देहभुक् देहसंहर्ता याणिलिंगश-
रीरतस्यानादित्वेपितत्कर्तृत्वंतदाविर्भावनिमित्तत्वं दृष्टिसृष्टिन्यायेनमुख्यंवाज्ञेयं २९ ३० ३१ अष्टाभिः भूम्यंबुवन्हिवायुव्योमसूर्यचंद्रयजमानाख्याभिः ३२ ३३ अ
यमिति सत्यं अव्यभिचारिवेदोक्तकर्मफलंस्वर्गः सतांऊर्ध्वरेतसांपरः स्वर्लोकादुपरिमहर्लोकादिः अपवर्गः क्रममुक्तिस्थानंब्रह्मलोकाख्यं मुक्तानांविदेहाख्यानांयोगिवि-
शेषाणांकैवल्यंमुख्यामुक्तिः ३४

गुह्यायांशास्त्रेगोपितः तत्रहेतुमाह देवेतिउक्तोपिसुरवत्तेयोमाभूदितिमंग्यंतरेणनिरूपितः ब्रह्माद्यैर्मंत्रव्याख्यातृभिस्तथाहिचत्वारिशृंगेतिमंत्रोयास्केनयज्ञ
परयापतंजलिनाशब्दपरतयागोतमेनतटस्थेश्वरपरतयाचव्याख्यातःवस्तुतस्त्वध्यात्मपरोस्तीतिस्पष्टम् ३५ अनेनअहंकारेणअप्रकाशिनाजडेनजडानृत-
रूपस्याप्यस्यचित्सद्रूपेणत्वयैवप्रकाशःसत्ताचभवतीतिभावः तथाचमंत्रवर्णः 'अयंरोचयदरुचोरुचानोऽयंवासयद्दृतेनपूर्वीरिति अयंआत्मारोचयत्प्रकाश
यति अरुचःअप्रकाशान्अहंकारादीन् रुचानःस्वयंप्रकाशमानः अयंआत्मापूर्वीःअहंमादिसृज्यानिविशेषतःपृथक्विविक्ततया ऋतेनस्वसत्तयावासयत्-

अयंब्रह्मादिभिःसिद्धैर्गुहायांगोपितःप्रभुः देवासुरमनुष्याणामप्रकाशोभवेदिति ३५ त्वंत्वांदेवासुरनरास्तत्वेननविदुर्भवम् मोहिताःख
ल्वनेनैवत्वद्दिस्थेनाप्रकाशिना ३६ येचैनंप्रतिपद्यंतेभक्तियोगेनभाविताः तेषामेवात्मनात्मानंदर्शयत्येषहृच्छयः ३७ यंज्ञात्वानपुन
र्जन्ममरणंचापिविद्यते यंविदित्वापरंवेद्यंवेदितव्यंनविद्यते ३८ यंलब्ध्वापरमंलाभंमनाधिकमन्यतेबुधः यांसूक्ष्मांपरमांप्राप्तिंगच्छ-
त्यव्ययमक्षयम् ३९ यंसांख्यागुणतत्वज्ञाःसांख्यशास्त्रविशारदाः सूक्ष्मज्ञानतराःसूक्ष्मंज्ञात्वामुच्यंतिबंधनैः ४० यंचवेदविदोवेद्यं
वेदांतेचप्रतिष्ठितम् प्राणायामपरानित्यंयंविशंतिजपंतिच ४१ ओंकाररथमारुह्यतेविशंतिमहेश्वरम् अयंसदेवयानानामादित्योद्वा
रमुच्यते ४२ अयंचपितृयानानांचंद्रमाद्वारमुच्यते एषकाष्ठादिशश्चैवसंवत्सरयुगादिच ४३ दिव्यादिव्यःपरोलाभोअयनेदक्षिणो
त्तरे एनंप्रजापतिःपूर्वमाराध्यबहुभिःस्तवैः ४४ प्रजार्थंवरयामाससनीललोहितसंज्ञितम् ऋग्भिर्यमनुशासंतितत्वेकर्मणिबह्वृचः
४५ यजुर्भिर्यंत्रिधावेद्यंजुह्वत्यध्वर्यवोध्वरे सामभिर्यंचगायंतिसामगाःशुद्धबुद्धयः ४६ ऋतंसत्यंपरंब्रह्मस्तुवंत्याथर्वणाद्विजाः य
ज्ञस्यपरमायोनिःपतिश्चायंपरःस्मृतः ४७ रात्र्यहःश्रोत्रनयनःपक्षमासशिरोभुजः ऋतुवीर्यस्तपोधैर्योत्द्वब्दगुह्योरुपादवान् ४८
मृत्युर्यमोहुताशश्चकालःसंहारवेगवान् कालस्यपरमायोनिःकालश्चायंसनातनः ४९ चंद्रादित्यौसनक्षत्रौग्रहाश्चसहवायुना ध्रुवः
सप्तर्षयश्चैवभुवनाःसप्तएवच ५० प्रधानंमहदव्यक्तंविशेषांतंसवैकृतम् ब्रह्मादिस्तंबपर्यंतंभूतादिसदसच्चयत् ५१

आच्छादयति अनृता
नयेनानृतसत्तेवसत्तावतःकरोतुरज्जुरिवसर्पादीनितिमंत्रपदानामर्थः ३६ ३७ ३८ गच्छत्गच्छतिबुधः ३९ सूत्वंलिंगंज्ञानेनतरंति अतिक्रम्यगच्छंतितेसू
क्ष्मज्ञाननराः सूक्ष्मज्ञानेतिपाठेप्रकृतिदितीत्वागताइत्यर्थः सूक्ष्मंपुरुषं ४० ४१ ४२ ४३ दिव्योलाभऐंद्रं अदिव्योलाभःसार्वभौमत्वं ४४ ४५ अनुशंसंती
तिपाठःस्वच्छःतत्वेअनारोपितेरूपेविषयेकथयंति ४५ त्रिधापाकयज्ञत्रये श्रौतस्मार्तध्यानयज्ञैरित्यर्थः ४६ ऋतंयज्ञःसत्यंतत्फलंयोनिःश्रद्धासत्ये ४७
यज्ञपतेःश्रोत्रादिभावेनरात्र्यादीनिनिरूपयति रात्रीति ४८ ४९ कालस्ययोनिर्भवाहचंद्रेति ५० सत्भूम्यंबुतेजांसिअसत्वाय्वाकाशौ ५१

अष्टौभूमिरापोनलोवायुःखंमनोबुद्धिरहंकारश्च परःमायावी अस्यमायाविनःभागंअंशंकृत्स्नंप्रपंचजातं ५२ एतस्मात्परमंआनंदमयादीश्वरादपिपरंशुद्धंआनंदंआ
नंदमात्रं नदेवशाश्वतंतेनपूर्वेषामशाश्वतत्वंदर्शितम् ५३ ध्यानंपरंपद्धंपदप्रापकं ५४ सेतिसाकाष्ठासापरागतिरितिश्रुतिप्रसिद्धा ५५ निर्वृत्तिःसुखं ५६
श्रुतिरितिश्रोत्रादिजन्याऽनुभूतिः इष्टानांयोगिनां अध्यात्मगतिःप्रत्यक्षादव्ययरूपागतिः विदुषांअहंब्रह्मास्मीत्याजानतांअव्ययाअपुनरावर्त्तिनीप्राप्तिः ५७ प
रमांगतिंअपरमगतिपूर्विकांव्याचष्टेयजतामिति यज्ञशीलानांगतिःस्वर्गःइंद्रादिलोकः ५८ योगजपादिपराणांतपस्विनांनक्षत्रलोकाख्यापरमाभास्वतीगतिर्हि

अष्टौप्रकृतयश्चैवप्रकृतिभ्यश्चयःपरः अस्यदेवस्ययद्भागंकृत्स्नंसपरिवर्त्तते ५२ एतत्परममानंदंयत्तच्छाश्वतमेवच एषागतिर्वि
रक्तानामेषभावःपरःसताम् ५३ एतत्पदमनुद्विग्नमेतद्ब्रह्मसनातनम् शास्त्रवेदांगविदुषामेतद्ध्यानंपरंपदम् ५४ इयंसापर
माकाष्ठाइयंसापरमाकला इयंसापरमासिद्धिरियंसापरमागतिः ५५ इयंसापरमाशांतिरियंसानिर्वृतिःपरा यंप्राप्यकृतकृत्याः
स्मइत्यमन्यंतयोगिनः ५६ इयंतुष्टिरियंसिद्धिरियंश्रुतिरियंस्मृतिः अध्यात्मगतिरिष्टानांविदुषांप्राप्तिरव्यया ५७ यजतांकामया-
नानांमखैर्विपुलदक्षिणैः यागतिर्यज्ञशीलानांसागतिस्त्वंनसंशयः ५८ सम्यक्योगजपैःशांतिर्नियमैर्देहतापनैः तप्यतांयागतिर्देव
परमासागतिर्भवान् ५९ कर्मन्याससकृतानांचविरक्तानांततस्ततः यागतिर्ब्रह्मसदनेसागतिस्त्वंसनातन ६० अपुनर्भवकामानांवै
राग्येवर्त्ततांचया प्रकृतीनांलयानांचसागतिस्त्वंसनातन ६१ ज्ञानविज्ञानयुक्तानांनिरुपाख्यानिरंजना कैवल्यायागतिर्देवपरमासा
गतिर्भवान् ६२ वेदशास्त्रपुराणोक्ताःपंचैतागतयःस्मृताः त्वत्प्रसादाद्धिलभ्यंतेनलभ्यंतेन्यथाविभो ६३ इतितंडिस्तपोराशिस्तुष्ट
वेशानमात्मनः जगौचपरमंब्रह्मयत्पुरालोककृज्जगौ ६४ उपमन्युरुवाच एवंस्तुतोमहादेवस्तंडिनाब्रह्मवादिना उवाच-
भगवान्देवउमयासहितःप्रभुः ६५ ब्रह्माशतक्रतुर्विष्णुर्विश्वेदेवामहर्षयः नविदुस्त्वामितितततस्तुष्टःप्रोवाचतंशिवः ६६ श्री
भगवानुवाच अक्षयश्चाव्ययश्चैवभविताद्ुःखवर्जितः मत्प्रसादाद्द्विजश्रेष्ठभवितादुःखवर्जितः ६७ यशस्वीतेजसायुक्तो-
दिव्यज्ञानसमन्वितः ऋषीणामभिगम्यश्चसूत्रकर्त्तासुतस्तव ६८ मत्प्रसादान्द्विजश्रेष्ठभविष्यतिनसंशयः कंवाकामंददाम्यद्य
ब्रूहिवत्सयथासे ६९

तीया ५९ संन्यासिनांब्रह्मलोकःपुनरावृत्तिरूपागतिस्तृतीया ६० प्रकृतीनांयेलयमभ्यस्यंतितेषांदहरादिरूपकारणब्रह्मो-
पासकानां अपुनरावृत्तिरूपागतिश्चतुर्थी ६१ ज्ञानेनेतिनिष्फलब्रह्मविदांमोक्षाख्यायांगतिःसाम वान्पूर्वास्तुगतयोऽनात्मभूताइतिभावः ६२ ६३ ६४ ६५ त
नःब्रह्मादयस्त्वांनविंदुः इतिवाक्यान ६६ ६७ सूत्रकर्त्तातांडिनइतियजुर्वेदेशाखाविशेषस्तत्रकल्पसूत्रकर्त्ता ६८ ६९ ७ ७ ७

७०. ७१. ७२ ग्रथितानिमयातुभ्यंयेषांमध्येएकंउपदिष्टंतानिसर्वाणित्वंशृणुसिद्ध्येमोक्षांतसकलप्राप्तये ७३ ७४ ७५ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायांषोडशोऽध्यायः १६ ततः १ २ सत्यैरन्वर्थैः वेदेकृतात्मनादत्तचित्तेन कृतैःवेदात्पृथक्कृतैः ३ यथोक्तैरिति स्तुत्यंसिंहावलोक-



प्रांजलिःसउवाचेदंत्वयिभक्तिर्दृढास्तुमे ७० उपमन्युरुवाच एतान्दत्वावरान्देवोवंद्यमानःसुरर्षिभिः स्तूयमानश्चविबुधैस्तत्रैवांतर
धीयत ७१ अंतर्हितेभगवतिसानुगेयादवेश्वर ऋषिराश्रममागम्यममैतत्प्रोक्तवानिह ७२ यानिचप्रथितान्यादौतंडिराख्यातवान्म
म नामानिमानवश्रेष्ठतानित्वंशृणुसिद्धये ७३ दशनामसहस्राणिदेवेष्वाहपितामहः सर्वस्यशास्त्रेषुतथादशनामशतानिच ७४ गु
ह्यानीमानिनामानितंडिर्भगवतोच्युत देवप्रसादाद्देवेशपुराप्राहमहात्मने ७५ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेमे-
घवाहनोपाख्यानेषोडशोऽध्यायः १६ वासुदेवउवाच ततःसप्रयतोभूत्वाममतातयुधिष्ठिर प्रांजलिःप्राहविप्रर्षिर्नामसंग्रहमा
दितः १ उपमन्युरुवाच ब्रह्मप्रोक्तैरृषिप्रोक्तैर्वेदवेदांगसंभवैः सर्वलोकेषुविख्यातंस्तुत्यंस्तोष्यामिनामभिः २ महद्भिर्विहितैःस
त्यैःसिद्धैःसर्वार्थसाधकैः ऋषिणातंडिनाभक्त्याकृतैर्वेदकृतात्मना ३ यथोक्तैःसाधुभिःख्यातैर्मुनिभिस्तत्त्वदर्शिभिः प्रवरंप्रथमंस्व
र्ग्यंसर्वभूतहितंशुभम् ४ श्रुतैःसर्वत्रजगतिब्रह्मलोकावतारितैः सत्यैस्तत्परमंब्रह्मब्रह्मप्रोक्तंसनातनम् ५ वक्ष्येयदुकुलश्रेष्ठशृणु
ष्वावहितोमम वरयैनंभवंदेवंभक्तस्त्वंपरमेश्वर ६ तेनतेश्रावयिष्यामियत्तद्ब्रह्मसनातनम् नशक्यंविस्तरात्कृत्स्नंवक्तुंसर्वस्यकेन-
चित् ७ युक्तेनापिविभूतीनामपिवर्षशतैरपि यस्यादिर्मध्यमंतंचसुरैरपिनगम्यते ८ कस्तस्यशक्नुयाद्वक्तुंगुणान्कात्स्न्र्येनमाधव
किंतुदेवस्यमहतःसंक्षिप्तार्थपदाक्षरम् ९ शक्तितश्चरितंवक्ष्येप्रसादात्तस्यधीमतः अप्राप्यतुततोनुज्ञानंशक्यःस्तोतुमीश्वरः १० य
दातेनाभ्यनुज्ञातःस्तुतोवैसतदामया अनादिनिधनस्याहंजगद्योनेर्महात्मनः ११ नाम्नांकंचित्समुद्देशंवक्ष्याम्यव्यक्तयोनिनः वरद
स्यवरेण्यस्यविश्वरूपस्यधीमतः १२ शृणुनाम्नांचयंकृष्णयदुक्तंपद्मयोनिना दशनामसहस्राणियान्याहप्रपितामहः १३ तानि-
निर्मथ्यमनसादध्नोघृतमिवोद्धृतम् गिरेःसारंयथाहेमपुष्पसारंयथामधु १४ घृतात्सारंयथामंडस्तथैतत्सारमुद्धृतम् सर्वपापापह
मिदंचतुर्वेदसमन्वितम् १५ प्रयत्नेनाधिगंतव्यंधार्यंचप्रयतात्मना मांगल्यंपौष्टिकंचैवरक्षोघ्नंपावनंमहत् १६

न्न्यायेनविशिनष्टिप्रवरमित्यर्द्धेन ४ श्रुतैरितिब्रह्मप्रोक्तैःवेदोक्तैः ५ वरयप्रार्थयउपसन्नोभवएनंमंत्रात्मकमीश्वरंलब्धुं तेनविधिना ६ ७
युक्तेनसन्नद्धेन ८ ९ १० ११ योनिनःयोनेः ब्रह्मणइतिशेषः १२ १३ १४ १५ १६ ७ ७ ७ ७ ७

१७ १८ इदमिति एतज्जपमथ्यानादिफलप्रद इत्यर्थः १९ यंस्तवं सकृदधिगमेनाप्यस्य परमांगतिंगच्छेतेत्यर्थः पवित्रंपापनाशकं मेध्यंयज्ञादिफल
प्रदं मंगलंअभ्युदयकरंपुण्यंकल्याणंपरमानंदरूपम् २०, २१ . २२ २३ . २४ ब्रह्मणावेदानांवाचामपियोवागित्यर्थः पराणामिंद्रियार्थमनोबुद्धिमहद-
दव्यक्तानामपियःपरःपुरुषइत्यर्थः २५ तेजसांचक्षुरादीनामपियच्चक्षुः तपसांपुण्यानांगंगादीनामपियत्पुण्यंशांतानांउपरतचित्तानामपिआत्यंतिकीउपरति
र्मोक्षाख्या द्युतीनांज्ञानानांवृत्तिरूपाणामपिज्ञामंसाक्षिरूपंअनुव्यवसायापरपर्यायं २६ दांतानांजितेंद्रियाणामध्येऽत्यंतजितेंद्रियः धीमतांज्ञानिनांधीः
आत्मानुभवरूपंज्ञानंदेवानांपूज्यानामपिपूज्यः ऋषीणांकाव्यकर्तृणामपिकाव्यकर्त्तावेदकर्तृत्वात् २७ यज्ञानांयज्ञभोक्तृणांयज्ञःयज्ञस्यआराधनस्यभोक्ता
शिवानांकल्याणानामपिकल्याणं रुणद्धियेनमितिवारोदित्यनेनवारोत्यनेनवारवणंवारुतंअज्ञानंवाविपर्ययोवाशोकोवादुःखंवारुतंतांद्रावयतीतिरुद्रः ज्ञानं

इदंभक्तायदातव्यंअश्रद्दधानास्तिकायच नाश्रद्दधानरूपायनास्तिकायाजितात्मने १७ यश्चाभ्यसूयतेदेवंकारणात्मानमीश्वरम् सकृष्ण
नरकंयातिसहपूर्वैःसहात्मजैः १८ इदंध्यानमिदंयोगमिदंध्येयमनुत्तमम् इदंजप्यमिदंज्ञानंरहस्यमिदमुत्तमम् १९ यंज्ञात्वाअंत
कालेऽपिगच्छेतपरमांगतिम् पवित्रंमंगलंमेध्यंकल्याणमिदमुत्तमम् २० इदंब्रह्मापुराकृत्वासर्वलोकपितामहः सर्वस्तवानांराजत्वेदि
व्यानांसमकल्पयत् २१ तदाप्रभृतिचैवायमीश्वरस्यमहात्मनः स्तवराजइतिख्यातोजगत्यमरपूजितः २२ ब्रह्मलोकादयंस्वर्गेस्तव
राजोवतारितः यतस्तंडिःपुराप्रापतेनतंडिकृतोभवत् २३ स्वर्गाच्चैवात्रभूर्लोकंतंडिनाह्यवतारितः सर्वमंगलमांगल्यंसर्वपापप्रणा
शनम् २४ निगदिष्येमहाबाहोस्तवानामुत्तमंस्तवम् ब्रह्मणामपियद्ब्रह्मपराणामपियत्परम् २५ तेजसामपियत्तेजस्तपसामपिय
त्तपः शांतानामपियःशांतोद्युतीनामपियाद्युतिः २६ दांतानामपियोदांतोधीमतामपियाचधीः देवानामपियोदेवऋषीणामपियस्त्वृषिः
२७ यज्ञानामपियोयज्ञःशिवानामपियःशिवः रुद्राणामपियोरुद्रःप्रभाप्रभवतामपि २८ योगिनामपियोयोगीकारणानांचकारणम्
यतोलोकाःसंभवंतिनभवंतियतःपुनः २९ सर्वभूतात्मभूतस्यहरस्यामिततेजसः अष्टोत्तरसहस्रंतुनाम्नांशर्वस्यमेशृणु यच्छ्रुत्वामनु
जव्याघ्रसर्वान्कामानवाप्स्यसि ३० आनंदोवातेभामप्यानंदः प्रभवतामीश्वराणामपिप्रभाऐश्वर्यं २८ योगिनांब्रह्मादीनामपियोयोगीध्येयंसंकल्प-
मात्रेणस्रष्टा कारणानांअव्यक्तादीनांकारणंनिष्कलं २९ यद्यप्यत्रसहस्रनामस्तोत्रेनाम्नांशब्दतोऽर्थतश्चपौनरुक्त्यमस्ति तथापिअर्थैक्येपिशब्दभेदात्क्वचित्क्व
चित्शब्दैक्येप्यर्थभेदाच्चापौनरुक्त्यंद्रष्टव्यं अपूर्वार्थत्वात्नहिसर्वात्मपदोच्चारणजन्यमपूर्वंविश्वात्मपदोच्चारणादुत्पाद्यते अन्यथाअग्नयेजुष्टंनिर्वपामीत्यत्र
वन्हयेजुष्टमितिउच्चारणेपितदपूर्वोत्पत्त्यापत्तेर्विधिगतएवशब्दःप्रयोक्तव्यइतिमीमांसकमुद्राभंगःस्यात् अर्थभेदेपिशब्दैक्यंनपौनरुक्त्यावहं इंद्रशब्दस्यान्या
र्थस्यापिऐंद्र्यागार्हपत्यमुपतिष्ठतेतिविधानाद्योगेनाग्निपरत्वदर्शनात् तथाचशब्दैक्येप्यर्थैक्यंनास्तितथावयमस्याव्याख्यायांदर्शयिष्यामः ३० ७

तिष्ठतीतिस्थिरः तिष्ठंत्यस्मिन्निति स्थाणुश्च अजिरशिशिरेत्यादिनास्थाणुरितिचतिष्ठतेः किरच्टिलोपोप्रत्ययश्चविधीयते स्थिरः अचंचलः कूटस्थश्चनित्यः स्थाणुः गृहस्तंभवत्सर्वाश्रयः यथोक्तं संसारमंडपस्यास्यमूलस्तंभायशंभवइति प्रभुः ईश्वरोंतर्यामीत्यर्थः प्रकृष्टंभवनंसत्तायस्येति वापरमार्थसत्यइत्यर्थः प्रकर्षेणभावयतिविश्वंरचयतिजानातिवाविश्वकर्त्तासर्वज्ञोवेत्यर्थः विप्रसंभ्योड्वसंज्ञायामितिप्रपूर्वान्भवतेर्डुः याचकपाठकादिवडुणशब्दोयंनतुसंज्ञाशब्दः एवमुत्तरत्रापिज्ञेयं भीमः संहर्त्ताबिभेत्यस्माज्जगदितिव्युत्पत्तेः भीमादयोपादानेइतिसूत्रात्सिद्धिः प्रवरः श्रेष्ठः प्रकर्षेणभोगमोक्षकामैर्वरणीयः अनघवृरदः इष्टप्रदः आतश्चोपसर्गइतिप्रपूर्वाद्ददातेःकः वरःवृणोतिआच्छादयतिसर्वमितिवरः पचाद्यच् सर्वात्मासृतमनेनेतिसर्वः सचात्माचेतिसर्वात्माव्यापकः प्रत्यगूपः प्राणभृन्मात्रस्यांतरात्मेत्यर्थः सर्वनिघृष्टेत्यादिनासत्त्वर्वन्नंतत्वंनिपात्यते .आप्नोतिसर्वंभोग्यंस्वार्थत्वेनलभते आदत्तेस्वीकरोतिअत्तिभुंक्तेअंततेसततंतेभुंक्तेरूपेणवर्त्ततइतिचआत्मा तथाचस्मृतिः यच्चाप्नोतियदादत्तेयच्चात्तिविषयानयं यच्चास्यसंततोभावस्तस्मादात्मेतिगीयतइति सर्ववि-

ओम् स्थिरःस्थाणुःप्रभुर्भीमःप्रवरोवरदोवरः सर्वात्मासर्वविख्यातःसर्वःसर्वकरोभवः
३१ जटीचर्मीशिखंडीचसर्वांगःसर्वभावनः हरश्चहरिणाक्षश्चसर्वभूतहरःप्रभुः ३२

ख्यातःसर्वत्रदेशेकालेचसर्वेषांप्राणिनांवाविख्यातःप्रत्यक्त्वेनप्रसिद्धः सर्वव्यापकःसर्वस्माप्नोषिततोसिसर्वइतिभगवद्वचनात् सर्वंकरोतीतिसर्वकरःविश्वस्यकर्त्ता एतेननामद्वयेनउपादानत्वंनिमित्तत्वंचोक्तं अतएवभवत्यस्मादनन्यापेक्षाद्विश्वमितिभवत्यस्मिन्प्रलयइतिवाभवःसर्वस्योत्पत्तिप्रलयस्थानंऋदोरबित्यप् भवतीतिअस्तीतिसत्तार्थाद्भवतेः पचाद्यच् सत्ताघनस्वरूपइत्यर्थः ३१ जटी जटझटसंघाते ऽस्मात्पचाद्यच्केशानांसंघातोजटा तद्वान् चर्मीचर्मव्याघ्रस्यगजस्यवाकृत्तिस्तद्वान् शिखंडीमयूरशिखावत्जटासंनिवेशोपरिकृतोजटाग्रगुच्छशिखंडस्तद्वान् सर्वजगदंगंअवयवभूतंयस्यसःसर्वांगःविराडित्यर्थः सर्वभावनोविश्वकर्त्ता हरः हरतिसर्वंसंहरतीतिहरः हरतेः पचाद्यच् हरिणाक्षः मृगनेत्रः सर्वाणिभूतानिहरतीतिसर्वभूतहरः हरतेरनुद्यमनेजित्यच् प्रभुः प्रकर्षेणभवतेप्राप्नोतिविश्वंभोग्यत्वेनेतिसर्वभोक्ता पूर्ववड्डुः ३२ ७ ७ ७ ७ ७ ७

प्रवृत्तिः प्रकर्षेण कुर्वद्रूपतया वर्त्तनं प्रवृत्तिः निःकर्षेण निरुद्यमतया वर्त्तनं निवृत्तिः निपूर्वात् वृतु वर्त्तने ऽस्मात् स्त्रियां क्तिन् यतंते विषयग्रहणाय स्वयं प्रवर्त्तंते तानि
यतानि इंद्रियाणि यती प्रयत्ने स्मात् पचाद्यच् निगृहीतानि यतानि येन सः नियतः तपस्वीत्यर्थः शाश्वतः शश्वद्भवः नित्य इत्यर्थः ध्रुवः अचलः श्मशानवासी
शानः शवाः मृतजीवाः शेरते स्मिन् पुनरुत्थानवर्जितं शयनं कुर्वंत्यस्मिन्निति श्मशानं वाराणसी तत्र वस्तुं शीलमस्य स श्मशानवासी शवदाहस्थले तु श्मशानशब्दो
गौणः नहि तत्र मृतानां देहानां देहिनां वा मृद्भस्मीभूतानां यातनावशानां वा सः सुप्तिर्वा विश्रांतिस्थानं देहानां जडत्वेन विश्रांत्यनर्हत्वात् देहिनां शरीरांतरधारिणा विश्रां
त्यभावात् वाराणस्यां मृतास्तु न पुनः संसरंतीति सहस्रशः प्रमाणानि अस्मत्कृते अविमुक्तनिरुक्तिसारे द्रष्टव्यानि भगवान् ऐश्वर्यस्य समग्रस्य ज्ञानस्य यशसः श्रि-
यः वैराग्यस्य च धर्मस्य षण्णां भग इतीर्यते इति स्मृतानि भगानि विद्यंते स्मिन्निति भगवान् खचरः हार्दाकाशचारी दहरोस्मिन्नंतर आकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यं
शं भुरा काशं मध्य इति श्रुतिप्रसिद्धः चरेष्टः गोचरः गोषु इंद्रियेषु विषयतया चरतीति वा गोभिः करणैर्वा चरति विषयान् भुंक्त इति वा गोचरः सर्वात्मत्वात्सर्वेंद्रियगम्यः
इंद्रियद्वारा विषयभुगिति वार्थः अर्दयति जनं पापिनं पीडयति कालांतकरूपेणेत्यर्दनः नंद्यादिल्युः ३३ अभिवाद्य सर्वेषां नमस्कार्यः स्तुत्यो वा महत् सृष्ट्या
दिकं कर्म अस्येति महाकर्मा तप एव स्वं धनं तद्वान् तपस्वी भूतानि खादीनि भावयति संकल्पमात्रेण सृजतीति भूतभावनः उन्मत्तवेषेण दिग्वासस्त्वादिरूपेण प्र

प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः श्मशानवासी भगवान् खचरो गोचरोऽर्दनः ३३ अभिवाद्यो महाकर्मा तपस्वी भूतभावनः उन्मत्त
वेषप्रच्छन्नः सर्वलोकप्रजापतिः ३४ महारूपो महाकायो वृषरूपो महायशाः महात्मा सर्वभूतात्मा विश्वरूपो महाहनुः ३५ लोक
पालोंतर्हितात्मा प्रसादो हयगर्दभिः पवित्रं च महांश्चैव नियमो नियमाश्रितः ३६

च्छन्नो दुर्ज्ञेयः लोकाः स्थानानि प्रजास्तत्र निवसंतश्चेतनाः सर्वासां लो
कप्रजानां पतिः स्वामी ३४ महत् अपरिच्छेद्यं रूपमस्य स महारूपः महान् कायः स्थूलरूपं वैराजं यस्य स महाकायः वृषो धर्मस्तद्रूपो वृषरूपः महच्च तद्यशश्च
महायशः तस्य नाम महद्यश इति श्रुतेः परमेश्वरः महात्मा महामनाः सर्वाणि भूतानि आत्मा मनः संकल्पमात्रं यस्य स सर्वभूतात्मा तदीक्षणमात्रत्वात्सर्वस्य वि
श्वरूपं यस्य विश्वस्मिन् रूप्यते प्रकटीभवतीति विश्वरूपः महाहनुः महत्यौ विश्वत्रास समर्थे हनू अधरोत्तरे मुखफलके यस्य स महाहनुः ३५ लोकपालः इंद्रादिरू
पः अंतर्हितात्मा अविद्याकल्पितेन अहंकारादिना तिरोहिता ऽखंडैकरसस्वभावः सर्पेणेव रज्जुः प्रसादः अभिरतिगमनं इति यावत् हयगर्दभिः हयं अश्वगर्द
भीं च स्वयोनित्वेन आचक्षते ना अश्वगर्दभ्यः अश्वतर्यश्च ताः रथस्य वहंत्येनमिति हयगर्दभिः किं बतां कर्णेरिक्षिप ततइमं वृक्षमावश्यार्य रुद्रो वाण यदग्निः अश्वतरीर
थेनाग्निः साजिमधावदिति श्रुतिभ्यां अग्निरूपी देवो श्वतरीरथवाहन इति गम्यते पवित्रं पवेरिव पवेः संसारवज्रपातात् त्रायत इति पवित्रं अत एव महान् पूज्यः नियमः शौचसं
तोषतपः स्वाध्यायेश्वरप्रणिधानाख्यैर्नियमैः प्राप्यते इति नियमः नियमैः स्तैरेव आश्रितः नारायण दक्षिणामूर्त्यादिरूपेण नियमानामाश्रयभूत इत्यर्थः ३६

सर्वकर्मा सकलशिल्पाचार्यो विश्वकर्मा स्वयंभूतः नित्यसिद्धः अतएव आदिः सर्वस्मात्प्रथमः आदिकरः हिरण्यगर्भस्रष्टा सवै शरीरी प्रथम इतिश्रुतेस्तस्यादि
त्वं निधिः पद्मशंखादिरूपो ऽक्षयैश्वर्य इत्यर्थः सहस्राक्षः अनंतकरचरणादिमान् सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखमित्यादिशास्त्रात् देवेंद्रोवा सर्वस्यत
दभिन्नत्वात् ब्रह्मैवेदं सर्वमित्यादिश्रुतेः विशालानि अतीतादिप्रकाशकत्वेन विपुलान्यक्षाणि इंद्रियाणि यस्य सः विशालाक्षः सोमश्चंद्रः लतारूपयज्ञियं हविर्वा
यत्पुरुषेण हविषेतितस्यैव हविष्ट्वदर्शनात् नक्षत्रसाधकः सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणीतिश्रुतेः आकाशे दीप्यमानानि शरीराणि नक्षत्राणि तेषां सा-
धकः इष्टादिकारिणां सोमलोके दिव्यशरीरलाभस्य दर्शनात् ३७ चंद्रः सूर्यः शनिः केतुश्च प्रसिद्धः चंद्रार्कौ गृण्हातीति ग्रहो राहुः ग्रहाणां पतिः क्रूरत्वात् मं
गलः वरो वरणीयः पूज्यो बृहस्पतिः सएव शक्रः बृहस्पतिर्हि सुरको भूत्वेति मैत्रायणीयश्रुतौ शक्रस्य बृहस्पत्यवतारत्वश्रवणात् अत्रिः अत्रिगोत्रापत्यत्वाद्बुधः
तेन सर्वग्रहस्वरूपो ग्रहपतिरित्यर्थः अत्र्याः अत्रिपत्न्या अनसूयायाः नमस्कर्त्ता दत्तदुर्वाससोरूपेण तत्पुत्रत्वात् मृगबाणार्पणः मृगरूपधारिणि यज्ञे बाणं अर्पयतीति
तथा अनघः यज्ञध्वंसेपि निष्पापः तेजीयस्त्वात्स्वतंत्रत्वाच्च ३८ महत् विश्वसृष्टिक्षमं तपः आलोचनं यस्य स महातपाः सईक्षत लोकान्नु सृजा इति स इमांल्लो

सर्वकर्मा स्वयंभूत आदिरादिकरो निधिः सहस्राक्षो विशालाक्षः सोमो नक्षत्रसाधकः ३७ चंद्रः सूर्यः शनिः केतुर्ग्रहो ग्र
हपतिर्वरः अत्रिरत्र्यानमस्कर्त्ता मृगबाणार्पणोनघः ३८ महातपा घोरतपा अदीनो दीनसाधकः संवत्सरकरो मंत्रः प्रमा
णं परमंतपः ३९ योगी योज्यो महाबीजो महारेता महाबलः सुवर्णरेताः सर्वज्ञः सुबीजो बीजवाहनः ४०

कान्सृजनेतिश्रुतेः घोरं विश्वसंहारक्षमं तपो यस्येति घोरतपाः योत्येव प्रभवः सएवाप्यय इतिश्रुतेः अदीनः महामनाः सुग्रीवविभीषणाभ्यां प्रणतिमात्रेण
राज्यप्रदः दीनसाधकः दीनानां शरणागतानां इष्टसाधकः संवत्सरस्य करः कर्त्ता कालचक्रप्रवर्त्तको ध्रुवादिज्योतिर्गणरूपः मंत्रः मननात्त्रायत इति प्रणवादिरू-
पः प्रमाणं वेदशास्त्रादिरूपः परमंतपः अयं तु परमो धर्मो यद्योगेनात्मदर्शनमिति याज्ञवल्क्योक्तो धर्मः ३९ योगी योगनिष्ठः योज्यो योगेन ब्रह्मणि प्रविलाप
नीयः महाबीजः कारणस्यापि कारणं महारेताः महत् जडानृतस्यापि अव्यक्तस्य स्फूर्त्तिसत्ताप्रदं रेतः प्रतिबिंबो यस्य स महारेताः अतएव महाबलः उत्कृष्टसाम-
र्थ्यः सुवर्णरेताः अप एव ससर्जादौ तासु वीर्यमवासृजत् तदंडमभवद्धैमं सहस्रांशुसमप्रभमिति स्कांदात् हिरण्मयब्रह्मांडस्रष्टा अग्निरूपेण सुवर्णरेता एव वा
सर्वज्ञः मायावृत्त्या सर्वं जानन् सर्वश्चासौ ज्ञश्चेति वा सुबीजः सुष्ठु अविकारी बीजभूतः सर्वकारणं भवतीत्यर्थः बीजवाहन बीजं अविद्याकामकर्मात्मकं तदेव वा
हनं इहलोकपरलोके संचारार्थं यस्येति तथा यथोक्तं आत्मानं रथिनं विद्धि शरीरं रथमेव तु इति शरीरपदमत्राव्यक्तपरमिति सिद्धांतः ४० ६७ ६७

दशबाहुःस्पष्टं अनिमिषोनहि दंष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वादितिश्रुतेःक्षणमपिदृग्लोपहीनः नीलकंठःत्रैलोक्यसंहारक्षमस्य हालाहलस्यकंठेधारणा
न्नीलकंठःपरमकारुणिकः अतएवउमापतिः उमांहैमवतीमितिकेनोपनिषत्प्रसिद्धाब्रह्मविद्याउमातस्याःपतिःप्रदाता पक्षेपार्वतीशः विश्वानिरूपाणियस्मा
ज्जायंतेसविश्वरूपः स्वयंश्रेष्ठः अनागंतुकंश्रेष्ठत्वंप्रशस्यतमत्वंयस्यसतथा बलवीरःबलेनसामर्थ्येनवीरोविक्रांतःत्रिपुरपातनाद्यनन्यसाध्यकर्मकर्त्ता अबलः
निःसामर्थ्यःचेतनप्रयुक्तिंविनाचलनाक्षमः गण्यतेसंख्यायतइतिगणस्तत्वसमूहःपंचविंशतिजडतत्वात्मेत्यर्थः स्वयंतुषड्विंशः तत्वानिचसांख्यसम्मत्यांअ
व्यक्तंमहान्अहंकारःपंचतन्मात्राणिएकादशेंद्रियाणिपंचमहाभूतानि पंचविंशोभोक्तेति ४१ एवंभूतस्यापिगणस्यकर्त्ता पतिर्नियंताचेतिगणकर्त्ता गण
पतिश्चउच्यते इतिप्रथमंशतं दिग्वासाःदारुकावनेमुनिपत्नीमोहनार्थंनग्नत्वंधृतमितिज्ञेयं वस्तुतस्तुदिशाअनंतानामपिवासइववासआच्छादकःत
थाचश्रुतिः ईशावास्यमिदंसर्वंयत्किंचजगत्यांजगदितिईशाईश्वरेणावास्यमाच्छादनीयमिति कामःस्मरःअभिलाषोवातद्रूपः मंत्रान्इषेत्वादीन्पाठ
तोर्थतश्चवेत्तीतिवावेत्तेर्विंदतेर्वावेदनमस्येतिवामंत्रवित्यस्यज्ञानमयंतपःनावेदविन्मनुतेतंबृहंतमितिश्रुतिभ्यां परमोमंत्रःआत्मतत्वालोचनरूपोविचारः तस्यअध्या

दशबाहुस्त्वनिमिषोनीलकंठउमापतिः विश्वरूपःस्वयंश्रेष्ठोबलवीरोबलोगणः ४१ गणकर्त्तागणपतिर्दिग्वासाः
कामएवच मंत्रवित्परमोमंत्रःसर्वभावकरोहरः ४२ कमंडलुधरोधन्वीबाणहस्तःकपालवान् अशनीशतघ्नीख
ड्गीपट्टिशीचायुधीमहान् ४३ स्रुवहस्तःसुरूपश्चतेजस्तेजस्करोनिधिः उष्णीषीचसुवक्त्रश्चउदग्रोविनतस्तथा ४४

रोपापवादाद्यन्मकंत्वात्तदनुगुणंनामद्वयंसर्वभावकरःजगत्कारणमित्यर्थः हरःतत्वविलापनस्थानं सर्वभावनःहरइतिचपूर्वकालरूपेणसर्वकर्तृत्वसंहर्तृत्वे
उक्तेइत्यभिन्नत्वदृष्ट्यैवनभेदः तथाहिचतुर्विधःप्रलयः प्राकृतोब्रह्मावसानेमहदंतानांकार्याणांनाशः दैनंदिनोब्रह्मदिनावसानेत्रैलोक्यनाशः नित्यःसदादि
सुषुप्तौसर्वनाशः एतेत्रयःसबीजाः इतिउत्पत्तिमंतः आत्यंतिकस्तुतत्वज्ञानेनसकारणस्यकार्यस्यनाशःपुनरुत्पत्तिहीनोमोक्षाख्यइतिशास्त्रप्रसिद्धः ४२
दशबाहुरित्युक्तानांबाहूनामायुधान्याह कमंडलुधरः धन्वीधनुष्मान् बाणहस्तः कपालवान्ब्रह्मणःशिरश्छित्वातत्कपालंधारयतीत्यर्थः अशनिर्व
ज्रंतद्वान् शतघ्नीशक्तिस्तद्वांश्चउभयत्रव्रीह्यादिभ्यश्चेतिमत्वर्थीयइनिः खड्गी पट्टिशःखड्गविशेषःतद्वान् आयुधस्वस्यअसाधारणंशूलंतद्वान्शूलीत्य
र्थः महान्पूज्यः ४३ स्रुवोयज्ञपात्रंतद्धस्तःसुरूपः तेजःतेजस्वी तेजस्करोनिधिःभक्तानांकांतिप्रदोनिधिरिवनिधिरनुच्छेद्यः उष्णीषीशिरोवेष्टनवान्
सुवक्त्रः उदग्रःऊर्जितरूपः विनतःविनयवान् ४४

दीर्घः अत्युच्चः हरिकेशः हरय इंद्रियाण्येव केशा इव केशा रश्मयो यस्य स हरिकेशः इंद्रियद्वारा तत्तदर्थप्रकाशकर्त्ता यद्वा हरिश्च कश्च ईशश्च तेषां समाहारः त्रिमूर्त्ति-
रित्यर्थः शोभनश्चासौ तीर्थश्च सुतीर्थः महागुरुः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः तस्य वाचकः प्रणवः स पूर्वेषामपि गुरुरिति पतंजलिस्मरणात्
कृष्णः कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत इति श्रुतेरानंदसन्मात्र इत्यर्थः ब्रह्मोत्तरखंडे वा गोपशिशुः प्रतिमह्यदेवेन
तद्वान्वये सप्तमो हं भविष्यामीति वरदानान्महादेवस्यैवावतारः कृष्णादत्यवगमात् शृगालरूपः वणिजावमानितं ब्राह्मणं प्रायोपविष्टं सांत्वितुमिंद्रेणेतद्रूपं धृ-
तमिति मोक्षधर्मे भूपाख्यायते तेन शृगालरूपं इंद्रस्तदभिन्न इत्यर्थः सिद्धार्थः सिद्धा एव न तु साध्या अर्था अर्थनीयाः पदार्था यस्य मुंडः परिव्राट् अत एव सर्वशु-
भंकरः सर्वभूताभयप्रदः ४५ अजः अजातः ब्रह्मादिष्वजत्वं आपेक्षिकं देवेषु मरस्ववत् हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् विष्णुरित्थापरमम-
स्य विद्वान्जातो हन्नभिपातितृतीयमिति ब्रह्मविष्ण्वादिषु जात इति विशेषणात् अजात इत्येनं कश्चिद्भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन मां पाहीति रुद्र एवाजात-
त्वदर्शनात् बहुरूपः स्पष्टं गंधधारी कुंकुमकस्तूर्यादिसुरभिद्रव्यधर्त्ता कपर्दी कं जलं पिबतीति कपः कृतिः सौत्रो धातुः स्पर्द्धायामैश्वर्ये चास्ति कृत्स्पर्द्धेनैश्ययोरिति

दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च शृगालरूपः सिद्धार्थो मुंडः सर्वशुभंकरः ४५ अजश्च बहुरूपश्च गंधधारी कपर्द्यपि ऊ-
र्ध्वरेता ऊर्ध्वलिंग ऊर्ध्वशायी नभःस्थलः ४६ त्रिजटश्चीरवासाश्च रुद्रः सेनापतिर्विभुः अहश्चरो नक्तंचरस्तिग्ममन्युः सुवर्चसः ४७

वोपदवः अस्मात् क्विप् कृत ऐश्वर्य ददातीति कृद्दः कपश्चासौ कृद्दश्चेति समासः सद्गुणः कपर्दः महादेवस्य हि जटाजूटेन स्वर्गात्पतंती गंगा प्रथमं पीता प-
श्चाद्भगीरथप्रार्थनया तस्या निर्गमनसामर्थ्यं च दत्तमतः स कपर्दः तद्वान्महेश्वरः कपर्दी ऊर्ध्वरेताः अविप्लुतब्रह्मचर्यः तत्र हेतुः ऊर्ध्वलिंगः अधोलिंगो हि रेतः सि-
चति न तूर्ध्वलिंगः अत्रापि हेतुः ऊर्ध्वशायी उत्तानशयः एतेन नामत्रयेण उमया शिवो न ग्रस्तो न च स्पृष्टः यतः असंग इत्यर्थश्च यदर्शितं एवं सत्यपि नभ एव आका-
शशब्दिता शक्तिरेव स्थलं आवासो यस्य स नभःस्थलः यथोक्तमभियुक्तैः शक्तिः शरीरमधिदैवतमंतरात्मा ज्ञानं क्रियाकरणमासन जालमिच्छा ऐश्वर्यमायतनमाव-
रणानि च लक्षिकिंकिन यद्भवसि देव शशांकमौलेरिति ४६ त्रिजटी चीरवासाः स्पष्टे रुद्रः प्राणा वाव रुद्रा एते हीदं सर्वं रोदयंतीति श्रुतेः सर्वेषां प्राणरूपः से-
नापतिः विभुर्व्यापी अहश्चरो देवादिः नक्तंचरो राक्षसादिस्तदुभयरूपः तिग्ममन्युः तीक्ष्णक्रोधः सुवर्चसः सुतरां वर्चो ध्ययन तप आदिजं तेजो यस्मि-
न् समासांतो च आर्ष्यवा ४७ छ छ छ छ छ छ छ छ छ छ छ छ छ

गजहा वाराणस्यां पुरा यातो गजरूपी महासुरः जघ्ने तं कुंजरं भीमं मन्यथमपि शंकर इति स्कांदे उपाख्यानात् गजासुरहंता ५० दैत्यहा ५१ कालः मृत्युः संवत्सरादिर्वा ५२ लोकधाता लोकानामीश्वरः ५३ गुणाकरः गुणानां दीनदयालुत्वज्ञानैश्वर्यादीनामाकरः खनिः ५४ सिंहः शार्दूलरूपः सर्वहिंस्रपशुरूपः ५५ आर्द्रं च चर्म गजकृत्तिस्तदेवांबरं तेनावृत्तः ५६ ४८ कालयोगी च कायोगी कालयोगी ५७ महानादः अनाहतध्वनिरूपः स च हंसोपनिषत्प्रसिद्धः ५८ सर्वे कामा विषया अस्मिन्निति सर्वकामः अस्मिन्नूं सर्वे कामाः समाहिता इति श्रुतिः ५९ चतुष्पथः चत्वारः उपासनार्थं पंथानोस्य स तथा ते च विश्वतैजसप्राज्ञशिवध्यानरूपाः ६० निशाचरः वेतालादिः ६१ प्रेतैर्भूतैश्च सह चरतीति प्रेतचारी ६२ भूतचारी ६३ महेश्वरः इंद्रादिभ्य ईश्वरेभ्यो महान् ६४ ४९ बहुभूतः सच्चासच्चाभवदिति संसंज्ञा नृतं च सत्यमभवद्यदिदं किंच तेन श्रुतमस्य बहुभवनं ६५ बहुधरः महतः प्रपंचस्य धर्त्ता ६६ स्वर्भानुः मूलाज्ञानरूपस्तमः शार्ब्दितोग्रहः ६७ अमितः अनंतः भूमेत्यर्थः ६८ गतिः मुक्तप्राप्यः ६९ नृत्यप्रियः तांडवेश्वरश्चिदंबरमूर्त्तिः ७० नित्यः संततः नर्त्तो नर्त्तनं यस्य नित्यनर्त्तः ७१ नर्त्तकः नर्त्तयिता ७२ सर्वेषु लालसा प्रीतिरस्य विश्वबंधुरित्यर्थः ७३ ५० घोरः शिवस्य हे तन्वौ घोरान्याक्षु तृषादिर घोरान्या संतोषादिस्तद्रूपत्वात् घोरः ७४

गजहा दैत्यहा कालो लोकधाता गुणाकरः सिंहशार्दूलरूपश्च आर्द्रचर्मांबरावृतः ४८ कालयोगी महानादः सर्वकामश्चतुष्पथः निशाचरः प्रेतचारी भूतचारी महेश्वरः ४९ बहुभूतो बहुधरः स्वर्भानुरमितो गतिः नृत्यप्रियो नित्यनर्त्तो नर्त्तकः सर्वलालसः ५०
घोरो महातपाः पाशो नित्यो गिरिरुहो नभः सहस्रहस्तो विजयो व्यवसायो ह्यतंद्रितः ५१ अधर्षणो धर्षणात्मा यज्ञहा कामनाशकः दक्षयागापहारी च सुसहो मध्यमस्तथा ५२ तेजोपहारी बलहा मुदितोर्थोजितो वरः गंभीरघोषो गंभीरो गंभीरबलवाहनः ५३ ७

महातपाः महत् सर्वसंहारक्षमं तप आलोचनं यस्य ७५ पाशयति स्वमायया वा भातीति पाशः ७६ नित्यः ध्वंसरहितः ७७ गिरिरुहः पर्वतारूढः कैलासवासीत्यर्थः ७८ नभः व्योमवदसंगः ७९ सहस्रहस्तः ८० विजयः ८१ व्यवसायो निश्चय उद्योगो विनपहेतुः ८२ अत एवातंद्रितः तंद्रा तमोमयी वृत्तिः प्रवृत्तिनिरोधिनी तद्रहितः अनिंदित इति पाठे व्यवसायस्य विशेषणं ८३ ५१ अधर्षणः अप्रकंप्यः ८४ धर्षणात्मा भयरूपः ८५ यज्ञहा बलियज्ञघ्नः बौध्धावताररूपेण वायं यज्ञघ्नः विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्त्विति मंत्रवर्णेन विष्ण्वादीनन्यत्वाच्छिवस्य न हि वक्ष्यते दमुक्तं ८६ कामनाशकः स्मरस्य भक्तकामप्रदत्वेन इच्छाया वा नाशकः ८७ दक्षयागापहारी सं‍ष्टं ८८ सुसहः सौम्यः ८९ मध्यमः ईपत्सौम्यः ९० ५२ तेजोपहारी अतिक्रूरः ९१ बलहा इंद्ररूपेण बलनामानं दैत्यं हतीति तथा ९२ मुदितः कारणरूपेण नित्यमानंदयुक्तः ९३ अर्थः धनरूपेणार्थनीयः ९४ अजितः संग्रामादौ कृष्णेन तु बाणासुरयुद्धे शिवाज्ञयैव शिवो जितो न स्वबलेन यथा भीष्मेण कृष्णः स्वप्रतिज्ञां समर्थयतां न्यतः कृतः भक्तपारवश्यदर्शनाय तद्वत् एतच्च पुराणे प्रसिद्धं ९५ ७

अवरः नास्ति वरावरणीयो यस्मादन्य इत्यवरः १६ गंभीरघोषो दुंदुभिसमुद्रादिरूपेण १७ गंभीरो दुरवगाहनात्पर्यः वेदरूपेण १८ गंभीरं अगाधं परेषां नागादिनन्तं बलं सेना शारीर सामर्थ्यं वा वाहनं वृषभश्च धर्मरूपो यस्य सः गंभीरबलवाहनः १९ ५३ न्यग्रोधरूपः न्यक् नीचैः रोहतीति ऊर्ध्वमूलोऽवाक् शाख एषोऽश्वत्थः सनातन इति श्रुतिप्रसिद्धः संसारवृक्षः २०० इति द्वितीयं शतं न्यग्रोधः वटरूपः वटनिकटे आसीनो दक्षिणामूर्तिरूप इत्यर्थः मार्कंडेयदृष्टो वा एकार्णवस्थो वटस्य छायी बालकृष्णस्वरूपी महाविष्णुर्वा १ वृक्षस्य कर्ण इव कर्णः एकदेशः पर्णं तत्र स्थितिर्यस्य सः वृक्षकर्णस्थितिः वृक्षकल्प स्थितिरिति पाठे यथैकस्माद्बीजाद्वटोऽनन्तो नंतानि बीजानि तेभ्यस्तावंतो वटा इति उत्तरोत्तर वृद्धिमतः कार्यस्यानन्त्यं तत्कल्पात नन इष्यन्यूना स्थितिः संसारवृक्षपालनं यस्य सः न्यूनत्वं ज्ञानेन भर्जितेन बीजे पुनः प्ररोहासंभवात् अभर्जितं न तस्यानिवार्यत्वादिति सूचयितुं कल्पम् मार्कंडेयस्यापि एकार्णवे ब्रह्मण्येकदेशे संसारवटोत्पत्त्यनंतप्ररोहोऽस्तीति भगवतात्स्वमायारूपं व्याख्यानेन प्रदर्शितं अत्र च शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः संसारबंधुः सर्वज्ञः परमात्मेति मुख्यतः नामाष्टकमिदं तस्य प्रतिपादकमी-

न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः सुतीक्ष्णदशनश्चैव महाकायो महाननः ५४ विष्वक्सेनो हरिर्यज्ञः संयुग्यापीडवाहनः तीक्ष्णतापश्च हर्यश्वः सहायः कर्मकालवित् ५५

शितुरिति शैवे विष्णुपितामह योरपि शिवादनन्यत्वात्तद्वाचिभिरपि शब्दैः शिव एवाभिधीयत इति दर्शनात् हरिवंशे कैलासयात्रायां नामानि तव गोविंद यानि लोके महांति च तान्येव मम नामानि नात्र कार्या विचारणेति शिव वचनाच्च सर्वस्मिन् पुराणे शिवपर्याये विष्णुपर्याये वा एक एव ईश्वरोऽभिधीयते शिवविष्णोर्भेद उत्तमानुत्तमभावं च कल्पयतः पाषंडिनः शिरसि पतत्ववश्यमिति यथोक्तं सूतसंहितायां ब्रह्माणं केशवं विष्णुं भेदभावेन मोहिताः पश्यंत्येकं न जानंति पाखंडोपहता जना इति अत एव माता धाता पितामहः रुद्रो बहुशिरा बभ्रुरिति विष्णुनामसु ब्रह्मरुद्रनामानि पठ्यंते तथा महादेवोऽव्ययो हरिः गणनाथ प्रजापतिरिति शिवनामसु विष्णुप्रजापतिनामानि इतरेषामितरत्र गौणमुख्यवृत्तिभेदेन प्रवृत्तिरिति कल्पनया उद्दालक शैवस्कांदवाक्यबाधितेनानुस्थानं यो देवानां नामधा एक एव नामानि सर्वाणि यमाविशंति एवं सत्तं बहुधा कल्पयंति एकं सद्विप्रा बहुधा वदंत्यग्निं यमं मातरिश्वानमाहुरित्याद्यागमविरुद्ध भूतत्वाच्चेत्युपेक्ष्या एवेति दिक् निर्गुणनरमुपमर्दितमेतदादिपर्वण्युपोद्घाते २ विभुः विविधरूपेण हरिहरदुर्गागणेशार्काग्निवाय्वादिरूपेण भक्तानामनुग्रहाय भवतीति विभुः ३ सुतीक्ष्णाः अनेकब्रह्मांडचणकचर्वणक्षमा दशना यस्य सः सुतीक्ष्णदशनः ४ महाकायः ५ महानन इति तदनुगुणे शरीरमुखे अनुवर्णिते ६ ५४ विष्वक् विशु सर्वत्र अंचंति पलायंते यस्य प्रयाणोद्योगे दैत्यानां सेना इति विष्वक्सेनः सर्वतः पूज्यते सेना यस्येति वा अंचु गतिपूजनयोरिति धातुः ७ हरिः गजेंद्रमोक्षणे आपदं हरतीति हरिः सर्वसंहर्ता वा ८ यज्ञः सृष्टिबीजभूतः तथा च श्रुतिः अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति ९ संयुगे संग्रामे आपीड इव आपीडो ध्वजभूतं वाहनं वृषरूपं यस्य वृषध्वज एव वाहनमपीत्यर्थः १० तीक्ष्णतापोऽग्निः तदात्मा ११ हरयः अतिवेगवादिनः अश्वा यस्य सः हर्यश्वः सूर्यस्तदात्मा सहायः जीवस्य सखा द्वा सुपर्णा सयुजा सखायेति मंत्रवर्णात् १३ कर्मणां दर्शादीनां कालं यथोक्तं वेत्तीति कर्मकालवित् १४ ५५

विष्णुनाप्रसादितश्चक्रलाभार्थमिति विष्णुप्रसादित १५ यज्ञः विष्णुरूपी यज्ञोवै विष्णुरितिश्रुतेः १६ समुद्रः १७ वडवामुखः वन्हिविशेषोयः सामुद्रं जलं नित्यं शोषयति १८ हु-
ताशनसहायः वायुः १९ प्रशांतात्मा निस्तरंगसागरस्वरूपः २० हुताशनोऽग्निः २१ ५६ उग्रतेजाः दुःसहस्पर्शः २२ महातेजाः विश्वस्य प्रकाशः २३ जन्ये-
संग्रामे साधुर्जन्यः २४ यतो विजयकालवित् तेन भूयोपि कालज्ञानाभावे पराजितो भवतीति गम्यते २५ ज्योतिषां ग्रहनक्षत्राणामयनं गमनं वर्ण्यते तच्छास्त्रं
ज्योतिषामयनं कालवित् कालरूपश्चेति नामद्वयार्थः २६ सिद्धिर्जयरूपा २७ सर्वं कालादिकं विग्रहो देहो यस्य स सर्वविग्रहः सांधीति पाठे संधिविग्रहयानासनादि
रूपः २८ ५७ शिखी शिखावान् गृहस्थः २९ मुंडी तद्रहितः संन्यासी एतेन नैष्ठिकब्रह्मचारिणोपि ग्रहणं दंडीति पाठे पिपालाशवैणवं च दंडं धारयतस्तत्पोक्तः ३०
जटी जटावान् वानप्रस्थः ३१ ज्वाली ज्वालावान् अर्चिरादिमार्गे शिखिप्रभृतिभिः प्रार्थ्यः ३२ मूर्त्तौ शरीरे जायते आविर्भवतीति मूर्तिजः ३३ मूर्द्धगः मूर्द्धनि
सहस्रारे वा गच्छतीति मूर्द्धगः ३४ बली बलवान् बलीतिपाठे बलिमान् रुद्रः ३५ वेणुपणवतालाख्या वाद्यविशेषास्तद्वान् वेणवी ३६ पणवी ३७ ताली ३८
खलं धान्यस्थानं तद्वान् ३९ कालकटंकटः कालस्य कटो वेष्टकः आवरणं यामायातामपि कटत्यावृणोतीति कालकटंकटः कटे वर्षावरणयोरिति धातुः शालेति

विष्णुप्रसादितोऽयज्ञः समुद्रो वडवामुखः हुताशनसहायश्च प्रशांतात्मा हुताशनः ५६ उग्रतेजा महातेजा जन्यो विजयकालवित् ज्यो-
तिषामयनं सिद्धिः सर्व विग्रह एवच ५७ शिखी मुंडी जटी ज्वाली मूर्तिजो मूर्द्धगो बली वेणवी पणवी ताली खली कालकटंकटः ५८ नक्ष-
त्रविग्रहमतिर्गुणबुद्धिर्लयोऽगमः प्रजापतिर्विश्वबाहुर्विभागः सर्वगोऽमुखः ५९ विमोचनः सुसरणो हिरण्यकवचोद्भवः मेढ्रजो ब-
लचारी च महींचारी स्रुतस्तथा ६०

पक्षे वृक्षाणामावरको वायुस्तस्याप्यावरको व्योमरूपी ४० ५८ नक्षत्रविग्रहं ग्रहताराादिशरीरं कान्त्वं कं तत्
दनुसारिणी मतिर्यस्य स दवज्ञो वा पाठांतरे गमयति चालयतीति वा नक्षत्रविग्रहगमः मतिर्वा ४१ गुणेषु गुणकार्येषु विषयेषु बुद्धिर्यस्य जीवरूपीत्यर्थः ४२ लीयन्
ते स्मिन् सर्वे इति लयः ईश्वरः ४३ अगमः अचंचलः कूटस्थश्चिन्मात्रः यम इति पाठे पितृयोर्यमयिता यस्तं तन्तुन्यः स एव ४४ प्रजापतिः विराट् ४५ अत एव विश्वबाहुः
विश्वेषां बाहवः एव बाहवो यस्य स तथा ४६ विभागः विभज्यते पृथक्क्रियत इति व्यष्टिकार्यरूपः ४७ सर्वगः समष्टिकार्यरूपः ४८ अत एव सर्वगः अमुखः भोगसाध-
नहीनः अभोक्तेत्यर्थः सर्वतोमुख इति पाठे त्वेकं नाम ४९ ५९ विमोचनः संसारमोचकः ५० सुसरणः सुप्रापः सुशरण इति पाठे शोभनं शरणं रक्षितृत्वं यस्य अपुनरा
वृत्तिगृहमित्यर्थः ५१ हिरण्यकवचः हरतीति हिरण्यं मायातद्विकारभूतं कवचमिव कवचं आवरकं शरीरं हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखमिति श्रुतेः तत्र उद्भ
व आविर्भावो यस्य स हिरण्यकवचोद्भवः ५२ मेढ्रजः मेढ्रे लिंगे आविर्भवतीति मेढ्रजः ५३ बलचारी अबलेचरः शाबरः देवा वै बलेगाः पर्यपश्यन्निति ब्राह्मणात् बलशब्दस्य बलवाचित्वं ५४ महीचारी कन्याचरतीति महीचारी ५५ स्रुतः सर्वत्र गतः प्राप्तः कर्मफलः ५६ ६० श्रीरामचन्द्रार्पणमस्तु ६ ६ ६ ६

सर्वतूर्यनिनादःस्पष्टं ५७ सर्वतोद्यपरिग्रहः अतोद्याप्रतोदनार्हाःजीवपशवस्तेएवसर्वेपरिग्रहःकुटुंबंयस्यपशुपतिरित्यर्थः ५८ व्यालरूपःशेषा त्मा ५९ गुहावासीयोगीजैगीषव्यादिः ६० गुहः कार्त्तिकेयः ६१ मालीवनमालाधारी ६२ तरंगवित् तरंगतुल्यानिविषयसुखानिविंदतिलभतेइतितत् थातरंगवित् ६३ ६१ त्रिदशाःतिस्रोदशाःजन्मास्थितिर्नाशाःप्राणिनायस्मादिति ६४ त्रिकालज्ञातंवस्तुधारयतीतित्रिकालधृक्यथोक्त अनागतमतीतंचभविष्य त्स्थूलमण्वपि तथादूरमदूरंचनिमेषःकल्पइत्यपि चिदात्मनिस्थितान्येवपश्यमायाविजृंभितमिति ६५ कर्माणिसंचितक्रियमाणानिबंधाख्याविद्याकामात्म काःतेभ्यस्सेन्वयतीतिकर्मसर्वबंधविमोचनः ६६ बंधनस्त्वसुरेंद्राणांवामनरूपेणबलेर्बंधकर्त्ता बहुवचनंकल्पभेदाभिप्रायं ६७ युधिशत्रुविनाशनःस्पष्टार्थं ६८ ६२ सांख्यप्रसादः आत्मानात्मविवेकः सांख्यंतेनैवप्रसीदतिज्ञानेकलभ्यइत्यर्थः अथवासांख्यज्ञानप्रदोदत्तात्रेयइत्यर्थः ६९ दुर्वासास्तस्यैवसोदर्योरुद्रांशः ७० सर्वसाधुनिषेवितइतिब्राम्हणानांराजासोमउक्तः ७१ प्रस्कंदनःब्रह्मादीनामपिच्यावयिता मन्येत्वाच्यवनमच्युतानामितिमंत्रवर्णः ७२ विभागज्ञःप्राणिनां यथोचितंतत्तत्कर्मफलानांविभाजकः ७३ अतएवअतुल्यः नत्वत्समोस्त्यभ्यधिकः कुतोन्यइतिगीतावचनात् ७४ यज्ञविभागवित्यज्ञियानांहविषाविभागाभिज्ञः ७५ ६३

सर्वतूर्यनिनादश्चसर्वतोद्यपरिग्रहः व्यालरूपोगुहावासीगुहोमालीतरंगवित् ६१ त्रिदशस्त्रिकालधृक्कर्मसर्वबंधविमोचनः बंधन-
स्त्वसुरेंद्राणांयुधिशत्रुविनाशनः ६२ सांख्यप्रसादोदुर्वासाःसर्वसाधुनिषेवितः प्रस्कंदनोविभागज्ञोअतुल्योयज्ञभागवित् ६३ सर्व-
वासःसर्वचारीदुर्वासावासवोमरः हैमोहेमकरोयज्ञःसर्वधारीधरोत्तमः ६४ लोहिताक्षोमहाक्षश्चविजयाक्षोविशारदः संग्रहोनि-
ग्रहःकर्त्तासर्पचीरनिवासनः ६५ मुख्योमुख्यश्चदेहश्चकाहलिःसर्वकामदः सर्वकालप्रसादश्चसुबलोबलरूपधृक् ६६ ७

सर्वत्रवासोवसतिस्थानमस्यसर्ववासः ७६ सर्वचारी ७७ दुर्वासाःदुस्थंआर्द्रगजकृत्तिरूपंवासोयस्यदुर्लभंवावासोय स्यअनंतपारत्वादितिदुर्वासाः ७८ वासवः ७९ अमरः ८० हैमोहिमस्यायंसमूहोहैमोहिमालयरूपी ८१ हेमकरोजांबूनदस्यसुवर्णस्यकर्त्ताजंबूद्वीपचिन्हभूतोजंबूवृक्षः तस्यहिफलंप्रस्रवंसुवर्णलभजतीसुपाख्यायतेपुराणेषु ८२ अयज्ञःनिष्कर्मा ८३ अथवासर्वधारीसकलकर्मफलधर्त्ता ८३ धराणांदिग्गजशेषकूर्मादीना मप्युत्तमःअनन्याधारःसन्तैःसर्वैःसहितस्यब्रम्हांडस्यधर्त्ता ८४ ६४ लोहिताक्षःरक्तनेत्रः ८५ महांतिविश्वव्यापकानिअक्षराणिइंद्रियाणियस्यसमहाक्षः ८६ विजयावहःअक्षोपलक्षितोरथोयस्यसविजयाक्षः ८७ विशारदःपण्डितः ८८ संग्रहःसंगृण्हातिबाणादीन्दासानुस्वीकरोतीतिसंग्रहः ८९ निग्रहःनिगृण्हातिइंद्रा दीनुत्सिक्तान्दंडयतीतिनिग्रहः ९० अंतएवकर्त्ता ९१ सर्पाएवचीरस्पवस्त्रस्यनिवासनंविष्टंभकंयस्य ससर्पचीरनिवासनः वंमूस्तंभेऽस्यरूपं ९२ ६५ मुख्यःपरमः ९३ अमुख्यःअवमःदेदेवानामित्यर्थः अग्निर्वैदेवानामवमोविष्णुःपरमस्तदंतरेणसर्वाअन्यादेवता इतिब्राह्मणात्सर्वदेवतामयइत्यर्थः ९४ देहःउपचि तःअत्यंतपुष्टइतियावत् ९५ काहलावाद्यविशेषस्तद्वान्काहलिःअर्शआदित्वात्प्रत्ययःदेहारिरित्यपिपठंति ९६ सर्वकामप्रदः ९७ सर्वकालप्रसादः ९८ सुबलःशोभनंपरपीडा परिहारिबलंसामर्थ्यंयस्यदयानिधिरित्यर्थः ९९ बलोबलरामस्तद्रूपधारीबलरूपधृक् बलंचरूपंचतयोर्धर्त्ता ३०० ६६ श्रीकृष्णार्पणमस्तु ७ ७ ७ ७

सर्वकामवरः सर्वेषांकाम्यमानानांवरःश्रेष्ठःमोक्षइत्यर्थः १ सर्वदःस्पष्टं २ सर्वतोमुखइतिसर्वतः पाणिपादत्वादेरूपलक्षणं ३ आकाशनिर्विरूपश्च आकाशादिवनि र्गच्छंति विविधानिरूपाण्यस्मादितिसतथा अनेनवायुरभ्रंविद्युत्स्तनयित्नुरशरीराण्येतानितद्यथैतान्यमुष्मादाकाशात्समुत्थायपरंज्योतिरूपंसंपद्यस्वेनरूपेणा भिनिष्पद्यंत एवमेवैषसंप्रसादोस्माच्छरीरात्समुत्थायपरंज्योतिरूपसंपद्यस्वेनरूपेणाभिनिष्पद्यतेसउत्तमः पुरुषइतिश्रुतेरर्थोदर्शितः सचयथा आकाशतादात्म्यंप्राप्तस वाग्वादयो शरीरअविभाव्यमानस्वरूपास्तेतिमात्कुडारं भेतन. पृथक्स्वस्वेनरूपेणोपसंपन्ना भूत्वानिर्वाणदीपवत परज्योतिरात्मनाभिनिष्पन्ना भवंतिदेहतादा त्म्यापन्नः संप्रसादाख्योजीवोदेहात्पृथगविभाव्यमानस्वरूपोपिध्यानकाले . देहांतरवद्देहाद्युत्थायस्वनापहतपाप्मादिगुणाष्टकेनरूपेणाभिनिष्पन्नस्तद्देव परंज्योतिर्निर्विशेषब्रह्माभिमुख्येन प्रत्यगभेदेननिष्पद्यतइति ३ देहगर्तेनिपतितंतत्तादात्म्यंप्राप्तुशीलमस्येतिनिपाती ४ अतएवाप्यवशः देहसंबंधादपरिहा र्यदुःखादिसंबंधः ५ खगः खंहार्दाकाशंगः शब्दनरूपेणेत्यर्थः हार्दाकाशएवतावद्गमस्तद्गतस्तत्कृतरामसंगः सन्निषणः अवशश्च भवस्य होमाहस्य्यमा हात्म्य मपापमितिभावः ६ ६७ रौद्ररूपोमहाभैरवः ७ अंशुःदेवनाभेद ८ आदित्यस्तत्सहचारीपापरोपरनामादेवः तस्य अशुःश्वपर्शश्चाजायेतामिति

सर्वकामवरश्चैवसर्वदःसर्वतोमुखः आकाशनिर्विरूपश्चनिपातीह्यवशःखगः ६७ रौद्ररूपोंशुरादित्योवहुरश्मिःसुवर्चसी व-
सुवेगोमहावेगोमनोवेगोनिशाचरः ६८ सर्ववासीश्रियावासीउपदेशकरोकरः मुनिरात्मनिरालोकःसंभग्नश्चसहस्रदः ६९ पक्षी
चपक्षरूपश्चअतिदीप्तोविशांपतिः उन्मादोमदनःकामोह्यश्वत्थोर्थकरोयशः ७०

ब्राह्मणात् ९ बहुरश्मिःसूर्यएव १० शोभनंवर्चस्तेज सुवर्चमतद्यानस्सुवर्चसी ११ वसूनवेगःवासयतिस्थापयत्येतनत्सर्वं आत्मनीतिवसुःवायुः वायुर्वैवतान्सर्वत्केट तिश्रुतेः तस्यवेगइववेगोयस्यसतथा १२ महावेगस्ततोप्यधिकवेगः १३ मनोवेगः मनसोप्यधिकवेगः मनसोजवीयइतिमंत्रव्याख्यात १४ निशाचरः निशेवनिशाअवि द्यातस्यांचरतिविषयान् भुंक्तेसतथा १५ ६८ सर्वेषुशरीरेषुवसतीतिसर्ववासी १६ श्रियासहवसतीतिश्रियावासी अलुक्समास श्रीश्चतेलक्ष्मीश्च सामानियजूंषिसाहिश्रीरमृतासता मितिश्रुत्युक्तविद्याख्या १७ अतएवउपदेशकरः १८ अकरः उपदेशमपितूष्णींभावेनास्थानं यथोक्तं चित्रंवटतरोर्मूले वृद्धाः शिष्यागुरुर्युवा गुरोस्तुमौनंव्याख्यानंशिष्यास्तु छिन्नसंशयाइति बाष्कलिनाच बाध्वःपृष्टःपुनस्तूष्णींभूतएवस्थितस्तत्तृतीयेप्रश्नेप्राहब्रूमः खल्वहंतुनविजानास्युपशांतोयमात्मेति १९ अकरत्वादेवमुनिर्मौनवान् २० आत्मनिजीवेनिश्चितंदेहादुपरवेर्वाविनिर्गत्यआलोचयतीत्यात्मनिरालोकः २१ संभग्नः सम्यक्सेवितः भजसेवायामित्यस्यरूपंननुभुज. २२ अतएवसहस्रदः अनंतस्यधनादेर्दा ता २३ ६९ पक्षीगरुत्मान् २४ पक्षःरूपःमित्ररूपेणसहायः २५ अतिदीप्तः कोटिसूर्यप्रतीकाशः शत्रुतेजोभिभावकः २६ अतएवसर्वासांप्रजानांपतिःसार्वभौमः २७ उन्मा दयतीत्युन्मादःमोहकः २८ यतःमदनः अनंगः २९ कामःकाम्यमानःस्त्र्यादिविषयरूपः ३० अश्वत्थःसंसारवृक्षः कामनदोपात्तएव ३१ अर्थकरः धनादिप्रदः ३२ यशःकीर्तिप्रद

स्क ३३

वामदेवः वामानांकर्मफलानांदेवः देवोराजाविभाजकः ३४ वामः कर्मफलरूपः विषयसंपर्कजानंदमात्रस्वरूपइत्यर्थः ३५ प्राक्सर्वेषामाद्यः ३६ दक्षिणश्चत्रैलोक्याक्रमण समर्थः ३७ वामनः बलिबंधनकर्ता ३८ सिद्धयोगीसनत्कुमारादिः ३९ महर्षिर्वसिष्ठादिः ४० सिद्धार्थः ऋषभदत्तात्रेयादिः ४१ सिद्धश्चासौसाधकश्च ज्ञानोत्तरंसंन्यासमभीप्सन् याज्ञवल्क्यादिर्विद्वत्संन्यासी ४२ ७१ भिक्षुर्लिंगधारीहंसः ४३ भिक्षुरूपः अलिंगः परमहंसः ४४ अतएवविपणोनिर्व्यवहारः दंडादिरहितः ४५ मृदुः सर्वभूताभयदाता ४६ अव्ययः निर्विकारः मानापमानादिप्राप्तावपिहर्षविषादशून्यः ४७ महासेनः कार्तिकेयोदेवसेनापतिः ४८ विशाखस्ततएवइंद्रेणवज्रप्रहारेकृतेजातस्तत्सहायः ४९ षष्टिभागः षष्टिस्तत्त्वानियस्यभागोभोज्यं अतिथिभागइतिवत् सषष्टिभागः तानिचजागरितस्थानइत्यादिनामांडूक्यादौप्रसिद्धानि यथाजाग्रदवस्था बहिर्मुखंप्रज्ञानं सप्तशब्दादयः पंचमंतव्यबोद्धव्याभ्यांसहिताः स्वसंकल्पोत्थाविषयाः एकोनविंशतिभोगद्वाराणिदशेंद्रियाणिपंचप्राणामनोबुद्ध्यहंकारचित्तानिचेतिस्थूलंभोग्यंशब्दाद्याश्रयभूतमितिएकोनत्रिंशत् तथास्वप्नावस्थाअंतर्मुखंप्रज्ञानंवासनामयाश्चइतरेसर्वेसूक्ष्मभोग्यांताएकोनत्रिंशदेव तथासुषुप्तस्थानंचेतश्चसूक्ष्मतरंमुखंइतिषष्टिः भोग्यवर्गः यस्तुभोक्तासस्साक्षी आनंदरूपोस्यामवस्थायांमन्यगानंदसूक्ष्माभिश्चेतोवृत्तिभिर्भुंक्ते इतिषष्टिभागः ५० गवामिंद्रियाणांपतिश्चालकः ५१ ७२ वज्रहस्तःपर्वतभेत्ताशक्रः ५२ निष्कंभोविस्तारस्तद्वान्विष्कंभी ५३ चमूस्तंभनोदैत्यसेनास्तंभनकृत् ५४ वृत्तंवृत्तरथेन मंडलानां करणं आवृत्तं परसेनांभित्वापुनरस्तेनआगमनंतयोः करः कर्त्तावृत्तावृत्तकरः कृतावृत्तेतिपाठेनिष्कपटमावृत्तकर्त्ता ५५ तालः संसारसिंधोस्तलंआधारंस्थानंवेत्तीतितालः शब्दब्रह्मवित् तालंसंस्तंभयिता ५६ मधुर्वसंतः ५७ मधुकोयष्टिकाख्यः पक्षीतद्वल्लोचनेयस्यसमधुकलोचनः मध्वेवमधुकं क्षौद्रंतद्वत्पिंगनेत्रइतिवा ५८ ७३ वाचस्पतिं अनुदेवपुरोहितंअनुजातः वाचस्पत्यः पुरोहितकर्मकर्त्ता बृहस्पतिर्हवैदेवानांपुरोहितस्तमन्वन्येमनुष्यराज्ञांपुरोहिताइति ब्रह्मणोबृहस्पतिं यस्कः भृतं विभर्त्तीतिमंत्रस्य बृहस्पतिपदस्यव्याख्यानात् ५९ वाजसनः शाखाविशेषप्रवर्तकोध्वर्युकर्मकर्त्ता ६० नियमाश्रमपूजितःस्पष्टं ६१ ब्रह्मचारीब्रह्मणिचरतीतिब्रह्मनिष्ठः ६२ लोकेषुब्राह्मणादिगृहेषुचरतिभक्षयतीतिलोकचारीभिक्षुः ६३ सर्वचारीसर्वगः यएवंवेदाहंब्रह्मास्मीतिसइदंसर्वंभवतीतिश्रुतेरात्मज्ञानात्सार्वात्म्यंप्राप्तइत्यर्थः ६४ विचारवित् विपरीतंचरणंअंतर्मुखतयागमनंतद्वेत्ता ६५ ७४ ७ ७ ७ ७ ७ ७

वामदेवश्चवामश्चप्राग्दक्षिणश्चवामनः सिद्धयोगीमहर्षिश्चसिद्धार्थःसिद्धसाधकः ७१ भिक्षुश्चभिक्षुरूपश्चविपणोमृदुरव्ययः

महासेनोविशाखश्चषष्टिभागोगवांपतिः ७२ वज्रहस्तश्चविष्कंभीचमूस्तंभनएवच वृत्तावृत्तकरस्तालोमधुर्मधुकलोचनः ७३

वाचस्पत्योवाजसनोनित्यमाश्रमपूजितः ब्रह्मचारीलोकचारीसर्वचारीविचारवित् ७४

ईष्टे इतीशानः नियंतांतर्यामीत्यर्थः लटः शानच् ६६ ईश्वरः अश्नोतिव्याप्नोतीति अश्नोतेराशुकर्मणिवरट् इत्युणादिसूत्रेण अश्नुङ्व्याप्तावित्यस्मात्
वरट् चात्पूर्वसूत्रात्किशरीत्त्रोपधायाइत्वंच ६७ कालःकलयतिसर्वेषांपुण्यपापादिकंतत्तत्फलप्रदानार्थंसंख्यातीतिकालः चित्रगुप्तात्मा ६८ निशाचारी
वाह्यांनिशायांमहाप्रलयरूपायामपिचरतिप्रत्यगानंदंअनुभवतीतिनिशाचारी ६९ पातिरक्षतीतिपिनाकः धनुर्विशेषः तद्वान्पिनाकीपिनाकादयश्चे
तिपातेराकप्रत्ययोनुगागमश्चनिपात्यते ७० निमित्तंलक्ष्यंदेव्यादिःतत्रस्थस्तदंतर्यामी ७१ निमित्तंतद्रूपश्चविश्वरूपत्वात् ७२ नंदिःसमृद्धिःएषास्य
परमासंपदितिश्रुतेःज्ञानसंपद्रूपः ७३ नंदिकरस्संपत्करः ७४ हरिर्हनुमान्रामरूपस्यविष्णोःसहायः ७५ ७५ नंदीशिवस्यगणःवाहनंवातस्येश्वरः
७६ नंदीगणरूपीर्च ७७ नंदनआनंदयिता ७८ नंदिवर्धनः दत्तायाअपिसंपदश्छेदकः ७९ भगानिइंद्रादीनामैश्वर्याणितान्यपिहरतीतिभगहारी ८० नि
हंतामृत्युरूपेणः ८१ कालःकलानांचतुःषष्टिसंमितानांनिवासःकालः ८२ अतएवब्रह्माअतिशयेनमहान् ८३ पितामहःपितुर्विष्णोरपिपिता इंदिरालोक
मातेतिमिति लक्ष्म्याःलोकमातृत्वस्यप्रसिद्धत्वेनतद्भर्तुर्विष्णोर्लोकपितृत्वात् ८४ ७६ . चतुर्मुखःविधाता ८५ महत्सर्वदेवासुरादिपूज्यंलिं

ईशानईश्वरःकालोनिशाचारीपिनाकधृक् निमित्तस्थोनिमित्तंचनंदिर्नंदिकरोहरिः ७५ नंदीश्वरश्चनंदीचनंदनोनंदिवर्द्धनः
भगहारीनिहंताचकालोब्रह्मापितामहः ७६ चतुर्मुखोमहालिंगश्चारुलिंगस्तथैवच लिंगाध्यक्षःसुराध्यक्षोयोगाध्यक्षोयुगाव
हः ७७ बीजाध्यक्षोबीजकर्ताअध्यात्मानुगतोबलः इतिहासःसकल्पश्चगौतमोथनिशाकरः ७८ ७ ७ ७

गमस्यसमंततोलिंगः ८६ चारुलिंगः रमणीयवेषः ८७ लिंगाध्यक्षः लीनमर्थंगमयंतीतिलिंगानिप्रत्यक्षादीनिप्रमाणानितेषांअध्यक्षः प्रवृत्तिनिवृ
त्तिनियामकः ८८ सुराध्यक्षः चक्षुरादिप्रमाणानांअधिष्ठातारःसुरास्तेषामप्यध्यक्षः ८९ योगाध्यक्षः तेषामेवेंद्रियदेवतानांद्वादशकाशेणकीकरणेयोगःअत्रह्ये
तेसर्वेएकंभवंतीतिश्रुतेः तस्याप्यध्यक्षः एतेनतद्रूपएवयोगःप्राप्यइत्यर्थः ९० युगावहः युगानिपुण्यपापतारतम्यवंति कृतत्रेताद्वापरकलिसंज्ञानिआवह
तिनिर्वर्तयतीतितथा ९१ ७७ बीजंधर्माधर्मौतयोरध्यक्षः फलदाताबीजाध्यक्षः ९२ बीजकर्तास्पष्टं ९३ अध्यात्मानुगतःआ
त्मानमधिकृत्यप्रवृत्तंशास्त्रंअनुसरन् साधकइत्यर्थः ९४ बलःबलानिधृत्यादीनिवर्तंतेऽस्मिन्नितिबलः मन्वर्थोयाश्च अद्यजंतं ९५ इतिहासोभारता
दिः ९६ संकल्पःयज्ञकल्पकर्मप्रयोगविधिविचारेण संहितःमीमांसान्यायसंघः गौतमस्तर्कशास्त्रप्रणेता ९८ निशाकरश्चंद्रः श्चाद्रव्या
करणप्रणेता ९९ ७८ ७ ७ ७ ७ ७ ७ ७

दंभः दम्नातिशत्रून्दमयतीतितथा ४०० इतिचतुर्थशतं अदंभः नास्तिदंभोदमकोयस्य १ वैदंभः दंभोधर्मध्वजित्वतद्विरहितावैदंभाः तेषामयंस्वभूतो-वैदंभः २ वश्योभक्तपराधीनः ३ वशकरः अन्यान्वशीकर्तुंसमर्थः वश्योवशकरइतिपाठस्यहेतोरर्थः ४ कलिः अन्योन्यंदेवासुरादीनांवैरकर्ता ५ लोक-कर्ताभौतिकचतुर्दशभुवननिर्मिता ६ पशुपतिः ब्रह्मादिस्तंबपर्यंतानांजीवपशूनांपतिःपालकः ७ महाकर्तापंचभूतानामपिस्रष्टा अनौषधः व्रीह्याद्यन्नजातीयरहितः अभोक्तेतियावत् ९ ७९ अक्षरंअव्ययं १० परमंब्रह्म अन्नाद्यवरब्रह्मापेक्षयापरमंउत्कृष्टंआनंदमात्रस्वरूपं ११ बलवत्तंबलाभिमानीदेवतारूपं १२ अतएवशक्नोतीतिशक्रः शतक्रतुशब्दावयवयोरंत्यवर्णयोर्लोपेनवाशक्रः १३ नीतिर्दंड्येषुदंडप्रणयनादिः १४ अनीतिस्तद्विपर्ययः १५ शुद्धात्माविमलचित्तः १६ शुद्धः दोषास्पर्शी १७ मान्यःमानार्हः १८ गतागतःयातायातवान्संसारः १९ ८० बहुप्रसादः २० सुस्वप्नः स्वप्नावस्थ्यभिमानीतैजसोप्ययमेव २१ दर्पणः दर्पणइवविश्वप्रतिबिंबदर्शनास्पदं २१ अमित्रजित् बाह्याभ्यंतर

दंभोऽदंभोवैदंभोवश्योवशकरःकलिः लोककर्तापशुपतिर्महाकर्ताह्यनौषधः ७९ अक्षरंपरमंब्रह्मबलवच्छक्रएवच नीति-र्ह्यनीतिःशुद्धात्माशुद्धोमान्योगतागतः ८० बहुप्रसादःसुस्वप्नोदर्पणोथत्वमित्रजित् वेदकारोमंत्रकारोविद्वान्समरमर्दनः ८१ महामेघनिवासीचमहाघोरोवशीकरः अग्निज्वालोमहाज्वालो अतिधूम्रोहुतोहविः ८२ वृषणःशंकरोनित्यंवर्च-स्वीधूमकेतनः नीलस्तथांगलुब्धश्चशोभनोनिरवग्रहः ८३ स्वस्तिदःस्वस्तिभावश्चभागीभागकरोलघुः उत्संगश्चमहांगश्चमहागर्भ-परायणः ८४

शत्रुजित् २३ वेदकारोनिश्वसितमेतद्यदृग्वेदइत्यादिश्रुतेः वेदानांकर्ता २४ मंत्रावेदादन्येतांत्रिकपौराणिकादेशभाषामयाः तेषां-कर्ता मंत्रकर्ता २५ विद्वान् २६ समरमर्दनःसमरेशत्रूणांमर्दनः २७ ८१ महांतोमेघाः प्रलयकालिकास्तेषुतदधिष्ठातृदेवतात्वेनवसतीतिमहामेघनिवासी २८ महाघोरः प्रलयकर्तृत्वात् २९ वशेसर्वमस्यास्तीतिवशी ३० करोतिहिनस्तिजगदितिकरःसंहारकर्ता ३१ अग्नेरिवतेजोज्वालायस्यसोऽग्निज्वालः३२ततोपि महाज्वालः ३३ अतिधूम्रः कालाग्निरूपेणसर्वदाहकालेत्यंतंधूम्रमयः ३४ हुतः आदिकर्मणिक्तः होमेनप्रीतः ३५ हविःपयआदिरूपः ३६ ८२ वृषणः वर्षतिक-र्मफलानीतिवृषणोधर्मः गुणाभावआर्षः यद्वावृषोधर्मोस्त्यस्मिन्नितिवृषणःपामादित्वान्नप्रत्ययः ३७ शंकरःसुखप्रदः ३८ नित्यंवर्चस्वी धूमकेतनःवन्हिरूपः ४० नीलःमर-कतवर्णः ४१ तथेतिततएवहेतोःअंगलुब्धः अंगंस्त्रीयोन्यवयवः लिंगमितियावत्तत्रलुब्धः नीलेनीलेवालिंगेनित्यंसन्निहितइत्यर्थः ४२ शोभनः कल्याणहेतुः ४३ निरवग्रहः प्रतिबंधशून्योमनोरथवृष्टिकर्ता ४४ ८३ स्वस्तिदः ४५ स्वस्तिभावःसुतरांअस्तिभावःसत्तास्येतिस्वस्तिभावः ४६ भागीयज्ञेभागवान् ४७ भागकरः यज्ञियहविषांविभाज-कः ४८ लघुःशीघ्रः ४९ उत्संगःप्रसंगः ५० महांगःमहाल्लिंगः ५१ महान्गर्भउत्पादनीयलेपरायणं अवश्यंगम्यंयस्यसमहागर्भपरायणःप्रजननात्मकः कंदर्पइत्यर्थः ५२ ८४

कृष्णावर्णो विष्णुरूपेण ५३ स्कवर्णः श्वेतवर्णः सांबरूपेण ५४ सर्वदेहिनामिंद्रियं सर्वेंद्रियरूपः ५५ महापादः ५६ महाहस्तः ५७ महाकायः ५८ महायशाः ५९ ८५ महामूर्धा ६० महामात्रः महाप्रमाणः ६१ महानेत्रः ६२ निशालयः निशेवनिशा अविद्यातस्यालयोयत्र ६३ महांतकः मृत्यमृत्युः ६४ महाकर्णः ६५ महोष्ठः ६६ महाहनुः ६७ ८६ महानासः ६८ महाकंबुर्महाकंठः ६९ महाग्रीवः ७० श्मशानभाक् श्मना शरीराणां शयनं तन्नूकरणं भजतीति श्मशानभाक् देहबंधच्छेत्तेत्यावत् ७१ महावक्षाः रक्षाइति पाठ महतीरक्षारक्षणं यस्यसतथा ७२ महोरस्कः ७३ अंतरात्मा ७४ मृगालयः अंकार्धरोपितमृगइत्यर्थः ७५ ८७ लंबितरिमनेकानितरोफलानीवब्रह्मांडानीतिलंबनः ७६ लंबितोष्ठः प्रलयकाले विश्वं ग्रसितुं लंबितो दीर्घीकृतो ओष्ठोयेनसः ७७ महतीब्रम्हादिभिरप्यजय्यामायायस्यसमहामायः ७८ पयोनिधिः क्षीरसमुद्रः ७९ महादंतः ८० महादंष्ट्रः ८१ महाजिव्हः ८२ महामुखः ८३ ८८ महानखः नृसिंहः ८४ महारोमावराहः ८५ महाकेशः महोदरः ८६ महाजटः ८७

कृष्णावर्णः स्कवर्णश्च इंद्रियं सर्वदेहिनां महापादो महाहस्तो महाकायो महायशाः ८५ महामूर्धा महामात्रो महानेत्रो निशालयः महांतको महाकर्णो महोष्ठश्च महाहनुः ८६ महानासो महाकंबुर्महाग्रीवः श्मशानभाक् महावक्षा महोरस्को ह्यंतरात्मा मृगालयः ८७ लंबनो लंबितोष्ठश्च महामायः पयोनिधिः महादंतो महादंष्ट्रो महाजिव्हो महामुखः ८८ महानखो महारोमा महाकेशो महाजटः प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः ८९ स्नेहनास्नेहनश्चैव अजितश्च महामुनिः वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ९० गंडली मेरुधामा च देवाधिपतिरेव च अथर्वशीर्षः सामास्य ऋक्सहस्रामितेक्षणः ९१

प्रसन्नः ८८ प्रसादः प्रसन्नता ८९ प्रत्ययोनुभवः ९० गिरिसाधनः पर्वतएवसाधनं रणेजयहेतुर्यस्य गिरिधन्वेत्यर्थः ९१ ८९ स्निह्यतीति स्नेहनः पितृवत्प्रजासु स्नेहवान् ९२ अस्नेहनस्तद्विपरीतः ९३ अजितः ९४ महामुनिः अत्यंतं मौनवान् मननशीलोवा ९५ वृक्षाकारः संसारवृक्षएवाकारोयस्य ९६ वृक्षकेतुः संसारवृक्षएवकेतुर्ज्ञापकोयस्य नहिदेहेंद्रियाण्यनुपादाय ब्रम्हजिज्ञासितुंशक्यं ९७ अनलो नास्ति अलं पूर्तिर्यस्य भजानस्यसोनलः अग्निः ९८ वायुरेववाहनं देशाद्देशांतरं प्रापणे साधनः सवायुवाहनः ९९ ९० गडइव गंडोभूमेरुच्चप्रदेशः क्षुद्रशैलास्तेषुलीयते गच्छतीति गंडली गंडशब्दपूर्वात् लीगतावस्मात् क्विप् विभक्तिलोपः रूपांफल्गुणिति पूर्वसवर्णो वा आर्षः १०० मेरुधामा ४ देवाधिपतिः अथर्वशीर्षः ३ सामास्य ४ ऋक्सहस्रामितक्षणः ५ ९१ छ छ छ

छ छ छ छ छ श्रीकृष्णार्पणमस्तु छ छ छ छ छ छ

यजुः पादभुजः ६ गुह्यः उपनिषद्देशः ७ प्रकाशः कर्मकांडः ८ जंगमः नृपश्वादिरूपः ९ अर्थोऽर्थनेयांज्ञाअमोघोर्थोयत्रसः अमोघार्थः १० प्रसादः प्रसीदतीमितिदयालुः ११ अभिगम्यः सुखप्राप्यः १२ सुदर्शनः मंगलावहंदर्शनंयस्य १३ १२ उपकारः प्रीणनरूपः १४ प्रियः सुखदायी १५ सर्वः सरत्यभिसुखंअयातीतिसर्वः १६ कनकः स्वर्णादिप्रियवस्तुरूपः १७ काचनच्छविः १८ नाभिः भुवनस्य मध्यदेशः अथयज्ञोभुवनस्यनाभिर्यज्ञरूपः अत्युर्ध्वगतिहेतुत्वात्राद्य ——— ज्ञ स्यनाभित्वं १९ नंदिकरः यज्ञफलसमृद्धिकर्ता २० भावः क्रतुश्रद्धारूपः २१ पुष्करस्य ब्रम्हांडस्यस्थपतिःस्वामी २२ स्थिरः स्थावरः पर्वतादिरूपः २३ . १४ द्वादशः नृणांदशगर्भवासादयोदशास्तासांमृत्युर्दशमीस्वर्गएकादशी मोक्षोद्वादशीति द्वादशइतिसंसारापेक्षमोक्षउच्यते २४ त्रासनः आंतरालिकदशारूपेण भयजननः २५ आद्यः संसारात्प्राचीनः शब्दः आद्यंतमध्यरूपइतिनामत्रयार्थः २६ यज्ञः जीवेशयोः संगतिकरणरूपोयोगः २७ अतएवयज्ञसमाहितः तत्रस्थः तदेकलभ्यइत्यर्थः २८ नक्तमिवनक्तंअप्रकाशात्मामहामोहः २९ कलिस्तत्कार्यभूतः कामक्रोधलोभादिरूपः ३० कालस्तस्यापिकार्यं जन्ममरणप्रवाहः कालयतिसंचलयतीतियोगात् ३१

यजुःपादभुजोगुह्यःप्रकाशोजंगमस्तथा अमोघार्थःप्रसादश्च अभिगम्यःसुदर्शनः १२ उपकारःप्रियःसर्वःकनकःकां
चनच्छविः नाभिर्नंदिकरोभावःपुष्करस्थपतिःस्थिरः १३ द्वादशस्त्रासनश्चाद्योयज्ञोयज्ञसमाहितः नक्तं कलिश्च
कामश्चमकरःकालपूजितः १४ सगणोगणकारश्च भूतवाहनसारथिः भस्मशयो भस्मगोप्ता भस्मभूतस्तरुर्गणः १५

मकरः मकराकारं शिशुमारचक्रं कालस्यज्ञापकं तत्स्वरूपः ३२ कालेनमृत्युना पूजितः कालपूजितः ३३ १४ सगणः प्रमथादियुक्तः ३४ गणकारः बाणादीन् भक्तान्स्वगणान्करोतीतिगणकारः ३५ भूतानांवाहनोयोगक्षेमनिर्वाहकोब्रम्हासारथिर्यस्य भूतवाहनसारथिः ३६ भस्मशयः भसभर्त्सनदीप्त्योरितिजोहोत्यादिकाद्धातोरन्येभ्योपिदृश्यतइतिमनिन् बभस्ति भर्त्सयतिदोषान् भासयतिवा आत्मानमितिभस्म तथाचोक्तं वासिष्ठलिंगे भर्त्सनात्सर्वपापानांपशानांचमहामुने भस्मेतिकीर्त्यतेरक्षारोगाणांचापिभर्त्सनादिति बाह्यमोक्षेन किं भस्मधारणंमोक्षलक्षणं भस्मेन्मनित्ययुक्तस्यज्ञानमुत्पद्यतेऽचिरादिति श्रुतावप्यथर्वशिरसि अग्निरित्यादिना भस्मगृहीत्वामृज्यांगानि संस्पृशेद्व्रतमेतत्पाशुपतंपशुपाशविमोक्षायेति भस्मनिशेते भस्मशयः तेनउद्धूलनादिकमपिकर्त्तव्यंयथाह वृद्धशातातपः स्तेयंकृत्वागुरुदारांश्चगत्वामद्यंपीत्वाब्रम्हहत्यांचकृत्वा भस्मच्छन्नो भस्मशय्यांशयानोरुद्राध्यायीमुच्यतेसर्वपापैरिति ३७ भस्मगोप्ता भस्मनागोपायतिजगदिति भस्मगोप्ता वक्ष्यतिचाग्रेव रक्षार्थंमंगलार्थंचगोपनार्थंचभामिनि लांछनार्थंच भक्तानां भस्मदत्तंमयापुरेति ३८ भस्मभूतः एतच्चमंकणकनाम्नि मुनौकरात्च्युतंशाकरसंदृष्ट्वानृत्यतिसतितन्नृत्योपशमार्थं महादेवेनस्वमंगुलिंभित्वा तज्जंभस्मदर्शितंतेनस्वस्यवपुः केवलंभस्ममयमितिज्ञाप्यते ३९ तरुः कल्पवृक्षादिः ४० गणः भृंगिरिटिनंदिकेश्वरादिस्तद्रूपः ४१ १५ ६९

लोकाश्चतुर्दश भुवनानि तेषां पालो लोकपालः ४२ अलोकः लोकातीतः ४३ महात्मा पूर्णः ४४ सर्वपूजितः ४५ शुक्लः शुद्धः ४६ त्रिशुक्लः त्रीणि कायवाङ्मनांसि शुक्लानि यस्य ४७ अतएव संपन्नः कैवल्यं प्राप्तः ४८ शुचि अगन्तुकमपि मलं यस्य शाति असंगइत्यर्थः ४९ भूतेः पूर्वाचार्यैर्निषेवितः भूतनिषेवितः ५० १६ आश्रमेषु चतुर्षु धर्मरूपेण तिष्ठतीत्याश्रमस्थः ५१ क्रियावस्थः धर्मस्यैव पूर्वरूपं क्रियायागादिस्तदवस्थापन्नः ५२ विश्वकर्ममतिः देवशिल्पिनो यत्कौशलं तद्रूप इत्यर्थः ५३ वरः श्रियप्त इति वरो लक्ष्म्यादिरूपः ५४ विशाल शाखः दीर्घबाहुः शाग्वापक्षांतरे बाहौ इति मेदिनी ५५ ताम्रोष्ठः ५६ अंबुजालः जलसमूहः सागरइत्यर्थः जालंगवाक्ष आनाये क्षारकंदंभवृंदयोरिति मेदिनी ५७ सुनिश्चलः पर्वतादिरूपः ५८ १७ कपिलः ५९ कपिशः ६० शुक्ल इति त्रयोपि वर्णवाचिनस्तद्वान् ६१ आयुर्जीवनकालः ६२ परः प्राचीनः ६३ अपरोऽर्वाचीनः ६४ गंधर्वश्चित्ररथादिः ६५ अदितिर्देवमाता इयं वा अदितिरितिश्रुतेः पृथ्वी वा ६६ तार्क्ष्यः वैनतेयः ६७ सुविज्ञेयः सुखेन ज्ञातुं योग्यः ६८ सुशारदः शोभनवाक् ६९ १८ छ छ छ छ छ

लोकपालस्तथालोको महात्मा सर्वपूजितः शुक्लस्त्रिशुक्लः संपन्नः शुचिर्भूतनिषेवितः १६ आश्रमस्थः क्रियावस्थो विश्वकर्ममतिर्वरः विशालशाखस्ताम्रोष्ठो ह्यंबुजालः सुनिश्चलः १७ कपिलः कपिशः शुक्ल आयुश्चैव परापरः गंधर्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुशारदः १८ परश्वधायुधो देव अनुकारी सुबांधवः तुंबवीणो महाक्रोध ऊर्ध्वरेता जलेशयः १९ उग्रो वंशकरो वंशो वंशनादो ह्यनिंदितः सर्वांगरूपो मायावी सुहृदो ह्यनिलो नलः १०० बंधनो बंधकर्त्ता च सुबंधनविमोचनः सयज्ञारिः सकामारिर्महादंष्ट्रो महायुधः १०१

परश्वधायुधः ७० देवः विजिगीषुः ७१ अनुकारी भीष्मे हंतुं आयुधं प्रक्षेप्तुमनुकरोति वासोऽनुकारी ७२ शोभनश्चासौ बांधवश्च सुबांधवोऽर्जुनसखा ७३ तुंबवीणः तुंबीफलद्वययुक्ता वीणा यस्य स एव रुद्रवीणेति लोके प्रसिद्धा ७४ महाक्रोधः प्रलयकाले ७५ ऊर्ध्वरेता ऊर्ध्वं देवमनुष्येभ्य उपर्यपि रेतः प्रजा ब्रह्मविष्ण्वादिरूपा यस्य सः ७६ जलेशयः विष्णुरूपी शेषपर्यंके जलशायी ७७ १९ उग्रः उत्कर्षेण ग्रसतीत्युग्रः ७८ वंशकरः ७९ वंशश्च प्रसिद्धः ८० वंशनादः ८१ अनिंदितः ८२ सर्वांगरूपः सर्वेष्वंगेषु रूपं सौंदर्यमस्यास्तीति रूपं स्वभावे सौंदर्ये इति मेदिनी ८३ मायावी मायाविशिष्टः मायिनं तु महेश्वरमिति प्रसिद्धः ८४ सुहृदः अदत्तत्वपार्थ प्रत्युपकारमनपेक्ष्य उपकर्त्ता ८५ अनिलः वायुः ८६ अनलोऽग्निः ८७ १०० बध्नात्यनेनेति बंधनः संसारपाशः ८८ बंधकर्त्ता संसारनिर्माता ८९ सुबंधनविमोचनः सुनरां बंधनस्य मायापाशस्य मोचनकर्त्ता ९० सयज्ञारिः यो दैत्यास्तैः सदा पिबसतीति सयज्ञारिः ९१ कामारयो जितकामाः योगिनः तैः सहास्तीति सकामारिः ९२ महादंष्ट्रः ९३ महायुधः ९४ १०१ छ छ छ छ छ

बहुधानिंदितः दारुकावनने अतिकमनीयरूपं धृत्वानग्नः सन् अयंपापिष्ठोस्मत्स्त्रीनांचित्तंमोहयितुमागतोस्तीति सर्वैर्ऋषिभिर्निंदितः १५ शृणाति हिनास्ति दारुकावनस्थान्मुनीन् मोहयतीतिशर्वः १६ शंकरस्तेषामपिकुशलं करेयस्यस्वाधीनंयस्येत्यर्थः १७ शंकानांसमुहः शंकंतस्यरइवरः शंकरः सर्वसंशयदाहकः रोर्कसोमानिलेवन्हावितिविश्वलोचनः येर्मुनिभिर्दारुकावनस्थैर्निंदितवांश्चमोहितवान् तेषामेव कारुण्यात्कल्याणं सर्वसंशयोछेदंच तत्वज्ञानदानेन कृतवानिति नामचतुष्कतात्पर्यं १८ अधनः दिगंबरत्वात् ९९ एवमप्यमराणांईशः अमरेशः ६०० महादेवो इंद्रादीनामपिपूज्यः यथोक्तं सांबपुराणे पूज्यतेयः सुरैः सर्वैर्महांश्चैव प्रमाणतः महेतिधातुः पूजायांमहादेवस्ततःस्मृतइति १ विश्वदेवः विश्वं विष्णुर्वषट्कारइतिवक्ष्यमाणत्वाद्विश्वं विष्णुः तस्यापिदेव आराध्यः २ सुरारिहा ३ १०२ अहिर्बुध्न्यः अहिः सर्पः तस्य विशेषणंबुध्न्यः बुध्नंमूलेसाधुरिति ब्रम्हांडमूलं पातालंतत्रवर्त्ततइति यावत् शेषस्वरूपइत्यर्थः यथोक्तं विष्णुपुराणे संकर्षणात्मको रुद्रो निष्क्रम्यात्तिजगत्रयमिति पदद्वयात्मकमेकंनाम ४ अनिलाभः वायुर्यथाअप्रत्यक्षोपिस्पर्शेनज्ञायते एवमयं विषयसंस्पर्शजन्यानुभवरूपः यथोक्तं परागर्थप्रमेयेषु याफलत्वेनसंमता संवित्सैवेकमेयोर्थो

बहुधानिंदितःशर्वः शंकरःशंकरोधनः अमरेशोमहादेवो विश्वदेवःसुरारिहा १०२ अहिर्बुध्न्योनिलाभश्च
चेकितानोहविस्तथा अजैकपाच्चकापालीत्रिशंकुरजितःशिवः १०३ धन्वंतरिर्धूमकेतुः स्कंदोवैश्रवणस्तथा धाता शक्रश्चविष्णुश्च मित्रस्त्वष्टाध्रुवोधरः १०४

वेदांतोक्तिप्रमाणतः ५ चेकितानः कितज्ञाने अदादिः अस्मात् यङ्लुकि शानच् अतिशयेनचिकेत्तिजानातीतिचेकितानः युगपदशेषविशेषविज्ञानवानित्यर्थः ६ हविर्हविर्वह्विस्तस्येवभोक्तुर्भोग्यजातं हरिरितिपाठेपितस्यैवहर्त्तव्यं वस्त्विति सएवार्थः हृञ्ञ् औणादिकः सर्वधातुभ्य इति कर्मणि बाहुलकादिन् ७ अजैकपात् एकादशसुरुद्रेषुकश्चित् ८ कापालीकपालाभ्यं द्युपृथिवीरूपाभ्यांनिर्वृतं कापालं ब्रम्हांडं तदस्यास्तीति कापालीब्रम्हांडाधीशः ९ शंकुः त्रयोगुणाःशंकवः कीलइवयस्य विष्टंभकाः सत्रिशंकुः संसारीनतदस्तिपृथिव्यावादिविदेवेषुवापुनः सत्वंप्रकृतिजैर्मुक्तं यदेभिःस्यात्त्रिभिर्गुणैरितिगीतावचनात् सर्वजीवरूपइत्यर्थः १०अजितः तैरेव शंकुभिरवशीकृतः ११ अतएवशिवः शुद्धः निरुपाधिरित्यर्थः यथोक्तं वायुसंहितायांविशुद्धिःशिवतास्वतइति १२ १०३ धन्वंतरिः महावैद्यः भिषक्तमंत्वाभिषजांशृणोमीतिमंत्रप्रसिद्धः १३ धूमकेतुः उत्पातविशेषः १४ स्कंदः १५ वैश्रवणः १६ धाता १७ शक्रः १८ विष्णुः १९ मित्रः २० त्वष्टा २१ ध्रुवः २२ धरः २३ १०४ ६ ६ ६ ६

प्रभावःप्रभा वारव्योवस्कः २४ सर्वगोवायुः सूत्रात्मा वायुर्नावैगौतमसूत्रेणायंचलोकः परश्चलोकःसर्वाणिचभूतानिसंदब्धानीतिश्रुतेः पदद्वयात्मकंएकनाम
२५ अर्यमा २६ सविता २७ रविः २८ उषंगुर्नृपविशेषःमांधातृसाहचर्यात्न्यदाउपदाहेः स्यात्कद्गुपधज्ञाप्रीकिरःकइतिकप्रत्ययेउषंदाहकंगावःकिरणायस्ये
त्युषंगुःविभक्त्यलोपआर्षः वेदाःप्रमाणमितिवल्लिंगवचनभेदेपिपदयोःसामानाधिकरण्यं धन्वंतर्यादयःशब्दादेवनाविशेषवाचिनःशिवेसार्वान्योपपादानार्था
एवेतिसर्वत्रज्ञेयं पुनरुक्तानामपितत्तद्योगिकार्थभेदादपौनरुक्त्यंज्ञेयंसन्त्यपिपौनरुक्त्येस्तुत्यर्थत्वान्नदोषः २९ विधाताविविधप्रकारेणपोषः ३० मांधाताअ
स्मच्छब्दार्थंजीवंधयतिपाययतीतिमांधाताजीवस्यतृप्तिकरः ३१ भूतानांभावनंरज्वामुरगस्येवस्वस्मिन्नितिभूतभावनः ३२ १०५ विभुःविविधरूपेणभवति
अस्तीतिविभुःभवतेःसत्तार्थकत्वात् पूर्ववद्प्रत्ययः ३३ वर्णान्श्वेतपीतादीन्विविधरूपेणभावयतीतिवर्णविभावी तस्मिन्शुक्लमुतनीलमाहुरित्यादिश्रुते
रेनदतस्रुरषनांनाडीमार्गगतंप्रत्यक्षम श्रुत्यंतरेचनीहारधूमार्कानिलानलानारवद्योतविद्युत्स्फटिकाशशीनां गतानिरूपाणिपुरःसराणिब्रह्मण्यभिव्यक्तिकरा
णियोगइति ३४ सर्वकामगुणावहः तत्रैवअंतर्मुखत्वकाले सर्वान्कामान्काम्यमानान्विषयान्गुणांश्चशांतघोरमूढान्योगिविघ्नकरान्सुखास्वादविक्षे
पःलयापरनामधेयान्ध्यायिभ्यआवहतिसाकल्येनप्रापयतीतितथा ३५ पद्मनाभःपद्मंविश्वस्यायतनंनाभौतत्रस्थेमणिपूरचक्रेऽस्यास्तीतिपद्मनाभ ना

प्रभावःसर्वगोवायुरर्यमासविताररविः उषंगुश्चविधाताचमांधाताभूतभावनः १०५ विभुर्वर्णविभावीचसर्वका
मगुणावहः पद्मनाभोमहागर्भश्चंद्रवक्त्रोनिलोनलः १०६ बलवांश्चोपशांतश्चपुराणःपुण्यचंचुरीः कुरुकर्ताकुरु
वासीकुरुभूतोगुणौषधः १०७ सर्वाशयोदर्भचारीसर्वेषांप्राणिनांपतिः देवदेवःसुखासक्तःसदसत्सर्वरत्नवित् १०८

भ्याद्युपरिप्रतिष्ठतिविश्वस्यायतनंमहदितिश्रुतेः ३६ महागर्भःमहांतोब्रह्मादयोगर्भाउदरगतागंतायस्यसतथा ३७ चंद्रवक्त्रःरम्यरूपः ३८ अनिलः ३९ अनि
लश्चपूर्वंभूतरूपेणोक्तौतत्रतदभिमानिदेवतारूपाविति विशेषः ४० १०६ बलवान् ४१ उपशांतः ४२ पुराणःस्पष्टार्थनामत्रयं ४३ पुण्यचंचुःपुण्येनजातः
तेनवित्तश्चंचुप्चणपावितिचंचुप् ४४ ईलक्ष्मीरित्येकाक्षरंनाम ईविषादेऽनुकंपायांलक्ष्म्यापुनरनव्ययमितिमेदिनी ४५ कुरुकर्ताअत्रनामैकदेशग्रहणे
नंनामग्रहणंभीमासत्यभामेतिवत्कुरुपदंनंकुरुक्षेत्रमुच्यते तेनअविमुक्तंवैकुरुक्षेत्रमितिश्रुते. सर्वलोकप्रसिद्धश्चतद्विविधंतयोःकर्मोपास्तिस्थानयोर्निर्माता
४६ कुरुवासीकुरुक्षेत्रहृदयवासी ४७ कुरुभूतःकुरुक्षेत्रहृयात्मा ४८ गुणौषधःगैश्वर्यज्ञानवैराग्यधर्मादीनामौषधवदुद्दीपक ४९ १०७ सर्वाशय.सर्वेआशे
रतेस्मिन्नितिअत्रह्येतेसर्वएकंभवतीतिश्रुतेः सर्वस्यसुषुप्तिस्थानंप्राज्ञइत्यर्थः ५० दर्भेषुअंतर्वेदिस्थबर्हिरूपेषुआसादितानिहवींषिचरतिभक्षतीतिदर्भचारी
५१ सर्वेषांप्राणिनांपतिः ५२ देवदेवः ५३ सुखासक्तः ५४ सत्कार्यअसत्कारणम ५५ सर्वरत्नवित्सर्वाणिरत्नानितत्तज्जातिषूत्कृष्टवस्तूनिविंदतेलभतेऽनतया
५६ १०८

कैलासगिरिवासी ५६ हिमवद्गिरिसंश्रयः ५७ कूलहारी महाप्रवाहरूपेणार्तानामस्य दुःखहारी ५८ कूलकर्त्ता पुष्करादीनामहानडागानांकर्त्ता कूलप्रतीरेसे-न्यस्यपृष्ठे कूपतडागयोरितिविश्वलोचनः ५९ बहुविद्यः ६० बहुप्रदः ६१ १०९ वणिजोवणिक्‌अकारांतत्वं आर्षं ६२ वर्द्धकीतक्षा ६३ वृक्षस्तक्षणीयः संसारवृक्षः ६४ बकुलः वृक्षविशेषः ६५ चंदनः ६६ च्छदः सप्तपर्णः ६७ सारग्रीवः दृढकंधरः ६८ महाजत्रुः जत्रुरत्र कंठस्कंधयोरधोऽस्थि ६९ अलो-लः ७० महौषधः व्रीहियवरूपः ७१ ११० सिद्धार्थकारी ७२ सिद्धार्थः पूर्वपक्षंनिरस्ययोनिष्पन्नोर्थः ससिद्धार्थउच्यते सएवसिद्धांत इतिप्रसिद्धः तस्यैवविशे-षणं छंदोव्याकरणोत्तर इतिवेदव्याख्यानोपबृंहित इत्यर्थः ७३ सिंहनादः ७४ सिंहदंष्ट्रः ७५ सिंहगः सिंहारूढः ७६ सिंहवाहनः सिंहयुक्तंवाहनंरथोस्य ७७ १११ प्रभावात्मा प्रकृष्टोभावः सत्तातद्रूप इत्यर्थः प्राणावैसत्यंतेषामेषसत्यमितिश्रुतेः सत्यस्यसत्य इत्यर्थः ७८ जगतःकालः ग्रासकर्त्ता जगत्कालः सएवस्थाने भोजनरूपोयस्य ७९ लोकहितः ८० तरुस्तारकः ८१ सारंगः पक्षिविशेषः ८२ नवश्चासौचक्रांगोहंसश्चनवचक्रांगः ८३ केतुरिवकेतुःशिखा तयामालते-शोभतेइतिकेतुमाली मयूरकुक्कुटादिपक्षिरूपः ८४ सभाधर्मपरीक्षास्थानंअवतीतिसभावनः ८५ ११२ भूतालयः ८६ भूतपतिः ८७ अहोरात्रम् ८८

कैलासगिरिवासीचहिमवद्गिरिसंश्रयः कूलहारीकूलकर्त्ताबहुविद्योबहुप्रदः १०९ वणिजोवर्धकीवृक्षोबकुलश्चंदनच्छदः सार-ग्रीवोमहाजत्रुरलोलश्चमहौषधः ११० सिद्धार्थकारीसिद्धार्थः छंदोव्याकरणोत्तरः सिंहनादःसिंहदंष्ट्रःसिंहगःसिंहवाहनः १११ प्र-भावात्माजगत्कालस्थानोलोकहितस्तरुः सारंगोनवचक्रांगः केतुमालीसभावनः ११२ भूतालयोभूतपतिरहोरात्रमनिंदितः ११३ वाहितासर्वभूतानांनिलयश्चविभुर्भवः अमोघः संयतोत्यश्वोभोजनः प्राणधारणः ११४ धृतिमान्मतिमान्दक्षः सत्कृतश्चयुगाधि-पः गोपालिर्गोपतिर्ग्रामोगोचर्मवसनोहरिः ११५ हिरण्यबाहुश्चतथागुहापालः प्रवेशिनाम् प्रकृष्टारिर्महाहर्षोजितकामोजितेंद्रियः ११६

अनिंदितः ८९ ११३ वाहितावोढासर्वभूतानामित्युभयत्रसंबध्यते सएषभूतानांवाहितेत्येकंनाम ९० सर्वभूतानांनिलयः सदनमित्यपरम् ९१ विभुःविगतं भूर्भुवनंयस्मादित्यजन्माभावार्थेपूर्ववत्‌भवतेर्डुः ९२ भवः अस्तीतिभवः अस्तेःपचाद्यच्विभूभावः ९३ अमोघः नैष्फल्यरहितः ९४ संयतः धारणा-ध्यानसमाधिमान् ९५ अश्वउच्चैःश्रवादिरूपः ९६ भोजयतीतिभोजनोऽन्नदाता ९७ अतएवप्राणधारणः ९८ ११४ धृतिमान् ९९ मतिमान् १०० दक्षःउत्साही १ सत्कृतःआदृतः २ युगाधिपः युगशब्देनधर्माधर्मौलक्ष्येतेतयोःफलदः ३ गोपालिः इंद्रियाणांपालयिता ४ गोपतिः रश्मीनांपतिःसूर्यादिः ५ ग्रामःसमूहः ६ गोचर्मवसनः ७ हरिः हरतिभक्तानांदुःखमितिहरिः ८ ११५ हिरण्यबाहुः रमणीयबाहुः ९ प्रवेशिनांअंतःप्रवेशशीलानांयोगिनांचि-रकालकाष्ठवत्स्थायिनांगुहाशरीरंतस्यरक्षकः १० प्रकृष्टाःप्रकर्षेणकृताःअरयःकामादयोयेनसप्रकृष्टारिः साधकोत्तमः ११ महाहर्षः १२ जितकामः १३ जितेंद्रियः १४ ११६

गांधारःस्वरविशेषः १५ सुवासः शोभनंवसतिस्थानकैलासाख्यमस्य १६ तपःसक्तः १७ रतिःप्रीतिरूपः १८ नरःनयतिप्रापयतिब्रह्मांडमितिनरोविराट् १९
महागीतः २० महानृत्यः २१ अप्सरोगणसेवितः २२ ११७ महान्केतुर्वृषरूपीयस्यसमहाकेतुः २३ महाधातुःमेरुपर्वतः २४ तस्यैवनेकसानुचरः अ-
नंतशिखरसंचारी २५ चलःदुर्ग्रहः २६ आवेदनीयः वाचामगोचरोपिगुरुभिरुपदेष्टुंशक्यः २७ आदेशःसाक्षादुपदेशरूपः २८ सर्वगंधसुखावहः
युगपत्सर्वेषांगांधानांविषयस्पर्शानांसुखंआवहतीतितथा २९ ११८ तोरणःपुरद्वारादिरूपः ३० तारणःपरिवादीनतारयतिजिगीषून ३० परिधाप
रिधिरस्यास्तीतिपरिधीदुर्गरूपः ३१ पतिश्चासौखेचरश्चेतिखेचरेश्वरोगरुडः ३२ संयोगोवर्द्धनःवृद्धिहेतुभूतःसंयोगः स्त्रीपुंसयोःसंबंधः प्रजनश्चा
स्मिकंदर्पइत्युक्तः ३३ वृद्धोगुणाधिकःगुणैर्ज्ञानैश्वर्यादिभिरधिकत्वेनवृद्धइत्यर्थः नतुवलीपलितादिना यथोक्तं विप्राणांज्ञानतोज्येष्ठ्यंक्षत्रियाणांतुशौर्यतः
वैश्यानांधनबाहुल्यात्शूद्राणांवयसाधिकइति ३४ ११९ नित्यआत्मसहायश्चेत्येकनामनित्यश्चासावात्मसहायश्चेतिसमासेविभक्त्यलोपआर्षः
३५ देवासुरपतिः ३६ पतिर्यथावत्सर्वस्य ३७ युक्तःसन्नद्धःसंग्रामादौ ३८ युक्तबाहुःशत्रुमर्दनयोग्योबाहुर्यस्य ३९ देवोदिविसुपर्वणः दिविस्वर्गेयः

गांधारश्चसुवासश्चतपःसक्तोरतिर्नरः महागीतोमहानृत्योह्यप्सरोगणसेवितः ११७ महाकेतुर्महाधातुर्नैकसानुचरश्चलः आवेदनीय
आदेशःसर्वगंधसुखावहः ११८ तोरणस्तारणोवातःपरिधीपतिखेचरः संयोगोवर्द्धनोवृद्धोअधिवृद्धोगुणाधिकः ११९ नित्यआ
त्मसहायश्चदेवासुरपतिःपतिः युक्तश्चयुक्तबाहुश्चदेवोदिविसुपर्वणः १२० आषाढश्चसुषाढश्चध्रुवोथहरिणोहरः वपुरावर्त्तमानेभ्यो
वसुश्रेष्ठोमहापथः २१ शिरोहारीविमर्षश्चसर्वलक्षणलक्षितः अक्षश्चरथयोगीचसर्वयोगीमहाबलः १२२

सुपर्वाइंद्रसंज्ञोमहान्तस्यदेवआराधनीयः ४० १२० आषाढःसाहयतेःकर्त्तरिनिष्ठा आसमतात्सर्वंसाहयतिसहनंकारयतीत्याषाढःसर्वसहनसामर्थ्य
प्रदइत्यर्थः ४१ सुषाढःईषत्करंपूर्वोक्तंयस्यसःसुषाढः ४२ ध्रुवःअचंचलः ४३ हरिणःश्वेतःशुद्धइत्यर्थः ४४ हरःहंतीतिहाश्शूलःतंराति आदत्तेसहरः हंतेःक-
र्त्तरिक्विप् तत्पूर्वात्रातेः आतोनुपसर्गेकइतिकःहरःशूलीत्यर्थः ४५ वपुःवपुःप्रदाताआवर्त्तमानेभ्यःस्वर्गच्युतेभ्यः वसुरितिपाठेसेवकेभ्योधनप्रदइत्यर्थः
४६ वसुश्रेष्ठःधनादप्यधिकःप्रायोवित्तादितिश्रुतेः ४७ महापथःशिष्टाचाररूपः ४८ १२१ शिरोहारीब्रह्मणःशिरश्छेत्ताविमर्षःविशेषेणविचारवान्वि
वेकेनैवब्रह्मशिरश्छिन्नंनतुक्रोधमात्रेणेतिभावः पदद्वयात्मकमेकंनाम ४९ सर्वलक्षणलक्षितःसामुद्रिकोक्तशुभलक्षणयुक्तःसर्वाणिलक्ष्यंतेज्ञायंतेयैः
एतैरितिप्रमाणानिलक्षणान्युच्यंते तैर्लक्ष्यतेनतुसाक्षात्क्रियतइत्यर्थः ५० अक्षःरथसंधानदारुअत्रापवरथयोगीरथेनसंबंधः ५१ सर्वयोगीसर्वसंस्प
र्शीविभुत्वात् ५२ महाबलःमहांश्चासौबलश्चमहाबलःबलशब्दान्मत्वर्थीयोऽश्आद्यच्प्रबलःवद्धागइत्यर्थः ५३ १२२ ७ ७ ७

समाम्नायोवेदः ५४ असमाम्नायस्तदन्य स्मृतीतिहासपुराणागमादिः ५५ तीर्थदेवः ५६ महारथः पृथिवीस्यंदनः ५७ निर्जीव अचेतनप्रपंचात्मा ५८ जी-
वनः अचेतनस्यापि देहादेश्चैतन्यप्रदाता ५९ मंत्रः प्रणवादिर्मृतसंजीवनोवा ६० शुभाक्षः शांतदृष्टि ६१ बहुकर्कश संहर्तृत्वात् ६२ १२३ रत्नप्रभूत-
प्रभूतानिबहूनिरत्नानिउत्तमंवस्तून्यस्मिन् रत्नप्रभूतः आहिताग्न्यादिवत्पूर्वनिपात ६३ रक्तांगः ६४ महार्णवनिपानवित् निपानंकूपाद्बहिःपशूनांपाना-
र्थंकृतंकुंडम् महार्णवाएवसर्वेयस्यनिपानभूतास्तान् शोषणीयान् विंदतिलभते इति ६५ मूलंसंसारतरोरधिष्ठानम् ६६ विशालः अत्यंतशोभमानः ६७
अमृतः सुधारूपः ६८ व्यक्ताव्यक्तः कार्यकारणात्मा ६९ तपोनिधिर्महामुनिः ७० १२४ आरोहणः परपदआरुरुक्षुः ७१ अधिरोहः त-
देवंअधिरूढः ७२ शीलधारीसदाचारः ७३ महायशाः पुण्यकीर्त्तिः ७४ सेनाकल्पः सेनांअलंकारः पराक्रमइत्यर्थः ७५ महाकल्पः दिव्यभूषणः ७६ यो-
गः चित्तवृत्तिनिरोधः ७७ युगानिकल्पादीनिकरेयस्य कल्पादिप्रदः ७८ हरतिशरीरंदेशाद्देशांतरंप्रतिनयतीतिहरिः पादाभिमानिनीदेवतात्रिविक्रमइत्य-

समाम्नायोऽसमाम्नायस्तीर्थदेवोमहारथः निर्जीवोजीवनोमंत्रःशुभाक्षोबहुकर्कशः १२३ रत्नप्रभूतोरक्तां-
गोमहार्णवनिपानवित् मूलंविशालोह्यमृतोव्यक्ताव्यक्तस्तपोनिधिः १२४ आरोहणोधिरोहश्चशीलधारीमहा-
यशाः सेनाकल्पोमहाकल्पोयोगोयुगकरोहरिः १२५ युगरूपोमहारूपोमहानागहनोवधः न्यायनिर्वपणःपादःपंडि-
तोह्यचलोपमः २६ बहुमालोमहामालःशशीहरसुलोचनः विस्तारोलवणःकूपस्त्रियुगःसफलोदयः १२७

र्थः ७९ १२५ युगरूपः धर्माधर्मतत्संकररूपः ८० महारूपः महांश्चासौअरूपश्चेतितथा ८१ महानागहननः गजासुरघ्नः ८२ वधः मृत्युः ८३ न्यायनि-
र्वपणः न्याययुक्तंनिर्वपणंदानंयस्य यथाधर्ममनोरथप्रदः ८४ पादः पद्यतइतिगम्यः ८५ पंडितः परोक्षज्ञानी ८६ अचलोपमोनिश्चलः तत्वज्ञानीत्यर्थः
८७ १२६ बहुनिरवधिमालतेशोभतेइतिअनंतलीलः ८८ महामालः महतीअम्लानत्वादिगुणयुक्तावामालायस्य ८९ शशीचं-
द्रः सएवहरसुलोचनः महादेवस्यशांतदृष्टिरूपः ९० विस्तारोलवणः कूपः विशिष्टस्तारआच्छादनंयस्यसोतिविस्तीर्णः लवणः क्षाररसः तादृशः कूपइ-
वकूपः महाकूपतुल्यः क्षारसमुद्ररूपीत्यर्थः त्रिपदमेकंनाम ९१ त्रियुगः कलिर्बहिर्भूतःअनएव ९२ सफलोदयः ९३ १२७ ७ ७ ७

त्रिनेत्रः त्रीणिशास्त्राचार्यध्यानमनिलोचनानीवलोचनानिदर्शनसाधनानियस्यसत्रिलोचनः ९४ विषण्णांगःविशेषेणसन्नाः निरन्वयमुच्छिन्नाः अंगा-ख्याभूम्यादयोष्टौमूर्तयोयस्य अमूर्तेहिसूक्ष्मरूपेणमूर्तानामन्वयोस्तिततोप्ययमंतरंगःशब्दोभूमेत्यर्थः ९५ मणिविद्धः मणिपिधानार्थंकर्णदेशोविद्धः कृतच्छिद्रःकुंडलीत्यर्थः ९६ जटाधरः ९७ बिंदुरनुस्वारः ९८ विसर्गःविसर्जनीयः ९९ सुमुखःव्यक्तवर्णः ८०० शरबाणः १ सर्वायुधः २ सहः सर्वंसहतेतस्मर्षयतिसहः ३ १२८ निवेदनःनिर्हीनंसर्वस्त्युपरमेणवेदनंज्ञानंयस्य ४ सुखाजातःसुखरूपेणअजातःवृत्तिविलयेसतिआविर्भूतः ५ सुगंधारः गंधारोगंधारदेशोद्भवः ६ महाधनुःपिनाकधन्वा ७ गंधपालीगंधाःलेशाःसूक्ष्माःप्रपंचवासनाःताःपालयतीतिगंधपालीसर्व-प्राणिधीवासनामयइत्यर्थः सएवभगवान्ईश्वरःएकंनाम ८ उत्थानःसर्वकर्मणां उत्तिष्ठंत्यस्मादित्युत्थानः ९ १२९ मंथानोविश्वविलोडनसमर्थोब

त्रिनेत्रश्चविषण्णांगोमणिविद्धोजटाधरः बिंदुर्विसर्गःसुमुखःशरःसर्वायुधःसहः १२८ निवेदनःसुखाजातःसुगंधारो महाधनुः गंधपालीचभगवानुत्थानःसर्वकर्मणाम् १२९ मंथानोबहुलोवायुःसकलःसर्वलोचनः तलस्तालःकरस्थालीऊर्ध्वसंहननोमहान् १३० छत्रंसुछत्रोविख्यातोलोकःसर्वाश्रयःक्रमः मुंडोविरूपोविकृतोदंडीकुंडीविकुर्वणः १३१ हर्यक्षःककुभोवज्रीशतजिह्वःसहस्रपात् सहस्रमूर्द्धादेवेंद्रःसर्वदेवमयोगुरुः १३२

हुलोनिर्मथधर्वायुःमहान्प्रलयानिलइत्येकंनामत्रिपदम् १० सकलःपूर्णः ११ सर्वलोचनःसर्वद्रष्टा १२ तलस्तालःकरतलोत्थएवतालवाद्यविशेषः १३ करस्थस्थालीभोजनभाजनंतदस्यास्तीतिकरस्थाली १४ ऊर्ध्वसंहननोऽश्रेष्ठोदृढशरीरश्चेत्यर्थः १५ महान्अत्युच्चः १६ १३० छत्र १७ सुछत्रः १८ विख्यातलोकःप्राणिभृन्मात्रप्रसिद्धःअथवा१९सर्वाश्रयःक्रमःसर्वस्यआश्रयःआधारभूतःक्रमःपादविक्षेपःत्रिविक्रमेणरूपेणपादाक्रांतजगत्त्रयइत्यर्थः २० मुंडःमुंडितशिराः २१ अतएवविरूपःविकटरूपः २२ विकृतःसर्वाविक्रियाप्राप्तः २३ दंडी २४ कुंडी २५ विकुर्वणःकरोतीतिकुर्वाविगतःकुर्वायस्मात्विकुर्वणःकर्माप्राप्यइत्यर्थः २६ हर्यक्षःसिंहः २७ ककुभःसर्वदिग्रूपः २८ वज्री २९ शतजिह्वः ३० सहस्रपात्३१सहस्रमूर्द्धा ३२ देवेंद्रः ३३ सर्वदेवमयः ३४ गुरुः ३५ १३२ ७ ७ ७ ७ ७ ७ ७ ७ ७

सहस्रबाहुः ३६ सर्वांगः सर्वअंगनिप्राप्नोनीतिसर्वांगः ३७ शरण्यःशरणायसाधुः ३८ सर्वलोककृत् ३९ पवित्रपावनस्तीर्थादिरूपः ४० त्रिककुन्मंत्रः त्रीणिककुदीवककुदिउच्चस्थानानिबीजशक्तिकीलकानियस्यताहशोमंत्रः ४१ कनिष्ठःअदितिपुत्राणामध्येयःकनिष्ठोवामनरूपीविष्णुस्तद्रूपः ४२ कृष्णपिंगलः हरिहरमूर्त्तिःविष्णुर्नारायणःकृष्णइतिकृष्णशब्दस्यहरौनिधिभेदेकपौरुद्रेपिंगलःकपिलेन्यवदितिनानार्थकोशातपिंगलशब्दस्यहरेचप्रसिद्धिदर्शनात् पुरुषंकृष्णपिंगलंदारिद्र्यनीललोहितेत्यादिश्रुतेरप्ययमेवार्थः नीलग्रीवोविलोहितस्तरुद्रस्यपूर्वंलोहितःपश्चान्नीलइतिकालभेदेनयाकंठेनीलःसर्वांगेलोहितइतिवावामांगेनीलोदक्षिणांगेलोहितइतिदेशभेदेनवाआवरकप्रकृत्यंशेननीलस्तत्प्रवर्तकपुरुषांशेनलोहितइतिगुणभेदेनवागृत्यतेतदागुणवाचिनोःशब्दयोर्द्रव्यवाचित्वंनहृत्तावतएकदेशवाचित्वमितिविप्रकृष्टार्थकल्पना अस्माकंतुविलोहितकृष्णपदयोःमुख्यवृत्त्यैवशिवकेशववाचित्वंदृष्टंतेनतत्पर्यायपदयोर्नीलपिंगलपदयोरपिहरिहरवाचित्वंवक्तुंयुज्यतेतथाचकृष्णपिंगलपदेननीलंलोहितपदेनवाहरिहरावेवग्राह्यौ निर्णीतार्थकपदांतरसमभिव्याहारसामर्थ्यादनिर्णीतार्थकस्यापिपदस्यार्थोव्यवस्थापयितुंशक्यएवेतियुक्तमुत्पश्यामःयद्यपिपूर्ववाक्येप्यर्थेषुकुशकाशावलंबनंकिंचित्क्षमाणांउ-

सहस्रबाहुःसर्वांगःशरण्यःसर्वलोककृत् पवित्रंत्रिककुन्मंत्रःकनिष्ठःकृष्णपिंगलः १३३
ब्रह्मदंडविनिर्माताशतघ्नीपाशशक्तिमान् पद्मगर्भोमहागर्भोब्रह्मगर्भोजलोद्भवः १३४ ग
भस्तिर्ब्रह्मकृद्ब्रह्मीब्रह्मविद्ब्राह्मणोगतिः अनंतरूपोनेकात्मातिग्मतेजाःस्वयंभुवः १३५

न्नेतुंशक्यंतथापिऋजुमार्गेणसिद्ध्यत्यर्थेवक्रेणसाधनायोगात्शिवविष्णुनाम्नामन्योन्यस्मिन्प्रयोगदर्शनाच्चतयोरेकस्यैवव्यूहद्वयात्मत्वादत्रइदमेवव्याख्यानमिष्टं तथैवमिंद्राग्निपदवद्द्विवचनेनभाव्यं तत्पुरुषादिपदेष्विवकृष्णश्चासौपिंगलश्चेत्यभेदेनैवपदयोरन्वयोपपत्तौभेदसूचकद्विवचनायोगाद्वहरिहरयोरभेदस्यचप्रागेवप्रतिपादितत्वादितिदिक् तदयंसंग्रहः ४३ १३३ ब्रह्मदंडविनिर्माता ४३ शतघ्नीपाशशक्तिमान् ४४ पद्मगर्भोब्रह्मा ४५ महागर्भोमहान्गर्भोंतरवकाशोयस्य ४६ ब्रह्मगर्भोवेदगर्भितः ४७ जलोद्भवःजलेसलिलएकोऽद्रष्टेतिश्रुतेरेकार्णवेउद्भवआविर्भावोयस्यमायाविनइत्यर्थः ४८ १३४ गभस्तिःरश्मिमान् ४९ब्रह्मकृत्वेदकर्त्ता ५० ब्रह्मीवेदाध्यायी ५१ ब्रह्मवित्वेदार्थवित् ५२ ब्राह्मणःब्रह्मिष्ठः ५३ गतिःब्रह्मिष्ठानामेवपरायणं ५४ अनंतरूपमस्यसोऽनंतरूपः ५५ अतएवअनेकात्माअनेकशरीरधारी ५६ तिग्मतेजाःस्वयंभुवः ब्रह्मणोद्रष्ट्यातिग्मतेजाःदुःसहपराक्रमःस्वशिरश्छेदकत्वात् ५७ १३५ ६७

ऊर्ध्वं गात्मा उपाधित्रयाद्दूपरिगत आत्मा स्वरूपं यस्य सभूमिंसर्वतोवृत्वाऽत्यतिष्ठद्दशांगुलमितिश्रुतेः ५८ पशुपतिः जीवानामीश्वरः ५९ वातरंहाः ६० मनोजवः ६१ चंदनीचंदनालिप्तगात्रः ६२ पद्मनालाग्रः पद्मनालमस्याग्रेस्तीतितथा कदाचिद्ब्रह्माश्रयभूतपद्मनालस्यांतंद्रष्टुंइतिबुध्यानालमार्गेणगच्छन्ततदादिंनप्राप्तवान् अतोर्वाचीनस्यापिनालस्यांतोनदृष्टः किमुतनालस्तेत्रस्यभूस्थानीयस्येतिभावः ६३ सुरभ्युत्तरणः कदाचिद्विष्णुस्पर्द्धया ब्रह्माशिवस्यशिरोदेशोमयादृष्टस्त्वत्वया साक्ष्यं देयमितिकामधेनुमुक्तवान् साच ब्रह्मभयादनृतसाक्ष्यंदत्तवतीततोमहादेवेनशप्ताऽमेध्याशिनीतिसंततिर्भविष्यतीतितद्दुक्तं सुरभिंकामधेनुंऊर्ध्वपदादधउत्तारयतीतिसुरभ्युत्तरणः ६४ एवंमूर्द्धाद्वयस्याप्यंतोयेनदृष्टःसोप्ययमेवेत्याहनरइति नरातिआदत्तेप्राप्नोत्यंतमितिनरःआतोनुपसर्गेकः ६५ १३६ कर्णिकारपुष्पमयीमहतीमालातद्वान् कर्णिकारमहास्रग्वी ६६ नीलमौलिः नीलमणिमयंकिरीटंमौलौयस्य ६७ पिनाकधृक् पिनः प्राप्तः नाकोद्यौर्येनसपिनाकः पिगनाविन्यतोनिष्ठातस्यन्लोपः त्रिपुरासुरेणान्हृतः स्वर्गादेवपु द्धलानुप्राप्तस्तन्महादेवस्यशैलेदृरूपधनुःपिनाकस्तस्यधर्त्तापिनाकधृक् यथानमुचिफेनेननिघ्नन इंद्रस्यफेनेयथावज्रप्रवेशएवं शैलेपिपिनाकप्रवेशात्सोपिपिनाकइत्यर्थः ६८ उमाब्रह्मविद्यातस्याः

ऊर्ध्वगात्मापशुपतिर्वातरंहामनोजवः चंदनीपद्मनालाग्रःसुरभ्युत्तरणोनरः १३६ कर्णिकारमहास्रग्वीनील
मौलिःपिनाकधृक् उमापतिरुमाकांतोजान्हवीधृगुमाधवः ३७ वरोवराहोवरदोवरेण्यःसुमहास्वनः महाप्रसा
दोदमनःशत्रुहाश्वेतपिंगलः ३८ पीतात्मापरमात्माचप्रयतात्माप्रधानधृक् सर्वपार्श्वमुखस्त्र्यक्षोधर्मसाधारणोवरः ३९

पतिर्यद्वेश्वविनियोगात्स्वामी ६९ उमयातयेवब्रह्मविद्ययाकांतः कामितः वशीकृतः ७० जान्हवीधृक् ७१ उमायाःशैलपुत्र्याःधवोभर्त्ताउमाधवः ७२ वरोवराहः आक्रोभूमेरुद्धर्त्तायज्ञरूपीवराहः ७३ वरैःश्रेष्ठैरूपैःदयतेनानावतारैर्जगत्पालयतीतिवरदः ७४ अतएववरेण्यःवरणीयः ७५ सुमहास्वनः वेदगर्जितोह्यस्यरवः ७६ महाप्रसादः ७७ दमनइवसुगंधित्वाद्दमनः तत्पूज्यत्वाद्वा ७८ शत्रून्कामादीन्हंतीतिशत्रुहा ७९ श्वेतपिंगलः अर्द्धनारीनटेश्वरोदक्षिणार्द्धेकर्पूरगौरः वामार्द्धेकनकपिंगलः येतुश्वेतपिंगलपदस्यार्थंकृष्णापिंगलपदेनब्रुवतेतेश्वेतमपिकृष्णीकर्त्तुंसमर्थामहांतोभवंतीति ८० १३८ पीतात्मासुवर्णवर्णशरीरः यएषोंतरादित्येहिरण्मयःपुरुषोदृश्यतेहिरण्यश्मश्रुर्हिरण्यकेशआप्रणखात्सर्वएवसुवर्णइतिश्रुत्युक्तः ८१ परमात्माअन्नमयप्राणमयमनोमयविज्ञानमयानंदमयेभ्यः पंचभ्योऽपरमेभ्यआत्मभ्योऽन्यःषष्ठआनंदमात्रस्वरूपः ८२ प्रयतात्माशुद्धचित्तः ८३ प्रधानधृक् त्रिगुणात्मकंजगत्कारणंप्रधानाख्यंसंज्ञनंतदधिष्ठानभूतः ८४ सर्वपार्श्वमुखःसर्वतःसर्वासुदिक्षुऊर्ध्वंचमुखंयस्येतिपंचवक्त्रउक्तः ८५ त्र्यक्षःत्रीणिसोमसूर्याग्निरूपाणिअक्षाणिनेत्राणियस्य ८६ धर्मसाधारणोवरः पुण्यानुरूपप्रसादात्मा ८७ १३९

चराचरात्मा रलयोरैक्यात् चलाचलात्मा द्विविधं पंथाः चलाचल इति श्रुत्युक्तो यो आवृत्त्यनावृत्तिमार्गो तद्रूपश्चराचरात्मा कर्मानुरूपः प्रसादानुरूपो मार्गोप्य यमेवेति नामद्वयार्थः ८८ सूक्ष्मात्मा मार्गद्वयागोचरस्वरूपः ८९ अमृतो मरणवर्जितो निष्कामः गोवृषः पृथिवीपतिर्धर्मः तस्य ईश्वरः निष्कामधर्मस्या-मृतमोक्षरूपफलदातुं समर्थः ९० साध्याः देवानामपि देवाः तेषामपि ऋषिः आचार्यः साध्यर्षिः ९१ वसुः देवताविशेषः उपरिचरस्य राज्ञो व्यावृत्त्यर्थं तस्यैव विशेषणं आदित्य इति अदितेः पुत्रो वसुर्नामेत्यर्थः ९२ विवस्वान् विशेषेण वस्ते आच्छादयत्यनेन भुवनमिति विवः अंशुजालं तद्वान् सूयत इति सविता कृतो बहुलमिति वार्त्तिकात् कर्मणि अच् बाहुलकात् यज्ञे अभिषूयमाणः अमृतः सोमः अग्ना३ं शक्रं देव सोममिति मंत्रलिंगात् अपाम सोमममृता अभूमेति अमृतत्वसा धनत्वं स्य धन श्रुतेश्च सोमस्य विवस्थत्वममृतत्वं च ज्ञेयं तेन त्रिपदमेकं नाम ९३ १४० व्यासः पुराणेतिहासादेः स्रष्टा ९४ सर्गः तस्यैव सृज्यं पुराणादि अस्य विशेषणे संक्षेपो विस्तर इति च सूत्रादिरूपो भाष्यादिरूप इत्यर्थः इदमपि त्रिपदं नाम एवं सति होमे एकैकनामं जपे वा एवं मंत्र ऊह्यः ॐ सर्गाय संक्षेपाय विस्त राय स्वाहेति ॐ नमः सर्गाय संक्षेपाय विस्तरायेति च अग्नये च पृथिव्यै च महते च स्वाहेति वदनेकपदतोप्येकनामत्वं ज्ञेयं ९५ पर्ययो नरः परितः अयते व्याप्नो

चराचरात्मा सूक्ष्मात्मा अमृतो गोवृषेश्वरः साध्यर्षिर्वसुरादित्यो विवस्वान्सविता मृतः १४० व्यासः सर्गः सुसंक्षेपो विस्तरः पर्ययो नरः ऋतुः
संवत्सरो मासः पक्षः संख्यासमापनः ४१ कला काष्ठा लवा मात्रा मुहूर्त्ताहः क्षपाः क्षमाः विश्वक्षेत्रं प्रजाबीजं लिंगमाद्यस्तु निर्गमः ४२
सदसद्व्यक्तमव्यक्तं पिता माता पितामहः स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम ४३ निर्वाणं ह्लादनश्चैव ब्रह्मलोकः परागतिः देवा
सुरविनिर्माता देवासुरपरायणः ४४ देवासुरगुरुर्देवो देवासुरनमस्कृतः देवासुरमाहामात्रो देवासुरगणाश्रयः १४५

तीति पर्ययः स च नरो जीवः समष्टिजीवो वैश्वानर इत्यर्थः ९६ ऋतुः ९७ संवत्सरः ९८ मासः ९९ पक्षः १०० इति नाम्नां नवमं शतं संख्यासमापनः ऋ त्वादिसंख्यासमाप्तिरूपः संक्रान्तिदर्शपूर्णमासादिरूपः १ १४१ कला २ काष्ठा ३ लवाः ४ मात्रा ५ मुहूर्त्ताहः क्षपा इति समस्तं नाम ६ क्षणाः कलाद्याः कालावयवाः स्पष्टार्थाः ७ विश्वक्षेत्रं ब्रह्मांडवृक्षस्यालवालं चिन्मात्रं ८ प्रजानां बीजं माविशिष्टचैतन्यरूपं अव्यक्तं ९ लिंगं महत्तत्वं १० आद्यो निर्गमः अं कुररूपी अहर्भिति प्रथमोध्यासः ११ १४२ सत्कार्यं १२ असत्कारणं १३ व्यक्तं इंद्रियग्राह्यं १४ अव्यक्तं अहं न जानामीत्यनुभवैकवेद्यं विज्ञानं १५ पिता १६ माता १७ पितामहः १८ स्वर्गद्वारं तपः १९ प्रजाद्वारं रागः २० मोक्षद्वारं वैराग्यं २१ त्रिविष्टपं स्वर्गसाधनधर्मः २२ १४३ निर्वाणं मोक्षः २३ ह्लादनः आनंदयिता एष ह्येवानं दयतीति श्रुतेः २४ ब्रह्मलोकः सत्यलोकः २५ परागतिः ततोप्यधिकां गतिर्गंतव्यः २६ देवासुरविनिर्माता २७ देवासुरपरायणः पुंस्त्वमार्षं २८ १४४ देवासु रगुरुः बृहस्पतिशुक्ररूपः २९ देवो विजिगीषुः ३० देवासुरनमस्कृतः ३१ देवासुरमहामात्रः महामात्रः श्रेष्ठः ३२ देवासुरगणाश्रयः आश्रयणीयः ३३ १४५

देवासुरगणाध्यक्षइंद्रविरोचनादिरूपः ३४ देवासुरगणाग्रणीःस्वामिकार्त्तिकेयादिदैत्यरूपः ३५ देवातिदेवः इंद्रियाण्यतिक्रम्यस्वयमेवप्रकाशमानः ३६ देवर्षिर्नारदादिरूपः ३७ देवासुरवरप्रदोब्रह्मरुद्रादिरूपेण ३८ १४६ देवासुरेश्वरस्तेषामंतर्यामी ३९ विश्वःविशत्यस्मिन्निति विश्वः जगद्गर्भेशयः ४० देवासुरमहेश्वरःअंतर्यामिणईश्वरस्याप्यधिष्ठानंअतोमहेश्वरः ४१ सर्वदेवमयः अग्निर्मूर्द्धाचक्षुषीचंद्रसूर्यावित्यादिश्रुतेः ४२ अचिंत्यःनास्तिचिंत्योन्योयस्ययस्मात् ४३ देवतात्मा देवतानामंतरात्मा प्रत्यग्रूपः ४४ आत्मसंभवः स्वतःसिद्धः ४५ १४७ उद्भित्उद्भिद्याविर्भवतीतिवाफलउद्भिनत्तीतिवास्थावररूपोयंइत्यादिरूपोवा ४६ त्रिविक्रमःत्रीणिभुवनानिक्रमतइतिवामनः ४७ वैद्योविद्यावान् ४८ विरजःनिर्मलः ४९ नीरजःरजोगुणहीनः ५० अमरःविनाशहीनः ५१ ईड्यःस्तुत्यः ५२ हस्तीश्वरःकालहस्तीश्वराख्यंवायव्यलिंगरूपः ५३ व्याघ्रोव्याघ्रेश्वरनामकलिंगरूपः ५४ देवसिंहःदेवेषुपराक्रमी ५५ नरर्षभःनरेष्वपिश्रेष्ठः ५६ १४८ विबुधःविशेषेणप्राज्ञः ५७ अग्रवरःअग्रेवृणोतियज्ञभागादिकमित्यग्रवरः ५८ सूक्ष्मःदुर्लक्ष्यः ५९ सर्वदेवःतत्तद्देवतात्मकत्वेनपरिसमाप्तः ६० तपोमयःतपःप्रधानः ६१ सुयुक्तःसुतरांयुक्तःसंनद्धः ६२ शोभनःकल्याणः ६३ वज्रीवज्रायुधः ६४

देवासुरगणाध्यक्षोदेवासुरगणाग्रणीः देवातिदेवोदेवर्षिर्देवासुरवरप्रदः १४६ देवासुरेश्वरोविश्वोदेवासुरमहेश्वरः सर्वदेवमयोचिंत्योदेवतात्मात्मसंभवः १४७ उद्भित्त्रिविक्रमोवैद्योविरजोनीरजोऽमरः ईड्योहस्तीश्वरोव्याघ्रोदेवसिंहोनरर्षभः १४८ विबुधोग्रवरःसूक्ष्मःसर्वदेवस्तपोमयः सुयुक्तःशोभनोवज्रीप्रासानांप्रभवोव्ययः १४९ गुहःकांतोनिजःसर्गःपवित्रंसर्वपावनः शृंगीशृंगप्रियोबभ्रूराजराजोनिरामयः १५० अभिरामःसुरगणोविरामःसर्वसाधनः ललाटाक्षोविश्वदेवोहरिणोब्रह्मवर्चसः १५१

प्रासानांआयुधविशेषाणांप्रभवउत्पत्तिस्थानं ६५ अव्ययःनावावधनरूपणएतिप्राप्नोत्यनेनसाधकइत्यव्ययः एकाग्रचित्तप्राप्यःपरश्चप्रत्ययांतोयं ६६ १४९ गुहःकुमारः ६७ कांतःकस्यसुखस्यअंतःसीमाआनंदस्यपराकाष्ठेत्यर्थः ६८ निजःसर्गःसृज्यतइतिसर्गःतस्यविशेषणनिजःस्वस्मानअनन्यः ६९ पवित्रं पविर्वज्रंतत्तुल्यमृत्युदुःखंतस्मात्त्रायतइतिपवित्रं ७० अतएवसर्वपावनःसर्वेषांब्रह्मादीनामपिशुद्धिकरः ७१ शृंगीवृषभादिरूपः ७२ शृंगप्रियःपर्वतशिखराश्रयः ७३ बभ्रुःशनैश्चरः ७४ राजराजःकुबेरः ७५ निरामयःनिर्दोषः ७६ १५० अभिरामःप्रीतिजनकः ७७ सुरगणःदेवसंघरूपः ७८ विरामःसर्वोपरमरूपः ७९ सर्वसाधनःसर्वाणिआश्रमकर्माणिसदवाप्तयेसाधनानियस्मिन्निति ८० ललाटाक्षः ८१ विश्वदेवःविश्वेब्रह्मांडकंदुकैर्दीव्यतीतिक्रीडतइति ८२ हरिणःमृगरूपः ८३ ब्रह्मवर्चसविद्यातपःसमुद्भवतेजःतद्वान्अर्शआद्यच्प्रत्ययांतोयम् ८४ १५१ ६७

स्थावराणांपतिः हिमाचलादिरूपः ८५ नियमेंद्रियवर्द्धनः नियमैर्नियमैः कृत्वा इंद्रियाणांसमनस्कानां वर्द्धनोहिंसकः क्षीणमनालब्धसमाधिरित्यर्थः
८६ सिद्धार्थःनित्यसिद्धएवमोक्षोज्ञानापगममात्रेणकंठगतविस्मृतचामीकरवदर्थोऽर्थनीयोयस्यससिद्धार्थः तत्वज्ञानार्थी ८७ अतएवसिद्धभूता
र्थः पूर्वसिद्धःपश्चाद्भूतःसाधितः सिद्धभूतः पूर्वकालेकेतिसमासः सचासौअर्थश्चसिद्धभूतार्थः उक्तविधोमोक्षः ८८ अतएव अचिंत्यःचिंत्यादुपा-
स्यादन्यःप्रत्यगात्मत्वात तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासतेइतिश्रुतेश्च ८९ सत्यव्रतःसत्यंब्रह्मतदर्थान्येवव्रतानितपांसियस्य ९० शुचिःनिर्मल
चित्तः ९१ १५२ व्रताधिपःतत्तद्व्रतफलप्रदः ९२ परःविश्वतैजसप्राज्ञेभ्योऽपरब्रह्मभ्यःपरंतुरीयंशिवाख्यं शिवमद्वैतंचतुर्थमन्यंतइतिश्रुतिप्रसि-
द्धं ९३ अतएवब्रह्मदेशतःकालतोवस्तुतश्चपरिच्छेदशून्यंनेहनानास्तिकिंचनेतिश्रुतेर्विश्वादीनामनृतत्वेनस्वगतभेदस्याप्यभावादखंडैकरसवस्तुत
न्मात्रं ९४ भक्तानांपरमागतिः भंजोआमर्दनेऽस्यरूपंभक्तानांविश्वादिषुपूर्वपूर्वस्यउत्तरस्मिन्नुत्तरस्मिन्प्रविलापनलक्षणंविना आमर्दनसैंधवखि

स्थावराणांपतिश्चैवनियमेंद्रियवर्द्धनः सिद्धार्थःसिद्धभूतार्थोचिंत्यःसत्यव्रतःशुचिः १५२
व्रताधिपःपरंब्रह्मभक्तानांपरमागतिः विमुक्तोमुक्ततेजाश्चश्रीमान्श्रीवर्द्धनोजगत् १५३

ल्यसलिलत्त्वन्यायेनकृतांपरमागतिरितिसायागतिःकैवल्यरूपाविश्रांतिः ९५ विमुक्तःदेहांतेविशेषेणमुक्तः ९६ कुतोविमुक्तत्वमतआहमुक्ततेजाइ
ति तेजःपदेनात्रलिंगशरीरमुच्यते ततमुक्तंतेजोऽनेनेतितथा ९७ मुक्तस्तेजस्त्वमपिकुतः यतःश्रीमान्योगैश्वर्यवान् तथाहियोगीजितमृत्युर्यथा-
कामंभीष्मवदिहैवतिष्ठति ब्रह्मलोकंवामूर्द्धन्यनाड्यागच्छति इहैवलिंगशरीरंकवचवद्धात्यक्त्वाविशुद्धंकैवल्यमाप्नोति ९८ श्रीमत्वमपिकुतःयतःश्री
वर्द्धनः ऋचःसामानियजूंषिसाहिश्रीरमृतासतामितिश्रुतेःवेदत्रयरूपाश्रियंकर्मोपास्तिज्ञानकांडात्मिकांवर्द्धयतितत्तदुक्तार्थानुष्ठानेनसम्यक्परिपो
षयतिसश्रीवर्द्धनः ९९ जगत्अव्ययःकृतादिघटांतनश्वरवस्तुरूपः गच्छतिनित्यंरूपांतरंप्राप्नोतीतिजगदितिव्युत्पत्तेःप्रधानादीनामपिजगत्वंनलंगु
णावृत्तमिति कापिलसिद्धांताच्च एवंचयआदौस्थिरउक्तःसएवजगदित्युक्तेस्थिरेभूमात्मनिजगत्कल्पितमित्युक्तंभवति ततश्चात्मैवेदंसर्वंब्रह्मैवेदं
सर्वंतत्त्वमस्यहंब्रह्मास्म्ययमात्मेत्यादिशास्त्रसिद्धब्रह्माद्वैतंप्रतिपादितंभवतीतिशिवम् १००० १५३ इतिनाम्नांदशमंशतम् ६७

यथेति बहूनांमध्येसहस्रंप्रधानानिनामान्युद्धृत्यस्तुतोसीत्यर्द्धस्यार्थः ५४ ५५ ५६ ५७ एतद्धीति परमंब्रह्मउत्कृष्टाब्रह्मप्राप्तिसाधनभूताविद्या एतामृजपन्परंब्रह्म कैवल्यंअधिगच्छतीत्यध्याहृत्ययोज्यं ५८ आत्मसंस्थाकरः आत्मनिप्रतीचीसंस्थाअनन्यव्यापाररूपापरिसमाप्तिःतांक- रोतिमोक्षप्रदइत्यर्थः ५९ तथैवेति बहुभिर्जन्मभिः ईशानंस्तवैःस्तुवंतःस्तुष्यंतिचरमंतिचेतिप्रथमद्वितीयचतुर्थस्थैरन्वयः ६० भक्त्या आराध्योयमिति- निश्चयेन भावेनप्रीत्या ६१ व्रजन्नित्याद्येकवचनानिबहुवचनानि सुपांसुलुगितिवाविभक्तेःसुरादेशःसुः ६२ ६३ ६४ अनन्याअभेदेनशिवोहमस्मी

यथाप्रधानंभगवानितिभक्त्यास्तुतोमया तंनब्रह्मादयोदेवावदुस्तत्त्वेनतर्षभ १५४ स्तोतव्यमर्च्यंवंद्यंचकःस्तोष्यतिजगत्पतिम् भक्त्या त्वेवंपुरस्कृत्यमयायज्ञपतिर्विभुः ५५ ततोभ्यनुज्ञांसंप्राप्यस्तुतोमतिमतांवरः शिवमेभिःस्तुवन्देवंनामभिःपुष्टिवर्द्धनैः ५६ नित्ययु क्तःशुचिर्भक्तःप्राप्नोत्यात्मानमात्मना ५७ एतद्धिपरमंब्रह्मपरंब्रह्माधिगच्छति ऋषयश्चैवदेवाश्चस्तुवंत्येतेनतत्परम् ५८ स्तूयमा नोमहादेवस्तुष्यतेनियतात्मभिः भक्तानुकंपीभगवानात्मसंस्थाकरोविभुः ५९ तथैवचमनुष्येषुयेमनुष्याःप्रधानतः आस्तिकाःश्रद्द- धानाश्चबहुभिर्जन्मभिःस्तवैः ६० भक्त्याह्यनन्यमीशानंपरंदेवंसनातनम् कर्मणामनसावाचाभावेनामिततेजसः ६१ शयानाजा- ग्रमाणाश्चव्रजन्नुपविशंस्तथा उन्मिषन्निमिषंश्चैवचिंतयंतःपुनःपुनः ६२ शृण्वंतःश्रावयंतश्चकथयंतश्चतेभवम् स्तुवंतःस्तूयमानाश्च तुष्यंतिचरमंतिच ६३ जन्मकोटिसहस्रेषुनानासंसारयोनिषु जंतोर्विगतपापस्यभवेभक्तिःप्रजायते ६४ उत्पन्नाचभवेभक्तिरनन्यासर्वभावतः भाविनःकारणेचास्यसर्वयुक्तस्यसर्वथा ६५ एतद्देवेषुदुष्प्रापंमनुष्येषुनलभ्यते निर्विघ्नानिश्चलारुद्रेभक्तिरव्यभिचारिणी ६६ तस्यैवचप्रसादेनभक्तिरुत्पद्यतेनृणाम् येनयांतिपरांसिद्धिंतद्भागवतचेतसः ६७ येसर्वभावानुगताःप्रपद्यंतेमहेश्वरम् प्रपन्नवत्स लोदेवःसंसारात्तान्समुद्धरेत् ६८ एवमन्येविकुर्वंतिदेवाःसंसारमोचनम् मनुष्याणामृतेदेवंनान्याशक्तिस्तपोबलम् ६९ इतितेनेंद्रक ल्पेनभगवान्सदसत्पतिः कृत्तिवासाःस्तुतःकृष्णतंडिनाशुभबुद्धिना १७० स्तवमेतंभगवतोब्रह्मास्वयमधारयत् गीयतेचसबुध्येतब्र- ह्माशंकरसन्निधौ ७१

तिभावनयां तथाचश्रुतिः अथयोन्यांदेवतामुपास्तेऽन्योसावन्योहमस्मीतिनसवेदयथापशुरेवंसदेवानामितिभेदेनोपासनंनिंदति शिवेकारणेभक्तिरस्यपुंसःभावि नोभाव्यंयत्नसर्वयुक्तस्यसर्वसाधनयुतःसर्वथासर्वैःप्रकारैरुत्पन्नाभवतीतिसंबंधः ६५ ६६ ६७ ६८ एवमितिसंसारमोचनंदेवंऋतेअन्येदेवामनुष्याणांत पोबलंविकुर्वंतिनाशयंतीतिसंबंधः तेषांयतोऽन्याशक्तिर्नास्ति ६९ इतिहेतोःतेनतंडिना १७० गीयतेचसंस्तवोब्रह्मणाशंकरसन्निधौअतस्तद्ब्राह्मणोबुध्येतजानीया

इदंपुण्यंपवित्रंचसर्वदापापनाशनम् योगदंमोक्षदंचैवस्वर्गदंतोषदंतथा ७२ एवमेतत्पठंतेयएकभक्त्यातुशंकरम् यागतिःसांख्ययोगानां
व्रजंत्येतांगतिंतदा ७३ स्तवमेवंप्रयत्नेनसदारुद्रस्यसन्निधौ अब्दमेकंचरेद्भक्तःप्राप्नुयादीप्सितंफलम् ७४ एतद्रहस्यंपरमंब्रह्मणोहृ
दिसंस्थितम् ब्रह्मप्रोवाचशक्रायशक्रःप्रोवाचमृत्यवे ७५ मृत्युःप्रोवाचरुद्रेभ्योरुद्रेभ्यस्तंडिमागमत् महतातपसाप्राप्तस्तंडिनाब्रह्मस
द्मनि ७६ तंडिःप्रोवाचशुक्रायगौतमायचभार्गवः वैवस्वतायमनवेगौतमःप्राहमाधव ७७ नारायणायसाध्यायसमाधिष्ठायधीमते
यमायप्राहभगवान्साध्योनारायणोच्युतः ७८ नाचिकेतायभगवानाहवैवस्वतोयमः मार्कंडेयायवार्ष्णेयनाचिकेतोभ्यभाषत ७९
मार्कंडेयान्मयाप्राप्तोनियमेनजनार्दन तवाप्यहममित्रघ्नस्तवंदद्यांह्यविश्रुतम् १८० स्वर्ग्यमारोग्यमायुष्यंधन्यंवेदेनसंमितम् नास्य-
विघ्नंविकुर्वंतिदानवायक्षराक्षसाः ८१ पिशाचायातुधानावागुह्यकाभुजगाअपि यःपठेतशुचिःपार्थब्रह्मचारीजितेंद्रियः अभग्न-
योगोवर्षंतुसोश्वमेधफलंलभेत् १८२ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेमहादेवसहस्रनामस्तोत्रेसप्तदशोऽध्यायः
१७ वैशंपायनउवाच महायोगीततःप्राहकृष्णद्वैपायनोमुनिः पठस्वपुत्रभद्रंतेप्रीयतांतेमहेश्वरः १ पुरापुत्रमयामेरौतप्यतापर
मंतपः पुत्रहेतोर्महाराजस्तवएषोनुकीर्तितः २ लब्धवानीप्सितान्कामानहंवैपांडुनंदन तथात्वमपिशर्वाद्धिसर्वान्कामानवाप्स्यसि ३
कपिलश्चततःप्राहसांख्यर्षिर्देवसंमतः मयाजन्मान्यनेकानिभक्त्याचाराधितोभवः ४ प्रीतश्चभगवान्ज्ञानंददौममभवांतकम् चा
रुशीर्षस्ततःप्राहशक्रस्यदयितःसखा आलंबायनइत्येवंविश्रुतःकरुणात्मकः ५ मयागोकर्णमासाद्यतपस्तप्त्वाशतंसमाः अयोनि-
जानांदांतानांधर्मज्ञानांसुवर्चसाम् ६ अजराणामदुःखानांशतवर्षसहस्रिणाम् लब्धंपुत्रशतंशर्वात्पुरापांडुनृपात्मज ७ वाल्मी
किश्चाहभगवान्युधिष्ठिरमिदंवचः विवादेसाग्निमुनिभिर्ब्रह्मघ्नोवैभवानिति ८ उक्तःक्षणेनचाविष्टस्तेनाधर्मेणभारत सोहमीशा
नमनघममोघंशरणंगतः ९ मुक्तश्चास्मिततःपापैस्ततोदुःखविनाशनः आहमांत्रिपुरघ्नोवैयशस्तेग्र्यंभविष्यति १० जामदग्न्यश्च
कौंतेयमिदंधर्मभृतांवरः ऋषिमध्येस्थितःप्राहज्वलन्निवदिवाकरः ११

पितृतुल्याविप्राज्येष्ठोभ्रातापितुःसमइतिस्मृतेः ज्येष्ठाभ्रातरस्तेषांवधेन १२ १३ १४ शिखंडीकपर्दीशिवविग्रहःकल्याणशरीरः १५ १६ १७ शक्रस्यधर्म-
शास्त्रेक्वचिदन्यथाकरणात्कुपितस्य प्रभुःप्रार्थितःसन्नितिशेषः १८ १९ २० उच्चारितेअन्ययेतिशेषः २१ पापधियाभिनिवेशंत्यक्त्वासमीक्ष्यस्वविचार्य
अयज्ञवाहिनंनयज्ञंवहतितंपापंअवक्षरपाठजमपराधं २२ २३ २४ २५ निधनेअंतेसद्यएवेत्यर्थः २६ साम्येअवैषम्ये युवयोःपुत्रसमदर्शनत्वात्

पितृविप्रवधेनाहंपार्थार्तोवैपांडवाग्रज शुचिर्भूत्वामहादेवंगतोस्मिशरणंनृप १२ नामभिस्त्वास्तुवंदेवंततस्तुष्टोभवद्भवः परशुंचततोदेवोदि
व्यान्यस्त्राणिचैवमे १३ पापंचतेनभविताअजेयश्चभविष्यसि नतेप्रभवितामृत्युरजरश्चभविष्यसि १४ आहमांभगवानेवंशिखंडीशि
वविग्रहः तदवाप्तंचमेसर्वंप्रसादात्तस्यधीमतः १५ विश्वामित्रस्ततोवाचक्षत्रियोहंतदाभवम् ब्राह्मणोहंभवानीतियथाचाराधितोभ
वः १६ तत्प्रसादान्मयाप्राप्तंब्राह्मण्यंदुर्लभंमहत् असितोदेवलश्चैवप्राहपांडुसुतंनृपम् १७ शापाच्छक्रस्यकौंतेयविभोधर्मोनशत्तदा
तन्मेधर्मोयशश्चाग्र्यमायुश्चैवाददत्प्रभुः १८ ऋषिर्गृत्समदोनामशक्रस्यदयितःसखा प्राहाजमीढभगवान्बृहस्पतिसमद्युतिः १९
वरिष्ठोनामभगवांश्चाक्षुषस्यमनोःसुतः शतक्रतोरचिंत्यस्यसत्रेवर्षसहस्रिके २० वर्तमानेऽब्रवीद्वाक्यंसाम्न्युच्चारितेमया रथंत
रंद्विजश्रेष्ठनसम्यगितिवर्तते २१ समीक्षस्वपुनर्बुद्ध्यापापंत्यक्त्वाद्विजोत्तम अयज्ञवाहिनंपापमकार्षीस्त्वंसुदुर्मते २२ एवमुक्त्वामहा
क्रोधःप्राहशंभुःपुनर्वचः प्रज्ञयारहितोदुःखीनित्यभीतोवनेचरः २३ दशवर्षसहस्राणिदशाष्टौचशतानिच नष्टपानीयपवनेमृगैरन्यै-
श्चवर्जिते २४ अयज्ञीयद्रुमेदेशेरुरुसिंहनिषेविते भवितात्वंमृगःक्रूरोमहादुःखसमन्वितः २५ तस्यवाक्यस्यनिधनेपार्थजातोह्य
हंमृगः ततोमांशरणंप्राप्तंप्राहयोगीमहेश्वरः २६ अजरश्चामरश्चैवभवितादुःखवर्जितः साम्यंसमस्तुतेसौख्यंयुवयोर्वर्धताक्रतुः २७
अनुग्रहानेवमेषकरोतिभगवान्विभुः परंधाताविधाताचसुखदुःखेचसर्वदा २८ अचिंत्यएषभगवान्कर्मणामनसागिरा नमेतातयु
धिष्ठिरविद्ययापंडितःसमः २९ वासुदेवस्ततोवाचपुनर्मतिमतांवरः सुवर्णाक्षोमहादेवस्तपसातोषितोमया ३० ततोथभगवानाह
प्रीतोमांवैयुधिष्ठिर अर्थात्प्रियतरःकृष्णमत्प्रसादाद्भविष्यसि ३१ अपराजितश्चयुद्धेषुतेजश्चैवानलोपमम् एवंसहस्रशश्चान्यान्महा
देवोवरंददौ ३२ मणिमंथेथशैलेवैपुरासंपूजितोमया वर्षायुतसहस्राणांसहस्रंशतमेवच ३३ ततोमांभगवान्प्रीतइदंवचनमब्रवी
त् वरंवृणीष्वभद्रंतेयस्तेमनसिवर्तते ३४

२७ परंउत्कृष्टंयथास्यात्तथा २८ नमेमयासमःपंडितोस्तिविद्ययाहेतुना २९ ३० अर्थात्ध-
र्मस्यफलंकामस्यमूलंस्वार्थः सर्वस्मात्प्रियः ततोपिप्रियःअंतरात्मातंतुल्यःसर्वेषांभविष्यतीत्यर्थः ३१ ३२ पुरापूर्वावतारे ३३ ३४ [illegible] ६७

३५ ३६ ३७ चतुःषष्टिः अंगानि अवयवा यस्य तं कलासमूहज्ञानस्य तत् मनोयज्ञेन मानसेन पूजनेन ३८ ३९ ४० ४१ इतिमत्वाहृदिस्थि
तंमतंज्ञात्वा सुरसत्तमः मां प्राह यात्वमधिसंभावना एतस्मात्फलमहं प्राप्स्ये इति अस्याः फलात् पुण्यात्तव कृष्णोनाम पुत्रोभविष्यति ४२ ४३ ४४
४५ ४६ ४७ पादाच्चतुर्थात् तपः शौचं दया सत्यमिति चत्वारो धर्मस्य पादाः तेषां चतुर्थात्सत्वादेव तवात्मा शरीरम् ४८ ४९ ५० ५१ पित

ततः प्रणम्य शिरसा इदं वचनमब्रुवम् यदि प्रीतोमहादेवो भक्त्या परमया प्रभुः ३५ नित्यकालं तवेशान भक्तिर्भवतु मेस्थिरा एवमस्त्विति
भगवांस्तत्रोक्त्वांतरधीयत ३६ जैगीषव्यउवाच ममाष्टगुणमैश्वर्यं दत्तं भगवता पुरा यत्नेनान्येन बलिना वाराणस्यां युधिष्ठिर
३७ गर्गउवाच चतुःषष्ट्यंगमददत्कलाज्ञानं ममाद्भुतम् सरस्वत्यास्तटे तुष्टो मनोयज्ञेन पांडव ३८ तुल्यं मम सहस्रं तु सुतानां-
ब्रह्मवादिनाम् आयुश्चैव सपुत्रस्य संवत्सरशतायुतम् ३९ पराशरउवाच प्रसाद्येह पुरा शर्वं मनसाचिंतयन्नृप महातपा महाते-
जा महायोगी महायशाः ४० वेदव्यासः श्रियावासो ब्राह्मणः करुणान्वितः अप्यसावीप्सितः पुत्रो मम स्याद्वै महेश्वरात् ४१ इतिमत्वा
हृदि मतं प्राह मां सुरसत्तमः मयि संभावना यास्याः फलात्कृष्णो भविष्यति ४२ सावर्णस्य मनोः सर्गे सप्तर्षिश्च भविष्यति वेदानांच-
स वै वक्ता कुरुवंशकरस्तथा ४३ इतिहासस्य कर्ता च पुत्रस्ते जगतो हितः भविष्यति महेंद्रस्य दयितः स महामुनिः ४४ अजरश्चामर-
श्चैव पराशर सुतस्तव एवमुक्त्वा स भगवांस्तत्रैवांतरधीयत ४५ युधिष्ठिर महायोगी वीर्यवानक्षयोव्ययः मांडव्यउवाच अचौ
रश्चोरशंकायां शूले भिन्नोह्यहं तदा तत्रस्थेन स्तुतो देवः प्राह मां वै नरेश्वर ४६ मोक्षं प्राप्स्यसि शूलाच्च जीविष्यसि समार्बुदम् रुजा शू
लकृता चैव न तेविप्र भविष्यति ४७ आधिभिर्व्याधिभिश्चैव वर्जितस्त्वं भविष्यसि पादाच्चतुर्थात्संभूतो आत्मा यस्मान्मुने तव ४८ त्वं भ
विष्यस्यनुपमो जन्म वै सफलं कुरु तीर्थाभिषेकं सकलं त्वमविघ्नेनवाप्स्यसि ४९ स्वर्गं चैवाक्षयं विप्र विदधामि तवोर्जितम् एवमुक्त्वा
तु भगवान्वरेण्यो वृषवाहनः ५० महेश्वरो महाराज कृत्तिवासा महाद्युतिः सगणो देवतश्रेष्ठस्तत्रैवांतरधीयत ५१ गालवउवाच
विश्वामित्राभ्यनुज्ञातो ह्यहं पितरमागतः अब्रवीन्मां ततो माता दुःखिता रुदती भृशम् ५२ कौशिकेनाभ्यनुज्ञातं पुत्रं वेदविभूषितम् न
तातं तरुणं दांतं पिता त्वां पश्यतेनघ ५३ श्रुत्वा जनन्या वचनं निराशो गुरुदर्शने नियतात्मा महादेवमपश्यं सोब्रवीच्च माम् ५४ पिता
माता च ते त्वं च पुत्र मृत्युविवर्जिताः भविष्यथ विशक्षिप्रं द्रष्टासि पितरं क्षये ५५ अनुज्ञातो भगवता गृहं गत्वा युधिष्ठिर अपश्यं पि
तरं तात इष्टिं कृत्वा विनिःसृतम् ५६

रंद्रस्य इति बुध्वा गृहमागतः दुःखिता वैधव्यदुःखेन ५२ ५३ ५४ क्षये गृहे विश प्रविश ५५ ५६ ६७ ६२

शरणाकुरून् वाय्वाघातेनवास्वयंवापक्वतयाफलानामधःपतनेनैविशरणंशुरणात्प्रधानाःकुरवोऽन्यानिशरणाकुरवस्तान् शीर्य्यविशरणेऽस्माद्भावेल्युः कूरुर्न्न
पांतरेभक्तेइतिमेदिनी भक्तओदनः सास्त्रलीदाविल्लेईक्षणेऽयस्य ५७ ५८ ईश्वरोविष्णुः ५९ ६० ६१ ६२ ६३ ६४ कूलानि गृहतडागादी
नि गृहेकूलंतटेकपेसैन्यपश्चंतटाकयोरितिमेदिनी ६५ आत्मनाचित्तेन ६६ ६७ ६८ ६९ आदित्यचंद्रावित्यादिसर्वेशर्वाज्जातांविद्धीतिसप्तमस्थेनान्वयः

उपस्पृश्यगृहात्वथकुशांश्वशरणाकुरून् तान्वसृज्यचमाप्राह्मपितासास्त्राविलेक्षणः ५७ प्रणमंतंपरिष्वज्यमूर्ध्न्युपाघ्रायपांडव दिष्ट्या
दृष्टोसिमेपुत्रकृतविद्यइहागतः ५८ वैशंपायनउवाच एतान्यत्यद्भुतान्येवकर्माण्यथमहात्मनः प्रोक्तानिमुनिभिःश्रुत्वाविस्मयामास
पांडवः ५८ ततःकृष्णोब्रवीद्वाक्यंपुनर्मतिमतांवरः युधिष्ठिरंधर्मनिधिंपुरुहूतमिवेश्वरः ५९ वासुदेवउवाच उपमन्युर्मयिप्राह-
तपन्निवदिवाकरः अशुभैःपापकर्माणोयेनराःकलुषीकृताः ६० ईशानंनप्रपद्यंतेतमोराजसवृत्तयः ईश्वरंसंप्रपद्यंतेद्विजाभावितभाव
नाः ६१ सर्वथावर्त्तमानोपियोभक्तःपरमेश्वरे सदृशोरण्यवासीनांमुनीनांभावितात्मनाम् ६२ ब्रह्मत्वंकेशवत्वंवाशिवत्वंवासुरैःसह
त्रैलोक्यस्याधिपत्यंवातुष्टोरुद्रःप्रयच्छति ६३ मनसापिशिवंतातयेप्रपद्यंतिमानवाः विधूयसर्वपापानिदेवैःसहवसंतिते ६४ भित्वा
भित्वाचकूलानिहत्वासर्वमिदंजगत् यजेद्देवंविरूपाक्षंनसपापेनलिप्यते ६५ सर्वलक्षणहीनोपियुक्तोवासर्वपातकैः सर्वंनुदतितत्पाप
भावयंश्छिवमात्मना ६६ कीटपक्षिपतंगानांतिरश्चामपिकेशव महादेवप्रपन्नानांनभयंविद्यतेक्वचित् ६७ एकमेवमहादेवभक्तायेमा
नवाभुवि ६८ नतेसंसारवशगाइतिमेनिश्चितामतिः ततःकृष्णोब्रवीद्वाक्यंधर्मपुत्रंयुधिष्ठिरम् ६९ विष्णुरुवाच आदित्यचंद्रा
वनिलानलौचद्यौर्भूमिरापोवसवोथविश्वे ७० ब्रह्माशक्रोमारुतोब्रह्मसत्यंवेदायज्ञादक्षिणावेदवाहाः सोमोयष्टायच्चहव्यंहविश्चर
क्षादीक्षासंयमायेचकेचित् ७१ स्वाहावौषट्ब्राह्मणाःसौरभेयीधर्मंचाग्र्यंकालचक्रंबलंच यशोदमोबुद्धिमतांस्थितिश्चशुभाशुभंये
मुनयश्चसप्त ७२ अग्र्याबुद्धिर्मनसादर्शनेचस्पर्शश्चाग्र्यःकर्मणांयाचसिद्धिः गणादेवानामूष्मपाःसोमपाश्चलेखाःसुयामास्तुषि
ताब्रह्मकायाः ७३ आभासुरागंधपाधूमपाश्चवाचाविरुद्धाश्चमनोविरुद्धाः शुद्धाश्चनिर्माणरताश्चदेवाःस्पर्शाशनादर्शपाआज्यपाश्च
७४ चिंत्यद्योतायेचदेवेषुमुख्यायेचाप्यन्येदेवताश्चाजमीढ सुपर्णगंधर्वपिशाचदानवायक्षास्तथाचारणपन्नगाश्च ७५

७० सत्यंब्रह्मतत्त्वावेदको
वेदउपनिषत्प्राधान्यात्पृथक्कीर्त्तनं वेदवाहाः वेदपाठकाः हव्यंहविर्देवभागः ७१ ७२ अग्र्यासूक्ष्माब्रह्माकारधीवृत्तिः ७३ धूमपाधूमेनैवतृप्यंतः वा
चाविरुद्धाःवाङ्नियमनशीलाः निर्माणंअनेकधाभवनंयोगेनानेकशरीरधारणंतद्रताः ७४ चिंत्यद्योताःसंकल्पितमात्रवस्तुयेषांसद्यःपुरतःप्रकाशतेतादृशाः

७६ तत्संभूताइति भूतेः सकाशाद्बीजानिभव्याकृताकाशाख्याईश्वराः भूतकृतो दियदादिस्रष्टारस्तत एवानंदमात्रशरीराच्चतुर्थात्संभूताः तेचवरेण्याः उपासकैः शङ्करुंप्येप्सुभिर्वरणीयाः पूर्वबीजाद्बीजांतरमिवानादौसृष्टिप्रवाहेपूर्वपूर्वस्मादीशादुत्तरउत्तरईशो भूमभूमौउत्पद्यतेइत्याशयेनोक्तंपुरातनीमिति यथाबीजशक्त्याअंकुरायाअविद्यमानयाभूतवृक्षीक्रियतएवंईश्वरशक्त्याआनंदचिन्मात्रंवस्तुविश्वाकारंक्रियतइतितेन शक्तिंविनाकथंकेवलाद्दुत्पत्तिरित्यपास्तं शक्त्यानादित्वस्याभ्युपगमात् एतेनबीजशक्तेर्भर्जनेन ज्ञानेनजीवगताविद्याशक्तेर्विद्याग्निनादाहेसतिमुक्तानांपुनरनुत्पत्तिः केवलीभावश्च व्याख्यातः ७७ यततपसाध्यानेनविचिन्वतः विचिन्वंति आलोचयंतिईश्वरंमूत्रंविराजंवातत्सर्वंतत् स्थवीयःस्थूलतरमेव अतःकारणात्प्राणहेतोःजीवनार्थमोक्षार्थंकिंचिद्वाङ्मनसयोरगोचरंतत्त्वंनतोस्मिशरणीभूयप्राप्तोस्मि सएवईश्वररूपोभूत्वावरान्ददातुभूमिरिवबीजाद्यात्मतागताजनास्तर्पयतिनिह

स्थूलंसूक्ष्मंमृदुचाप्यसूक्ष्मंदुःखंसुखंदुःखमनंतरंच सांख्यंयोगंतत्पराणांपरंचशर्वाज्जातंविद्धियत्कीर्तितंमे ७६ तत्संभूताभूतकृतोवरेण्याःसर्वेदेवाभुवनस्यास्यगोपाः आविश्येमांधरणींयेभ्यरक्षन्पुरातनींतस्यदेवस्यसृष्टिं ७७ विचिन्वतस्तपसातत्स्थवीयः किंचित्तत्त्वंप्राणहेतोर्नतोस्मि ददातुवेदःसवरानिहेष्टानभिष्टुतोनःप्रभुरव्ययःसदा ७८ इमंस्तवंसन्नियतेंद्रियश्चभूत्वाशुचिर्यःपुरुषःपठेत अभग्नयोगोनियतोमासमेकंसंप्राप्नुयादश्वमेधेफलंयत् ७९ वेदान्कृत्स्नान्ब्राह्मणःप्राप्नुयात्तुजयेन्नृपःपार्थमहींचकृत्स्नां वैश्योलाभंप्राप्नुयान्नैपुणंचशूद्रोगतिंप्रेत्यतथासुखंच ८० स्तवराजमिमंकृत्वारुद्रायदधिरेमनः सर्वदोषापहंपुण्यंपवित्रंचयशस्विनः ८१ यावंत्यस्यशरीरेषुरोमकूपाणिभारत तावंत्यब्दसहस्राणिस्वर्गेवसतिमानवः ८२ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेमेघवाहनोपाख्यानेअष्टादशोऽध्यायः १८ युधिष्ठिरउवाच यदिदंसहधर्मेतिप्रोच्यतेभरतर्षभ पाणिग्रहणकालेतुस्त्रीणामेतत्कथंस्मृतम् १

त ७८ इमंभीष्मवाक्यादारभ्यएतावत्पर्यंतम् ७९ ८० कृत्वाशरणीकृत्यरुद्रायरुद्रेनिदधिरेप्रविलापितवंतः ८१ ८२ नामूर्त्तेर्मूर्त्तभेदःकखमिवलिपिभिद्भेत्तुमीष्टेकथंचिद्बीजंचामूर्त्तभेदोप्यनिमिवकखभिद्यंजकान्यत्वजन्मा कोभिद्याद्बीजबीजंखमिवलिपिभिदामूर्त्तिभेदेनमंदस्तेनाद्वैतंचतुर्थंशिवमुपनिषदिज्ञातमात्मानमीडे १ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायांदानधर्मेषुमेघवाहनोपाख्यानेअष्टादशोऽध्यायः १८ तमेवशरणंव्रजेत्यथतमेवचाद्यंपुरुषंप्रपद्यइतिसूचितंविवृतवान्हरिःपुरुषम् अथैतदुपलब्ध्ययेविविधधर्मजातंवदन्विकल्पयतियोषितःपरविरक्तताप्तये ज्ञेयंवस्तुश्रुत्वातज्ज्ञानसाधनधर्मंशुश्रूषुःसहोभौसरतांधर्मंक्षौमेवसानौजायापतीअग्निमादधीयातामितिधर्मेपत्नीसाहित्यंशास्त्रेदृश्यमानमाक्षिपति पाणिग्रहणान्याक्रसाहित्याभावात्सहोभावितिवाक्यंव्याकुप्येतेतिभावः १ ७ ७ ७ ७ ७ ७

धर्मविशेषे एव साहित्यमपेक्ष्यते न सर्वत्रेति आशंक्य धर्मं विकल्पयति आर्ष इति ऋषिभिर्मंत्रैः प्रकाशितः श्रौतस्मार्त्तक्रियारूप आर्षः केवलं वेदविहितत्वाद्वा प्राजा
पत्यः प्रजापतिना संतानकर्मणा प्रथितः नापुत्रस्य लोकोस्तीति श्रुतत्वात् करणे ऽनिष्टदर्शनाद्वा आसुरः असुषु रमंते ऽ ते सुरास्तेषामयमासुरः केवलं इंद्रियप्रीतिदर्श
नाद्वा साहित्यमुक्तमित्यर्थः २ आद्यमाक्षिप्य संदेहमाह अर्द्धेन संदेह इति अत्र दोषं स्पष्टयति इहैव साहित्यं दंपत्योर्दृश्यते परलोके तयोः साहित्यं क्व नु न क्वापीत्य
र्थः ३ एतदेवोपपादयति पूर्वमिति सार्द्धेन सत्यपि कर्मणि साहित्ये दंपत्योः स्वस्ववासनाभेदकृतो धर्मभेदो दुर्वार इत्यार्षं प्रमाणं निर्युक्तिकमित्यर्थः ४ ५ प्र
जार्थं साहित्यमिति द्वितीयमक्षं दूषयति अनृताः स्त्रिय इति सूत्रकारो धर्मप्रवक्ता ऽनृतं साहसं माया मूर्खत्वमतिलोभतेति स्त्रीधर्मानाह एवं च प्रजार्थं साहि-

आर्ष एष भवेद्धर्मः प्राजापत्योऽथवासुरः यदेतत्सहधर्मेति पूर्वमुक्तं महर्षिभिः २ संदेहः सुमहानेष विरुद्ध इति मे मतिः इह यः सहधर्मो वै प्रे
त्यायं विहितः क्व नु ३ स्वर्गो मृतानां भवति सहधर्मः पितामह पूर्वमेकस्तु म्रियते क्व चैकस्तिष्ठते वद ४ नानाधर्मफलोपेता नानाक
र्मनिवासिनः नानानिरयनिष्ठांता मानुषा बहवो यदा ५ अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति यदानृताः स्त्रियस्तात सहधर्मः
कुतः स्मृतः ६ अनृताः स्त्रिय इत्येवं वेदेष्वपि हि पठ्यते धर्मोऽयं पूर्विका संज्ञा उपचारः क्रियाविधिः ७ गह्वरं प्रतिभात्येतन्मम चिंतयतो
ऽनिशम् निःसंदेहमिदं सर्वं पितामह यथाश्रुति ८ यदेतद्यादृशं चैतद्यथा चैतत्प्रवर्त्तितम् निखिलेन महाप्राज्ञ भवानेतद्ब्रवीतु मे
९ भीष्म उवाच अत्राप्युदाहरंतीममितिहासं पुरातनम् अष्टावक्रस्य संवादं दिशया सह भारत १० निवेष्टुकामस्तु पुरा अ
ष्टावक्रो महातपाः ऋषेरथ वदान्यस्य वव्रे कन्यां महात्मनः ११

त्यमप्यनुपपन्नं कुंडगोलकादीनामप्युत्पत्तिदर्शनात् ६ पूर्विका पूर्ववती गौणी धर्मसंज्ञा धर्मपत्न्यां विधेया यथा भिक्षुकाणामयं धर्मो धूलिः परगृहादिति वद् धर्ममपि
धर्मपदं प्रयोगाद् इत्यर्थः तत्र च पाणिग्रहणादेर्वेदविहितत्वमपि श्येनादिवत्पुरुषेच्छामनुरुध्यैव न तु वस्तुतस्तस्य धर्मत्वमित्याह उपचारः क्रियाविधिरिति ७ ग
ह्वरं गहनं दुर्बोधमित्यर्थः ८ ९ कामुकयो रागतः प्राप्तो मिथुनीभाव इति न तत्र विधिरित्याख्यायिकामुखेनाह अत्रेत्यादिना अयं भावः यथा दर्शपूर्णमा
सात्पूर्वप्रयुक्तमपां प्रणयनमाश्रित्य गोदोहनेन पशुकामस्य प्रणयेदित्यादि विधयः प्रवर्त्तंते एवं रागप्रयुक्तं दारसंग्रहमाश्रित्य धर्मप्रजाविधयः प्रवर्त्तंते नी
रागस्य तु न दारसंग्रहो विधीयते नितरां तदुत्तरकालीना धर्मप्रजादिविधय इति दिशया दिगभिमानिदेवतया १० निवेष्टुकामः दारसंग्रहार्थं ११ ७ ७

१२ १३मनोजहारेत्यनेनभर्त्तुःस्वमुकत्वंविवरीतुंकथामाहऋषिरित्यादिना १४ । १५ नान्दैःकांस्यमयैर्वाद्यभांडैः शंपानालैःविद्युद्दनिचपलैर्भ्रमण

रूपप्रभान्नाम्नैवेनाप्स्वरूपेणाप्रतिमांभुवि गुणप्रभावशीलेनचारित्रेणचशोभनाम् १२ सातस्यदृष्ट्वैवमनोजहारशुभलोचना वनरा
जीयथाचित्रावसंतेकुसुमाचिता १३ ऋषिस्तमाहदेयामेसुतातुभ्यंहितच्छृणु गच्छतावद्दिशंपुण्यामुत्तरांद्रक्ष्यसेततः १४ अष्टाव
क्रउवाच किंद्रष्टव्यंमयातत्रवक्तुमर्हतिमेभवान् तथेदानीमयाकार्ययथावक्ष्यतिमांभवान् १५ वदान्यउवाच धनदंसमतिक्रम्य
हिमवंतंचपर्वतम् रुद्रस्यायतनंद्रक्ष्यसिसिद्धचारणसेवितम् १५ संहृष्टैःपार्षदैर्जुष्टंनृत्यद्भिर्विविधाननैः दिव्यांगरागैःपैशाचैर्वन्यैर्ना-
नाविधैःप्रभो १५ पाणितालसतालैश्चशंपातालैःसमैस्तथा संप्रहृष्टैःप्रनृत्यद्भिःशर्वस्तत्रनिषेव्यते १६ इष्टंकिलगिरेःस्थानंतद्दिव्य
मितिशुश्रुमः नित्यंसन्निहितोदेवस्तथातेपार्षदाःस्मृताः १७ तत्रदेव्यातपस्तप्तंशंकरार्थेसुदुश्चरम् अतस्तदिष्टंदेवस्यतथोमायाइ
तिश्रुतिः १८ पूर्वेतत्रमहापार्श्वेदेवस्योत्तरतस्तथा ऋतवःकालरात्रिश्चयेदिव्यायेचमानुषाः १९ देवंचोपासतेसर्वेरूपिणःकिलतत्र
ह तदतिक्रम्यभवनंत्वयायातव्यमेवहि २० ततोनीलवनोद्देशंद्रक्ष्यसेमेघसन्निभम् रमणीयंमनोग्राहितत्रवैद्रक्ष्यसेस्त्रियम् २१
तपस्विनीमहाभागांवृद्धांदीक्षामनुष्ठिताम् द्रष्टव्यासात्वयातत्रसंपूज्याचैवयत्नतः २२ तांदृष्ट्वाविनिवृत्तस्त्वंततःपाणिंगृहिष्यसि
यद्येषसमयःसर्वःसाध्यतांतत्रगम्यताम् २३ अष्टावक्रउवाच तथास्तुसाधयिष्यामितत्रयास्याम्यसंशयम् यत्रत्वंवदसेसा
धोभवान्भवतुसत्यवाक् २४ भीष्मउवाच ततोगच्छत्सभगवानुत्तरामुत्तरांदिशम् हिमवंतंगिरिश्रेष्ठंसिद्धचारणसेवितम्
२५ सगत्वाद्विजशार्दूलोहिमवंतंमहागिरिम् अभ्यगच्छन्नदींपुण्यांबाहुदांधर्मशालिनीम् २६ अशोकेविमलेतीर्थेस्नात्वातर्प्यत-
र्प्यदेवताः २७ तत्रवासायशयनेकौश्येसुखमुवासह २८ ततोरात्र्यांव्यतीतायांप्रातरुत्थायसद्विजः २९ स्नात्वाप्रादुश्चकाराग्निंस्तु
त्वाचैनंप्रधानतः ३० रुद्राणीरुद्रमासाद्यह्रदेतत्रसमाश्वसत् ३१ विश्रांतश्चसमुत्थायकैलासमभितोययौ ३२ सोपश्यत्कांचनद्वा
रंदीप्यमानंश्रियाश्रिया मंदाकिनींचनलिनींधनदस्यमहात्मनः ३३ अथतेराक्षसाःसर्वेयेभिरक्षंतिपद्मिनीम् प्रत्युत्थिताभगवंतंम
णिभद्रपुरोगमाः ३४ सतान्प्रत्यर्चयामासराक्षसान्भीमविक्रमान् निवेदयतमांक्षिप्रंधनदायेतिचाब्रवीत् ३५ तेराक्षसास्तथा
राजन्भगवंतमथाब्रुवन् असौवैश्रवणोराजास्वयमायातितेंतिकम् ३६ विदितोभगवानस्यकार्यमागमनस्ययत् पश्यैनंत्वंमहाभा
गज्वलंतमिवतेजसा ३७

दिव्यरंगैःगीतनृत्यक्रियामानविशेषैःसमैर्भ्रमणादिरहितैस्तैरेवं १६ १७ १८ महापार्श्वेपर्वते १९ २० २१ २२ २३ २४ उत्तरांश्रेष्ठां २५ २६ २७ २८ २९ ३०
३१ ३२ ३३ ३४ ३५ ३६ ३७

३८ ३९ ४० ४१ ४२ भवच्छंदं भवदिच्छा ४३ ४४ ४५ ४६ प्रनृत्ताप्सरसः पदार्थाभिनयो वाक्यार्थाभिनयश्च यत्र वर्त्तते तत्प्रनृत्तं तत्क्रियाः
अप्सरसः प्रनृत्ताप्सरसः मध्यमपदलोपी समासः ४७ ४८ ४९ हार्यं हरतीति हार्यः ५० ५१ ५२ भगवान् अष्टावक्रः उत्पत्तिं च निरोधं च भूतानां
मागतिं गतिं वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति दिव्यैर्भोगैरजितोपि सर्वज्ञोपि वदान्यकन्यार्थमार्थी दिगंतं प्रतिगत इति अहो कष्टं कामपिशाचो दुर्जे

ततो वैश्रवणोभ्येत्य अष्टावक्रमनिंदितम् विधिवत्कुशलं पृष्ट्वा ततो ब्रह्मर्षिमब्रवीत् ३८ सुखं प्राप्तो भवान् कच्चित् किं वा मत्तश्चिकीर्षति
ब्रूहि सर्वं करिष्यामि यन्मां वक्ष्यसि वै द्विज ३९ भवनं प्रविश त्वं मे यथाकाममृषिसत्तम सत्कृतः कृतकार्यश्च भवान् यास्यत्यविघ्नतः ४० प्रा
विशद्भवनं स्वं वै गृहीत्वा तं द्विजोत्तमम् आसनं स्वं ददौ चैव पाद्यमर्घ्यं तथैव च ४१ अथोपविष्टयोस्तत्र माणिभद्रपुरोगमाः निषेदुस्त
त्र कौबेरा यक्षगंधर्वकिन्नराः ४२ ततस्तेषां निषण्णानां धनदो वाक्यमब्रवीत् भवच्छंदं समाज्ञाय नृत्येरन्नप्सरोगणाः ४३ आति
थ्यं परमं कार्यं शुश्रूषा भवतस्तथा संवर्त्ततामित्युवाच मुनिर्मधुरया गिरा ४४ अथोर्वरा मिश्रकेशी रंभा चैवोर्वशी तथा अलंबुषा
घृताची च चित्रा चित्रांगदा रुचिः ४५ मनोहरा सुकेशी च सुमुखी हासिनी प्रभा विद्युता प्रशमी दांता विद्योता रतिरेव च ४६ एताश्चा-
न्याश्च वै बह्व्यः प्रनृत्ताप्सरसः शुभाः अवादयंश्च गंधर्वा वाद्यानि विविधानि च ४७ अथ प्रवृत्ते गांधर्वे दिव्ये ऋषिरुपाविशत् दिव्यं सं
वत्सरं तत्रारमत् स महातपाः ४८ ततो वैश्रवणो राजा भगवंतमुवाच ह साग्रः संवत्सरो जातो विप्रेह तव पश्यतः ४९ हार्योयं विषयो ब्र
ह्मन् गांधर्वो नाम नामतः छंदतो वर्त्ततां विप्र यथा वदति वा भवान् ५० अतिथिः पूजनीयस्त्वमिदं च भवतो गृहम् सर्वमाज्ञाप्यतामा
शु परवंतो वयं त्वयि ५१ अथ वैश्रवणं प्रीतो भगवान् प्रत्यभाषत अर्चितोस्मि यथान्यायं गमिष्यामि धनेश्वर ५२ प्रीतोस्मि सदृशं
चैवं तव सर्वं धनाधिप तव प्रसादाद्भगवन् महर्षेश्च महात्मनः ५३ नियोगादद्य यास्यामि ऋद्धिमानृद्धिमान् भव अथ निष्क्रम्य भ
गवान् प्रययावुत्तरामुखः ५४ कैलासं मंदरं हैमं सर्वाननुचचार ह तानतीत्य महाशैलान् कैरातं स्थानमुत्तमम् ५५ प्रदक्षिणं तथा चक्रे
प्रयतः शिरसा नतः धरणीमवतीर्याथ पूतात्मा सोभवत्तदा ५६ स तं प्रदक्षिणं कृत्वा त्रिः शैलं चोत्तरामुखः समेन भूमिभागेन ययौ
प्रीतिपुरस्कृतः ५७ ततोपरं वनोद्देशं रमणीयमपश्यत सर्वर्त्तुभिर्मूलफलैः पक्षिभिश्च समन्वितैः ५८ रमणीयैर्वनोद्देशैस्तत्र तत्र वि
भूषितम् तत्राश्रमपदं दिव्यं ददर्श भगवानथ ५९

यइतिभावः ५३ ऋद्धिरुपचयस्तद्वान् ऋद्धिः संपत्तद्वान् ५४ कैरातं किरातवेषधारिणो म
हादेवस्य ५६ धरणीमवतीर्येत्यनेनाकाशमार्गेणाष्टावक्रो गच्छतीति गम्यते ५६ ५७ ५८ ५९ ६ ६ ६ ६ ६

६० ६१० ६२ ६३ ६४ ६५ ६६ ६७ सप्तइतरदिग्देवताः उत्तराधिष्ठात्रीतुदेवतामुख्याऽष्टमी ६८ ६९ ७० ७१ सैवज
रायुक्ता ७२ . ७३ प्रज्ञाता अत्यंतंज्ञानवती प्रशांतानिर्जितचित्ता ७४ ७५ ७६ . ७७ अर्थेतिअतिवृद्धयाअपिस्त्रियइयंगतिःकिमुवक्तव्यंयुवत्याअ

शैलांश्चविविधाकारान्कांचनान्रत्नभूषितान् मणिभूमौनिविष्टाश्चपुष्करिण्यस्तथैवच ६० अन्यान्यपिसुरम्याणिपश्यतःसुबहून्य
था भृशंतस्यमनोरेमेमहर्षेर्भावितात्मनः ६१ सतत्रकांचनंदिव्यंसर्वरत्नमयंगृहम् ददर्शाद्भुतसंकाशंधनदस्यगृहाद्वरम् ६२ महान्तो
यत्रविविधामणिकांचनपर्वताः विमानानिचरम्याणिरत्नानिविविधानिच ६३ मंदारपुष्पैःसंकीर्णांतथामंदाकिनींनदीम् स्वयंप्रभा-
श्चमणयोवज्रैर्भूमिश्चभूषिता ६४ नानाविधैश्चभवनैर्विचित्रमणितोरणैः मुक्ताजालविनिक्षिप्तैर्मणिरत्नविभूषितैः ६५ मनोदृष्टि
हरैरम्यैःसर्वतःसंवृतंशुभैः ऋषिभिश्चावृततत्रआश्रमंतंमनोहरम् ६६ ततस्तस्याभवच्चिंताकुत्रवासोभवेदिति अथद्वारंसमभि-
तोगत्वास्थितातत्रोब्रवीत् अतिथिंसमनुप्राप्तमभिजानंतुयेत्रवै ६७ अथकन्याःपरिवृतागृहात्तस्माद्विनिर्गताः नानारूपाःसप्तविभो
कन्याःसर्वामनोहराः ६८ यांयामपश्यत्कन्यांवैसासातस्यमनोहरा नचशक्तोवारयितुमनोस्याथावसीदति ६९ ततोधृतिःसमु-
त्पन्नातस्यविप्रस्यधीमतः अथतंप्रमदाःप्राहुर्भगवान्प्रविशत्विति ७० सचतासांसुरूपाणांतस्यैवभवनस्यहि कौतूहलसमावि-
ष्टःप्रविवेशगृहंद्विजः ७१ तत्रापश्यज्जरायुक्तामरजोंबरधारिणीम् वृद्धांपर्यंकमासीनांसर्वाभरणभूषिताम् ७२ स्वस्तीतितेनचै
वोक्तासास्त्रीप्रत्यवदत्तदा प्रत्युत्थायचतंविप्रमास्यतामित्युवाचह ७३ अष्टावक्रउवाच सर्वास्तानालयान्यांतुएकामासुप-
तिष्ठतु प्रज्ञाताया प्रशांतायाशेषागच्छंतु छंदतः ७४ ततःप्रदक्षिणीकृत्यकन्यास्तास्तमृषिंतदा निश्चक्रमुर्गृहात्तस्मात्सावृद्धा
थव्यतिष्ठत ७५ अथतांसंविशन्प्राहशयनेभास्वरेतदा त्वयापिसुप्यतांभद्रेरजनीह्यतिवर्तते ७६ संलापात्तेनविप्रेणतथा
सातत्रभाषिता द्वितीयेशयनेदिव्येसंविवेशमहाप्रभे ७७ अथसावेपमानांगीनिमित्तंशीतजंतदा व्यपदिश्यमहर्षेर्वैशयनंव्यवरोहत ७८
स्वागतेनागतांतांतुभगवानभ्यभाषत सोपागूहद्भुजाभ्यांतुऋषिंप्रीत्यानरर्षभ ७९ निर्विकारमृषिंचापिकाष्ठकुड्योपमंतदा दुःखिताप्रे
क्ष्यसंजल्पमकार्षीदृषिणासह ८० ब्रह्मन्नकामतोन्यास्तिस्त्रीणांपुरुषतोधृतिः कामेनमोहिताचाहंत्वांभजंतींभजस्वमाम् ८१ प्रहृ-
ष्टोभवविप्रर्षेसमागच्छमयासह उपगूहचमांविप्रकामार्त्ताहंभृशंत्वयि ८२

धैर्यमिति ७८ उपगूहत् आलिंगितवती ७९ ८० अकामतोनिच्छातःस्व
भावइत्यर्थः पुरुषतःपुरुषंप्राप्यस्त्रीणांधृतिर्धैर्यंअन्यापरकीयास्ति पुंयोगेस्त्रीणांधृतिःस्वकीयासर्वथानास्तीत्यर्थः ८१ उपगूहआलिंगस्व प्रहृष्टःकामुकोभव ८२

८३ ८४ ८५ ८६ ८७ ८८ ८९ अनभिज्ञोऽप्रीतिमान् ९० ९१ ९२ एकाग्रनिशीलेतिशेषः ९३ ९४ लीलायंत्यः लीलांरतिंआत्मनइच्छं-
त्यः अभाषतनैताइत्यादिसार्द्धश्लोकः ९५ एकाग्रः स्त्रीदोषान्अनुसंदधानःस्त्रियंप्रतिआस्यतांतूष्णींस्थीयतांरुचितःरुचिंप्राप्यच्छंदः इच्छाभवतीति अभा
षत त्वंरुचिज्ञामामिच्छसिअहंत्वद्रुचिज्ञोनत्वांस्प्रष्टुमिच्छामीतिभावः एवमपियत्कार्यंकर्त्तव्यंतद्वदतन्मेब्रवीहि ९६ द्रक्ष्यसेस्पर्शगुणज्ञास्यसे ९७

एताश्चूतवधश्चैवमत्तपुंसःपूज्यतांफलम् प्रार्थितदर्शनादेवभजमानांभजस्वमाम् ८३ मयचेदंधनंसर्वंयच्चान्यदपिपश्यसि प्रभुस्त्वंभवस
र्वत्रमयिचैवनसंशयः ८४ सर्वान्कामान्विधास्यामिरमस्वसहितोमया रमणीयेवनेविप्रसर्वकामफलप्रदे ८५ त्वद्वशाहंभविष्यामिरं
स्यसेचमयासह सर्वान्कामानुपाश्नामोयेदिव्यायेचमानुषाः ८६ नातःपरंहिनारीणांविद्यतेचकदाचन यथापुरुषसंसर्गःपरमेतद्धिनः
फलम् ८७ आत्मच्छंदेनवर्त्तंतेनार्योमन्मथचोदिताः नचदह्यंतिगच्छंत्यःसुतप्तैरपिपांसुभिः ८८ अष्टावक्रउवाच परदारान-
हंभद्रेनगच्छेयंकथंचन दूषितंधर्मशास्त्रज्ञैःपरदाराभिमर्शनम् ८९ भद्रेनिवेष्टुकामंमांविद्धिसत्येनवैशपे विषयेष्वनभिज्ञोहंधर्मार्थं
किलसंततिः ९० एवंलोकान्गमिष्यामिपुत्रैरितिनसंशयः भद्रेधर्मंविजानीहिज्ञात्वाचोपरमस्वह ९१ स्त्र्युवाच नानिलोऽग्निर्नव
रुणोनचान्येत्रिदशाद्विज प्रियाःस्त्रीणांयथाकामोरतिशीलाहियोषितः ९२ सहस्रेकिलनारीणांप्राप्येतैकाकदाचन तथाशतसहस्रेषु
यदिकाचित्पतिव्रता ९३ नैताजानंतिपितरंनकुलंनचमातरम् नभ्रातॄन्नचभर्त्तारंनचपुत्रान्नदेवरान् ९४ लीलायंत्यःकुलंघ्नंतिकूला
नीवसरिद्वराः दोषान्सर्वांश्चमत्वाशुप्रजापतिरभाषत ९५ भीष्मउवाच ततःसऋषिरेकाग्रस्तांस्त्रियंप्रत्यभाषत आस्यतांरुचितश्छं
दःकिंचकार्यंब्रवीहिमे ९६ सास्त्रीप्रोवाचभगवन्द्रक्ष्यसेदेशकालतः वसतावन्महाभागकृतकृत्योभविष्यसि ९७ ब्रह्मर्षिस्तामथोवाच
सतथेतियुधिष्ठिर वत्स्येहंयावदुत्साहोभवत्यानात्रसंशयः ९८ अथर्षिरभिसंप्रेक्ष्यस्त्रियंतांजरयार्द्दिताम् चिंतांपरमिकांभेजेसंतप्तइव
चाभवत् ९९ यद्यदंगंहिसोपश्यत्तस्याविप्रर्षभस्तदा नारमत्तत्रतत्रास्यदृष्टीरूपविरागिता १०० देवतेयंगृहस्यास्यशापात्किंनुविरूपि
तां अस्याश्चकारणंवेत्तुंनयुक्तंसहसामया १०१ इतिचिंताविषक्तस्यतमर्थंज्ञातुमिच्छतः व्यगच्छत्तदहःशेषंमनसाव्याकुलेनतु १०२
अथसास्त्रीतदोवाचभगवन्पश्यवैरवेः रूपंसंध्याभ्रसंरक्तंकिमुपस्थाप्यतांतव ३ सउवाचततस्तांस्त्रींस्नानोदकमिहानय उपासिष्येत-
तःसंध्यांवाग्यतोनियतेंद्रियः १०४ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेअष्टावक्रदिक्संवादेऊनविंशोऽध्यायः १९

रूपविरागितावैराग्यवतीदृष्टिर्नारमत् नरेमे १०० १०१ १०२ १०३ १०४ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायांऊनविंशोऽध्यायः १९

अथनास्त्रीत्यादेरध्यायस्यतात्पर्यंकुत्सितायाजायाअपिस्त्रियाःकरस्पर्शमात्रेणविरक्तोपिविज्ञानवानप्यवशकोऽतीतंकालंनबुबुधेकाकथायुवत्यांरतिरक्तानां मूढानांआसुरंभूमौतस्यंनदृतिं १ अभ्यमृक्षतअभ्यंजितवती २ उत्सादितःचालितः ३ ४ ५ नाजानात्नज्ञातवान् ६ ७ ८ नप्रभूतंचकारपूर्णमिनिनाभ्यवददित्यर्थःस्पर्शासक्तोगतांरात्रिमिवरात्र्यासक्तोगतंदिनमपिनाबुध्यतेतिभावः ९ १० ११ सेति स्वातंत्र्यान्मममनतवपारदार्यदोषोस्तीत्यर्थः धर्म-

भीष्मउवाच अथसास्त्रीतमुवाचबाढमेवंभवत्विति तैलंदिव्यमुपादायस्नानशाटीमुपानयत् १ अनुज्ञाताचमुनिनासास्त्रीतेनमहात्मना अथास्यतैलेनांगानिसर्वाण्येवाभ्यमृक्षत २ शनैश्चोत्सादितस्तत्रस्नानशालामुपागमत् भद्रासनंततश्चित्रंऋषिरन्वगमन्नवम् ३ अथोपविष्टश्चयदातस्मिन्भद्रासनेतदा स्नापयामासशनकैस्तमृषिंसुखहस्तवत् ४ दिव्यंचविधिवच्चक्रेसोपचारंमुनेस्तदा सतेनसुसुखोष्णेनतस्याहस्तसुखेनच ५ व्यतीतांरजनींकृत्स्नांनाजानात्समहाव्रतः ततउत्थायसमुनिस्तदापरमविस्मितः ६ पूर्वस्यांदिशिसूर्यंचसोपश्यदुदितंदिवि तस्यबुद्धिरियंकिंनुमोहस्तत्त्वमिदंभवेत् ७ अथोपास्यसहस्रांशुंकिंकरोमीत्युवाचताम् साचामृतरसप्रख्यंऋषेरन्नमुपाहरत् ८ तस्यस्वादुतयान्नस्यनप्रभूतंचकारसः व्यगमच्चाप्यहःशेषंततःसंध्यागमत्पुनः ९ अथसास्त्रीभगवतंसुप्यतामित्यचोदयत् तत्रवैशयनेदिव्येतस्यतस्याश्चकल्पिते १० पृथक्चैवतयासुप्तेसास्त्रीसचमुनिस्तदा तथार्धरात्रेसास्त्रीतुशयनंतदुपागमत् ११ अष्टावक्रउवाच नभद्रेपरदारेषुमनोमेसंप्रसज्जति उत्तिष्ठभद्रेभद्रंतेस्वपवैविरमस्वच ११ भीष्मउवाच सातदातेनविप्रेणतथातेननिवर्तिता स्वतंत्रास्मीत्युवाचर्षिंनधर्मच्छलमस्तिते १२ अष्टावक्रउवाच नास्तिस्वतंत्रतास्त्रीणामस्वतंत्राहियोषितः प्रजापतिमतंह्येतन्नस्त्रीस्वातंत्र्यमर्हति १३ स्त्रीउवाच बाधतेमैथुनंविप्रममभक्तिंचपश्यवै अधर्मंप्राप्स्यसेविप्रयन्मांत्वंनाभिनंदसि १४ अष्टावक्रउवाच हरंतिदोषजातानिनरंजातंयथेच्छकम् प्रभवामिसदाधृत्याभद्रेस्वंशयनंव्रज १५ स्त्रीउवाच शिरसाप्रणमेविप्रप्रसादंकर्तुमर्हसि भूमौनिपतमानायाःशरणंभवमेनघ १६ यदिवादोषजातंत्वंपरदारेषुपश्यसि आत्मानंस्पर्शयाम्यद्यपाणिंगृह्णीष्वमेद्विज १७ नदोषोभविताचैवसत्येनैतद्ब्रवीम्यहम् स्वतंत्रांमांविजानीहियोऽधर्मःसोस्तुवैमयि १८ त्वय्यावेशितचित्ताचस्वतंत्रास्मिभजस्वमाम् अष्टावक्रउवाच स्वतंत्रात्वंकथंभद्रेब्रूहिकारणमत्रवै नास्तित्रिलोकेस्त्रीकाचिद्यावैस्वातंत्र्यमर्हति १९

च्छलंपरपुरुषप्रलोभनं १२ नास्तीतिअप्रदत्तांत्वांनकामयेइत्यर्थः १३ १४ दोषाःकामक्रोधादयः यथेच्छकंस्वैरिणं १५ १६ १७ स्वतंत्रांआत्मप्रदानेइतिशेषः योधर्मःपाणिग्रहणादिसंस्कारःमयितन्निमित्तंसोस्तु १८ १९ ७ ७ ७ ७

२० विजह्मिमामानाशय २१ यथेति अहंआत्मदर्शनेनत्वांस्मरातुरांवेद्मि त्वमपिस्वदर्शनेनमांतथाभूतंविद्धीतिभावः तुभ्यंतवसंगमश्रद्धेतिउभयत्रशेषः किंतस्य मयाकन्यार्थिनाप्रार्थितस्यत्वत्कर्तृकाइयंजिज्ञासाममपरीक्षाकिमयंसाधुरसाधुर्वेतिउतकिंनेतिकाकुःविघ्नएवायंकिंनभवेत्अपितुविघ्नएवेत्यर्थः २२ विघ्नत्वमे वाहआश्चर्यमितिपूर्वंअतिजीर्णत्वेनदृष्टापुनःकन्येवदृश्यतइतिमायारूपमाश्चर्यम् २३ एतदेवाह किमिति अत्रअस्मिन्विषयेकिंउत्तरंश्रेष्ठतरंपूर्वंपरिगृही तस्यात्यागःउतएतस्याःस्वीकारःकर्तव्यइतिभावः २४ स्वमतमाह यथेति शक्तिःकामदमनसामर्थ्यंधृतिःपूर्वप्राप्तस्यात्यागःतदुभयंधृत्वानव्युत्थास्येअ-

पितारक्षतिकौमारेभर्त्तारक्षतियौवने पुत्राश्चस्थाविरेकालेनास्तिस्त्रीणांस्वतंत्रता २० स्त्र्युवाच कौमारंब्रह्मचर्यंमेकन्यैवास्मिन संशयः पत्नींकुरुष्वमाविप्रश्रद्धांविजह्मिमामम २१ अष्टावक्रउवाच यथाममतथातुभ्यंयथातुभ्यंतथामम जिज्ञासेयमृषेस्तस्य विघ्नःसत्यंनुकिंभवेत् २२ आश्चर्यंपरमंहीदंकिंतुश्रेयोहिमेभवेत् दिव्याभरणवस्त्राहिकन्येयंमामुपस्थिता २३ किंत्वस्याःपरमंरूप जीर्णमासीत्कथंपुनः कन्यारूपमिहाद्यैवंकिमिवात्रोत्तरंभवेत् २४ यथापरंशक्तिधृतेर्नव्युत्थास्येकथंचन नरोचतेहिव्युत्थानंसत्ये-
नासादयाम्यहम् २५ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेअष्टावक्रदिक्संवादेविंशोऽध्यायः २० युधिष्ठिरउवाच
नबिभेतिकथंसास्त्रीशापाच्चपरमद्युते कथंनिवृत्तोभगवांस्तद्भवान्प्रब्रवीतुमे १ भीष्मउवाच अष्टावक्रोऽन्वपृच्छत्तांरूपंविकुरु
षेकथम् नचानृतंतेवक्तव्यंब्रूहिब्राह्मणकाम्यया २ स्त्र्युवाच द्यावापृथिव्योर्यत्रैषाकाम्याब्राह्मणसत्तम शृणुष्वावहितःसर्वं
यदिदंसत्यविक्रम ३ जिज्ञासेयंप्रयुक्तामेस्थिरीकर्तुंत्वानघ अव्युत्थानेनतेलोकाजिताःसत्यपराक्रम ४ उत्तरांमांदिशंविद्धिदृष्टं
स्त्रीचापल्यंचते स्थविराणामपिस्त्रीणांबाधतेमैथुनज्वरः ५ तुष्टःपितामहस्तेद्यतथादेवाःसवासवाः सत्वंयेनचकार्येणसंप्राप्तोभग
वानिह ६ प्रेषितस्तेनविप्रेणकन्यांपित्राद्विजर्षभ तवोपदेशंकर्तुंवैतच्चसर्वंकृतंमया ७ क्षेमीगमिष्यसिगृहंश्रमश्चनभविष्यति कन्यांप्रा
प्स्यसितांविप्रपुत्रिणीचभविष्यति ८ काम्ययापृष्टवांस्त्वंवाततोव्याहृतंशुभंमम अनतिक्रमणीयासाकृत्स्नैर्लोकैस्त्रिभिःसदा ९

स्याःस्वीकारंनकरिष्ये व्युत्थानंधर्मातिक्रमं मह्यंनरोचतेकिंतुसत्येनासादयाम्यहं दारानितिशेषः २५ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायांविंशोऽध्या
यः २० नबिभेति १ विकुरुषेऽन्यथाऽन्यथाकरोषि ब्राह्मणकाम्यया ब्राह्मणंपानलिप्सया २ द्यावापृथिव्योःदिविपृथिव्यांचयत्रस्थीयतेतत्रएषाकाम्यास्त्रीपुंस
योःअन्योन्याभिलाषरूपाइच्छास्ति मोक्षादन्यन्ननिष्कामपदंनास्तीत्यर्थः ३ मेमया नकृत्वा ४ ५ ६ ७ ८ साकाम्याऽनतिक्रमणीया ९ ६ ७ ७

१० ऋषिणावदान्येन ११ १२ १३ १४ १५ १६ १७ १८ यथाहंऋषिकन्यामेवराजदेयंभवन्येवंस्त्रीमतामेवदेवंपित्र्यंचऋणमापतति स्त्रीमत्वंतु
कामकृतंचवैधमितिस्वभावेऽस्यापिऋणंनिभवतीतिप्रघट्टकार्थः १९ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायांएकविंशोऽध्यायः २१ एवंगार्हस्थ्य
हेतुकाममुक्त्वागृहस्थोचितान्दानधर्मान्वक्तुंप्रथेतुपात्रादिगुणान्पृच्छति किमित्यादिना ब्राह्मणंब्रह्मविदं लिंगिनंयतिब्रह्मचारिणंसन्यासिनंचदंडादिलिं
गवंतं १ स्ववृत्तिं जीवनार्थंस्वोचितांवृत्तिंअभिपन्नायशरणीकुर्वते लिंगीअलिंगीवास्वधर्मसेवीयःसएवतपस्वीपात्रंचेत्यर्थः २ स्वधर्मनिष्ठत्वंपात्रगुणमु-

गच्छस्वसुकृतंकृत्वाकिंचान्यच्छ्रोतुमिच्छसि यावद्ब्रवीमिविप्रर्षेअष्टावक्रयथातथम् १० ऋषिणाप्रसादिताचास्मित्वहेतोर्द्विजर्षभ न
स्वसंमाननार्थंमेत्वयिवाक्यंप्रभाषितम् ११ भीष्मउवाच श्रुत्वातुवचनंतस्याःसविप्रःप्रांजलिःस्थितः अनुज्ञातस्तयाचापिस्वगृहं
पुनराव्रजत् १२ गृहमागत्यविश्रांतःस्वजनंपरिपृच्छ्यच अभ्यगच्छत्ततोविप्रंन्यायतःकुरुनंदन १३ पृष्टश्चतेनविप्रेणदृष्टंत्वेतन्निदर्श
नम् प्राहविप्रस्तदाविप्रःसुप्रीतेनांतरात्मना १४ भवतासमनुज्ञातःप्रस्थितोगंधमादनम् तस्यचोत्तरतोदेशेदृष्टंमेदैवतंमहत् १५ तया
चाहमनुज्ञातोभवांश्चापिप्रकीर्त्तितः श्रावितश्चापितद्वाक्यंगृहंचाभ्यागतःप्रभो १६ तमुवाचतदाविप्रःसुतांप्रतिगृहाणमे नक्षत्रवि
धियोगेनपात्रंहिपरमंभवान् १७ भीष्मउवाच अष्टावक्रस्तथेत्युक्त्वाप्रतिगृह्यचतांप्रभो कन्यांपरमधर्मात्माप्रीतिमांश्चाभवत्त
दा १८ कन्यांतांप्रतिगृह्यैवभार्यांपरमशोभनाम् उवासमुदितस्तत्रस्वाश्रमेविगतज्वरः १९ इतिश्रीमहाभारतेआनुशासनिकेप
र्वणिदानधर्मेअष्टावक्रदिक्संवादेएकविंशोऽध्यायः २१ युधिष्ठिरउवाच किमाहुर्भरतश्रेष्ठपात्रंविप्राःसनातनाः ब्राह्मणंलिं-
गिनंचैवब्राह्मणंवाप्यलिंगिनम् १ भीष्मउवाच स्ववृत्तिमभिपन्नायलिंगिनेचेतरायच देयमाहुर्महाराजउभावेतौतपस्विनौ २
युधिष्ठिरउवाच श्रद्धयापरयापूतोयःप्रयच्छेद्द्विजातये हव्यंकव्यंतथादानंकोदोषःस्यात्पितामह ३ भीष्मउवाच श्रद्धा
पूतोनरस्तातदुर्दांतोपिनसंशयः पूतोभवतिसर्वत्रकिमुतत्वंमहाद्युते ४ युधिष्ठिरउवाच नब्राह्मणंपरीक्षेतदैवेषुसततंनरः क-
व्यप्रदानेतुबुधाःपरीक्ष्यंब्राह्मणंविदुः ५ भीष्मउवाच नब्राह्मणःसाधयतेहव्यंदैवात्प्रसिध्यति देवप्रसादादीज्यंतेयजमानैर्नसं
शयः ६

त्वाश्रद्धावत्त्वंदातृगुणमाहश्रद्धयेतिद्वाभ्यां अपूतोपिपरयाश्रद्धयायदिप्रयच्छतितर्हितस्यदातुरपूतत्वप्रयुक्तःकोदोषःस्यात्तंवद ३ श्रद्धे
ति श्रद्धैवास्यपूतत्वकरोतीत्यर्थः ४ नेति श्रद्धैवपूतत्वकर्त्रीचेत्कव्येपात्रपरीक्षानविधेयास्यादित्याशयः ५ देवानांसमृद्धोदैवात्श्रद्धादिभ्यइत्यर्थः ह
[illegible]

पित्र्यनुकल्पं ब्राह्मणानुग्रहादेव पूर्णं भवतीति तत्रानुग्रहकर्त्तारं तपोबलमावश्यकमित्याशयेनाह ब्राह्मणानिति लोकेषु पितृपितामहादिषु पूजनीयेषु ब्राह्मणे-
ष्वेव ब्राह्मण्यमस्तीति निविद्यादित्यर्थः अग्निमुखा वै देवाः पाणिमुखाः पितर इत्याश्वलायनोदाहृतश्रुतेः श्रौतस्मार्त्तः उदयो वाग्निः स्वनः शुद्धो देवांस्तर्पयति पा-
णिस्तु सत्कर्मवानेव पितॄंस्तर्पयितुं शक्नोति नान्यथेति कव्ये पात्रावश्यकी पात्रपरीक्षेति भावः ७ कथं केन हेतुना पृथ्व्यादीनां पंचानां पात्रत्वमिति प्रश्नार्थः ८ उत्त-
रे तु त्रयः अपूर्वः संबंधितपस्विनः कुलीनत्वादिगुणसमकयुक्ताश्च पात्रत्वं भजंते परिशेषात् यज्ञशीलविद्वांसौ कर्मकृद्वेद्यपदोदितौ कुलीनत्वादिगुणपंचकयुक्ता-
वेव एतेषां गुणानामभावे पात्रत्वं न कस्यापीत्यर्थः ९ एतदेवाशिष्टसंमत्या द्रढयति तत्रेति तेजसां तेजस्विनां सर्वज्ञानामिति यावत् १० नेष्टुः पांसुपिंडः त्रिभिरे-

ब्राह्मणानर्चतंश्रेष्ठ सततं ब्रह्मवादिनः मार्कंडेयः पुरा प्राह इति लोकेषु बुद्धिमान् ७ युधिष्ठिर उवाच अपूर्वोप्यथवा विद्वान् संबंधी वाथ यो भवेत् तपस्वी यज्ञशीलो वा कथं पात्रं भवेत्तु सः ८ भीष्म उवाच कुलीनः कर्मकृद्वैद्यस्तथैवाप्यानृशंस्यवान् ह्रीमानृजुः सत्यवादी पात्रं पूर्वे च ये त्रयः ९ तत्रेमं शृणु मे पार्थ चतुर्णां तेजसां मतम् पृथिव्याः काश्यपस्याग्नेर्मार्कंडेयस्य चैव हि १० पृथिव्युवाच यथा महार्णवे क्षिप्तः क्षिप्रं लोष्टुर्विनश्यति तथा दुश्चरितं सर्वं त्रिवृत्त्या च निमज्जति ११ काश्यप उवाच सर्वे च वेदाः सह षड्भिरं-गैः सांख्यं पुराणं च कुले च जन्म नैतानि सर्वाणि गतिर्भवंति शीलव्यपेतस्य नृप द्विजस्य १२ अग्निरुवाच अधीयमानः पंडितंमन्यमानो यो विद्यया हंति यशः परेषां भ्रश्यते सौ चरते न सत्यलोकास्तस्यैव ह्यनवतो भवति १३ मार्कंडेय उवाच अश्व-मेधसहस्रं च सत्यं च तुलया धृतम् नाभिजानामि यद्यस्य सत्यस्यार्धमवाप्नुयात् १४ भीष्म उवाच इत्युक्त्वा ते जग्मुराशु चत्वारो मिततेजसः पृथिवी काश्यपोग्निश्च प्रकृष्टायुश्च भार्गवः १५

यद्वनिः जीवनं यस्यां सा अब्राह्मी सा पत्तनस्यां त्रिवृत्त्वं याजनाध्यापनप्रतिग्रहैरेव जीवतीति यमहाशं एतेन कुलीनत्वं संगृहीतम् ११ ह्रीमत्त्वमृजुत्वं शीलपदेन संगृण्हाति
सर्वं चेति १२ आनृशंस्यं कर्मकृत्त्वं च गृण्हाति अधीयान इति मन्यं यज्ञादिकं अव्यभिचारितफलं कर्म न चरते न करोति १३ अश्वमेधेति सत्यसंग्रहः एतेषां गुणा-
नामेकतमस्याप्यभावे पात्रत्वं न भवतीति चतुर्णामपि मतम् ननु चत्वारि पृथगुक्तानि उपक्रमे तेजसां मतमित्येकवचनादेते च विसंवादादर्शनादिति भावः १४ १५ ७

व्रतिनः ब्रह्मचारिणः कथंतत्सुकृतमितितदीयव्रतनाशात्स्वीयश्राद्धंदुष्यतिनवेतिप्रश्नः १६ आदिष्टंद्वादशवर्षाणिब्रह्मचर्यंचरेरितिगुर्वादेशः तद्वंतः भोक्तुरेवव्रतं
लुप्यते नतुदातुरप्यत्यवेति अपितुकर्मनिष्ठास्तपोनिष्ठाः पंचाग्निब्रह्मचारिणः पितृमातृपराश्चैवब्राह्मणाःश्राद्धसंपद इतिव्रतस्थमपिदौहित्रंश्राद्धेयत्नेनभोज
येदितिचस्मरणात्पुण्यभागेवभवतीतिभावः एतेनश्राद्धादन्यत्रलोभादिप्रदर्शनेनपरव्रतनाशयतोदानेपिकिंचिद्वैगुण्यंजायतइतिगम्यते अतएवमनसापात्र-
मुद्दिश्यजलमध्येजलंक्षिपेत् दातातत्फलमाप्नोतिप्रतिग्राहीनदोषभागिति पात्रादरार्थंकल्पांतरंस्मर्यते नाप्येवंयुधिष्ठिरेणशंक्यमितिदिक् १७ अंतोनिष्ठा अ
नेकांतंअनेकफलाकारमित्यर्थः पात्रगुणानामनंतत्वात् केगुणाःनियमेनपात्रतायांनिमित्तंतानेवसंक्षेपेणब्रूहीतिप्रश्नार्थः १८ उत्तरमाहत्रिभिःअहिंसेति

युधिष्ठिरउवाच यदितेब्राह्मणालोकेव्रतिनोभुंजतेहविः दत्तंब्राह्मणकामायकथंतत्सुकृतंभवेत् १६ भीष्मउवाच आदिष्टिनोये
राजेंद्रब्राह्मणावेदपारगाः भुंजतेब्रह्मकामायव्रतलुप्तानवंतिते १७ युधिष्ठिरउवाच अनेकांतंबहुद्वारंधर्ममाहुर्मनीषिणः किंनि
श्चितंभवेदत्रतन्मेब्रूहिपितामह १८ भीष्मउवाच अहिंसासत्यमक्रोधआनृशंस्यंदमस्तथा आर्जवंचैवराजेंद्रनिश्चितंधर्मलक्षण
म् १९ येतुधर्मंप्रशंसंतश्चरंतिपृथिवीमिमाम् अनाचरंतस्तद्धर्मंसंकरेभिरताःप्रभो २० तेभ्योहिरण्यंरत्नंवागामश्वंवाददातियः दश
वर्षाणिविष्ठांसभुंक्तेनिरयमास्थितः २१ मेदानांपुल्कसानांचतथैवांतेवसायिनाम् कृतंकर्माकृतंवापिरागमोहेनजल्पताम् २२ वैश्वदे
वंचयेमूढाविप्रायब्रह्मचारिणे ददतेनेहराजेंद्रवलोकान्भुंजतेऽशुभान् २३ युधिष्ठिरउवाच किंपरंब्रह्मचर्यंचकिंपरंधर्मलक्ष
णम् किंचश्रेष्ठतमंशौचंतन्मेब्रूहिपितामह २४ भीष्मउवाच ब्रह्मचर्यात्परंतातमधुमांसस्यवर्जनम् मर्यादायांस्थितोधर्मःशम
श्चैवास्यलक्षणम् २५ युधिष्ठिरउवाच कस्मिन्कालेचरेद्धर्मंकस्मिन्कालेर्थमाचरेत् कस्मिन्कालेसुखीचस्यात्तन्मेब्रूहिपितामह २६
भीष्मउवाच कल्यमर्थंनिषेवेततत्तोधर्ममनंतरम् पश्चात्कामंनिषेवेतनचगच्छेत्प्रसंगिताम् २७ ब्राह्मणांश्चैवमन्येतगुरूंश्चाप्यभिपू
जयेत् सर्वभूतानुलोमश्चमृदुशीलःप्रियंवदः २८

२१ मेदानांसविष्ठांभुंक्तेइतिसंबंधः मेदानांगोमहिष्यादीनांमृतानांमांसभक्षिणः पुल्क
साःयेब्राह्मणादीनपिस्वभावादेवहिंसंति अंतेवसायिनश्चर्मकारादयः कृतमकृतंवापरकीयंपापंकर्मये प्रकाशयंतिब्राह्मणादयोपितेमेदादितुल्याएवेतितेषाम
पीतिपदार्थः २२ वैश्वदेवंतत्संबंधिनंहंतकारं ब्रह्मचारिणेइतिसंन्यासिनोप्युपलक्षणम् यतिश्चब्रह्मचारीचपक्वान्नस्वामिनावुभाविति स्मृतेः अशुभानिति-
च्छेदः २३ परंश्रेष्ठं २४ शमःविषयेभ्यइंद्रियाणांनिवृत्तिरेतदेवश्रेष्ठतरंशौचंधर्मस्यलक्षणंमर्यादांतर्गतम् २५ कल्यपूर्वाण्हे २६ २७ २८ ६७ ६७

२९ ३० ३१ ३२ ३३ ३४ ३५ षड्भ्यः अनुपदोक्तेः मधुमांसवर्जनमर्यादापालनशौचैः सहाध्ययनयागदानेभ्यः तान्यनुष्ठातुं प्रवृत्तस्त्वर्थैः
३६ ३७ ३८ नशोचतिप्रतिपादयन्. ३९ द्विजोत्तमः निर्दोषः एतेपूर्वोक्तागुणाश्चेत्तत्र यदिलभ्यन्तेतर्हितारयेत्तेनिकिमु ४० निशम्यज्ञात्वादूरदेशपात्रप्राप्तौ
समीपस्थस्याल्पगुणस्यातिक्रमेपिदोषोनास्तीनिभावः ४१ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायांद्वाविंशोऽध्यायः २२ ६२ श्राद्धेनिकालादौ

अधिकारेयदनृतंयच्चराजसुपैशुनम् गुरोश्चालीककरणंतुल्यंतद्ब्रह्महत्यया २९ प्रहरेन्ननरेन्द्रेषुनहन्याद्गांतथैवच भ्रूणहत्यासमंचैत
दुभयंयोनिषेवते ३० नाग्निंपरित्यजेज्जातुनचवेदान्परित्यजेत् नचब्राह्मणमाक्रोशेत्समंतद्ब्रह्महत्यया ३१ युधिष्ठिरउवाच
कीदृशाःसाधवोविप्राःकेभ्योदत्तंमहाफलम्. कीदृशानांचभोक्तव्यंतन्मेब्रूहिपितामह ३२. भीष्मउवाच अक्रोधनाधर्मपराःसत्य
नित्यादमेरताः तादृशाःसाधवोविप्रास्तेभ्योदत्तंमहाफलम् ३३ अमानिनःसर्वसहादृढार्थाविजितेन्द्रियाः सर्वभूतहितामैत्रास्तेभ्योद
त्तंमहाफलम् ३४ अलुब्धाःशुचयोवैद्याह्रीमन्तःसत्यवादिनः स्वकर्मनिरतायेचतेभ्योदत्तंमहाफलम् ३५ साङ्गांश्चचतुरोवेदानधीते
योद्विजर्षभः षड्भ्यःप्रवृत्तःकर्मभ्यस्तंपात्रमृषयोविदुः ३६ येत्वेवंगुणजातीयास्तेभ्योदत्तंमहाफलम् सहस्रगुणमाप्नोतिगुणार्हायप्र
दायकः ३७ प्रज्ञाश्रुताभ्यांवृत्तेनशीलेनचसमन्वितः तारयेतकुलंसर्वमेकोपीहद्विजर्षभः ३८ गामश्वंवित्तमन्नंवातद्विधेप्रतिपादये
त् द्रव्याणिचान्यानितथाप्रेत्यभावेनशोचति ३९ तारयेत्तत्कुलंसर्वमेकोपीहद्विजोत्तमः किमङ्गपुनरेवैतेतस्मात्पात्रंसमाचरेत् ४०
निशम्यचगुणोपेतंब्राह्मणंसाधुसंमतं दूरादानाय्यसत्कृत्यसर्वतश्चापिपूजयेत् ४१ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदान-
धर्मेबहुप्राश्निकेद्वाविंशोऽध्यायः २२ युधिष्ठिरउवाच श्राद्धकालेचदैवेचपित्र्येपिचपितामह इच्छामीहत्वयाख्यातंविहितंय-
त्सुरर्षिभिः १ भीष्मउवाच दैवंपूर्वाण्हिकुर्यादपराण्हेतुपैतृकम् मङ्गलाचारसंपन्नःकृतशौचःप्रयत्नवान् २ मनुष्याणांतु
मध्यान्हेप्रदद्यादुपपत्तिभिः कालहीनंतुयद्दानंतंभागंरक्षसांविदुः ३ लङ्घितंचावलीढंचकलिपूर्वंचयत्कृतम् रजस्वलाभिर्दृष्टंचतंभा
गंरक्षसांविदुः ४ अवघुष्टंचयद्भुक्तमव्रतेनचभारत परामृष्टंशुनाचैवतंभागंरक्षसांविदुः दुरात्मनाचयद्भुक्तंतंभागंरक्षसांविदुः
५ केशकीटावपतितंक्षुतंश्वभिरवेक्षितम् रुदितंचावधूतंचभागंतंरक्षसांविदुः ६ निरोंकारेणयद्भुक्तंसशस्त्रेणचभारत दुरात्मना
चयद्भुक्तंतंभागंरक्षसांविदुः ७ परोच्छिष्टंचयद्भुक्तंपरिभुक्तंचयद्भवेत् दैवेपित्र्येचसततंतंभागंरक्षसांविदुः ८

विहितंविशेषमितिशेषः १
२ उपपत्तिभिःआदरादिभिर्युक्तःसन् ३ ४. ५ क्षुतंक्षुतेनदूषितं ६ निरोंकारेणअनंगुज्ञातेनशूद्रेणवा ७ परिभुक्तंदेवातिथिपितृबालकादीनवर्जयित्वा
भुक्तंस्तेनेववा ८ ६७

९ आज्याहुतिर्घृताभिघारणं विना १० विसर्गस्य ब्राह्मणे दानस्य पात्रम्भूते ११ पतिताः महापातकेन जातिबहिर्भूताः केतनं निमंत्रणम् १२ श्वित्री श्वेतकुष्ठी कुष्ठी मंडल कुष्ठी यक्ष्महतो महारोगी अपस्मारी ग्रहग्रस्तः १३ देवलकाः देवार्चनवृत्तिजीविनः वृथानियमं धारिणो दंभवंतः १४ प्लवकाः कूर्दनपराः कथकाः वृथालापिनः योधकाः मल्लाः १५ वृषलानां शूद्राणां होतारो याजकाः वृषलशिष्याः शूद्रदासाः १६ अनुयोक्ता भृतकाध्यापकः अनुयुक्तः भृतकाध्येता १७ वर्णावरपरिग्रहः शूद्रापतिः १८ अनग्नयः श्रौतस्मार्त्तकर्मरहिताः ये वा पेताः स्वकर्मभ्यः स्तेनास्ते पतिताः जिनुः कर्मणा देहदोषेश्च योनितश्चैव कुत्सिताः पतितांस्तान्विजानीयान्महापातकिन श्चयेइति स्तेन पतितो नोयमोक्तो वा ग्राह्यो १९ गणपूर्वया गणयः पुत्रिकापूर्वपुत्राः अस्यामुत्पन्नः पुत्रो मदीय इति नियमेन या दीयते तस्यां च यो जातः स पुत्रिकापूर्वपु-

मंत्रहीनं क्रियाहीनं यच्छ्राद्धं परिविश्यते त्रिभिर्वर्णैर्नरश्रेष्ठ तं भागं रक्षसां विदुः ९ आज्याहुतिं विना चैव यत्किंचित्परिविश्यते दुराचारैश्च यद्भुक्तं तं भागं रक्षसां विदुः १० ये भागा रक्षसां प्रोक्तास्त उक्ता भरतर्षभ. अत ऊर्ध्वं विसर्गस्य परीक्षां ब्राह्मणे शृणु ११ यावंतः पतिता वि-प्राजडोन्मत्तास्तथैव च दैवे वाप्यथ पित्र्ये वा राजन्नार्हंति केतनम् १२ श्वित्री क्लीबश्च कुष्ठी च तथा यक्ष्महतश्च यः अपस्मारी च यश्चापि धारा जन्नार्हंति केतनम् १३ चिकित्सका देवलका वृथानियमधारिणः सोमविक्रयिणश्चैव राजन्नार्हंति केतनम् १४ गायना नर्त्तकाश्चैव प्लव कावादकास्तथा कथका योधकाश्चैव राजन्नार्हंति केतनम् १५ होतारो वृषलानां च वृषलाध्यापकास्तथा तथा वृषलशिष्याश्च राजन्ना र्हंति केतनम् १६ अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिणो हि तौ १७ अग्रणीर्यः कृतः पूर्वं वर्णावरप-रिग्रहः ब्राह्मणः सर्वविद्योपि राजन्नार्हंति केतनम् १८ अनग्नयश्च ते विप्रा मृतनिर्यातकाश्च ये स्तेनाश्च पतिताश्चैव राजन्नार्हंति केतनम् १९ अपरिज्ञातपूर्वाश्च गणपूर्वाश्च भारत पुत्रिकापूर्वपुत्राश्च श्राद्धे नार्हंति केतनम् २० ऋणकर्त्ता च यो राजन्यश्च वार्धुषिको नरः प्राणिवि क्रयवृत्तिश्च राजन्नार्हंति केतनम् २१ स्त्रीपूर्वाः कांडपृष्ठाश्च यावंतो भरतर्षभ अजपा ब्राह्मणाश्चैव श्राद्धे नार्हंति केतनम् २२ श्राद्धे दैवे च नि र्दिष्टो ब्राह्मणो भरतर्षभ दातुः प्रतिग्रहीतुश्च शृणुष्वानुग्रहं पुनः २३ चीर्णव्रता गुणैर्युक्ता भवेयुर्येपि कर्षकाः सावित्रीज्ञाः क्रियावंतस्ते राजन्के तनक्षमाः २४

त्रः सपितृगोत्राद्धृष्टो मातृगोत्रोपजीवित्वान्निंद्यः २० ऋणकर्त्ता वृद्ध्यर्थं धनप्रयोक्ता कुसीदी नामा वार्धुषिकः समर्घं धान्यमादाय महर्घ्यं यः प्रयच्छति सर्वे वा-र्धुषिको नाम हव्यकव्यबहिष्कृत इति स्मृतिप्रसिद्धः २१ स्त्रीपूर्वाः स्त्रीजिताः स्त्रीपण्योपजीविनो वा कांडपृष्ठो वेश्यापतिः कांडपृष्ठः सद्भिरेव निगद्यत इति यमेन व्याख्यातः अजपाः संध्यावंदनहीनाः २२ अनुग्रहं निषिद्धानामपि केनचिद्गुणेनाभ्यनुज्ञानम् २३ २४ ७ ७ ७ ७ ७

वणिजंवणिग्वृत्तिम् २५ २६ २७ उदितः आद्यः अस्तमितः दरिद्रः पूर्वाह्णेलाभकालेआद्यः सद्यस्तस्यव्ययेदरिद्रः एवंप्रातर्लाभकालेऽस्तमितःमध्याह्नेला
भेसतिउदितः अल्पदोषोविद्वत्त्वादिविशेषगुणरहितः अदाता २८ अकल्ककः अदांभिकः अपापोवाऽकल्कःपापेचदंभेचेतिकोशः अकल्पकइतिपाठेस्वेच्छया-
धर्माधर्मकल्पकः अतर्कोभैक्षुकः शुष्कतर्कपरःसंसर्गेसंगत्यर्हेगृहेज्ञातेभैक्ष्यवृत्तिः २९ कितवोधूर्तः ३० सर्वदेवतादिकंअतिथिरेवयस्यसःसर्वातिथिः ३१
ब्रह्मवेदः क्लैब्यात्तदैन्यभाषणेनमिथ्याशपथादिनावा ३२ अपवर्गेश्राद्धसमाप्तौ क्रियमाणदक्षिणापातेऽर्च्यमानःपृष्टःअस्तुस्वधेत्यादिवचनं गवानृतंअनृतगोश
पथस्यपापम् ३३ सोमक्षयोदर्शः आरण्यंमृगादिमांसंचयदाश्रान्तदैवश्राद्धस्यकाल ३४ स्वधोच्यतामितिप्रदात्राउक्तेअस्तुस्वधेतिब्राह्मणोवदेत् एवमुत्तरं

क्षात्रधर्मेणयःप्राज्ञोकेतयेत्कुलजोद्विजः नलेववणिजतातश्राद्धेचपरिकल्पयेत् २५ अग्निहोत्रीचयोविप्रोग्रामवासीचयोभवेत् अस्तेन
श्चातिथिज्ञश्चसराजन्केतनक्षमः २६ सावित्रींजपतेयस्तुत्रिकालंभरतर्षभ भिक्षावृत्तिःक्रियावांश्चसराजन्केतनक्षमः २७ उदितास्तमि
तोयश्चतथैवास्तमितोदितः अहिंस्रश्चाल्पदोषश्चसराजन्केतनक्षमः २८ अकल्ककोह्यतर्कश्चब्राह्मणोभरतर्षभ संसर्गेभैक्ष्यवृत्तिश्च
सराजन्केतनक्षमः २९ अव्रतीकितवःस्तेनःप्राणिविक्रयिकोवणिक् पश्चाच्चपीतवान्सोमंसराजन्केतनक्षमः ३० अर्जयित्वाधनंपूर्वंदा
रुणैरपिकर्मभिः भवेत्सर्वातिथिःपश्चात्सराजन्केतनक्षमः ३१ ब्रह्मविक्रयनिर्दिष्टंस्त्रियायच्चार्जितंधनम् अदेयंपितृविप्रेभ्योयच्चक्लै
ब्यादुपार्जितम् ३२ क्रियमाणेपवर्गेचयोद्विजोभरतर्षभ नव्याहरतियद्युक्तंतस्याधर्मोगवानृतम् ३३ श्राद्धस्यब्राह्मणःकालःप्राप्तं
दधिघृतंतथा सोमक्षयश्चमांसंचयदारण्यंयुधिष्ठिर ३४ श्राद्धापवर्गेविप्रस्यस्वधावैमुदिताभवेत् क्षत्रियस्यापियोब्रूयात्प्रीयतांपि
तरस्त्विति ३५ अपवर्गेतुवैश्यस्यश्राद्धकर्मणिभारत अक्षय्यमभिधातव्यंस्वस्तिशूद्रस्यभारत ३६ पुण्याहवाचनंदैवंब्राह्मणस्यविधी
यते एतदेवनिरोंकारंक्षत्रियस्यविधीयते ३७ वैश्यस्यदैवेवक्तव्यंप्रीयन्तांदेवताइति कर्मणामानुपूर्व्येणविधिपूर्वंकृतंशृणु ३८ जातक
र्मादिकान्सर्वांस्त्रिषुवर्णेषुभारत ब्रह्मक्षत्रेहिमन्त्रोक्तावैश्यस्यचयुधिष्ठिर ३९ विप्रस्यरशनामौञ्जीमौर्वीराजन्यगामिनी बाल्वजीन्येव
वैश्यस्यधर्मएषयुधिष्ठिर

तत्र मुदिताप्रीतिकरीपितृणामित्यर्थात् ३५ ३६ पुण्येति पुण्याहंभवन्तोब्रुवन्त्वितियजमानेनप्रोक्ते ॐपुण्याहमस्त्वि
तिब्राह्मणाःब्रूयुः दैवंसोंकारं ३७ दैवेओंकारस्थाने प्रीयन्तांदेवताःपुण्याहमस्त्वितिक्षत्रियवदेदित्यर्थः कृतंक्रियाअनुष्ठानक्रममितियावत् वैश्यस्यचमन्त्रोक्ताः
न्यनुषंगः ३८ ३९ रशनामेखला मौञ्जीमुञ्जमयी मौर्वीधनुर्ज्या बाल्वजीबल्वजस्तृणविशेषस्तन्मयी ४० ६ ६ ६ ६

धर्मोदातुः अधर्मः प्रतिगृहीतुरितिनावुभौश्रृणु तत्राधर्ममेवसामान्यतंआह ब्राह्मणस्येति एककार्षापणार्थेअनृतवक्तुर्ब्राह्मणस्ययावानधर्मोभवतिसएवचतुर्गुणःक्ष
त्रियस्याष्टगुणोवैश्यस्यतावन्मात्रार्थेभवतीत्यर्थः सार्द्धश्लोकः ४१ नैतिय पूर्वस्यनिमंत्रयितुरशनानिसज्यायान् परस्याशननयवीयान् तत्रब्राह्मणेनकेतितः सन्
यदियवीयान्भक्तेर्हिस्याप्रशहिंसायाः पूर्णपापप्राप्नुयात् क्षत्रियादिनाकेतितःसन्यदियवीयान्स्यमत्तर्हिनूयापशहिंसायाअर्द्धपापप्राप्नुयादितिश्लोकद्वयार्थः
४२ ४३ ४४ आशौचःजननमरणाशौचवान् ४५अर्थिनप्रयोजनेनतीर्थयात्राव्यपदेशेनजीविकाद्यर्थीयोधनंलिप्सेत्योवाकर्मार्थेमेभिक्षांदेहीत्यामंत्रयति-
दातारमभिमुखीकरोतितस्यापिअनृतंगवामृतमेवस्मृतम् ४६ वेदव्रतंचारित्रंचयेषांनास्तितेयेनमंत्रवत्मंत्रयुक्तंयथास्यात्तथाश्राद्धेपरिविश्यंतेतस्य ४७ ४८

दातुःप्रतिगृहीतुश्चधर्माधर्माविमौश्रृणु ब्राह्मणस्यानृतेधर्मःप्रोक्तःपातकसंज्ञितः चतुर्गुणःक्षत्रियस्यवैश्यस्याष्टगुणःस्मृतः ४१ नान्य
त्रब्राह्मणोश्नीयात्पूर्वंविप्रेणकेतितः यवीयान्पशहिंसायांतुल्यधर्मोभवेत्सहि ४२ तथाराजन्यवैश्याभ्यायद्यश्नीयात्तुकेतितः यवीयान्
पशहिंसायांभागार्द्धसमवाप्नुयात् ४३ दैवंवाप्यथवापित्र्यंयोश्नीयाद्ब्राह्मणादिषु अस्नातोब्राह्मणोराजस्तस्याधर्मोगवानृतम् ४४ आ
शौचोब्राह्मणोराजन्योश्नीयाद्ब्राह्मणादिषु ज्ञानपूर्वमथोलोभात्तस्याधर्मोगवानृतम् ४५ अर्थेनान्येनयोलिप्सेतकर्मार्थंचैवभारत आम
न्त्रयतिराजेंद्रतस्याधर्मोनृतंस्मृतम् ४६ अवेदव्रतचारित्रास्त्रिभिर्वर्णैर्युधिष्ठिर मंत्रवत्परिविश्यंतेतस्याधर्मोगवानृतम् ४७ युधिष्ठि
रउवाच पित्र्यंवाप्यथवादैवंदीयतेयत्पितामह एतदिच्छाम्यहंज्ञातुंदत्तंकेषुमहाफलम् ४८ भीष्मउवाच येषांदाराःप्रतीक्षंते
सुवृष्टिमिवकर्षकाः उच्छेषपरिशेषंहितान्भोजययुधिष्ठिर ४९ चारित्रनिरताराजन्येकृशाःकृशवृत्तयः अर्थिनश्चोपगच्छंतितेषुदत्तं
महाफलम् ५० तद्भक्तास्तद्गृहाराजंस्तद्बलास्तदपाश्रयाः अर्थिनश्चभवंत्यर्थेतेषुदत्तंमहाफलम् ५१ तस्करेभ्यःपरेभ्योवायेभयार्त्तायु
धिष्ठिर अर्थिनोभोक्तुमिच्छंतितेषुदत्तंमहाफलम् ५२ अकल्ककस्यविप्रस्यरौक्ष्यात्करकृतात्मनः बटवोयस्यभिक्षंतितेभ्योदत्तंमहाफ
लम् ५३ हृतस्वाहृतदाराश्चयेविप्रादेशसंप्लवे अर्थार्थमभिगच्छंतितेभ्योदत्तंमहाफलम् ५४

भोजनपात्रेऽवशिष्टमुच्छेषःतेनसहितंपरिशेषंस्थाल्या
मवशिष्टंप्रतीक्षंते येषांपाकस्थल्यामेवधान्यादिकमस्तिनकुसूलादौतान्भोजय ४९ ५० तद्भक्ताःचारित्रमेवभक्तोऽन्नंनहृज्जीवनंयेषांते तद्गृहाःतदेवगृहंस्था
नंयेषांते बलइहलोकेदोषाभिभवसामर्थ्यं अपाश्रयःपरलोकगमनालंबनम् अर्थेप्रयोजनेसत्येवार्थिनोभवंतिनसंग्रहार्थं ५१ ५२ रौक्ष्यात्दारिद्र्यात् क
रेकृतःआत्मैवात्मार्जवनमन्नं हस्तेगृहीतान्नस्यबटवःक्षुधार्त्ताःमन्द्यंदेहिमन्द्यंदेहीतियाचंतेतेभ्योऽतिदरिद्रेभ्यः ५३हृतेतिपाठेपिकृतंहिंसितंदूरीकृतंहृतमित्येवार्थः
५४

५५ चः पादपूरणार्थः पाखंडानां समयो मर्यादा येषु धर्मेषु तिन्तत्र अत्युत्क्रांता अत्यंतं ततो दूरे स्थिताः ५६ भुक्तान्नमेव स्पृहयंति न स्वादं अतएव न चतुर्थी स्वादुत्वेनानीप्सितत्वादन्नस्य किंतु गर्त्तापूरणं यथा कथंचित्कर्त्तव्यं तत्रान्नमयमेवेश्वरेणं कर्त्तव्यमित्याशय वंतइत्यर्थः ५७ ५८ ५९ अभयार्थं भयनिवृत्तिरूपं प्रयोजनम् ६० अभिमर्षिणो जाराः प्रयोक्तारः दूत्ये भिमर्षिणो दूताः ६१ परेषां दोषस्येति शेषः ६२ ६३ ६४ आशायाश्छेदमित्येकदेशानुषंगः कुर्वंतीति शेषः ६५ सूचकाः राजगामि पैशून्यवादिनः सेतुः आर्यमर्यादा ६६ पाखंडाः वेदविरोधिनः शाक्यादयः दूषकाः सतां निंदकाः समयानां धर्मसंकेतानां प्रत्यवसिताः

व्रतिनो नियमस्थाश्च ये विप्राः श्रुतसम्मताः तत्समाप्त्यर्थमिच्छंति तेभ्यो दत्तं महाफलम् ५५ अत्युत्क्रांताश्च धर्मेषु पाखंडसमयेषु च कृशप्राणाः कृशधनास्तेभ्यो दत्तं महाफलम् ५६ कृतसर्वस्वहरणा निर्दोषाः प्रभविष्णुभिः स्पृहयंति च भुक्तान्नं तेषु दत्तं महाफलम् ५७ तपस्विनस्तपोनिष्ठास्तेषां भैक्षचराश्च ये अर्थिनः किंचिदिच्छंति तेषु दत्तं महाफलम् ५८ महाफलविधिर्दाने श्रुतस्ते भरतर्षभ निरयं येन गच्छंति स्वर्गं चैव हि तच्छृणु ५९ गुर्वर्थमभयार्थं वा वर्जयित्वा युधिष्ठिर येऽनृतं कथयंति स्म ते वै निरयगामिनः ६० परदाराभिहर्त्तारः परदाराभिमर्षिणः परदारप्रयोक्तारस्ते वै निरयगामिनः ६१ ये परस्वापहर्त्तारः परस्वानां च नाशकाः सूचकाश्च परेषां ये ते वै निरयगामिनः ६२ प्रपाणां च सभानां च संक्रमाणां च भारत अगाराणां च भेत्तारो नरा निरयगामिनः ६३ अनाथां प्रमदां बालां वृद्धां भीतां तपस्विनीम् वंचयंति नरा ये च ते वै निरयगामिनः ६४ वृत्तिच्छेदं गृहच्छेदं दारच्छेदं च भारत मित्रच्छेदं तथाशायास्ते वै निरयगामिनः ६५ सूचकाः सेतुभेत्तारः परवृत्त्युपजीवकाः अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ६६ पाखंडा दूषकाश्चैव समयानां च दूषकाः ये प्रत्यवसिताश्चैव ते वै निरयगामिनः ६७ विषमव्यवहाराश्च विषमाश्चैव वृद्धिषु लाभेषु विषमाश्चैव ते वै निरयगामिनः ६८ द्यूतसंव्यवहाराश्च निष्परीक्षाश्च मानवाः प्राणिहिंसाप्रवृत्ताश्च ते वै निरयगामिनः ६९ कृताशं कृतनिर्देशं कृतभक्तं कृतश्रमम् भेदैर्ये व्यपकर्षंति ते वै निरयगामिनः ७० पर्यश्नंति च ये दारानग्निभृत्यातिथींस्तथा उत्सन्नपितृदेवेज्यास्ते वै निरयगामिनः ७१ वेदविक्रयिणश्चैव वेदानां चैव दूषकाः वेदानां लेखकाश्चैव ते वै निरयगामिनः ७२ चातुराश्रम्यबाह्याश्च श्रुतिबाह्याश्च ये नराः विकर्मभिश्च जीवंति ते वै निरयगामिनः ७३

आरूढपतिताः ६७ विषमाः जनविरोधिनो व्यवहारादयो येषां ते ६८ ६९ कृताशं दास्यं प्रार्थनया निर्देशं तुभ्यमिदं दास्यामीति प्रतिज्ञा सा कृता यस्मै इति समासः भक्तं वेतनम् व्यपकर्षंति पत्युः सकाशाद्दूरीकुर्वंति ७० पर्यश्नंति परित्यज्याश्नंति ७१ ७२ विकर्मभिः स्वस्य निषिद्धैः कर्मभिः ७३ ७ ७ ७ ७

केशाद्याभरकंबलादय ७४ अंतरयांतिअंतगयाभवंति ७५ कर्त्तारः शस्त्रशल्यादीनां ७६ ७७ ७८ अप्राप्त अदांतः प्राप्तं लब्धे समंजसेइतिमेदिनी पशूनां युगेनगोण्याअंडमर्दनेनवाबल्वीर्ययोर्नाशकाअप्राप्तदमकाः ७९ ८० ८१ ८२ ८३ सर्वेष्वितियेब्राह्मणातिक्रमंनकुर्वंतितेस्वर्गगामिनइत्यर्थः ८४

केशविक्रयिकाराजन्विषविक्रयिकाश्चये क्षीरविक्रयिकाश्चैवतेवैनिरयगामिनः ७४ ब्राह्मणानांगवांचैवकन्यानांचयुधिष्ठिर येंतरयां-
तिकार्येषुतेवैनिरयगामिनः ७५ शस्त्रविक्रयिकाश्चैवकर्त्तारश्चयुधिष्ठिर शल्यानांधनुषांचैवतेवैनिरयगामिनः ७६ शिलाभिःशंकुभिर्वा
पिश्वभ्रैर्वाभरतर्षभ येमार्गमनुरुंधंतितेवैनिरयगामिनः ७७ उपाध्यायांश्चभृत्यांश्चभक्तांश्चभरतर्षभ येत्यजंत्यविकारांस्त्रींस्तेवैनिरयगा
मिनः ७८ अप्राप्तदमकाश्चैवनासानांवेधकाश्चये बंधकाश्चपशूनांयेतेवैनिरयगामिनः ७९ अगोप्तारश्चराजानोबलिषड्भागतस्कराः स
मर्थाश्चाप्यदातारस्तेवैनिरयगामिनः ८० क्षांतान्दांतांस्तथाप्राज्ञान्दीर्घकालंसहोषितान् त्यजंतिकृतकृत्यायेतेवैनिरयगामिनः ८१
बालानामथवृद्धानांदासानांचैवयेनराः अदत्त्वाभक्षयंत्यग्रेतेवैनिरयगामिनः ८२ एतेपूर्वंविनिर्दिष्टाःप्रोक्तानिरयगामिनः भागिनःस्वर्ग
लोकस्यवक्ष्यामिभरतर्षभ ८३ सर्वेष्वेवतुकार्येषुदैवपूर्वेषुभारत हंतिपुत्रान्पशून्कृत्स्नान्ब्राह्मणातिक्रमःकृतः ८४ दानेनतपसाचैव
सत्येनचयुधिष्ठिर येधर्ममनुवर्त्तंतेतेनराःस्वर्गगामिनः ८५ शुश्रूषाभिस्तपोभिश्चविद्यामादायभारत येप्रतिग्रहनिःस्नेहास्तेनराःस्व
र्गगामिनः ८६ भयात्पापात्तथाबाधाद्दारिद्र्याद्व्याधिधर्षणात् यत्कृतेप्रतिमुच्यंतेतेनराःस्वर्गगामिनः ८७ क्षमावंतश्चधीराश्चधर्मका
र्येषुचोत्थिताः मंगलाचारसंपन्नाःपुरुषाःस्वर्गगामिनः ८८ निवृत्तामधुमांसेभ्यःपरदारेभ्यएवच निवृत्ताश्चैवमद्येभ्यस्तेनराःस्वर्गगा
मिनः ८९ आश्रमाणांचकर्त्तारःकुलानांचैवभारत देशानांनगराणांचतेनराःस्वर्गगामिनः ९० वस्त्राभरणदातारोभक्तपानान्नदास्त-
था कुटुंबानांचदातारःपुरुषाःस्वर्गगामिनः ९१ सर्वहिंसानिवृत्ताश्चनराःसर्वसहाश्चये सर्वस्याश्रयभूताश्चतेनराःस्वर्गगामिनः ९२
मातरंपितरंचैवशुश्रूषंतिजितेंद्रियाः भ्रातृणांचैवसस्नेहास्तेनराःस्वर्गगामिनः ९३ आढ्याश्चबलवंतश्चयौवनस्थाश्चभारत येवैजि
तेंद्रियाधीरास्तेनराःस्वर्गगामिनः ९४ अपराधेषुसस्नेहामृदवोमृदुवत्सलाः आराधनसुखाश्चापिपुरुषाःस्वर्गगामिनः ९५ सहस्र
परिवेष्टारस्तथैवचसहस्रदाः त्रातारश्चसहस्राणांतेनराःस्वर्गगामिनः ९६ सुवर्णस्यचदातारोगवांचभरतर्षभ यानानांवाहनानांच-
तेनराःस्वर्गगामिनः ९७ वैवाहिकानांद्रव्याणांप्रेष्याणांचयुधिष्ठिर दातारोवाससांचैवतेनराःस्वर्गगामिनः ९८

८५ ८६ आबाधात् संकटात् ८७ ८८
मधुसौद्रं ८९ कर्त्तारःपालनकर्त्तारः ९० कुटुंबानांदातारः ९१ ९२ ९३ ९४आराधनेनइतरानसुखयंतितेतथा ९५ ९६ ९७ द्रव्याणांवस्त्रालंकारादीनांप्रेष्याणांदासीदासानां
९८

इतिश्रीमहाभारते आनुशासनिके पर्वणि टीकायां सप्तपंचाशत्तमोऽध्यायः ५७ १ यस्यांभूमौ आरामतडागानांचकर्त्तव्यतातांभूमिमाह सुप्रदर्शेति सुभदर्श
नीयाभूमिरितिपरेणान्वयः सुप्रदृश्याबलवतीतिपाठः अर्थाच्चबलवतीयाभूमिस्तस्यांआरामस्यातिसंभवात् २ ३ ४ ५ ६ चतुर्विधानांजरायुजो-

इतिश्रीमहाभारते आनुशासनिके पर्वणि दानधर्मे सप्तपंचाशत्तमोऽध्यायः ५७ युधिष्ठिरउवाच आरामाणांतडागानांयत्फलंकुरुपुं
गव तदहंश्रोतुमिच्छामित्वत्तोद्यभरतर्षभ १ भीष्मउवाच सुप्रदर्शाबलवतीचित्राधातुविभूषिता उपेतासर्वभूतैश्चश्रेष्ठाभूमिरि
होच्यते २ तस्याःक्षेत्रविशेषाश्चतडागानांचबंधनम् औदकानिचसर्वाणिप्रवक्ष्याम्यनुपूर्वशः ३ तडागानांचवक्ष्यामिकृतानांचापियेगु
णाः त्रिषुलोकेषुसर्वत्रपूजनीयस्तडागवान् ४ अथवामित्रसदनंमैत्रंमित्रविवर्द्धनम् कीर्त्तिसंजननंश्रेष्ठंतडागानांनिवेशनम् ५ धर्मस्या
र्थस्यकामस्यफलमाहुर्मनीषिणः तडागःसुकृतंदेशेक्षेत्रमेकंमहाश्रयम् ६ चतुर्विधानांभूतानांतडागमुपलक्षयेत् तडागानिचसर्वाणि-
दिशंतिश्रियमुत्तमाम् ७ देवामनुष्यगंधर्वाःपितरोरगराक्षसाः स्थावराणिचभूतानिसंश्रयंतिजलाशयम् ८ तस्मात्तांस्तेप्रवक्ष्यामितडागे
येगुणाःस्मृताः याचतत्रफलावाप्तिर्ऋषिभिःसमुदाहृता ९ वर्षाकालेतडागेतुसलिलंयस्यतिष्ठति अग्निहोत्रफलंतस्यफलमाहुर्मनीषिणः
१० शरत्कालेतुसलिलंतडागेयस्यतिष्ठति गोसहस्रस्यसप्रेत्यलभतेफलमुत्तमम् ११ हेमंतकालेसलिलंतडागेयस्यतिष्ठति सवैबहुसुव-
र्णस्ययज्ञस्यलभतेफलम् १२ यस्यवैशैशिरेकालेतडागेसलिलंभवेत् तस्याग्निष्टोमयज्ञस्यफलमाहुर्मनीषिणः १३ तडागंसुकृतंतस्यवस
न्तेतुमहाश्रयम् अतिरात्रस्ययज्ञस्यफलंससमुपाश्नुते १४ निदाघकालेपानीयंतडागेयस्यतिष्ठति वाजिमेधफलंतस्यफलंवैमुनयोविदुः
१५ सकुलंतारयेत्सर्वंयस्यखातेजलाशये गावःपिबंतिसलिलंसाधवश्चनराःसदा १६ तडागेयस्यगावस्तुपिबंतितृषितानलम् मृगप
क्षिमनुष्याश्चसोऽश्वमेधफलंलभेत् १७ यत्पिबंतिजलंतत्रस्नायंतेविश्रमंतिच तडागेयस्यतत्सर्वंप्रेत्यानन्त्यायकल्पते १८ दुर्लभंसलिलं
तातविशेषेणपरत्रवै पानीयस्यप्रदानेनप्रीतिर्भवतिशाश्वती १९ तिलान्ददतपानीयंदीपान्ददतजाग्रत ज्ञातिभिःसहमोदध्वमेतत्प्रेत्यसुदु
र्लभम् २० सर्वदानैर्गुरुतरंसर्वदानैर्विशिष्यते पानीयंनरशार्दूलतस्माद्दातव्यमेवहि २१ एवमेतत्तडागस्यकीर्त्तितंफलमुत्तमम् अतऊर्ध्वं
प्रवक्ष्यामिवृक्षाणामवरोपणम् २२ स्थावराणांचभूतानांजातयःषट्प्रकीर्तिताः वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः २३

द्भिज्जस्वेदजानांभूतानांप्राणिनांतान् तडागान् ७ ८ यावत्तत्रफलावाप्तिः याचतत्रफलावाप्तिरितिचपाठः ९ ऋतुनाम्नोद्देखननफलंकथयतिवर्षाकाले-
त्यादि सम्यक्जलाशयखननाशक्तौहेतुनिर्देशोबोध्यः १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ षट्जातीनाह वृक्षगुल्मलतेति वल्लीसारवतीलता
विशेषा २३ ५७

२४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायांअष्टपंचाशत्तमोऽध्यायः ५८ या-
नीमानिबहिर्वेद्यांतीर्थेदानानिकथितानि तेभ्योविशिष्टंकिंदानमित्यादिप्रश्नः १ २ ३ व्यसनेवाप्यनुग्रहइतिपाठः व्यसनेपरमसंकटेदत्तंदानमित्यन्वयः ४

एताजात्यस्तुवृक्षाणांतेषांरूपेगुणास्त्विति कीर्तिश्चमानुषेलोकेप्रेत्यचैवफलंशुभम् २४ लभतेनामलोकेचपितृभिश्चमहीयते देवलोकेग
तस्यापिनामतस्यनश्यति २५ अतीतानागतेचोभेपितृवंशेचभारत तारयेद्वृक्षरोपीचतस्माद्वृक्षांश्चरोपयेत् २६ तस्यपुत्राभवंत्येतेपाद
पानात्रसंशयः परलोकगतःस्वर्गंलोकांश्चाप्नोतिसोऽव्ययान् २७ पुष्पैःसुरगणान्वृक्षाःफलैश्चापितथापितॄन् छायययाचातिथिंतातपूजयं
तिमहीरुहः २८ किंनरोरगरक्षांसिदेवगंधर्वमानवाः तथाऋषिगणाश्चैवसंश्रयंतिमहीरुहान् २९ पुष्पिताःफलवंतश्चतर्पयंतीहमा
नवान् वृक्षदंपुत्रवत्वृक्षास्तारयंतिपरत्रतु ३० तस्मात्तडागेतत्वृक्षारोप्याःश्रेयोर्थिनासदा पुत्रवत्परिपाल्याश्चपुत्रास्तेधर्मतःस्मृताः
३१ तडागकृद्वृक्षरोपीइष्टयज्ञश्चयोद्विजः एतेस्वर्गेमहीयंतेयेचान्येसत्यवादिनः ३२ तस्मात्तडागंकुर्वीतआरामांश्चैवरोपयेत् यजेच्च
विविधैर्यज्ञैःसत्यंचसततंवदेत् ३३ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेआरामतडागवर्णनंनाम अष्टपंचाशत्तमोऽध्या
यः ५८ युधिष्ठिरउवाच यानीमानिबहिर्वेद्यांदानानिपरिचक्षते तेभ्योविशिष्टंकिंदानंमतंतेकुरुपुंगव १ कौतूहलंहिपरमंत
त्रमेविद्यतेप्रभो दातारंदत्तमन्वेतियद्दानंप्रतिचक्ष्वमे २ भीष्मउवाच अभयंसर्वभूतेभ्योव्यसनेचाप्यनुग्रहः यच्चाभिलषितंदद्या
त्तृषितायाभियाचते ३ दत्तमन्येतयद्दत्वातद्दानंश्रेष्ठमुच्यते दत्तंदातारमन्वेतियद्दानंभरतर्षभ ४ हिरण्यदानंगोदानंपृथिवीदानमेवच एता
निवैपवित्राणितारयंत्यपिदुष्कृतम् ५ एतानिपुरुषव्याघ्रसाधुभ्योदेहिनित्यदा दानानिहिनरंपापान्मोक्षयंतिनसंशयः ६ यद्यदिष्टतमंलो-
केयच्चास्यदयितंगृहे तत्तद्गुणवतेदेयंतदेवाक्षयमिच्छता ७ प्रियाणिलभतेनित्यंप्रियदःप्रियकृत्तथा प्रियोभवतिभूतानामिहचैवपरत्रच
८ याचमानमभिमानादनासक्तमकिंचनम् योनार्चतिस्वशक्त्याशक्तिमन्नृशंसोयुधिष्ठिर ९ अमित्रमपिचेद्दीनंशरणैषिणमागतम् व्यंस
नेयोनुगृण्हातिसवैपुरुषसत्तमः १० कृशायहृतवित्तायवृत्तिक्षीणायसीदते अपहन्यात्क्षुधांयस्तुनतेनपुरुषःसमः ११ क्रियानियमिता-
न्साधून्पुत्रदारैश्चकर्षितान् अयाचमानान्कौंतेयसर्वोपायैर्निमंत्रयेत् १२ आशिषंयेनदेवेषुनचमर्त्येषुकुर्वते अर्हंतोनित्यसंतुष्टास्त-
थालब्धोपजीविनः १३

५ ६ ७ ८ याचमानंजनं अभिमानादहंकाराद्योनार्चतीत्यन्वयः ९ १० हृतवित्तायहृतधनाय ११ १२ आ
शिषमभिलाषंदेवेषुमर्त्येषुचयेनकुर्वंतितेअर्हंतोनित्यसंतुष्टाः १३ ६५ ६५ ६५ ६५ ६५ ६५ ६५ ६५ ६५

युक्तैरुपयुक्तैः १४ आवसथैर्यज्ञावभृथजलैः शाखाविशेषैर्वा १५ १६ विद्यास्नाताः ज्ञानशौचाः व्रतस्नाताः चांद्रायणप्राजापत्यादिव्रतशौचाः केचित्तु वि-
द्यास्नाताः प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि वा ग्रहणांतं वा बुध्यतिशयादल्पेन गुरुनिरपेक्षोच्चारणक्षमाध्ययनेन ग्रहणांतं वा एवं वेदं समाप्य गुरुनिरपेक्षोच्चारणक्षम
तां संपाद्य पश्चादंगैर्व्याकरणादिभिरुपांगैस्तदा काव्यादिभिस्तज्ज्ञानं संपाद्य पश्चात्तत्राक्षरनिरपेक्षोच्चारणपर्यंतं मधुमांसादिवर्जनं विचारकाले च तद्वर्ज्जनं ब्रह्मच
र्यं चोभयत्राविशिष्टं एवं विद्यां संपाद्य पश्चात्स्नायात् तत्र गुरुरेनं आहूय दिव्यैर्गंधजलैर्दिव्याभिरोषधिभिर्मंत्रपुरस्सरं स्नापयित्वा पुष्पालंकारपरिष्कृतं गवादिनार्थदा
नं कृत्वा शय्यायामुपवेश्य प्रतिष्ठापयेत् आशिषश्च दद्यात् वेदाः प्रतिभांतु सत्यसंकल्पतास्तु सर्वाः सिद्धयः स्फुरंतु ब्रह्मप्रजाविवर्द्धतां इत्यादिरागिविरागिव्यवस्थाप

आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत तान्युक्तैरुपजिज्ञास्य स्तथार्त्विजवरोत्तमान् १४ कृतैरावसथैर्नित्यं संप्रेष्यैः सपरिच्छदैः निमंत्रयेथाः
कौरव्य सर्वान्कामसुखावहैः १५ यदि ते प्रतिगृण्हीयुः श्रद्धापूतं युधिष्ठिर कार्यमित्येव मन्वाना धार्मिकाः पुण्यकर्मिणः १६ विद्यास्नाता व्रत
स्नाताश्चानपाश्रित्यजीविनः गूढस्वाध्यायतपसो ब्राह्मणाः संशितव्रताः १७ तेषु शुद्धेषु दांतेषु स्वदारपरितोषिषु यत्करिष्यसि कल्याणं तत्त्वे
लोके युधांपते १८ यथाग्निहोत्रं सुहुतं सायंप्रातर्द्विजातिना तथा दत्तं द्विजातिभ्यो भवत्यथ यतात्मसु १९ एष ते विततो यज्ञः श्रद्धापूतः
सदक्षिणः विशिष्टः सर्वयज्ञेभ्यो ददतस्तात वर्त्ततां २० निवापो दानसलिलस्तादृशेषु युधिष्ठिर निवसन्पूजयंश्चैव तेष्वानृण्यं नियच्छति
२१ य एवैनं कुप्यंते न लुभ्यंति तृणेष्वपि त एव नः पूज्यतमा ये चापि प्रियवादिनः २२ एते न बहु मन्यंते न प्रवर्त्तंति चापरे पुत्रवत्परिपाल्यास्ते न
मस्तेभ्यस्तथाभयम् २३ ऋत्विक्पुरोहिताचार्या मृदुब्रह्मधरा हिते क्षात्रेणापि हि संसृष्टं तेजः शाम्यति वै द्विजे २४

नात उपचिता आशिषः प्रयच्छंति
तदाशीर्द्दानांतं कार्यं विद्यास्नानं तद्युक्ता विद्यास्नाताः व्रतानि गायत्र्यादीनि वेदाध्ययनकाले यानि क्रियंते अश्वमेधो ब्राह्मणपाठे अश्वमेधाः सदाचारादयः प्रतिकांडं
अध्यापने उक्तानि वर्षाहोपकृतवेदाध्ययनार्था इत्यर्थः १७ १८ १९ २० निवापः पितृदानस्थानं दानसलिलः सर्वदानार्थं जलं दानस्वच्छो वा हे युधिष्ठि
र तादृशेषु जनेषु मध्ये त्वमेको भवेति शेषः २१ दुःखसंशमनमाह न तेन कुप्यंतीति तृणेष्वपीति तृणकोभाभावः यद्वा तद्दानकृतं गद्रव्यानरेष्वप्रीतिभावः नोऽस्माकं ये ज
ना नोऽस्मान्मान्यानिति कृत्वा न मानतां कुर्वंति अपरे च वर्तयंति क्रोधादिना च वर्तंते ते पुत्रवत्परिपाल्यास्तेभ्यो नमः यतस्तद्भयं अभयं कर्तव्यमिति वेति शेषः २२
२३ ब्राह्मणस्य माहात्म्यमाह क्षात्रेणापि हीति क्षात्रेण क्षत्रियेण संसृष्टं उपार्जितं तेजः सामर्थ्यं बलं तत्तु द्विजे शाम्यति शांतं भवति ब्रह्म तेजो बलं बलमित्युक्त
त्वात् तेजः शाम्यति वै द्विजइतिपाठः २४ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७

अस्तिमेइतिमेममअस्तिधनादिक.मतिशेषः अलंबलवांश्चस्मिराजास्मीति कृत्वाब्राह्मणान् वासोभिरशनेनभोज्येनयाचयेश्रीः भोजयेरेव माङ्योगेअडभावः ई- तंचार्षं २५ २६ यथोत्साहउत्साहमनतिक्रम्यलयिललंतुविलसंतु ब्राह्मणाइतिपूर्वेणान्वयः २७ अक्षयःप्रसादोयेषांविप्राणांअक्षयप्रसादानाम् अ वक्षेप्तुंनिक्षेप्तुंदातुमित्यर्थः २८ २९ यदिनोद्वति यदिनोस्मान्ब्राह्मणाःअपूजिताःक्षत्रियेस्थितंदारुणंनिष्ठुरंप्रजानामपालनंपश्यंतस्त्यजेयुस्तदातेषांक्षत्रियाणां- जीवितेनकोर्थः किंप्रयोजनमितिपरस्यजीवितेनार्थइत्यनेनसहान्वयः ३० किंचयेदयज्ञन्नोकरहितानांब्राह्मणाश्रयंविनाजीवितेननार्थइत्याह अवेदानामिति ब्रा-

अस्तिमेवलवानस्मिराजास्मीतियुधिष्ठिर ब्राह्मणान्याचपर्यश्रीर्वासोभिरशनेनच २५ यच्छोभार्थंबलार्थंवावित्तमस्तितवानघ तेनतेब्रा ह्मणाःपूज्याःस्वधर्ममनुतिष्ठता २६ नमस्कार्यास्तथाविप्रावर्त्तमानायथातथम् यथासुखंयथोत्साहललंतुत्वयिपुत्रवत् २७ कोह्यक्षय प्रसादानांसुहृदामल्पतोषिणाम् वृत्तिमर्हत्यवक्षेप्तुंत्वदन्यःकुरुसत्तम २८ यथापत्याश्रयोधर्मस्त्रीणांलोकेसनातनः सदैवसागतिर्ना न्यातथास्माकंद्विजातयः २९ यदिनोब्राह्मणास्तातसन्त्यजेयुरपूजिताः पश्यंतोदारुणंकर्मसततंक्षत्रियेस्थितम् ३० अवेदानामयज्ञाना- मलोकानामवर्त्तिनाम् कस्तेषांजीवितेनार्थस्त्वांविनाब्राह्मणाश्रयम् ३१ अत्रतेवर्त्तयिष्यामियथाधर्मसनातनम् राजन्योब्राह्मणान्राज न्पुरापरिचचारह ३२ वैश्योराजन्यमित्येवशूद्रोवैश्यमितिश्रुतिः दूराच्छूद्रेणोपचर्योब्राह्मणोग्निरिवज्वलन् ३३ संस्पर्शपरिचर्यस्तुवै श्येनक्षत्रियेणच मृदुभावान्सत्यशीलान्सत्यधर्मानुपालनान् ३४ आशीविषानिवक्रुद्धांस्तानुपाचरतद्विजान् अपरेषांपरेषांचप रेभ्यःश्चापियेपरे ३५ क्षत्रियाणांप्रतपतांतेजसाचबलेनच ब्राह्मणेष्वेवशाम्यंतितेजांसिचतपांसिच ३६ नमेपिताप्रियतरोनत्वंतात तथाप्रियः नमेपितुःपिताराजन्नचात्मानचजीवितम् ३७ त्वत्तश्चमेप्रियतरःपृथिव्यांनास्तिकश्चन त्वत्तोपिमेप्रियतराब्राह्मणाभरत र्षभ ३८ ब्रवीमिसत्यमेतच्चयथाहंपांडुनंदन तेनसत्येनगच्छेयंलोकान्यत्रचशांतनुः ३९ पश्येयंचसतांलोकाञ्छुचीन्ब्रह्मपुरस्कृ तान् तत्रमेतातगंतव्यमन्हायचचिरायच ४० सोहमेतादृशाँल्लोकान्दृष्ट्वाभरतसत्तम यन्मेकृतंब्राह्मणेषुनतप्येतेनपार्थिव ४१ इतिश्रीम०आनु०दानधर्मेएकोनषष्टितमोऽध्यायः ५९ युधिष्ठिरउवाच योचस्यातांचरणेनोपपन्नौयोविद्ययासदृशौजन्मनाच ता भ्यांदानंकतमस्मैविशिष्टमयाचमानायचयाचतेच १

ह्मणाएवामीषांनिस्तारभूताइतिभावः ३१ योवर्णोयंपरिचरतितंदेवाहराजन्योब्राह्मणानिति ३२ ३३ प्रकीर्णकधर्ममाह संस्पर्शपरिचर्यस्त्वित्यारभ्याध्यायसमाप्तिंयावत् संस्पर्शेनपादसंमार्जनादिनापरिचर्यायस्यब्राह्मणस्यसंस्पर्शपरिचर्यावैश्येनक्षत्रियेणचे ति ३४ ३५ ३६ ३७ ३८ अन्हायझटिति ३९ ४० ४१ इतिश्री०आनुशासनिकेपर्वणिटीकायांएकोनषष्टितमोऽध्यायः ५९ योब्राह्मणोचरणेनवेद

शाखया प्रथमद्वितीयतृतीयमीमांसाध्यायपदेन वा उपपन्नोस्यात् सोचविद्यया जन्मना च सदृशौ स्यातां तयोर्मध्ये कतमस्मै दानं विशिष्टमिति प्रश्नः याचतो याचमानात् सकाशात् अयाचते दानं श्रेष्ठमाहुः १ प्रश्ने आचारक्षमादितारतम्येन पात्रं बोध्यं २ धृतिर्धर्मः अनर्थना अप्रार्थना ३ याचकस्य निंदामाह याच्यमाहुरिति निंदामाह अनीशस्य कृपणस्य मध्ये याच्यं अभिहारं निंद्यमित्याहुः आचारहीनः क्लीबश्च नित्यं याचनकस्तथा कृषिजीवी च पापदीचपङ्क्तिर्निंदित एवच ग तेवर्जनीयाः यतो याच्यं अभिहारं अभिसर्वतो भावेन हरति भद्दत्वादिकमित्यभिहारस्तदिति ४ याचमानस्य मरणमेवाह म्रियते याचमान इति ५ ६ यदीति

भीष्म उवाच श्रेयो वै याचतः पार्थ दानमाहुरयाचते अर्हत्तमो वै धृतिमान्कृपणादधृतात्मनः २ क्षत्रियो रक्षणधृतिर्ब्राह्मणोऽनर्थनाधृतिः ब्राह्मणो धृतिमान्विद्वान्देवान्प्रीणाति तुष्टिमान् ३ याच्यमाहुरनीशस्य अभिहारं च भारत उद्वेजयन्ति याचन्ति सदा भूतानि दस्युवत् ४ म्रियते याचमानो वै न जातु म्रियते ददत् ददत्संजीवयत्येनमात्मानं च युधिष्ठिर ५ आनृशंस्यं परो धर्मो याचते यत्प्रदीयते अयाचतः सीदमानान्सर्वोपायैर्निमंत्रयेत ६ यदि वै तादृशा राष्ट्रे वसेयुस्ते द्विजोत्तमाः भस्मच्छन्नानिवाग्नींस्तान्बुध्येथास्त्वं प्रयत्नतः ७ तपसा दीप्यमानास्ते दहेयुः पृथिवीमपि अपूज्यमानाः कौरव्य पूजार्हास्तु तथाविधाः ८ पूज्या हि ज्ञानविज्ञानतपोयोगसमन्विताः तेभ्यः पूजां प्रयुंजीथा ब्राह्मणेभ्यः परंतप ९ ददद्बहुविधान्दायानुपागच्छन्नयाचताम् यदग्निहोत्रे सुहुते सायंप्रातर्भवेत्फलम् १० विद्यावेदव्रतवति तद्दानफलमुच्यते विद्यावेदव्रतस्नातानव्यपाश्रयजीविनः ११

तादृशाः अयाचमाना अथच शास्त्राभ्यासात् द्विजोत्तमा राष्ट्रं प्रतिवसेयुः यस्मात्कुर्युस्तान् भस्मच्छन्नानग्नीनिव बुध्येथाः आपाततस्तेषां तेजो न ज्ञायते परिणामे भस्म-सात्कुर्वंतीति भावः अतः परं ब्राह्मणस्याध्यायसंबंधिं यावन्महत्त्वं कथयन्ति ७ तपसा दीप्यमानाः इत्यादि तेभ्यो ब्राह्मणेभ्यः पूजां प्रयुंजीथा इत्यन्वयः प्रयुंजीथा इति च पाठः ८ ९ ददद्बहुविधानिति अयाचतां ब्राह्मणानां उपसमीपे आगच्छत बहुविधान् दायान् द्रव्यादीन् ददत् पुमान् सुहुते विधिवद्धुते अग्निहोत्रे यत्फलं भवे-त् १० विद्यावेदव्रतवति दानेन दानफलं हवनदानफलं उच्यते अर्थादित्यर्थः तद्दानफलमित्यत्र दानपदं यागपरं ज्ञेयम् ११ ७ ७ ७ ७

कृतैरावसथैरिति कृताप्लवभृथस्नानैःजल्तैः ह्र्द्यैः प्रीतैः प्रेष्यैः कर्मकारिभिर्जनैश्च द्वारभूतैर्निमंत्रयेथाः इत्यन्वयः केचित्तु कृतैरावसथैरिति काष्ठमात्रकृतैस्तृणकृतैः अ
पक्वेष्टकाचितैर्वा केचित्तु हृद्यैरनेन पक्वेष्टकापाषाणाचितैः सुधाधवलितैर्नानाविधदांतराजतसौवर्णप्रवालमणिगवाक्षैः नानाविधचित्रयुक्तैः ध्वजपताकासुवर्ण-
कलशाद्यन्वितैःरितिव्यज्यते नानाविधदासदासीयुक्तैः सपरिच्छदैः सकलगृहोपकरणवद्भिः १२ एवंसर्वोपस्करयुक्तानिवेश्मानिसंपाद्यपूर्वोक्तगुणान्ब्राह्मणान् तत्प्र
तिग्रहार्थंआकारयेथाएवंविधानिवेश्मानिदास्येतत्रत्वंमेप्रतिगृह्णीताभवेतिनितेषांवेश्मनिविनयपुरःसरंगत्वाप्रार्थयेथाइत्यर्थः अन्यैश्चग्रामपुरादिकामैरग्न्यर्थःद्विजो
त्तमानितिसर्वस्वदानयोग्यतांसूचयति अर्पितेइतिनिमंत्रिताब्राह्मणाःश्रद्धोपेतंश्रद्धयाउपयुक्तं निमंत्रणंगृण्हीयुः १३ एतेचब्राह्मणादीनाइत्याह एवंनिमं-

गृहस्वाध्यायंतपसोब्राह्मणान्संशितव्रतान् कृतैरावसथैर्हृद्यैःसप्रेष्यैःसपरिच्छदैः १२ निमंत्रयेथाःकौरव्यकामैश्चान्यैर्द्विजोत्तमान्
अर्पितेप्रतिगृण्हीयुःश्रद्धोपेतंयुधिष्ठिर १३ कार्यमित्येवमन्वानाधर्मज्ञाःसूक्ष्मदर्शिनः अर्पितेब्राह्मणाभुक्त्वागताःसोद्धरणागृहान् १४
येषांदाराःप्रतीक्षंतेपर्जन्यमिवकर्षकाः अन्नानिप्रातःसवनेनियताःब्रह्मचारिणः १५ ब्राह्मणास्तातभुंजानास्त्रेताग्निंप्रीणयंत्युत
माध्यंदिनंतेसवनंददतस्तातवर्त्तताम् १६ गोहिरण्यानिवासांसितेनेंद्रःप्रीयतांतव तृतीयसवनंतेवैवैश्वदेवंयुधिष्ठिर १७ यद्दे-
वेभ्यःपितृभ्यश्चविप्रेभ्यश्चप्रयच्छसि अहिंसासर्वभूतेभ्यःसंविभागश्चभागशः १८ दमस्त्यागोधृतिःसत्यंभवत्यवभृथायते ए
षतेविततोयज्ञःश्रद्धापूतःसदक्षिणः १९ विशिष्टःसर्वयज्ञानांनित्यंतातप्रवर्त्तताम् २० इतिश्रीमहाभारतेआनुशासनिकेपर्वणि
दानधर्मेषष्टितमोऽध्यायः ६०

ऋणग्रहणंकार्यं कर्तुंयोग्यमितिमन्वानाब्राह्मणाभुक्त्वासोद्धरणा उद्धृतंधरणंशास्त्रीयपरिमितंषोडशमाषरौ
प्यंयेषांब्राह्मणानांतेसोद्धरणाउद्धरणसहिताः गृहानुगताःप्राप्ताभवेयुः एतन्निमंत्रणमात्रंमन्वानाइतिभावः तथाचमनुः द्वेकृष्णलेसमधृतेविज्ञेयोरूप्यमाष-
कः तेषोडशस्याद्धरणंपुराणश्चैवराजतइति कृष्णलारक्तिकेतिप्रसिद्धंसोद्धरणान्गृहान्इतिचपाठः क्वचिद्गृहस्यविशेषणं सोद्धरणंगृहेषोडशमाषकरौप्याभावे
इतिचभावः १४ येषांदाराइति प्रतीक्षंतेअतिथिभोजनमितिशेषः १५ तेनतवमाध्यंदिनंसवनंस्नातं १६ गोहिरण्यादिदानंददतस्तववर्त्ततां मध्यान्हसमयस्यमानुषेप्र
शस्तत्वं तथाचोक्तं पूर्वाण्हेवैदेवानांमध्यंदिनोमनुष्याणामपराण्हःपितृणामिति मध्यंदिनमितिक्वचित्पाठःश्रुतौ तृतीयस्नानंवर्त्ततामित्यनेनसहान्वयः प्रयच्छसी
त्यनेनवैश्वदेवस्यान्वयः १७ १८ एषदमत्यागादियोगःसर्वयज्ञानांविशिष्टःप्रवर्त्ततां १९ २० इतिआनुशासनिकेपर्वणिटीकायांषष्टितमोऽध्यायः ६० ६५

पुनर्युधिष्ठिरः दानयज्ञादिकंपृच्छति दानंयज्ञक्रियाचेतिप्रेत्यपरलोके ज्यायःश्रेष्ठम् १ २ अंतर्वेद्यांवेदिकामध्ये ३ रौद्रंउग्रं तस्यक्षत्रियस्यवैतानिकं
श्रौतम् ४ राज्ञांक्षत्रियाणांप्रतिगृण्हीयुर्ब्राह्मणाइतिशेषः क्षत्रियस्येतिपूरणीयं. ५ ६ मैत्रान्दयावतः शीलंविनयानुगतं साधुचेष्टंशीलमुच्यते ७ तेब्राह्मणा
स्तेनवनकरिष्यंतिप्रतिग्रहमितिशेषः तर्हिप्रतिग्रहाभावेनेतवकृतंसुकृतंभविष्यतीत्यन्वयः ततः सुकृतोत्पत्त्यर्थंयज्ञान्साधय यज्ञविशेषणंस्वाद्वन्नानिति स्वादु
स्वाद्यंअन्नंअदनीयंयेषांतेतान् प्रजावतः ८ संतप्तिमुक्तान्बहुकारिणः बहुपोष्यान् इष्टमितिदानंयज्ञादिकमंतर्भवति याज्ञिकेभ्योदत्तंचेतुतत्कृतस्ययज्ञस्यचेयां
शः तवापिभविष्यतिइतिनयज्ञार्थमल्पकल्पकोभूरित्यर्थः ९ १० धर्मान्पंचमातिथिसंमेतएवभोक्ष्येइत्यादीन्येसंतः संवर्धयंतितेसर्वस्वेभर्तव्याराज्ञातस्यराज्ञस्तेमंतु

युधिष्ठिरउवाच दानयज्ञक्रियाचेहकिंस्वित्प्रेत्यमहाफलम् कस्यज्यायःफलप्रोक्तंकीदृशेभ्यःकथंकदा १ एतदिच्छामिविज्ञातुंयाथात
थ्येनपितामह विद्वन्जिज्ञासमानायदानधर्मान्प्रचक्ष्वमे २ अंतर्वेद्यांचयद्दत्तंश्रद्धयाचानृशंस्यतः किंस्वित्निःश्रेयसंतातदन्मेब्रूहिपितामह ३
भीष्मउवाच रौद्रंकर्मक्षत्रियस्यसततंतातवर्त्तते तस्यवैतानिकंकर्मदानंचैवेहपावनम् ४ नतुपापकृतांराज्ञांप्रतिगृण्हंतिसाधवः ए
तस्मात्कारणाद्यज्ञैर्यजेद्राजाप्तदक्षिणैः ५ अथचेत्प्रतिगृण्हीयुर्दद्यादहरहर्नृपः श्रद्धामास्थायपरमांपावनंह्येतदुत्तमम् ६ ब्राह्मणांस्तर्प
यन्द्रव्यैस्ततोयज्ञेयतव्रतः मैत्रान्साधून्वेदविदःशीलवृत्ततपोर्जितान् ७ यत्तेतेनकरिष्यंतिकृतंतेनभविष्यति यज्ञान्साधयसाधुभ्यःस्वाद्व
न्नान्दक्षिणावतः ८ इष्टंदत्तंचमन्येथाआत्मानंदानकर्मणा पूजयेथाश्रयज्वानस्तवाप्यंशोभवेद्यथा ९ प्रजावतोभरेथाश्चब्राह्मणान्बहु
कारिणः प्रजावांस्तेनभवतियथाजनयितातथा.१० यावतःसाधुधर्मांश्चैसंतःसंवर्धयंत्युत सर्वस्वेश्चापिभर्त्तव्यानराग्येबहुकारिणः ११
समृद्धःसंप्रयच्छत्वंब्राह्मणेभ्योयुधिष्ठिर धेनूरनडुहोन्नानिच्छत्रंवासांस्युपानहौ १२ आज्यानियजमानेभ्यस्तथान्नानिचभारत
अश्ववंतिचयानानिवेश्मानिशयनानिच एतेदेयाव्युष्टिमंतोलघूपायाश्चभारत १३ अनुगुप्ताश्चविज्ञायब्राह्मणान्वृत्तिकर्षितान्
उपच्छन्नंप्रकाशंवावृत्त्यातान्प्रतिपालयेत् १४ राजसूयाश्वमेधाभ्यांश्रेयस्तत्क्षत्रियाण्यति एवंपापैर्विनिर्मुक्तःस्त्वंपूतःस्वर्गमाप्स्यसि १५.

राज्ञः बहुकारिणः अत्यंतंउपकर्त्तारोभवंति ११ समृद्धः संपन्नैश्वर्यः देयद्रव्यमाह धेनूरित्यादि. १२ एतेधेन्वादयः व्युष्टिमंतः फलवतः व्युष्टिःफलम् १३
उपच्छन्नमप्रकाशम् १४ १५ श्रीगोपालोविजयते

ब्रह्मभूयस्त्वंब्रह्मत्वं १६ वृत्तिंजीविकाम् १७ अलब्धस्यलाभोयोगः योगस्यपरिरक्षणंक्षेम ब्राह्मणेष्वस्मिन्निष्ठतु मान्वतेभ्योप्रतिपालनंनेतव तेभ्यस्तेषामित्यर्थे तेषांब्राह्मणानांअप्रतिपालनंमामास्त्वित्यन्वयः १८ अर्थवान्ब्राह्मणउन्मादीस्यादित्याह अनर्थइति १९ २० यइतिसार्द्धेनापालयिन्नृराज्ञोनिंदामाह यो राजा रक्षिभ्यः संगृह्यपरेभ्योधनंदत्वायज्ञेयज्ञार्थंधनमानयअभिनिब्रुवन्राष्ट्रंविलुंपतियच्चेति यच्चासौनिर्वृत्तिभिः भीतंभययुक्तंयथास्यात्तथादत्तं आदायप्रजाभ्यइतिशेषः दारुणंयथास्यात्तथायजेत् अस्यराज्ञः यज्ञंनप्रशंसंति २१ क्षत्रियस्यकर्तव्यविधिमाह अपीडिताइत्यादि २२ यदानपरीति यदापरिनिषिच्येतयदानपरिषिच्येत

संचयित्वापुनःकोशंयद्राष्ट्रंपालयिष्यसि तेनत्वंब्रह्मभूयस्त्वमवाप्स्यसिधनानिच १६ आत्मनश्चपरेषांचवृत्तिंसंरक्षभारत पुत्रव-त्पापिभृत्यान्स्वान्प्रजाश्चपरिपालय १७ योगःक्षेमश्चतेनित्यंब्राह्मणेष्वस्तुभारत तदर्थंजीवितंतेस्तुमातेभ्योप्रतिपालनम् १८ अनर्थोब्राह्मणस्यैषयद्वित्तनिचयोमहान् श्रियात्वभीक्ष्णंसंवासोदर्पयेत्संप्रमोहयेत् १९ ब्राह्मणेषुप्रमूढेषुधर्मोविप्रणशेद्ध्रुवम् धर्मप्रणाशोभूतानामभावःस्यान्नसंशयः २० योरक्षिभ्यःसंप्रदायराजाराष्ट्रंविलुंपति यज्ञेराष्ट्राद्धनंतस्मादानयध्वमितिब्रुवन् यच्चादायतदाज्ञप्तंभीतंदत्तंसुदारुणम् २१ यजेद्राजानतंयज्ञंप्रशंसंत्यस्यसाधवः अपीडिताःसुसंवृद्धायेददत्यनुकूलतः २२ तादृशेनाप्युपायेन यष्टव्यंनित्यमाहृतैः यदापरिनिषिच्येतनिहितैर्वैयथाविधि २३ तदाराजामहायज्ञैर्यजेतबहुदक्षिणैः वृद्धबालधनंरक्ष्यमंधस्यकृपणस्यच २४ नखातपूर्वंकुर्वीतनरुदंतीधनंहरेत् हृतंकृपणवित्तंहिराष्ट्रंहंतिनृपश्रियम् २५ दद्याच्चमहतोभोगान्क्षुद्भयंप्रणुदेत्सताम् येषांस्वादूनिभोज्यानिसमवेक्ष्यंतिबालकाः २६ नाश्नंतिविधिवत्तानिकिंनुपापतरंततः यदितेतादृशोराष्ट्रेविद्वान्सीदेत्क्षुधाद्विज भ्रूणहत्यांत्वंगच्छेथाःकृत्वापापमिवोत्तमम् २७ धिक्तस्यजीवितंराज्ञोराष्ट्रेयस्यावसीदति द्विजोन्योवामनुष्योपिशिबिराहवचोयथा २८

इतिचपाठः निहितः प्रजानांहितोऽनुकूलोराजाप्रजाभिर्धनैर्नभिषिच्येतनाभिषिच्येत २३ वृद्धबालधनंरक्ष्यमंधस्यकृपणस्यचेतिसमासप्रविष्टं धनपदंबहिष्कृत्यान्वयोजनीयंतेनांधस्यकृपणस्यसहायहीनस्यदरिद्रस्येतिधनंरक्ष्यमित्यन्वयः २४ नखातपूर्वंउन्मूलनस्यकिमपिनकुर्वीतस्रुतःस्त्रीपालनीयातत्रापि दीनतयारुदंतीनस्याधनंहरेत् हृतंकृपणवित्तंहिराष्ट्रंहंतिनृपश्रियं हृतंकृपणवृत्तंहीतिक्वचित्पाठः कृपणवित्तंकदर्यस्यवित्तंहृतंबलान्नीतंसत्तद्राष्ट्रंहंतिनृपश्रियंहंति नृपेतिसंबोधनपदंवाकृपणवृत्तंकदर्यवृत्तंचेष्टितंराज्ञाकृतंमंआचरितंसत्तद्राष्ट्रंहंति २५ येषांस्वादूनीतियेषांबालकाःस्वादूनिभोज्यानिसमवेक्ष्यंति तेषांक्षुद्भयंप्रणुदेत्खंडयेत्द्रव्यस्वामीत्यन्वयः २६ यदितेइतितेतव २७ २८ छ छ छ छ छ

यस्यराज्ञोविषयेदेशेस्नातकोब्रह्मचारीएति आगच्छति अथच क्षुधाहेतुभूतयावसीदति तस्यराज्ञोराष्ट्रं अवृद्धिं वृद्ध्यभावं विंदते लभते राष्ट्रं विशिनष्टि सहराजकं राज समूहेनसहएतीति आसमन्ताकमकारेणएतीति अनिवृष्टिरनावृष्टिरित्याद्युपनिषदादिर्यवनतथा एवंराष्ट्रंसत् अवृद्धिं विंदते लभतइति २९ राष्ट्रस्यापालनेराज्ञोमरणरूपत्वमाह कोशंत्यइत्यारभ्यचतुर्थमतमस्माकमितिपर्यंतं ३० ३१ ३२ ३३ ३४ ३५ त्वाम्वाम् ३६ इति आनुशासनिकेपर्वणिर्दानकायाएकषष्टित

यस्यस्मविषयेराज्ञःस्नातकःसीदतिक्षुधा अवृद्धिमेतितद्राष्ट्रंविंदतेसहराजकम् २९ क्रोशंत्योयस्यवैराष्ट्राद्ध्रियंतेतरसास्त्रियः क्रोशतांपतिपुत्राणांमृतोसौनचजीवति ३० अरक्षितारंहर्तारंविलोप्तारमनायकम् तंवैराजकलिंहन्युःप्रजाःसन्नह्यनिर्घृणम् ३१ अहंवोरक्षितेत्युक्त्वायोनरक्षतिभूमिपः ससंहत्यनिहंतव्यःश्वेवसोन्मादआतुरः ३२ पापंकुर्वंतियत्किंचित्प्रजाराज्ञाह्यरक्षिताः चतुर्थंतस्यपापस्यराजाविंदतिभारत ३३ अथाहुःसर्वमेवेतिभूयोर्धमितिनिश्चयः चतुर्थंमतमस्माकंमनोःश्रुत्वानुशासनम् ३४ शुभंवायच्चकुर्वंतिप्रजाराज्ञासुरक्षिताः चतुर्थंतस्यपुण्यस्यराजाप्नोतिभारत ३५ जीवंतंत्वानुजीवंतुप्रजाःसर्वायुधिष्ठिर पर्जन्यमिवभूतानिमहाद्रुममिवांडजाः ३६ कुबेरमिवरक्षांसिशतक्रतुमिवामराः ज्ञातयस्त्वानुजीवंतुसुहृदश्चपरंतप ३७ इतिश्रीमहाभारते आनुशासनिकेपर्वणिदानधर्मेएकषष्टितमोऽध्यायः ६१ युधिष्ठिरउवाच इदंदेयमिदंदेयमितीयंश्रुतिरादरात् बहुदेयाश्चराजानःकिंस्विद्दानमनुत्तमम् १ भीष्मउवाच अतिदानानिसर्वाणिपृथिवीदानमुच्यते अचलाह्यक्षयाभूमिर्दोग्ध्रीकामानिवोत्तमान् २ दोग्ध्रीवासांसिरत्नानिपशून्व्रीहियवांस्तथा भूमिदःसर्वभूतेषुशाश्वतीरेधतेसमाः ३ यावद्भूमेरायुरिह तावद्भूमिदएधते नभूमिदानादस्तीह परंकिंचिद्युधिष्ठिर ४ अप्यल्पंप्रददुःसर्वेपृथिव्याइतिनःश्रुतम् भूमिमेवददुःसर्वेभूमिंतेभुंजतेजनाः ५ स्वकर्मैवोपजीवंतिनराइहपरत्रच भूमिर्भूतिर्महादेवीदातारंकुरुतेप्रियम् ६ यएतांदक्षिणांदद्यादक्षयांराजसत्तम पुनर्नरत्वंसंप्राप्यभवेत्सपृथिवीपतिः ७ यथादानंतथाभोगइतिधर्मेषुनिश्चयः संग्रामेवातनुंजह्याद्दद्याद्वापृथिवीमिमाम् ८ इत्येतत्क्षत्रबंधूनांवदंतिपरमार्थितम् पुनातिदत्तापृथिवीदातारमितिनःश्रुतम् ९

ऽध्याय ६१ इदंदेयंराजान क्षत्रियाश्चबहुदेया बहुधनंदेयंयेषांते १ अतीतानिसर्वाणिदानानि अतिक्रम्यपृथिवीदानभाति त्युच्यतेश्रेष्ठत्वेनेतिशेषः २ शाश्वतीःसमाः अनेकवर्षाणीत्यन्वयः ३ ४ ५ भूमेःप्रशंसामाह भूमिर्भूतिरिति ६ यएतामिति एतांभूमिमुद्दिश्यदक्षिणांततः परिमितसुवर्णादंद्यात् भूमिदस्तेनदक्षिणादेयेत्याह एतामिति एतांभूमिंदक्षिणांदक्षिणाभूतांदद्यादितिकश्चित् ७ ८ ९ ७ ७ ७

इत्थेतदारभ्य ग्रंथेत्यंतस्य श्लोकत्रयस्य तात्पर्यम् क्षत्रबंधूनां क्षत्रियाणां राज्ञां सैव भूमिर्दानादिना पापापनोदिका नान्यद्धनादिकं पृथिवीदानसमं पावनं परमं प
वित्रंच १० शत्रुर्नेदृष्टांतः जननीयथेति ११ प्रियगुत्कृष्टं भूमिदानमित्यनेन पृथिव्यानामप्रियदत्तेतिकथयति नामास्याः प्रियदत्तेति १२ १३ १४ द्वैतंचैष
इत्यर्थं गमयतः नचापात्रे दानमितिशेषः अभूपतिना भूपतीतरेण कथंचन लब्धापि भूमिर्नाधिष्ठेया किंतु भूपतिनैवेति तथा दत्तदानेन दत्तदेशेन नवाचरेन्नसंच
रेत् नगृहे क्षितिपावेत्नांगृह्णेत् अंतर्धानं नकुर्यात् भूमिदानं दानांतरवद प्रख्यापनं हेयमितितात्पर्यम् १५ १६ १७ १८ गोचर्ममात्रेणेति दशहस्तेन दं-

अपिपापसमाचारं ब्रह्मघ्नमपिचानृतम् सैवपापं पावयति सैवपापात्प्रमोचयेत् १० अपिपापकृतां राज्ञां प्रतिगृह्णंति साधवः पृथि
वीं नान्यदिच्छंति पावनं जननी यथा ११ नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् दानंवाप्यथवादानं नामास्याः प्रथमप्रियम् १२
यएतां विदुषे दद्यात्पृथिवीं पृथिवीपतिः पृथिव्यामेतदिष्टं सराजा राज्यमितो व्रजेत् १३ पुनश्चासौ जननं प्राप्य राजैव स्यान्न संशयः
तस्मात्प्राप्यैव पृथिवीं दद्याद्विप्राय पार्थिवः १४ नाभूमिपतिना भूमिरधिष्ठेया कथंचन नचापात्रेण वा ग्राह्या दत्तदानेन वाचरेत् १५
येचान्ये भूमिमिच्छेयुः कुर्युरेवं नसंशयः यः साधोर्भूमिमादत्ते नभूमिं विंदते तुसः १६ भूमिं दत्वा तु साधुभ्यो विंदते भूमिमुत्तमाम्
प्रेत्यचेहच धर्मात्मा संप्राप्नोति महद्यशः १७ यस्यविप्रास्तु शंसंति साधोर्भूमिं सदैव हि नतस्य शत्रवो राजन् प्रशंसंति वसुंधराम्
१८ यत्किंचित्पुरुषः पापं कुरुते वृत्तिकर्षितः अपिगोचर्ममात्रेण भूमिदानेन पूयते १९ येपि संकीर्णकर्माणो राजानो रौद्रकर्मिणः
तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमम् २० अल्पांतरमिदं शश्वत्पुराणा मेनिरे जनाः गोयजेताश्वमेधेन दद्याद्वा साधवे महीम्
२१ अपिचेत्सुकृतं कृत्वा शंकेरन्नापि पंडिताः अशक्यमेकमेवैतद्भूमिदानमनुत्तमम् २२ सुवर्णरजतं वस्त्रं मणिमुक्तावसूनिच
सर्वमेतन्महाप्राज्ञो ददाति वसुधां ददत् २३ तपोयज्ञः श्रुतं शीलमलोभः सत्यसंधता गुरुदैवतपूजाच एतावर्त्तंति भूमिदम् २४
भर्तृनिःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ब्रह्मलोकागताः सिद्धा नातिक्रामंति भूमिदम् २५ यथाजनित्री स्वं पुत्रं क्षीरेण भरते स
दा अनुगृह्णाति दातारं तथा सर्वरसैर्मही २६

डेन त्रिंशद्दंडनिपातनम् पार्श्वतो दंडमानेन गोचर्मपरिचक्षते वृषएकः शतं गावो यस्यां भूमौ-
ह्विशेरते गोचर्ममात्रा सा भूमिरुच्यते र्थविशारदैः १९ २० अल्पांतरं सदृशं विदुः पुराणाः ज्ञानिनः २१ अन्यद्वा सुकृतं शोभनं कर्म महीं साधवे दद्यादस्मद्विधो
जन इति पंडिताः २२ पंडिताः विचारका नशंकेरन् नानाविधं सत्कर्म कृत्वापि साधवे महीं दद्यादितिनिश्चितं कुर्युरिति भावः २३ २४ भरते पुष्णाति डुभाञ् धारणपो
षणयोः २५ २६

किंकरोदंडः किंकरइतिदंडस्यनाम २७ २८ वृत्तिकरींजीवननिर्वाहिकांबहुभ्योदीयतेयत्र हूयंतेप्राणिनोबहु हीनारोबहवोयत्रतन्सत्रमभिधीयते एवंय
मंवर्त्ततेयस्यससत्री २९ ३० उदीर्णंउत्कृष्टं दत्वेत्यनेनसहान्वयः ३१ नित्यनिवृत्तिपरोयोब्राह्मणः समनितिगृहीनकर्त्तव्यइत्याह ब्राह्मणंवृत्तिसंपन्नमिति
वृत्तिर्यजनयाजनादि एतस्यप्रतियहेपंचीकृतेधर्मलोपान्नरकापत्तिरितिभावः ३२ ३३ याभूमिर्गीतागाथाः ३४ ३५ व्याहृतिंव्याहरणम् ३६ ३७

मृत्युर्वैकिंकरोदंडस्तमोवन्हिःसुदारुणः घोराश्चदारुणाःपाशानोपसर्पतिभूमिदम् २७ पितॄंश्चपितृलोकस्थान्देवलोकाश्चदेव-
ताः संतर्पयतिशांतात्मायोददातिवसुंधराम् २८ कृशायम्रियमाणायवृत्तिग्लानायसीदते भूमिंवृत्तिकरींदत्वासत्रीभवतिमानव
२९ यथाधावतिगौर्वत्संस्रवंतीवत्सलापयः एवमेवमहाभागभूमिर्भवतिभूमिदम् ३० हलकृष्टांमहींदत्वासबीजांसफलामपि उ-
दीर्णंवापिशरणंयथाभवतिकामदः ३१ ब्राह्मणंवृत्तिसंपन्नमाहिताग्निंशुचिव्रतम् नरःप्रतिग्राह्यमहींनयातिपरमागतिम् ३२ य-
थाचंद्रमसोवृद्धिरहन्यहनिजायते तथाभूमिकृतंदानंसस्येसस्येविवर्द्धते ३३ अत्रगाथाभूमिगीताःकीर्तयंतिपुराविदः याःश्रुत्वा
जामदग्न्येनदत्ताभूःकाश्यपायवै ३४ मामेवादत्तमांदत्तमांदत्वामामवाप्स्यथ अस्मिन्लोकेपरेचैवतद्दत्तंजायतेपुनः ३५ यइमां
व्याहृतिंवेदब्राह्मणोवेदसंमिताम् श्राद्धस्यक्रियमाणस्यब्रह्मभूयंसगच्छति ३६ कृत्यानामभिशस्तानामरिष्टशमनंमहत् प्रायश्चित्तं
महींदत्वापुनात्युभयतोदश ३७ पुनातियइदंवेदवेदवादंतथैवच प्रकृतिःसर्वभूतानांभूमिर्वैशाश्वतीमता ३८ अभिषिच्यैवनृपतिं
श्रावयेदिममागमम् यथाश्रुत्वामहींदद्यान्नादद्यात्साधुतश्चताम् ३९ सोऽयंकृत्स्नोब्राह्मणार्थोराजार्थश्चाप्यसंशयः राजाहिधर्म-
कुशलःप्रथमंभूतिलक्षणम् ४० अथयेषामधर्मज्ञोराजाभवतिनास्तिकः नतेसुखंप्रबुध्यंतिनसुखंप्रस्वपंतिच ४१ सदाभवंतिचो-
द्विग्नास्तस्यदुश्चरितैर्नराः योगक्षेमाहिबहवोराष्ट्रंनास्याविशंतितत् ४२ अथयेषांपुनःप्राज्ञोराजाभवतिधार्मिकः सुखंतेप्रतिबुध्यं-
तेसुसुखंप्रस्वपंतिच ४३ तस्यराज्ञःशुभैराज्यैःकर्मभिर्निर्वृतानराः योगक्षेमेणवृष्ट्याचविवर्धंतेस्वकर्मभिः ४४ सकुलीनःसपुरुषः
सबंधुःसचपुण्यकृत् सदातासचविक्रांतोयोददातिवसुंधराम् ४५ आदित्याइवदीप्यंतेतेजसाभुविमानवाः ददतिवसुधांस्फीतां
येवेदविदुषिद्विजे ४६ यथासस्यानिरोहंतिप्रकीर्णानिमहीतले तथाकामाःप्ररोहंतिभूमिदानसमार्जिताः ४७

३८ ३९ ४० ४१ ४२ ४३ तस्यराज्ञःयोगक्षेमाःकर्त्तारः ४४ ४५ ४६ ४७

४८ चतुर्विधाः जरायुजस्वेदजोद्भिज्जाः ४९ भूतंजलंतेजोवाय्वाकाशं ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ एकादशपुरुषानितिशे

आदित्योवरुणोविष्णुर्ब्रह्मासोमोहुताशनः शूलपाणिश्चभगवानभिनंदंतिभूमिदम् ४८ भूमौजायंतिपुरुषाभूमौनिष्ठांव्र-
जंतिच चतुर्विधोहिलोकोयंयोयंभूमिगुणात्मकः ४९ एषामातापिताचैवजगतःपृथिवीपते नानयासदृशंभूतंकिंचिदस्तिज-
नाधिप ५० अत्राप्युदाहरंतीममितिहासंपुरातनम् बृहस्पतेश्चसंवादमिंद्रस्यचयुधिष्ठिर ५१ इष्ट्वाक्रतुशतेनाथमहतावद
क्षिणावता मघवावाग्विदांश्रेष्ठंपप्रच्छेदंबृहस्पतिम् ५२ मघवोवाच भगवन्केनदानेनस्वर्गतःसुखमेधते यदक्षयंमहा
र्घंचतद्ब्रूहिवदतांवर ५३ भीष्मउवाच इत्युक्तःसशक्रेणततोदेवपुरोहितः बृहस्पतिर्बृहत्तेजाःप्रत्युवाचशतक्रतुम् ५४ बृह
स्पतिरुवाच सुवर्णदानंगोदानंभूमिदानंचवृत्रहन् दददेतान्महाप्राज्ञःसर्वपापैःप्रमुच्यते ५५ नभूमिदानाद्देवेंद्रपरंकिंचिदितिप्र-
भो विशिष्टमितिमन्यामियथाप्राहुर्मनीषिणः ५६ येशूरानिहतायुद्धेस्वर्यातारणगृद्धिनः सर्वेतेविबुधश्रेष्ठनातिक्रामंतिभूमिदम् ५७
भर्तुर्निःश्रेयसेयुक्तास्त्यक्तात्मानोरणेहताः ब्रह्मलोकगतायुक्तानातिक्रामंतिभूमिदम् ५८ पंचपूर्वाहिपुरुषाःषडन्येवसुधांगताः एका
दशददद्भूमिंपरित्रातीहमानवः ५९ रत्नोपकीर्णांवसुधांयोददातिपुरंदर समुक्तःसर्वकलुषैःस्वर्गलोकेमहीयते ६० महींस्फीतांददद्रा
जन्सर्वकामगुणान्विताम् राजाधिराजोभवतितद्धिदानमनुत्तमम् ६१ सर्वकामसमायुक्तांकाश्यपींयःप्रयच्छति सर्वभूतानिमन्यंते
माददातिचवासव ६२ सर्वकामदुघांधेनुंसर्वकामगुणान्विताम् ददातियःसहस्राक्षस्वर्गंयातिसमानवः ६३ मधुसर्पिःप्रवाहिण्यःप-
योदधिवहास्तथा सरितस्तर्पयंतीहसुरेंद्रवसुधाप्रदम् ६४ भूमिप्रदानान्नृपतिर्मुच्यतेसर्वकिल्बिषात् नहिभूमिप्रदानेनदानमन्यद्वि
शिष्यते ६५ ददातियःसमुद्रांतांपृथिवींशस्त्रनिर्जिताम् तंजनाःकथयंतीहयावद्भवतिगौरियम् ६६ पुण्यामृद्धिरसांभूमिंयोददाति
पुरंदर नतस्यलोकाःक्षीयंतेभूमिदानगुणान्विताः ६७ सर्वदापार्थिवेनेहसततंभूतिमिच्छता भूर्देयाविधिवच्छक्रपात्रेसुखमभीप्सु
ना ६८ अपिकृत्वानरःपापंभूमिंदत्वाद्विजातये समुत्सृजतितत्पापंजीर्णांत्वचमिवोरगः ६९

षः ५९ ६० ६१ काश्यपींपृथ्वीम् ६२ ६३
६४ ६५ गौरियमितिगौःपृथिवीयावद्भवतिस्थैर्येणतिष्ठतितावद्भूमिदानारंस्थिरत्वंकथयंतीति ६६ ६७ ६८ ६९ ७० ७१ ७२

७० स्रोतांसिनद्यादि ७१ ७२ ७३ दाताभूमिदाता दशपुरुषाननुगृण्ह्यातितारयति तथादातारंक्षिपन्कथंभूमिंददासिसमाददेनिवदन्दशपुरुषान्दं
तीतिपातयति ७४ प्रतिश्रुत्यांगीकृत्य ७५ ७६ इतरेषांक्षत्रियादीनां ७७ स्पर्शितांदत्तांभूमिंनाछिंद्यान्नापहरेत् ७८ ७९ ८० ८१ ८२ ८३

सागरान्सरितःशैलान्काननानिचसर्वशः सर्वमेतन्नरःशक्रददातिवसुधांददत् ७० तडागान्युदपानानिस्रोतांसिचसरांसिच
स्नेहान्सर्वरसांश्चैवददातिवसुधांददत् ७१ ओषधीर्वीर्यसंपन्नान्नगान्पुष्पफलान्वितान् काननोपलशैलांश्चददातिवसुधांददत् ७२
अग्निष्टोमप्रभृतिभिरिष्ट्वाचस्वाप्तदक्षिणैः नतत्फलमवाप्नोतिभूमिदानाद्यदश्नुते ७३ दाता दशानुगृण्हातिदशहंतितथाक्षिपन् पूर्व
दत्तांहरन्भूमिंनरकायोपगच्छति ७४ नददातिप्रतिश्रुत्यदत्वापिचहरेत्तुयः सबद्धोवारुणैःपाशैस्तप्यतेमृत्युशासनात् ७५ आहिता
ग्निंसदायज्ञंकृशवृत्तिंप्रियातिथिम् येभजंतिद्विजश्रेष्ठंनोपसर्पंतितेयमम् ७६ ब्राह्मणेष्वनृणीभूतःपार्थिवःस्यात्पुरंदर इतरेषांतुव
र्णानांतारयेत्कृशदुर्बलान् ७७ नाच्छिंद्यात्स्पर्शितांभूमिंपरेणत्रिदशाधिप ब्राह्मणस्यसुरश्रेष्ठकृशवृत्तेःकदाचन ७८ यथाश्रुपतितं
तेषांदीनानामर्थसीदताम् ब्राह्मणानांहृतेक्षेत्रेहन्यात्त्रिपुरुषंकुलम् ७९ भूमिपालच्युतंराष्ट्रंयस्तुसंस्थापयेन्नरः तस्यवासःस
हस्राक्षनाकपृष्ठेमहीयते ८० इक्षुभिःसहितांभूमिंयवगोधूमशालिनीम् गोश्ववाहनपूर्णांवाबाहुवीर्यादुपार्जिताम् ८१ निधिगर्भा
ददद्भूमिंसर्वरत्नपरिच्छदाम् अक्षयाल्लँभतेलोकान्भूमिसत्रंहितस्यतत् ८२ विधूयकलुषंसर्वंविरजाःसंमतःसताम् लोकेमही
यतेसद्भिर्योददातिवसुंधराम् ८३ यथाप्सुपतितःशक्रतैलबिंदुर्विसर्पति तथाभूमिकृतंदानंसस्येसस्येविवर्द्धते ८४ येरणाग्रेमहीपा
लाःशूराःसंमितिशोभनाः वध्यंतेभिमुखाःशक्रब्रह्मलोकंव्रजंतिते ८५ नृत्यगीतपरानार्योदिव्यमाल्यविभूषिताः उपतिष्ठंतिदेवेंद्रतथा
भूमिप्रदंदिवि ८६ मोदतेचसुखंस्वर्गेदेवगंधर्वपूजितः योददातिमहींसम्यग्विधिनेहद्विजातये ८७ शतमप्सरसश्चैवदिव्यमाल्यवि
भूषिताः उपतिष्ठंतिदेवेंद्रब्रह्मलोकेधरामदम् ८८ उपतिष्ठंतिपुण्यानित्सदाभूमिप्रदंनरम् शंखंभद्रासनंछत्रंवराश्वाःवरवाहनम्
८९ भूमिप्रदानात्पुण्यानिहिरण्यनिचयास्तथा आज्ञासदाप्रतिहतानयशब्दाचस्रूनिच ९० भूमिदानस्यपुण्यानिफलंस्वर्गःपुरं
दर हिरण्यपुष्पाश्चौषध्यःकुशकांचनशाद्वलाः ९१

विसर्पतिप्रसरति ८४ समितिसंग्रामेशोभनाः समितिसंग्रामे ८५ उपतिष्ठंतीतिभूमिप्रदंनरं ८६
८८ पुण्यानिशंखभद्रासनादयउपतिष्ठंतीत्यन्वयः ८९ आज्ञाअप्रतिहता अप्रतिहतिना ९० भूमिदानस्यस्वर्गोयथाफलंतथाहिरण्यपुष्पाश्चौषध्योभवं
तीतिभूमिदानं ९१

१२ आंगिरसःबृहस्पतये १३ श्राद्धकरणसमये भूमिदानश्रवणफलमाह यइदंश्रावयेच्छ्राद्धेइति १४ १५ १६ इतिआनुशासनिकेपर्वणिटीकायां

अमृतत्वमसवांभूमिंप्राप्नोतिपुरुषोददत् नास्तिभूमिसमंदानंनास्तिमातृसमोगुरुः नास्तिसत्यसमोधर्मोनास्तिदानसमोनिधिः १२
एतदांगिरसाच्छ्रुत्वावासवोवसुधामिमाम् वसुरत्नसमाकीर्णांददावांगिरसेतदा १३ यइदंश्रावयेच्छ्राद्धेभूमिदानस्यसंभवम् नतस्य
रक्षसांभागोनासुराणांभवत्युत १४ अक्षयंचभवेद्दत्तंपितृभ्यस्तन्नसंशयः तस्माच्छ्राद्धेष्विदंविद्वान्भुंजतःश्रावयेद्द्विजान् १५ इत्येत
त्सर्वदानानांश्रेष्ठमुक्तंतवानघ मयाभरतशार्दूलकिंभूयःश्रोतुमिच्छसि १६ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेइंद्र
बृहस्पतिसंवादेद्विषष्टितमोऽध्यायः ६२ युधिष्ठिरउवाच कानिदानानिलोकेस्मिन्दातुकामोमहीपतिः गुणाधिकेभ्योविप्रेभ्योद-
द्याद्भरतसत्तम १ केनतुष्यंतितेसद्यःकिंतुष्टाःप्रदिशंतिच शंसमेतन्महाबाहोफलंपुण्यकृतंमहत् २ दत्तंकिंफलवद्राजन्निहलोकेप
रत्रच भवतःश्रोतुमिच्छामितन्मेविस्तरतोवद ३ भीष्मउवाच इममर्थंपुरापृष्टोनारदोदेवदर्शनः यदुक्तवानसौवाक्यंतन्मेनिग
दतःशृणु ४ नारदउवाच अन्नमेवप्रशंसंतिदेवाऋषिगणास्तथा लोकतंत्रंहिसंज्ञाश्चसर्वमन्नेप्रतिष्ठितम् ५ अन्नेनसदृशंदानं
नभूतंनभविष्यति तस्मादन्नंविशेषेणदातुमिच्छंतिमानवाः ६ अन्नमूर्जस्करंलोकेप्राणाश्चान्नेप्रतिष्ठिताः अन्नेनधार्यतेसर्वंविश्वंजग
दिदंप्रभो ७ अन्नाद्गृहस्थालोकेस्मिन्भिक्षवस्तापसास्तथा अन्नाद्भवंतिवैप्राणाःप्रत्यक्षंनात्रसंशयः ८ कुटुंबिनेसीदतेच ब्राह्मणाय
महात्मने दातव्यंभिक्षवेचान्नमात्मनोभूतिमिच्छता ९ ब्राह्मणायाभिरूपाययोदद्यादन्नमर्थिने विदधातिनिधिंश्रेष्ठंपारलौकिकमात्म
नः १० श्रांतमध्वनिवर्त्तंतंवृद्धमर्हमुपस्थितम् अर्चयेद्भूतिमन्विच्छन्गृहस्थोगृहमागतम् ११ क्रोधमुत्पतितंहित्वासुशीलोवीतमत्सरः
अन्नदःप्राप्नुतेराजन्दिविचेहचयत्सुखम् १२ नावमन्येदभिगतंनप्रणुद्यात्कदाचन अपिश्वपाकेशुनिवानदानंविप्रणश्यति १३ योदद्या
दपरिक्लिष्टमन्नमध्वनिवर्त्तते आर्त्तायादृष्टपूर्वायसमहद्धर्ममाप्नुयात् १४ पितॄन्देवानृषीन्विप्रानतिथींश्चजनाधिप योनरःप्रीणयत्यन्नै
स्तस्यपुण्यफलंमहत् १५ कृत्वातिपातकंकर्मयोदद्यादन्नमर्थिने ब्राह्मणायविशेषेणनसपापेनमुह्यते १६ ब्राह्मणेष्वक्षयंदानमन्नंशू-
द्रेमहाफलम् अन्नदानंहिशूद्रेचब्राह्मणस्यविशिष्यते १७

द्विषष्टितमोऽध्यायः ६२ गुणाधिकाविप्राः १ शंसकथयमेमह्यं २ ३ ४ लोकतंत्रंलोकया
त्राम् ५ ६ ७ ८ ९ १० ११ १२ १३ अपरिक्लिष्टंपूतिदुर्गंधादिरहितमन्नं वर्त्तनेवर्त्तमानाय वृतुधातुःपरस्मैपदीचुरादिर्णिचोविकल्पः १४ १५ १६ १७ ६३

चरणंशाखाचरणादि ब्राह्मणेनमासपक्षांतेवागतेनातिथिनाभिक्षितःसन्यासिनायाचितः प्रत्यहं अतिथिनायाचितः यद्वाभिक्षितःसन्यासिनायाचितःसामान्येनार्थिना गृहस्थोन्नंदद्यात यद्वाभिक्षासंजातास्येतितारकादित्वादितच् भिक्षितोभिक्षुकः ब्राह्मणेनयाचितःसन अन्नंदद्यात भिक्षुकान्नदानेनप्रार्थनामात्रेणान्नंदद्यान्ना-त्रकेनतव्यंकर्त्तव्यमितिभावः १८ १९ २० २१ प्रसृताग्रभुक्प्रसृतपाकगृहस्थदृष्टः विप्रायमधिगच्छतीत्यन्वयः २२ महाभागेकुलेइतिचपाठः २३

नपृच्छेद्गोत्रचरणंस्वाध्यायंदेशमेवच भिक्षितोब्राह्मणेनेहदद्यादन्नंप्रयाचितः १८ अन्नदस्यान्नवृक्षाश्चसर्वकामफलप्रदाः भवंति-चेहचामुत्रनृपतेनात्रसंशयः १९ आशंसंतेहिपितरःसुवृष्टिमिवकर्षकाः अस्माकमपिपुत्रोवापौत्रोवान्नंप्रदास्यति २० ब्राह्मणोहिमहद्भूतंस्वयंदेहीतियाचति अकामोवासकामोवादत्वापुण्यमवाप्नुयात् २१ ब्राह्मणःसर्वभूतानामतिथिःप्रसृताग्रभुक् विप्रायमधिगच्छंतिभिक्षमाणागृहंसदा २२ सत्कृताश्चनिवर्त्तंतेतदतीवप्रवर्द्धते महाभागेकुलेप्रेत्यजन्मचाप्नोतिभारत २३ दत्वात्वन्नंनरोलोकेतथा-स्थानमनुत्तमम् नित्यमिष्टान्नदायीतुस्वर्गेवसतिसत्कृतः २४ अन्नंप्राणानराणांहिसर्वमन्नेप्रतिष्ठितम् अन्नदःपशुमान्पुत्रीधनवान्भोगवानपि २५ प्राणवांश्चापिभवतिरूपवांश्चतथानृप अन्नदःप्राणदोलोकेसर्वदःप्रोच्यतेतुसः २६ अन्नंहिदत्वातिथयेब्राह्मणाययथा-विधि प्रदातासुखमाप्नोतिदेवतैश्चापिपूज्यते २७ ब्राह्मणोहिमहद्भूतंक्षेत्रंभूतंयुधिष्ठिर उप्यतेयत्रयद्बीजंतद्धिपुण्यफलंमहत् २८ प्रत्यक्षप्रीतिजननंभोक्तुर्दातुर्भवत्युत सर्वाण्यन्यानिदानानिपरोक्षफलवंत्युत २९ अन्नाद्धिप्रसवंयातिरतिरन्नाद्धिभारत धर्मार्थावन्नतोविद्धिरोगनाशंतथान्नतः ३० अन्नंह्यमृतमित्याहपुराकल्पेप्रजापतिः अन्नंभुवंदिवंखंचसर्वमन्नेप्रतिष्ठितम् ३१ अन्नप्रणाशेभिद्यंतेशरीरेपंचधातवः बलंबलवतोपीहप्रणश्यत्यन्नहानितः ३२ आवाहाश्चविवाहाश्चयज्ञाश्चान्नमृतेतथा निवर्त्तंतेनरश्रेष्ठब्रह्मचात्रप्रलीयते ३३ अन्नतःसर्वमेतद्धियत्किंचित्स्थाणुजंगमम् त्रिषुलोकेषुधर्मार्थमन्नंदेयमतोबुधैः ३४ अन्नदस्यमनुष्यस्यबलमोजोयशांसिच कीर्त्तिश्चवर्द्धतेशश्वत्त्रिषुलोकेषुपार्थिव ३५ मेघेषूर्ध्वंसन्निधत्तेप्राणानांपवनःपतिः तच्चमेघगतंवारिशक्रोवर्षतिभारत ३६ आदत्तेचरसान्भौमानादित्यःस्वगभस्तिभिः वायुरादित्यतस्तांश्चरसान्देवःप्रवर्षति ३७

२४ २५ २६ २७ २८ २९ ३० ३१ पंचधातवःपंचभूतानि ।। अन्नहानितः ३२ अन्नत्यागात् आवाहाः प्रमानि विवाहाः उपयमाः तथायज्ञाश्च अन्नमृते अन्नंविनानिवर्त्तंते ब्रह्मवेदः ३३ स्थाणुःस्थावरं स्थाणुजंगममिति समाहारेद्वंद्वेकत्वंनपुंसकत्वंच ३४ बलंशरीरसामर्थ्यं ३५ ओजस्तेजःअन्नादेवसर्वंभवतीति अन्नस्यपूर्वंप्रसंगमाह मेघेषूर्ध्वंसन्निधत्तेइतिपवनोवायुरूर्ध्वंसन्निधत्तेगच्छति पवनस्यविशेषणं प्राणानांपतिःरक्षकः तथाचवायुनाप्रेरितोमेघस्तद्गतंवारिजलंशक्रोवर्षतीत्यन्वयः ३६ स्वगभस्तिभिःस्वकीयैःकिरणैः ३७ ६७

३८ ३९ ४० ४१ प्राणान्ददातीति गृहमभ्यागताय याचकायैवान्नं दद्यात् सम्भृतानां प्राणान् तेजश्च ददाति ४२ आदां दत्तवान् गतज्वरो गतानुतापः ४३
४४ अन्नदानां जनानामित्रिशेषः लोकादीनृशृणु इत्यादि प्रतिपादयति अध्यायसमाप्तिं यावत् ४५ ४६ ४७ ४८ ४९ ५० प्रासादाः पाण्डुराभ्राभाः
शङ्खमेघसदृशाः ५१ ५२ इतिश्रीमहाभारते आनुशासनिके पर्वणि टीकायां त्रिषष्टितमोऽध्यायः ६३ १ नक्षत्रयोगेऽन्नदानविधौ नारदेन सह देव-

नद्यदा मेघतो वारि पतितं भवति क्षितौ तदा वसुमती देवी स्निग्धा भवति भारत ३८ ततः सस्यानि रोहन्ति येन वर्त्तयते जगत् मांसमेदोऽस्थि
शुक्राणां प्रादुर्भावस्ततः पुनः ३९ संभवन्ति ततः शुक्रात्प्राणिनः पृथिवीपते अग्नीषोमौ हि तच्छुक्रं सृजतः पुष्यतश्च ह ४० एवमन्ना-
द्धि सूर्यश्च पवनः शुक्रमेव च एक एव स्मृतो राशिस्ततो भूतानि जज्ञिरे ४१ प्राणान्ददाति भूतानां तेजश्च भरतर्षभ गृहमभ्यागताया
थयो दद्यादन्नमर्थिने ४२ भीष्म उवाच नारदेनैवमुक्तोऽहमदामन्नं सदा नृप अनसूयुस्त्वमप्यन्नं तस्माद्देहि गतज्वरः ४३
दत्वान्नं विधिवद्राजन्विप्रेभ्यस्त्वमिति प्रभो यथावदनुरूपेभ्यस्ततः स्वर्गमवाप्स्यसि ४४ अन्नदानां हि ये लोकास्तांस्त्वं शृणु जनाधि
प भुवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ४५ तारासंस्थानि रूपाणि नानास्तम्भान्वितानि च चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ४६
तरुणादित्यवर्णानि स्थावराणि चराणि च अनेकशतभौमानि सान्तर्जलचराणि च ४७ वैदूर्यार्कप्रकाशानि रौप्यरुक्ममयानि च सर्वकामफ
लाश्चापि वृक्षा भवनसंस्थिताः ४८ वाप्यो वीथ्यः सभाः कूपा दीर्घिकाश्चैव सर्वशः घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ४९ भक्ष्य
भोज्यमयाः शैला वासांस्याभरणानि च क्षीरं स्रवन्ति सरितस्तथा चैवान्नपर्वताः ५० प्रासादाः पाण्डुराभ्राभाः शय्याश्च काञ्चनोज्वलाः ता
न्यन्नदाः प्रपद्यन्ते तस्मादन्नप्रदो भव ५१ इतिश्रीमहाभारते आनुशासनिके पर्वणि दानधर्मे दानधर्मार्थकथने त्रिषष्टितमोऽध्यायः ६३
युधिष्ठिर उवाच श्रुतं मे भवतो वाक्यमन्नदानस्य यो विधिः नक्षत्रयोगस्येदानीं दानकल्पं ब्रवीहि मे १ भीष्म उवाच अत्राप्युदा
हरन्तीममितिहासं पुरातनम् देवक्याश्चैव संवादं महर्षेर्नारदस्य च २ द्वारकामनुसंप्राप्तं नारदं देवदर्शनम् पप्रच्छैदं वचः प्रश्नं देवकी धर्म
दर्शनम् ३ तस्याः संपृच्छमानाया देवर्षिर्नारदस्ततः आचष्ट विधिवत्सर्वं तच्छृणुष्व विशांपते ४ नारद उवाच कृत्तिकासु महाभा
गे पायसेन ससर्पिषा संतर्प्य ब्राह्मणान्साधूँल्लोकानाप्नोत्यनुत्तमान् ५ रोहिण्यां प्रथितैर्मार्गैर्मांसैरन्नेन सर्पिषा पयोऽन्नपानं दातव्य
मनृणार्थं द्विजातये ६

कीसंवादं कथयति अत्रेति २ द्वारकामनुप्राप्तं देवर्षिं नारदं इदं वक्ष्यमाणं वचः प्रश्नं प्रश्नभूतं वचः पप्रच्छ प्रत्युत्तरमाकाङ्क्षमाणा उवा
चेत्यर्थः नारदस्य स्वरूपं योग्यत्वसूचकं विशेषणमाह धर्मदर्शनमिति ३ ४ ५ मार्गैर्मांसैर्मृगमांसैः ६ ७ ७ ७ ७

सौम्यनक्षत्रेमृगशिरसि ७ ८ ९ १० ११ १२ फाणितंगोरसविकारः १३ १४ १५ १६ १७ १८ प्रासंगोधान्यादिपिधानंचतुरस्रं

दोग्ध्रींदत्वासवत्सांतुनक्षत्रेसोमदेवते गच्छंतिमानुषाल्लोकात्स्वर्गलोकमनुत्तमम् ७ आर्द्रायांकृसरंदत्वातिलमिश्रमुपोषितः नरस्तर
तिदुर्गाणिक्षुरधारांश्चपर्वतान् ८ पूपान्पुनर्वसौदत्वातथैवान्नानिशोभने तेजस्वीरूपसंपन्नोबह्वन्नोजायतेकुले ९ पुष्येणकनकंद
त्वाकृतंवाकृतमेवच अनालोकेषुलोकेषुसोमवत्सविराजते १० आश्लेषायांतुयोरूप्यमृषभंवाप्रयच्छति ससर्वभयनिर्मुक्तःशात्रवाना-
धितिष्ठति ११ मघासुतिलपूर्णानिवर्धमानानिमानवः प्रदायपुत्रपशुमानिहप्रेत्यचमोदते १२ फल्गुनीपूर्वसमयेब्राह्मणानामुपोषितः
भक्ष्यान्फाणितसंयुक्तान्दत्वासौभाग्यमृच्छति १३ घृतक्षीरसमायुक्तंविधिवत्षष्टिकौदनम् उत्तराविषयेदत्वास्वर्गलोकेमहीयते १४ य
द्यत्प्रदीयतेदानमुत्तराविषयेनरैः महाफलमनंतंतद्भवतीतिविनिश्चयः १५ हस्तेहस्तिरथंदत्वाचतुर्युक्तमुपोषितः प्राप्नोतिपरमाँल्लोका
न्पुण्यकामसमन्वितान् १६ चित्रायामृषभंदत्वापुण्यगंधांश्चभारत चरत्यप्सरसांलोकेरमतेनंदनेतथा १७ स्वात्यामथधनंदत्वाय-
दिष्टतममात्मनः प्राप्नोतिलोकान्सशुभानिहचैवमहद्यशः १८ विशाखायामनड्वाहंधेनुंदत्वाचदुग्धदाम् सप्रासंगंचशकटंसधान्यंवस्त्र
संयुतम् १९ पितॄन्देवांश्चप्रीणातिप्रेत्यचानंत्यमश्नुते नचदुर्गाण्यवाप्नोतिस्वर्गलोकंचगच्छति २० दत्वायथोक्तंविप्रेभ्योवृत्तिमिष्टांस
विंदति नरकादींश्चसंक्लेशान्नाप्नोतीतिविनिश्चयः २१ अनुराधासुप्रावारंवरान्नंसमुपोषितः दत्वायुगशतंचापिनरःस्वर्गेमहीयते २२
कालशाकंतुविप्रेभ्योदत्वामर्त्यःसमूलकम् ज्येष्ठायामृद्धिमिष्टांवैगतिमिष्टांसगच्छति २३ मूलेमूलफलंदत्वाब्राह्मणेभ्यःसमाहितः
पितॄन्प्रीणयतेचापिगतिमिष्टांचगच्छति २४ अथपूर्वास्वाषाढासुदधिपात्राण्युपोषितः कुलवृत्तोपसंपन्नेब्राह्मणेवेदपारगे २५ पु
रुषोजायतेप्रेत्यकुलेसुबहुगोधने उदमंथंससर्पिष्कंप्रभूतमधुफाणितम् २६ दत्वोत्तरास्वाषाढासुसर्वकामानवाप्नुयात् दुग्धंत्वभि
जितेयोगेदत्वामधुघृतप्लुतम् धर्मनित्योमनीषिभ्यःस्वर्गलोकेमहीयते २७ श्रवणेकंबलंदत्वावस्त्रांतरितमेववा श्वेतेनयातियानेन
स्वर्गलोकानसंवृतान् २८ गोप्रयुक्तंधनिष्ठासुयानंदत्वासमाहितः वस्त्ररश्मिधरंसद्यःप्रेत्यराज्यंप्रपद्यते २९ गंधाञ्छतभिषग्योगेद
त्वासागरुचंदनान् प्राप्नोत्यप्सरसांसंघान्प्रेत्यगंधांश्चशाश्वतान् ३० पूर्वाभाद्रपदायोगेराजमाषान्प्रदायतु सर्वभक्षफलोपेतःसवै-
प्रेत्यसुखीभवेत् ३१ औरभ्रमुत्तरायोगेयस्तुमांसंप्रयच्छति सपितॄन्प्रीणयतिवैप्रेत्यचानंत्यमश्नुते ३२

१९ २० २१ २२ २३ २४ २५ उदमंथउदकुंभयुक्तंसक्तुविकारं २६ २७ २८ २९ ३० ३१ उरभ्रःपशुविशेषः ३२ ५

कांस्योपदोहनांधेनुरेवत्यांयःप्रयच्छति साप्रेत्यकामानादायदातारमुपतिष्ठति ३३ रथमश्वसमायुक्तंदत्वाश्विन्यांनरोत्तमः हस्त्यश्वर-
थसंपन्नेवर्चस्वीजायतेकुले ३४ भरणीषुद्विजातिभ्यस्तिलधेनुंप्रदत्त्यवै गाःसुप्रभूताःप्राप्नोतिनरःप्रेत्ययशस्तथा ३५ भीष्मउवाच
इत्येषलक्षणोद्देशःप्रोक्तोनक्षत्रयोगतः देवक्यानारदेनेहसास्नुषाभ्योब्रवीदिदम् ३६ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानध
र्मेनक्षत्रयोगदानंनामचतुःषष्टितमोऽध्यायः ६४ भीष्मउवाच सर्वान्कामान्प्रयच्छंतियेप्रयच्छंतिकांचनम् इत्येवंभगवान्न-
त्रिःपितामहसुतोब्रवीत् १ पवित्रमथचायुष्यंपितॄणामक्षयंचतत् सुवर्णंमनुजेंद्रेणहरिश्चंद्रेणकीर्त्तितम् २ पानीयपरमंदानंदाना-
नामनुरब्रवीत् तस्मात्कूपांश्चवापीश्चतडागानिचखानयेत् ३ अर्धंपापस्यहरतिपुरुषस्येहकर्मणः कूपःप्रवृत्तपानीयःसुप्रवृत्तश्चनित्य
शः ४ सर्वंतारयतेवंशंयस्यखातेजलाशये गावःपिबंतिविप्राश्चसाधवश्चनराःसदा ५ निदाघकालेपानीयंयस्यतिष्ठत्यवारितम्
सदुर्गंविषमंकृत्स्नंनकदाचिदवाप्नुते ६ बृहस्पतेर्भगवतःपूष्णश्चैवभगस्यच अश्विनोश्चैववन्हेश्चप्रीतिर्भवतिसर्पिषा ७ परमंभे
षजंह्येतद्यज्ञानामेतदुत्तमम् रसानामुत्तमंचैतत्फलानांचैतदुत्तमम् ८ फलकामोयशस्कामःपुष्टिकामश्चनित्यदा घृतंदद्याद्द्विजा
तिभ्यःपुरुषःशुचिरात्मवान् ९ घृतंमासेआश्वयुजिविप्रेभ्योयःप्रयच्छति तस्मैप्रयच्छतोरूपंप्रीतोदेवाविहाश्विनौ १० पायसंसर्पिषा
मिश्रंद्विजेभ्योयःप्रयच्छति गृहंतस्यनरक्षांसिधर्षयंतिकदाचन ११ पिपासयानम्रियतेसोपच्छंदश्चजायते नप्राप्नुयाच्चव्यसनंकर
कान्यःप्रयच्छति १२ प्रयतोब्राह्मणाग्रेभ्यःश्रद्धयापरयायुतः उपस्पर्शनषड्भागंलभतेपुरुषःसदा १३ यःसाधनार्थंकाष्ठानिब्रा-
ह्मणेभ्यःप्रयच्छति प्रतापनार्थंराजेंद्रवृत्तवद्भ्यःसदानरः १४ सिध्यंत्यर्थाःसदातस्यकार्याणिविविधानिच उपर्युपरिशत्रूणांवपुषा
दीप्यतेचसः १५ भगवांश्चापिसंप्रीतोवन्हिर्भवतिनित्यशः नतंत्यजंतिपशवःसंग्रामेचजयत्यपि १६ पुत्रान्छ्रियंचलभतेयश्छत्रंसं
प्रयच्छति नचक्षुर्व्याधिंलभतेउपभोगमथाश्नुते १७ निदाघकालेवर्षेवायश्छत्रंसंप्रयच्छति नास्यकश्चिन्मनोदाहःकदाचिदपिजा
यते १८ कृच्छ्रात्सर्वविषमाच्चैवक्षिप्रंमोक्षमवाप्नुते प्रदानंसर्वदानानांशकटस्यविशांपते एवमाहमहाभागःशांडिल्योभगवान्नृषिः
१९ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेपंचषष्टितमोऽध्यायः ६५

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० इमाहिमवत्सान्निहित २१

युधिष्ठिरउवाच दह्यमानायविप्राययः प्रयच्छत्युपानहौ यत्फलंतस्यभवतितन्मेब्रूहिपितामह १ भीष्मउवाच उपानहौप्रय-
च्छेद्योब्राह्मणेभ्यःसमाहितः मर्दतेकंटकान्सर्वान्विषमान्निस्तरत्यपि २ सशत्रूणामुपरिचसंतिष्ठतियुधिष्ठिर यानंचाश्वतरीयुक्तंत
स्यशुभ्रंविशांपते ३ उपतिष्ठतिकौंतेयरौप्यकांचनभूषितम् शकटंदम्यसंयुक्तंदत्तंभवतिचैवहि ४ युधिष्ठिरउवाच यत्फलंति
लदानेचभूमिदानेचकीर्तितम् गोदानेचान्नदानेच भूयस्तद्ब्रूहिकौरव ५ भीष्मउवाच शृणुष्वममकौंतेयतिलदानस्ययत्फलम्
निशम्यचयथान्यायंप्रयच्छकुरुसत्तम ६ पितॄणांपरमंभोज्यंतिलाःसृष्टाःस्वयंभुवा तिलदानेनवैतस्मात्पितृपक्षःप्रमोदते ७ माघमा-
सेतिलान्यस्तुब्राह्मणेभ्यःप्रयच्छति सर्वसत्वसमाकीर्णंनरकंसनपश्यति ८ सर्वसत्रैश्चयजतेयस्तिलैर्यजतेपितॄन् नचाकामेन-
दातव्यंतिलश्राद्धंकदाचन ९ महर्षेःकश्यपस्यैतेगात्रेभ्यःप्रसृतास्तिलाः ततोदिव्यंगताभावंप्रदानेषुतिलाःप्रभो १० पौष्टिकारू
पकाश्चैवतथापापविनाशनाः तस्मात्सर्वप्रदानेभ्यस्तिलदानंविशिष्यते ११ आपस्तंबश्चमेधावीशंखश्चलिखितस्तथा महर्षिर्गौतमश्चापितिल
दानैर्दिवंगताः १२ तिलहोमारतानित्यंविप्राःसर्वेसंयतमैथुनाः समागव्येनहविषाप्रवृत्तिषुचसंस्थिताः १३ सर्वेषामितिदानानांतिलदानंविशिष्य
ते अक्षयंसर्वदानानांतिलदानमिहोच्यते १४ उच्छिन्नेतुपुराहव्येकुशिकर्षिःपरंतपः तिलैरग्नित्रयंहुत्वाप्राप्तवान्गतिमुत्तमाम् १५ इ
तिप्रोक्तंकुरुश्रेष्ठतिलदानमनुत्तमम् विधानंयेनविधिनातिलानामिहशस्यते १६ अतऊर्ध्वंनिबोधेदंदेवानांयष्टुमिच्छताम् समागमंम-
हाराजब्राह्मणांवैस्वयंभुवा १७ देवाःसमेत्यब्रह्माणंभूमिभागेयियक्षवः शुभंदेशमयाचंतयजेमइतिपार्थिव १८ देवाऊचुः
भगवंस्त्वंप्रभुर्भूमेःसर्वस्यत्रिदिवस्यच प्रभुर्भवतितस्मात्त्वंसमनुज्ञातुमर्हसि १९ ब्रह्मोवाच ददामिमेदिनीभागंभवद्भ्योहंसुरर्ष
भाः यस्मिन्देशेकरिष्यध्वंयज्ञान्काश्यपनंदनाः २० देवाऊचुः भगवन्कृतकार्याःस्मयक्ष्यामहेस्वाप्तदक्षिणैः इमंतुदेशंमुनयःपर्युपास-
तिनित्यदा २१ ततोगस्त्यश्चकण्वश्चभृगुरत्रिर्वृषाकपिः असितोदेवलश्चैवदेवयज्ञमुपागमन् २२ ततोदेवामहात्मानईजिरेयज्ञमच्युतं
तथासमापयामासुर्यथाकालंसुरर्षभाः २३ तइष्टयज्ञास्त्रिदशाहिमवत्यचलोत्तमे षष्ठमंशंक्रतोस्तस्यभूमिदानंप्रचक्रिरे २४ प्रादेश
मात्रंभूमेस्तुयोदद्यादनुपस्कृतम् नसीदतिसकृच्छ्रेषुनचदुर्गाण्यवाप्नुते २५ शीतवातातपसहांगृहभूमिंसुसंस्कृताम् प्रदायसुरलोक
स्थःपुण्यांतेपिनचाल्यते २६

२२ २३ हिमवतिहिमवत्समीपेकुरुक्षेत्रेयेषांकुरुक्षेत्रंवेदिरासीदितिश्रुते गंगाद्वारेवा २४ २५ २६ ९७ ९७

२७ प्रधानंलोकंब्रह्मलोकं २८ २९ ३० ३१ तद्भूमिपरकीयांभूमिंवायोनिर्वपेत्पितृभिःपितृभ्योदद्यात् तच्छ्राद्धंतद्भूमिदानाग्न्यकर्मचउभयंनिहन्यतेहृ-

मुदितोवसतिप्राज्ञःशक्रेणसहपार्थिव प्रतिश्रयप्रदानाच्चसोपिस्वर्गेमहीयते २७ अध्यापककुलेजातःश्रोत्रियोनियतेंद्रियः गृहेयस्यव
सेत्तुष्टःप्रधानंलोकमश्नुते २८ तथागवार्थेशरणंशीतवर्षसहंदृढम् आसप्तमंतारयतिकुलंभरतसत्तम २९ क्षेत्रभूमिंददल्लोकेशुभां
श्रियमवाप्नुयात् रत्नभूमिंप्रदद्यात्तुकुलवंशंप्रवर्द्धयेत् ३० नचोरवरांननिर्दग्धांमहींदद्यात्कथंचन नश्मशानपरीतांचनचपापनिषेवि
ताम् ३१ पारक्येभूमिदेशेतुपितृणांनिर्वपेत्तुयः तद्भूमिंवापिपितृभिःश्राद्धकर्मविहन्यते ३२ तस्मात्क्रीत्वामहींदद्यात्स्वल्पामपिविच-
क्षणः पिंडःपितृभ्योदत्तोवैतस्यांभवतिशाश्वतः ३३ अटवीपर्वताश्चैवनद्यस्तीर्थानियानिच सर्वाण्यस्वामिकान्याहुर्नहितत्रपरिग्रहः ३४
इत्येतद्भूमिदानस्यफलमुक्तंविशांपते अतःपरंतुगोदानंकीर्त्तयिष्यामितेनघ ३५ गावोधिकास्तपस्विभ्योयस्मात्सर्वेभ्यएवच तस्मा
न्महेश्वरोदेवस्तपेनाभिःसहास्थितः ३६ ब्रह्मलोकेवसंत्येताःसोमेनसहभारत यांताब्रह्मर्षयःसिद्धाःप्रार्थयंतिपरांगतिम् ३७ पयसा
हविषादध्नाशकृताचाथचर्मणा अस्थिभिश्चोपकुर्वंतिशृंगैर्वाल्यैश्चभारत ३८ नासांशीतातपौस्यातांसदैताःकर्मकुर्वते नवर्षंविषयं
वापिदुःखमासांभवत्युत ३९ ब्राह्मणैःसहितायांतितस्मात्परमकंपदम् एवंगोब्राह्मणंतस्मात्प्रवदंतिमनीषिणः ४० रंतिदेवस्ययज्ञेताः
पशुत्वेनोपकल्पिताः अतश्चर्मण्वतीराजन्गोचर्मभ्यःप्रवर्त्तिता ४१ पशुत्वाच्चविनिर्मुक्ताःप्रदानायोपकल्पिताः ताइमाविप्रमुख्येभ्यो
योददातिमहीपते ४२ निस्तरेदापदंकृच्छ्रांविषमस्थोपिपार्थिव गवांसहस्रदःप्रेत्यनरकंनप्रपद्यते ४३ सर्वत्रविजयंचापिलभतेमनुजा
धिप अमृतंवैगवांक्षीरमित्याहत्रिदशाधिपः ४४ तस्माद्ददातियोधेनुममृतंसंप्रयच्छति अग्नीनामव्ययंह्येतद्धौम्यंवेदविदोविदुः ४५
तस्माद्ददातियोधेनुंसहौम्यंसंप्रयच्छति स्वर्गोवैमूर्त्तिमानेषवृषभंयोगवांपतिम् विप्रेगुणयुतेदद्यात्सवैस्वर्गेमहीयते ४६ प्राणा
वैप्राणिनामेतेप्रोच्यंतेभरतर्षभ तस्माद्ददातियोधेनुंप्राणानेषप्रयच्छति ४७ गावःशरण्याभूतानामितिवेदविदोविदुः तस्माद्ददातियो
धेनुंशरणंसंप्रयच्छति ४८ नवधार्थंप्रदातव्यानकीनाशेननास्तिके गोजीवनेनदातव्यातथागौर्भरतर्षभ ४९ ददत्सतादृशानांवैन
रोगांपापकर्मणाम् अक्षयंनरकंयातीत्येवमाहुर्महर्षयः ५० नकृशांनापवत्सांवावंध्यांरोगान्वितांतथा नव्यंगांनपरिश्रांतांदद्या
द्गांब्राह्मणायवै ५१ दशगोसहस्रदोहिशक्रेणसहमोदते अक्षयाँल्लभतेलोकान्नरःशतसहस्रशः ५२

स्यांभवति ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२

५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायांषट्षष्टितमोऽध्यायः ६६

इत्येतद्गोप्रदानंचतिलदानंचकीर्तितं तथाभूमिप्रदानंचशृणुष्वान्नेचभारत ५३ अन्नदानप्रदानंहिकौन्तेयपरिचक्षते अन्नस्यहिप्रदा
नेनरंतिदेवोदिवंगतः ५४ श्रान्तायक्षुधितायान्नंयःप्रयच्छतिभूमिप स्वायंभुवमहत्स्थानंसगच्छतिनराधिप ५५ नहिरण्यैर्नवासो-
भिर्नान्यद्दानेनभारत प्राप्नुवन्तिनराःश्रेयोयथाह्यन्नप्रदाःप्रभो ५६ अन्नंवैप्रथमंद्रव्यमन्नंश्रीश्चपरामता अन्नात्प्राणःप्रभवतितेजो
वीर्यंबलंतदा ५७ सद्योददातियश्चान्नंसदैकाग्रमनानरः नसदुर्गाण्यवाप्नोतीत्येवमाहपराशरः ५८ अर्चयित्वायथान्यायंदेवेभ्यो
न्नंनिवेदयेत् यदन्नाहिनराराजंस्तदन्नास्तस्यदेवताः ५९ कौमुदेशुक्लपक्षेतुयोन्नदानंकरोत्युत ससंतरतिदुर्गाणिप्रेत्यचानंत्यमश्नुते
६० अभुक्त्वातिथयेचान्नंप्रयच्छेद्यःसमाहितः सवैब्रह्मविदांलोकान्प्राप्नुयाद्भरतर्षभ ६१ सुकृच्छ्रामापदंप्राप्तश्चान्नदःपुरुषस्तरे
त् पापंतरतिचैवेहदुष्कृतंचापकर्षति ६२ इत्येतदन्नदानस्यतिलदानस्यचैवह भूमिदानस्यचफलंगोदानस्यचकीर्तितम् ६३ इ
तिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेषट्षष्टितमोऽध्यायः ६६ युधिष्ठिरउवाच श्रुतंदानफलंतातयत्त्वयापरिकी
र्तितम् अन्नदानंविशेषेणप्रशस्तमिहभारत १ पानीयदानमेवैतत्कथंचेहमहाफलम् इत्येतच्छ्रोतुमिच्छामिविस्तरेणपितामह
२ भीष्मउवाच हंततेवर्तयिष्यामियथावद्भरतर्षभ गदतस्तन्ममाद्येहशृणुसत्यपराक्रम ३ पानीयदानात्प्रभृतिसर्ववक्ष्यामि
तेनघ यदन्नंयच्चपानीयंसंप्रदायाश्नुतेनरः ४ नतस्मात्परमंदानंकिंचिदस्तीतिमेमनः अन्नात्प्राणभृतस्तातप्रवर्तन्तेहिसर्वशः ५ तस्मा
दन्नंपरंलोकेसर्वलोकेषुकथ्यते अन्नाद्बलंचतेजश्चप्राणिनांवर्धतेसदा ६ अन्नदानमतस्तस्माच्छ्रेष्ठमाहप्रजापतिः सावित्र्याह्यपिकौन्ते
यश्रुतंतेवचनंशुभम् ७ यतश्चयद्यथाचैवदेवसत्रेमहामते अन्नेदत्तेनरेणेहप्राणादत्ताभवन्त्युत ८ प्राणदानाद्धिपरमंनदानमिहविद्य
ते श्रुतंहितेमहाबाहोलोमशस्यापितद्वचः ९ प्राणान्दत्वाकपोतायप्राप्ताःशिबिनापुरा तांगतिंलभतेदत्वाद्विजस्यान्नंविशांपते १० त
स्माद्विशिष्टांगच्छन्तिप्राणदाइतिनःश्रुतम् अन्नंवापिप्रभवतिपानीयात्कुरुसत्तम नीरजातेनहिविनानकिंचित्संप्रवर्तते ११ नीरजातश्च
भगवान्सोमोग्रहगणेश्वरः अमृतंचसुधाचैवसुधाचैवामृतंतथा १२ अन्नौषध्योमहाराजवीरुधश्चजलोद्भवाः यतःप्राणभृतांप्राणाः
संभवंतिविशांपते १३ देवानाममृतंत्वन्ननागानांचसुधातथा पितृणांचस्वधाप्रोक्तापशूनांचापिवीरुधः १४

१ २ ३ ४ ५ ६ ७ ८ ९ १० नीरजातेनजन्मोद्भवेनआन्यादिना ११ १२ १३ १४ ७ ७ ७ ५

अन्नमेवमनुष्याणांप्राणानाहुर्मनीषिणः तच्चसर्वंनरव्याघ्रपानीयात्संप्रवर्त्तते १५ तस्मात्पानीयदानाद्धिनेपरंविद्यतेक्कचित् तच्चदद्यान्न
रोनित्यंयदीच्छेद्भूतिमात्मनः १६ धन्यंयशस्यमायुष्यंजलदानमिहोच्यते शत्रूंश्चाप्यधिकौंतेयसदातिष्ठतितोयदः १७ सर्वकामानवाप्नो
तिकीर्त्तिंचैवहिशाश्वतीम् प्रेत्यचानंत्यमश्नातिपापेभ्यश्चप्रमुच्यते १८ तोयदोमनुजव्याघ्रस्वर्गंगत्वामहाद्युते अक्षयान्समवाप्नोतिलो
कानित्यब्रवीन्मनुः १९ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेसप्तषष्टितमोऽध्यायः ६७ युधिष्ठिरउवाच तिला-
नांकीदृशंदानमथदीपस्यचैवहि अन्नानांवाससांचैवभूयएवब्रवीहिमे १ भीष्मउवाच अत्राप्युदाहरंतीममितिहासंपुरातनम् ब्रा
ह्मणस्यचसंवादंयमस्यचयुधिष्ठिर २ मध्यदेशेमहान्ग्रामोब्राह्मणानांबभूवह गंगायमुनयोर्मध्येयामुनस्यगिरेरधः ३ पर्णशालेतिवि
ख्यातोरमणीयोनराधिप विद्वांसस्तत्रभूयिष्ठाब्राह्मणाश्चावसंस्तथा ४ अथप्राहयमःकंचित्पुरुषंकृष्णवाससम् रक्ताक्षमूर्ध्वरोमाणं
काकजंघाक्षिनासिकम् ५ गच्छत्वंब्राह्मणग्रामंततोगत्वातमानय अगस्त्यंगोत्रतश्चापिनामतश्चापिशर्मिणम् ६ शमेनिविष्टंविद्वां
समध्यापकमनाहृतम् माचान्यमानयेथास्त्वंसगोत्रंतस्यपार्श्वतः ७ सहितादृग्गुणस्तेनतुल्योध्ययनजन्मना अपत्येषुतथावृत्तेःस
मस्तेनैवधीमता ८ तमानययथोद्दिष्टंपूजाकार्याहितस्यवै सगत्वाप्रतिकूलंतच्चकारयमशासनम् ९ तमाक्रम्यानयामासप्रतिषिद्धो-
यमेनयः तस्मैयमःसमुत्थायपूजांकृत्वाचवीर्यवान् १० प्रोवाचनीयतामेषसोन्यआनीयतामिति एवमुक्तेतुवचनेधर्मराजेनसद्विजः
११ उवाचधर्मराजानंनिर्विण्णोध्ययनेनवै योमेकालोभवेच्छेषस्तंवसेयमिहाच्युत १२ यमउवाच नाहंकालस्यविहितंप्रा-
प्नोमीहकथंचन योहिधर्मंचरतिवैतत्तुजानामिकेवलम् १३ गच्छविप्रत्वमद्यैवआलयंस्वंमहाद्युते ब्रूहिसर्वंयथासर्वंकरवाणिकिम
च्युत १४ ब्राह्मणउवाच यत्तत्रकृत्वासुमहत्पुण्यंस्यात्तद्ब्रवीहिमे सर्वस्यहिप्रमाणंत्वंत्रैलोक्यस्यापिसत्तमः १५ यमउवाच
शृणुतत्त्वेनविप्रर्षेप्रदानविधिमुत्तमम् तिलाःपरमकंदानंपुण्यंचैवेहशाश्वतम् १६ तिलाश्चसंप्रदातव्यायथाशक्तिद्विजर्षभ नित्यदा-
नात्सर्वकामांस्तिलानिर्वर्त्तयन्त्युत १७ तिलान्श्राद्धेप्रशंसंतिदानमेतद्ध्यनुत्तमम् तान्प्रयच्छस्वविप्रेभ्योविधिदृष्टेनकर्मणा १८ वै-
शाख्यांपौर्णिमास्यांतुतिलान्दद्याद्द्विजातिषु तिलाभक्षयितव्याश्चसदात्वालंभनंचतैः १९

हितंआयुःप्रमाणंनप्राप्नोमि नजानामिकालेनप्रवर्त्तितं
त्वामिहस्थापयितुंनशक्नोमीत्यर्थः १३ ब्रूहिपृच्छ १४ १५ १६ निवर्त्तयंतिसाधयंति १७ १८ आलंभनंसर्वतःस्पर्शनंउद्वर्त्तनमित्यर्थः १९ ६८ ६८

३० क्षंतारः क्षमिणः सत्रीभूतानामाच्छादनवद्रक्षकाः ३१ ३२ ३३ ३४ ३५ ३६ धर्मएवस्करः क्षरः तत्रसुष्टुआकाशंधारयंतितेस्क धारिण-

धृतराष्ट्रउवाच येदानशीलानप्रतिगृण्हतेसदानचाप्यर्थांश्चाददतेपरेभ्यः येषामदेयमर्हतेनास्तिकिंचित्सर्वातिथ्याःसुप्रसादाज-
नाश्च ३० येक्षंतारोनाभिजल्पंतिचान्यान्सत्रीभूताःसततंपुण्यशीलाः तथाविधानामेषलोकोमहर्षेपरंगताधृतराष्ट्रेनतत्र ३१
गोतमउवाच ततोपरेभांतिलोकाःसनातनाविरजसोवितमस्का विशोकाः आदित्यदेवस्यपदंमहात्मनस्तत्रत्वाहंहस्तिनंयात
यिष्ये ३२ धृतराष्ट्रउवाच स्वाध्यायशीलागुरुशुश्रूषणेरतास्तपस्विनःसुव्रताःसत्यसंधाः आचार्याणामप्रतिकूलभाषि-
णोनित्योत्थितागुरुकर्मस्वचोद्याः ३३ तथाविधानामेषलोकोमहर्षेविशुद्धानांभावितोवाग्यतानाम् सत्येस्थितानांवेदविदांमहात्म
नांपरंगताधृतराष्ट्रेनतत्र ३४ गोतमउवाच ततोपरेभांतिलोकाःसनातनाःसुपुण्यगंधाविरजाविशोकाः वरुणस्यराज्ञः
सदनेमहात्मनस्तत्रत्वाहंहस्तिनंयातयिष्ये ३५ धृतराष्ट्रउवाच चातुर्मास्यैर्येयजंतेजनाःसदातथेष्टीनांदशशतंप्राप्नुवंति
येचाग्निहोत्रंजुह्वतिश्रद्दधानायथाम्नायंत्रीणिवर्षाणिविप्राः ३६ सुधारिणाधर्मधुरेमहात्मनांयथोदितेवर्त्मनिसुस्थितानाम् धर्मा
त्मनांसुहृहतांगतिंतांपरंगताधृतराष्ट्रेनतत्र ३७ गोतमउवाच इंद्रस्यलोकाविरजाविशोकादुरत्ययाकांक्षितामानवानाम्
तस्यांहंतेभवनेभूरितेजसोराजन्निमंहस्तिनंयातयिष्ये ३८ धृतराष्ट्रउवाच शतवर्षजीवीयश्चशूरोमनुष्योवेदाध्यायीयश्च
यज्वाऽप्रमत्तः एतेसर्वेशक्रलोकंव्रजंतिपरंगताधृतराष्ट्रेनतत्र ३९ गोतमउवाच प्राजापत्याःसंतिलोकामहांतोनाकस्यपृष्ठे
पुष्कलावीतशोकाः मनीषिताःसर्वलोकोद्भवानांतत्रत्वाहंहस्तिनंयातयिष्ये ४० धृतराष्ट्रउवाच येराजानोराजसूयाभिषि
क्ताधर्मात्मानोरक्षितारःप्रजानाम् येचाश्वमेधावभृथेप्लुतांगास्तेषांलोकाधृतराष्ट्रेनतत्र ४१ गोतमउवाच ततःपरंभांति
लोकाःसनातनाःसुपुण्यगंधाविरजावीतशोकाः तस्मिन्नहंदुर्लभेचाप्यधृष्येगवांलोकेहस्तिनंयातयिष्ये ४२ धृतराष्ट्रउवाच
योगोसहस्रीशतदःसमासमागवांशतीदशदद्याच्चशक्त्या तथादशभ्योयश्चदद्यादिहैकांपंचभ्योवादानशीलस्तथैकाम् ४३ येजी
र्यंतेब्रह्मचर्येणविप्राब्राह्मींवाचंपरिरक्षंतिचैव मनस्विनस्तीर्थयात्रापरायणास्तेतत्रमोदंतिगवांनिवासे ४४ प्रभासंमानसंतीर्थं
पुष्कराणिमहत्सरः पुण्यंचनैमिषंतीर्थंबाहुदांकरतोयिनीम् ४५ गंगांगयाशिरश्चैवविपाशांस्थूलवालुकाम् कृष्णांगंगांपंचनदंमहा
ह्रदमथापिच ४६
स्तेषां धर्मधुरेइत्यपिपाठः ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ [illegible] [illegible] [illegible]

४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ब्रह्मसत्रब्रह्मलोकेनुगतस्यापिन
जीर्यतइत्यध्यायतात्पर्यम् ६२ ६३ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायां द्व्यधिकशततमोऽध्यायः १०२ अहिंसितंअहिंसा १ तपसः कृ-

गोमतींकौशिकींपंपांमहात्मानोधृतव्रताः सरस्वतीदृषद्वत्यौयमुनांयेतुयांतिच ४७ तत्रतेदिव्यसंस्थानादिव्यमाल्यधराःशिवाः प्रयां
तिपुण्यगंधाढ्याधृतराष्ट्रनतत्रवै ४८ गौतमउवाच तत्रशीतभयंनास्तिनचोष्णाभयमण्वपि नक्षुत्पिपासेनग्लानिर्नदुःखं-
नसुखंतथा ४९ नद्वेष्योनप्रियःकश्चिन्नबंधुर्नरिपुस्तथा नजरामरणेतत्रनपुण्यंनचपातकम् ५० तस्मिन्विरजसिस्फीतेप्रज्ञास
त्वव्यवस्थिते स्वयंभुभवनेपुण्येहस्तिनंमेप्रदास्यति ५१ धृतराष्ट्रउवाच निर्मुक्ताःसर्वसंगेर्येकृतात्मानोयतव्रताः अध्या-
त्मयोगसंस्थानैर्मुक्ताःस्वर्गगतिंगताः ५२ तेब्रह्मभुवनंपुण्यंप्राप्नुवंतीहसात्विकाः नतत्रधृतराष्ट्रस्तेशक्योद्रष्टुंमहामुने ५३
गौतमउवाच रथंतरंयत्रबृहच्चगीयतेयत्रवेदीपुंडरीकैस्तृणोति यत्रोपयातिहरिभिःसोमपीथीतत्रत्वाहंहस्तिनंयातयिष्ये ५४ बु
ध्यामित्वांवृत्रहणंशतक्रतुंव्यतिक्रमंतंभुवनानिविश्वा कच्चिन्नवाचावृजिनंकदाचिदकार्षंतेमनसोभिषंगात् ५५ शतक्रतुरुवाच
मघवाहंलोकपथंप्रजानामन्वागमंपरिवादेगजस्य तस्माद्भवान्प्रणतंमानुशास्तुब्रवीषियत्तत्करवाणिसर्वम् ५६ गौतमउवाच
श्वेतंकरेणुंममपुत्रहिनागंयंमेहार्षीर्दशवर्षाणिबालम् योमेवनेवसतोभूद्द्वितीयस्तमेवमेदेहिसुरेंद्रनागम् ५७ शतक्रतुरुवाच
अयंसुतस्तेद्विजमुख्यनागआगच्छतित्वामभिवीक्ष्यमाणः पादौचतेनासिकयोपजिघ्रतेश्रेयोममाध्याहिनमस्तेस्तु ५८ गौतमउवा
च शिवंसदैवेहसुरेंद्रतुभ्यंध्यायामिपूजांचसदाप्रयुंजे ममापित्वंशक्रशिवंददस्वत्वयादत्तंप्रतिगृण्हामिनागम् ५९ शतक्रतुरु
वाच येषांवेदानिहितावैगुहायांमनीषिणांसत्यवतांमहात्मनाम् तेषांत्वयैकेनमहात्मनास्मिबुद्धस्तस्मात्प्रीतिमांस्तेहमद्य ६० ह
न्तेहिब्राह्मणक्षिप्रंसहपुत्रेणहस्तिना त्वंहिप्राप्तुंशुभाँल्लोकानह्नायचचिरायच ६१ सगौतमंपुरस्कृत्यसहपुत्रेणहस्तिना दिवमाच-
क्रमेवज्रीसद्भिःसहदुरासदम् ६२ इमंयःशृणुयान्नित्यंयःपठेद्वाजितेंद्रियः सयातिब्रह्मणोलोकंब्राह्मणोगौतमोयथा ६३ इति
श्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेहस्तिकूटोनाम द्व्यधिकशततमोऽध्यायः १०२ युधिष्ठिरउवाच दानंबहुविधाकारंशां
तिःसत्यमहिंसितम् स्वदारतुष्टिश्चोक्तातेफलंदानस्यचैवयत् १ पितामहस्यविदितंकिमन्यत्तपसोबलात् तपसोयत्परंतेद्यतन्नोव्या
ख्यातुमर्हसि २

च्छ्रचांद्रायणादेर्बलादन्यत्किंबलवत्तरंशुद्धिदं नकिमपिअपितुतपस्तपसामध्येयत्परं २ ३ ४ ५ ६

लोकोभोग्यप्रदेशः ३ ४ ५ ६ ७ ८ एकरात्रादयःक्रतुविशेषाः ९ नारीपुरंकन्यासहस्रमदां १० ११ १२ १३ १४ चंद्रोभूषणविशेषः न

भीष्मउवाच तपःप्रचक्षतेयावत्तावल्लोकोयुधिष्ठिर मतंममात्रकौंतेयतपोनानशनात्परम् ३ अत्राप्युदाहरंतीममितिहासंपुरातनम्
भगीरथस्यसंवादंब्रह्मणश्चमहात्मनः ४ अतीत्यसुरलोकंचगवांलोकंचभारत ऋषिलोकंचसोगच्छत्भगीरथइतिश्रुतम् ५ तंतु
दृष्ट्वावचःप्राहब्रह्माराजन्भगीरथम् कथंभगीरथाऽगास्त्वमिमंलोकंदुरासदम् ६ नहिदेवानगंधर्वानमनुष्याभगीरथ आयांत्यतप्त
तपसःकथंवैत्वमिहागतः ७ भगीरथउवाच निष्काणांवैत्वददंब्राह्मणेभ्यःशतंसहस्राणिसदैवदानम् ब्राह्मंव्रतंनित्यमास्थायवि
द्धन्त्वेवाहंतस्यफलादिहागाम् ८ दशैकरात्रान्दशपंचरात्रानेकादशैकादशकान्क्रतूंश्च ज्योतिष्टोमानांचशतंयदिष्टं फलेनतेनापि
चनागतोहं ९ यच्चावसंजान्हवीतीरनित्यःशतंसमास्तप्यमानस्तपोहम् अदांचतत्राश्वतरीसहस्रंनारीपुरंनचतेनाहमागाम् १०
दशायुतानिचाश्वानांगोयुतानिचविंशतिम् पुष्करेषु द्विजातिभ्यःप्रादांशतसहस्रशः ११ सुवर्णचंद्रोत्तमधारिणीनांकन्योत्तमानामद
दंसहस्रम् षष्टिंसहस्राणिविभूषितानांजांबूनदैराभरणैर्नतेन १२ दशार्बुदान्यददंगोसवेज्यास्वेकैकशोदशगालोकनाथ समा
नवत्साःपयसासमन्विताःसुवर्णकांस्योपदुहानतेन १३ आप्तोर्यामेषुनियतमेकैकस्मिन्दशाददम् गृष्टीनांक्षीरदात्रीणांरोहिणीनां
शतेनंच १४ दोग्ध्रीणांवैगवांचापिप्रयुतानिदशैवह प्रादांदशगुणंब्रह्मन्नतेनाहमिहागतः १५ वाजिनांबाल्हिजातानामयुतान्यद
ददश कर्कानांहेममालीनानचतेनाहमागतः १६ कोटीश्चकांचनस्याष्टौप्रदांब्रह्मन्दशान्वहम् एकैकस्मिन्क्रतौतेनफलेनाहंन
चागतः १७ वाजिनांश्यामकर्णानांहरितानांपितामह प्रादांहेमस्रजांब्रह्मन्कोटीर्दशचसप्तच १८ ईषादंतान्महाकायान्कांचन-
स्रग्विभूषितान् पद्मिनोवैसहस्राणिप्रादांदशचसप्तच १९ अलंकृतानांदेवेशदिव्यैःकनकभूषणैः रथानांकांचनांगानांस-
हस्राण्यददंदश २० सप्तचान्यानियुक्तानिवाजिभिःसमलंकृतैः दक्षिणावयवाःकेचिद्वेदेयेसंप्रकीर्त्तिताः २१ वाजपेये
षुदशसुप्रादांतान्यपिचाप्यहम् शक्रतुल्यप्रभावाणामिज्ययाविक्रमेणह २२ सहस्रंनिष्ककंठानामददंदक्षिणामहम्
विजित्यभूपतीन्सर्वान्नर्थैरिष्ट्वापितामह २३

नेनाहमागाम् इत्यनुवर्त्तते १५ कर्कःकर्कोटकेवन्हौशुक्लाश्वेदर्पणेघटेइतिमेदिनी कर्कानांशुक्लाश्वानां १६ १७ १८ पद्मिनःपद्मचिन्हान् १९
२० २१ २२ दक्षिणां तान्दक्षिणारूपेणअददंउत्सृष्टवान् २३ ६७ ६७ ६७ ६७ ६७ ६७ ६७ ६७

२४ २५ २६ २७ २८ शम्यापृथुबुध्नःकाष्ठदंडःसबलेनाक्षिप्तोयावद्दूरंपततितावद्देशोयस्यवेदिकायाभवतिसशम्याक्षेपोयागः तथासद्यस्कादयोया
गविशेषाः २९ ३० ३१ ३२ ३३ कांचनमयानांवृक्षाणांवृतानांनानावर्णरत्नखचितानांवनमित्यर्थः ३४ ३५ ३६ अग्नीन् अग्निचयनानि ३७ ३८ ३९ गुहा

अप्तोर्यामोराजसूयेभ्योनचतेनाहमागतः स्रोतस्ययावद्गंगायाश्छन्नमासीज्जगत्पते २४ दक्षिणाभिःप्रवृत्ताभिर्ममनागांचतत्कृते वा
जिनांचसहस्रंहेमरूपवर्णशतभूषितं २५ वरग्रामशतंचाहमेकैकस्याभिधाददम् तपस्वीनियताहारःशममास्थायवाग्यतः २६ दीर्घका
लंहिमवतिगंगायाश्चदुरुस्सहाम् मूर्ध्नाधारांमहादेवःशिरसायामधारयत् २७ नतेनाप्यहमागच्छंफलेनेहपितामह २८ शम्याक्षेपै
रयजंयच्चदेवान्सद्यस्कानामयुतैस्तथापियन्नतत् त्रयोदशद्वादशाहैश्चदेवसपौंडरीकान्नचतेषांफलेन २९ अष्टौसहस्राणिककुद्मिनामहंशु
क्लर्षभाणामददंद्विजेभ्यः एकैकंवैकांचनशृंगमेभ्यःपत्नीश्चैषामददंनिष्ककंठीः ३० हिरण्यरत्ननिचयानददंरत्नपर्वतान् धनधान्यैःस
मृद्धांश्चग्रामाश्चान्यान्सहस्रशः ३१ शतशतानांगृष्टीनामददंचाप्यतंद्रितः इष्ट्वानेकैर्महायज्ञैर्ब्राह्मणेभ्योनतेनच ३२ एकादशाहैरयजंस
दक्षिणैर्द्विर्द्वादशाहैरश्वमेधैश्चदेव आर्कायणैःषोडशभिश्चब्रह्मंस्तेषांफलेनेहनचागतोऽस्मि ३३ निष्ककंठमददंयोजनायतंतद्विस्ती
र्णकांचनपादपानाम् वनंवृतानांरत्नविभूषितानांनचैवतेषामागतोहंफलेन ३४ तुरायणंहिव्रतमप्रधृष्यमक्रोधनोकरवंत्रिंशतोब्दान् गा
तेनगवामष्टशतानिचैवदिनेदिनेह्यददंब्राह्मणेभ्यः ३५ पयस्विनीनामथरोहिणीनांतथैवचान्याननडुहांल्लोकनाथ प्रादांनित्यंब्राह्मणेभ्यःसु
रेशनेहागतस्तेनफलेनचाहम् ३६ त्रिंशदग्नीनहंब्रह्मन्नयजंयच्चनित्यदा अष्टाभिःसर्वमेधैश्चनरमेधैश्चसप्तभिः ३७ दशभिर्विश्वजि
द्भिश्चशतैरष्टादशोत्तरैः नचैवतेषांदेवेशफलेनाहमिहागमम् ३८ सरय्वांबाहुदायांचगंगायामथनैमिषे गवांशतानामयुतमददंनच
तेनवै ३९ इंद्रेणगुह्यंनिहितंवैगुहायांयद्भार्गवस्तपसेहाभ्यविंदत् जाज्वल्यमानमुशनास्तेजसेहतत्साधयामासमहंवरेण्य ४० ततोमे
ब्राह्मणास्तुष्टास्तस्मिन्कर्मणिसाधिते सहस्रमृषयश्चासन्येवैतत्रसमागताः ४१ उक्तस्तैरस्मिगच्छत्वंब्रह्मलोकमितिप्रभो प्रीतेनोक्तःस
हस्रेणब्राह्मणानामहंप्रभो ४२ इमंलोकमनुप्राप्तोमाभूत्तत्रविचारणा ४३ कामंयथावद्विहितंविधात्रापृष्टेनवाच्यंतुमयापयावत् न
पोहिनान्यच्चानशनान्मतंमेनमोस्तुतेदेववरप्रसीद ४४

यन्निहितंगोपितंगुह्यंयदनशनंतपसाभ्यविंदत् आज्ञासीत् उशनस्तेजसाशुक्रस्यच
चनेनजाज्वल्यमानंतच्चवाक्यशेषात्सर्वभोगत्यागात्मकम् अनशनंसर्वभोगैर्ब्राह्मणानांसंतर्पणंचसाधयामासमित्यर्थः ४० ४१ ४२ ४३ ४४ ७

४५ ४६ ४७ ४८ इतिआनुशासनिकेपर्वणिदानधर्मेटीकायांत्र्यधिकशततमोऽध्याय १०३ १ २ ३ ४ वर्तयन् अनुतिष्ठन् ५ ६ ७ अलक्षणं-

भीष्मउवाच इत्युक्तवंतंब्रह्मातुराजानंसभगीरथम् पूजयामासपूजार्हंविधिदृष्टेनकर्मणा ४५ तस्मादनशनैर्युक्तोविप्रान्पूजय
नित्यदा विप्राणांवचनात्सर्वंपरत्रेहचसिध्यति ४६ वासोभिरन्नैर्गोभिश्चशुभैर्नैवेशिकैरपि शुभैःसुरगणैश्चापितोष्याएवद्विजास्तथा
४७ एतदेवपरंगुह्यमलोभेनसमाचर ४८ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेब्रह्मभगीरथसंवादेत्र्यधिकशततमो
ऽध्यायः १०३ युधिष्ठिरउवाच शतायुरुक्तःपुरुषःशतवीर्यश्चजायते कस्मान्म्रियंतेपुरुषाबालाअपिपितामह १ आयुष्मान्के-
नभवति अल्पायुर्वापिमानवः केनवालभतेकीर्तिंकेनवालभतेश्रियम् २ तपसाब्रह्मचर्येणजपहोमैस्तथौषधैः कर्मणामनसावाचात
न्मेब्रूहिपितामह ३ भीष्मउवाच अत्रतेहंप्रवक्ष्यामियन्मांत्वमनुपृच्छसि अल्पायुर्येनभवतिदीर्घायुर्वापिमानवः ४ येनवालभ
तेकीर्तिंयेनवालभतेश्रियम् यथावर्त्तयन्पुरुषःश्रेयसासंप्रयुज्यते ५ आचाराल्लभतेह्यायुराचाराल्लभतेश्रियम् आचारात्कीर्तिमाप्नोतिपु
रुषःप्रेत्यचेहच ६ दुराचारोहिपुरुषोनेहायुर्विंदतेमहत् त्रसंतियस्माद्भूतानितथापरिभवंतिच ७ तस्मात्कुर्यादिहाचारंयदिच्छेद्भूतिमात्म
नः अपिपापशरीरस्यआचारोहंत्यलक्षणम् ८ आचारलक्षणोधर्मःसंतश्चारित्रलक्षणाः साधूनांचयथावृत्तमेतदाचारलक्षणम् ९ अ
प्यदृष्टंश्रवादेवपुरुषंधर्मचारिणम् भूतिकर्माणिकुर्वाणंतंजनाःकुर्वतेप्रियम् १० येनास्तिकानिष्क्रियाश्चगुरुशास्त्राभिलंघिनः अधर्मज्ञादु
राचारास्तेभवंतिगतायुषः ११ विशीलाभिन्नमर्यादानित्यंसंकीर्णमैथुनाः अल्पायुषोभवंतीहनरानिरयगामिनः १२ सर्वलक्षणहीनोपि
समुदाचारवान्नरः श्रद्दधानोनसूयश्चशतंवर्षाणिजीवति १३ अक्रोधनःसत्यवादीभूतानामविहिंसकः अनसूयुरजिह्मश्चशतंवर्षाणि
जीवति १४ लोष्टमर्दीतृणच्छेदीनखखादीचयोनरः नित्योच्छिष्टःसंकुसुकोनेहायुर्विंदतेमहत् १५ ब्राह्मेमुहूर्तेबुध्येतधर्मार्थौचानु-
चिंतयेत् उत्थायाचम्यतिष्ठेतपूर्वांसंध्यांकृतांजलिः १६ एवमेवापरांसंध्यांसमुपासीतवाग्यतः नेक्षेतादित्यमुद्यंतंनास्तंयांतंकदाचन
१७ नोपसृष्टंनवारिस्थंनमध्यंनभसोगतम् ऋषयोनित्यसंध्यत्वाद्दीर्घमायुरवाप्नुयात् १८ तस्मात्तिष्ठेत्सदापूर्वांपश्चिमांचैववाग्यतः
येनपूर्वामुपासंतेद्विजाःसंध्यांनपश्चिमाम् १९

कुष्ठापस्मारादिविरुद्धंलक्षणम् ८ ९ श्रवात् श्रवणात् तंपुरुषम् जनाःसाधवः १० ११ १२
१३ १४ संकुसुकोदुर्ज्जनः अस्थिरश्चसंकुसुकोस्थिरइत्यमरः १५ १६ १७ १८ १९ छ छ छ

२० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८

सर्वास्तान् धार्मिकोराजाशूद्रकर्माणिकारयेत् परदारान्नगंतव्याःसर्ववर्णेषुकर्हिचित् २० नहीदृशमनायुष्यंलोकेकिंचनविद्यते
यादृशंपुरुषस्येहपरदारोपसेवनम् २१ यावंतोरोमकूपाःस्युःस्त्रीणांगात्रेषुनिर्मिताः तावद्वर्षसहस्राणिनरकंपर्युपासते २२ प्रसाधनंच
केशानामंजनंदंतधावनम् पूर्वाह्णएवकार्याणिदेवतानांचपूजनम् २३ पुरीषमूत्रेनोदीक्षेन्नाधितिष्ठेत्कदाचन नातिकल्यंनातिसायं
नचमध्यंदिनेस्थिते २४ नाज्ञातैःसहगच्छेतनैकोनवृषलैःसह पंथादेयोब्राह्मणायगोभ्योराजभ्यएवच २५ वृद्धायभारतप्तायगर्भिण्यै
दुर्बलायच प्रदक्षिणंचकुर्वीतपरिज्ञातान्वनस्पतीन् २६ चतुष्पथान्प्रकुर्वीतसर्वानेवप्रदक्षिणान् मध्यंदिनेनिशाकाले अर्द्धरात्रेचसर्व
दा २७ चतुष्पथंनसेवेतउभेसंध्येतथैवच उपानहौचवस्त्रंचधृतमन्यैर्नधारयेत् २८ ब्रह्मचारीचनित्यंस्यात्पादंपादेननाक्रमेत् अमा
वास्यांपौर्णमास्यांचतुर्दश्यांचसर्वशः २९ अष्टम्यांसर्वपक्षाणांब्रह्मचारीसदाभवेत् ३० वृथामांसंनखादेतपृष्ठमांसंतथैवच आक्रो
शंपरिवादंचपैशून्यंचविवर्जयेत् ३१ नारुंतुदःस्यान्ननृशंसवादीनहीनतःपरमभ्याददीत ययास्यवाचापरउद्विजेतनतांवदेद्रुशतींपा
पलोक्याम् ३२ वाक्सायकावदनान्निष्पतंतियैराहतःशोचतिरात्र्यहानि परस्यवामर्मसुतेपतंतितान्पंडितोनावसृजेत्परेषु ३३ रोहते
सायकैर्विद्धंवनंपरशुनाहतम् वाचादुरुक्तंबीभत्संनसंरोहतिवाक्क्षतम् ३४ कर्णिनालीकनाराचान्निर्हरंतिशरीरतः वाक्छल्यस्तु
ननिर्हर्तुंशक्योहृदिशयोहिसः ३५ हीनांगानतिरिक्तांगान्विद्याहीनान्विगर्हितान् रूपद्रविणहीनांश्चसत्यहीनांश्चनाक्षिपेत् ३६ ना
स्तिक्यंवेदनिंदांचदेवतानांचकुत्सनम् द्वेषस्तंभाभिमानंचतैक्ष्ण्यंचपरिवर्जयेत् ३७ परस्यदंडंनोद्यच्छेत्क्रुद्धोनैननिपातयेत् अन्य
त्रपुत्राच्छिष्याद्वाशिष्ट्यर्थंताडनंस्मृतम् ३८ नब्राह्मणान्परिवदेन्नक्षत्राणिननिर्दिशेत् तिथिंपक्षस्यनब्रूयात्तथास्यायुर्नहीयते ३९
कृत्वामूत्रपुरीषेतुरथ्यामाक्रम्यवापुनः पादप्रक्षालनंकुर्यात्स्वाध्यायेभोजनेतथा ४० त्रीणिदेवाःपवित्राणिब्राह्मणानामकल्पयन् अ
दृष्टमद्भिर्निर्णिक्तंयच्चवाचाप्रशस्यते ४१ संयावकृसरमांसंशष्कुलीपायसंतथा आत्मार्थंनप्रकर्तव्यंदेवार्थंतुप्रकल्पयेत् ४२ नित्यम
ग्निंपरिचरेद्भिक्षांदद्याच्चनित्यदा वाग्यतोदंतकाष्ठंचनित्यमेवसमाचरेत् ४३ नचाभ्युदितशायीस्यात्प्रायश्चित्तीतथाभवेत् मातापि
तरमुत्थायपूर्वमेवाभिवादयेत् ४४

३९ ४० त्रीणिभोज्यानि अदृष्टंशूद्रोदक्यादिभिः ४१ ४२ ४३ ४४ ७ ७ ७ ७

४५ ४६ नाभिगच्छेत्तराजादीन्प्रीत ४७ अरजस्वलात्वेन ४८ ४९ ५० अंतर्धाने अत्यंतं अज्ञाते संयुक्ते इतरेणगम्यादिना ५१ ५२ ५३ ५४ ५५

आचार्यमथवाप्यन्यंतथायुर्विंदतेमहत् वर्जयेद्दंतकाष्ठानिवर्जनीयानिनित्यशः ४५ भक्षयेच्छास्त्रदृष्टानिपर्वस्वपिविवर्जयेत् उद
ङ्मुखश्चसततंशौचंकुर्यात्समाहितः ४६ अकृत्वादेवपूजांच नाचरेद्दंतधावनम् अकृत्वादेवपूजांचनाभिगच्छेत्कदाचन ४७ अन्य
न्तुगुरुंवृद्धंधार्मिकंवाविचक्षणम् अवलोक्योनचादर्शोमलिनोबुद्धिमत्तरैः ४८ नचाज्ञातांस्त्रियंगच्छेद्गर्भिणींवाकदाचन ४९ उद
क्शिरानस्वपेनतथाप्रत्यक्शिरानच प्राक्शिराःस्वपेद्विद्वानथवादक्षिणाशिराः ५० नभग्नेनावशीर्णेचशयनेप्रस्वपेत्तच नांतर्धाने-
नसंयुक्तेनचतिर्यक्कदाचन ५१ नचापिगच्छेत्कार्येणसमयाद्वापिनास्तिके आसनंतुपदाकृष्यनप्रसज्येत्तथानरः ५२ ननग्नःकर्हिचित्स्ना
यान्ननिशायांकदाचन स्नात्वाचनावमृज्येतगात्राणिसुविचक्षणः ५३ नचानुलिंपेदस्नात्वास्नात्वावासोननिर्धुनेत् नचैवार्द्राणिवासांसिनि
त्यंसेवेतमानवः ५४ स्रजश्चनावकृष्येतनबहिर्धारयीतच उदक्ययाचसंभाषांनकुर्वीतकदाचन ५५ नोत्सृजेत्पुरीषंचक्षेत्रेग्रामस्यचां-
तिके उभेमूत्रपुरीषेतुनाप्सुकुर्यात्कदाचन ५६ अन्नंबुभुक्षमाणस्तुत्रिर्मुखेनस्पृशेदपः भुक्त्वाचान्नंतथैवत्रिर्द्विःपुनःपरिमार्जयेत् ५७
प्राङ्मुखोनित्यमश्नीयाद्वाग्यतोन्नमकुत्सयन् प्रस्कंदयेच्चमनसाभुक्त्वाचाग्निमुपस्पृशेत् ५८ आयुष्यंप्राङ्मुखोभुंक्तेयशस्यंदक्षिणामु
खः धन्यंपश्चान्मुखोभुंक्तेऋतंभुंक्तेउदङ्मुखः ५९ अग्निमालभ्यतोयेनसर्वान्प्राणानुपस्पृशेत् गात्राणिचैवसर्वाणिनाभिंपाणितले
तथा ६० नाधितिष्ठेत्तुषंजातुकेशभस्मकपालिकाः अन्यस्यचाप्यवस्नानंदूरतःपरिवर्जयेत् ६१ शांतिहोमांश्चकुर्वीतसावित्राणिच-
धारयेत् निषण्णश्चापिखादेतनतुगच्छन्कदाचन ६२ मूत्रंनोत्तिष्ठताकार्यंनभस्मनिनगोव्रजे आर्द्रपादस्तुभुंजीतनार्द्रपादस्तुसंविशे
त् ६३ आर्द्रपादस्तुभुंजानोवर्षाणांजीवतेशतम् त्रीणितेजांसिनोच्छिष्टआलभेतकदाचन ६४ अग्निंगोब्राह्मणंचैवतथात्स्यायुर्नरिष्य
ते त्रीणितेजांसिनोच्छिष्टउदीक्षेतकदाचन ६५ सूर्याचंद्रमसौचैवनक्षत्राणिचसर्वशः ऊर्ध्वंप्राणाह्युत्क्रामंतियूनःस्थविरआयति ६६ प्रत्यु
त्थानाभिवादाभ्यांपुनस्तान्प्रतिपद्यते अभिवादयेद्वृद्धांश्चदद्याच्चैवासनंस्वयम् ६७ कृतांजलिरुपासीतगच्छतःपृष्ठतोन्वियात् नचा
सीतासनेभिन्नेभिन्नकांस्यंचवर्जयेत् ६८

५६ ५७ प्रस्कंदयेदन्नशेषंकिंचित्त्यजेत् भुक्त्वाचस्य अग्निमुपस्पृशेत् ५८ कृतंनिःश्रेयसमिच्छ
न्नितिशेषः ५९ प्राणान्नासादीन्ऊर्ध्वच्छिद्राणि ६० अवस्नानंस्नानजलम् ६१ सावित्राणिमंत्रविशेषान् ६२ ६३ ६४ ६५ ६६ ६७ ६८ ६९

६१ ७० नरिष्यतेनहिस्यते ७१ तिलपिष्टंतिलसंयुक्तंभक्ष्यं ७२ नचिंतयेत्वेदं ७३ ७४ ७५ ७६ ७७ ७८ ७९ ८० ८१ ८२
मिथ्याप्रवृत्तेपिसम्यक्प्रवर्त्तितव्यं ८३ ८४ ८५ ८६ विपर्ययंऔत्तराधर्यं ८७ अपदशंदशाहीनं ८८ प्रियंगुःस्त्रीराजिकाकणयोरपिनिमेदिनी ८९

नैकवस्त्रेणभोक्तव्यंननग्नःस्नातुमर्हति स्वप्तव्यंनैवनग्नेननचोच्छिष्टोपिसंविशेत् ६९ उच्छिष्टेनस्पृशेच्छीर्षसर्वेप्राणास्तदाश्रयाः के-
शग्रहप्रहारांश्चशिरस्येतान्विवर्जयेत् ७० नसंहताभ्यांपाणिभ्यांकंडूयेदात्मनःशिरः नचाभीक्ष्णंशिरःस्नायात्तथास्यायुर्नरिष्यते ७१
शिरःस्नातेश्चतैलेश्चनागंकिंचिदपिस्पृशेत् तिलपिष्टंनचाश्नीयात्तथास्यायुर्नरिष्यते ७२ नाध्यापयेत्तथोच्छिष्टोनाधीयीतकदाचन वा
तेचपूतिगंधेचमनसापिनचिंतयेत् ७३ अत्रगाथायमोद्गीताःकीर्त्तयंतिपुराविदः आयुरस्यनिकृंतामिप्रजास्तस्याददेतथा ७४ उच्छि
ष्टेयःप्राद्रवतिस्वाध्यायंचाधिगच्छति यश्चानध्यायकालेपिमोहादभ्यस्यतिद्विजः ७५ तस्यवेदःप्रणश्येतआयुश्चपरिहीयते तस्माद्यु
क्तोप्यनध्यायेनाधीयीतकदाचन ७६ प्रत्यादित्यंप्रत्यनलंप्रतिगांचप्रतिद्विजान् येमेहंतिचपंथानंतेभवंतिगतायुषः ७७ उभेमूत्रपु
रीषेतुदिवाकुर्यादुदङ्मुखः दक्षिणाभिमुखोरात्रौतथात्यायुर्नरिष्यति ७८ त्रीन्कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः ब्राह्मणंक्ष-
त्रियंसर्पंसर्वेह्याशीविषास्त्रयः ७९ दहत्याशीविषःक्रुद्धोयावत्पश्यतिचक्षुषा क्षत्रियोपिदहेत्क्रुद्धोयावत्स्पृशतितेजसा ८० ब्राह्म
णस्तुकुलंहन्याद्ध्यानेनावेक्षितेनच तस्मादेतत्त्रयंयत्नादुपसेवेतपंडितः ८१ गुरुणाचैवनिर्बंधोनकर्त्तव्यःकदाचन अनुमान्यःप्र
साद्यश्चगुरुःक्रुद्धोयुधिष्ठिर ८२ सम्यङ्मिथ्याप्रवृत्तेपिवर्त्तितव्यंगुराविह गुरुनिंदादहत्यायुर्मनुष्याणांनसंशयः ८३ दूरादावसथा
न्मूत्रंदूरात्पादावसेचनम् उच्छिष्टोत्सर्जनंचैवदूरेकार्यंहितैषिणा ८४ रक्तमाल्यंनधार्यंस्यात्शुक्लंधार्यंतुपंडितैः वर्जयित्वातुकमलं
तथाकुवलयंप्रभो ८५ रक्तंशिरसिधार्यंतुतथावानेयमित्यपि कांचनीयापिमालायानसादुष्यतिकर्हिचित् ८६ स्नातस्यवर्णकंनि
त्यमार्द्रंदद्याद्विशांपते विपर्ययंनकुर्वीतवाससोबुद्धिमान्नरः ८७ तथानान्यधृतंधार्यंनचापदशमेवच अन्यदेवभवेद्वासःशयनी
येनरोत्तम ८८ अन्यद्रथ्यासुदेवानामर्चायामन्यदेवहि प्रियंगुचंदनाभ्यांचबिल्वेनतगरेणच ८९ पृथगेवानुलिंपेतकेशरेणच
बुद्धिमान् उपवासंचकुर्वीतस्नातःशुचिरलंकृतः ९० पर्वकालेषुसर्वेषुब्रह्मचारीसदाभवेत् समानमेकपात्रेतुभुंजेन्नान्नंजनेश्वर ९१

पृथगितिराजिकयानुलेपनंकृत्वास्नात्वाचंदनाद्यन्यतमेनानुलेपनंकार्यमित्यर्थः तगरस्थगरेमहाराष्ट्राणांगावबाणइतिप्रसिद्धः उपवासंब्रह्म
चर्यम् ९० ९१ ९२ ९३ ९४ ९५ ९६ ९७ ९८ ९९ ९९ ९९

आलीढयारजस्वलयापरिस्कृतंसंपादितं आलीढंना परिहितमितिपाठे आलीढंगवाघ्राघ्रातंपरिघचनहीनं उधृतसाराणिदर्शरादीनिप्रेक्षत्रेयान्नकाय ९२ मे
धावीनापुरुषः अशक्तेःसन्निकृष्टेनभुंजीतमेधावी आशक्तेरितिगौडाः धर्मेषुश्राद्धादिषुप्रतिषिद्धान्भक्ष्यान्पृष्टतः श्राद्धाद्यभावेनभुंजीत ९३ ९४ ९५
९६ वालेनकेशेनउपलक्षितं परश्राद्धंशत्रुश्राद्धं ९७ सदैवनसदानैवेतिसंबंधः ९८ ९९ १०० निरस्यपानीयादीन्विहाय अन्येषांभक्षणशेषम्
न्यस्मैनदेयंपानीयादेरपिशेषंपुत्रादिभ्यएवदेयं पितुर्ज्येष्ठस्यचभ्रातुरुच्छिष्टंभोज्यमितिस्मरणात् अन्येषांतद्भोजनस्यनिषेधात् गौडास्तुनिःशेषमेतेषांनप्रदे

नालीढयापरिहृतंभक्षयीतकदाचन तथानोद्धृतसाराणिप्रेक्षितेनाप्रदायच ९२ नसंनिकृष्टेमेधावीनाशुचेर्नचसत्सुच प्रतिसि
द्धान्नधर्मेषुभक्ष्यान्भुंजीतपृष्ठतः ९३ पिप्पलंचवटंचैवशणशाकंतथैवच उदुंबरंनखादेच्चभवार्थीपुरुषोत्तमः ९४ आजंगव्यंत-
थामांसंमायूरंचैववर्जयेत् वर्जयेत्शुष्कमांसंचतथापर्युषितंचयत् ९५ नपाणौलवणंविद्वान्प्राश्नीयान्नचरात्रिषु दधिसक्तूंनभुंजी
तवृथामांसंचवर्जयेत् ९६ सायंप्रातश्चभुंजीतनांतरालेसमाहितः वालेनतुनभुंजीतपरश्राद्धंतथैवच ९७ वाग्यतोनैकवस्त्रश्चनास
विष्टःकदाचन भूमौसदैवनाश्नीयान्नानाशीलोनशब्दवत् ९८ तोयपूर्वंप्रदायान्नमतिथिभ्योविशांपते पश्चाद्भुंजीतमेधावीनचाप्य
न्यमनानरः ९९ समानमेकपंक्त्यांतुभोज्यमन्नंनरेश्वर विषंहालाहलंभुंक्तेयोप्रदायकृतंजने १०० पानीयपायससक्तून्दधिस-
र्पिर्मधून्यपि निरस्यशेषमेतेषांनप्रदेयंतुकस्यचित् १०१ भुंजानोमनुजव्याघ्रनैवशंकांसमाचरेत् दधिचाप्यनुपानंवैकर्तव्यंचभवा-
र्थिना २ आचम्यचैकहस्तेनपरिप्लाव्यंतथोदकं अंगुष्ठंचरणस्याथदक्षिणस्यावसेचयेत् ३ पाणिंमूर्ध्निसमाधायस्पृष्ट्वाचाग्निंस
माहितः ज्ञातिश्रैष्ठ्यमवाप्नोतिप्रयोगकुशलोनरः ४ अद्भिःप्राणान्समालभ्यनाभिंपाणितलेनतु स्पृशंश्चैवप्रतिष्ठेतनचाप्यार्द्रेणपा
णिना ५ अंगुष्ठस्यांतरालेचब्राह्म्यंतीर्थमुदाहृतम् कनिष्ठिकायाःपश्चात्तुदेवतीर्थमिहोच्यते ६ अंगुष्ठस्यचयन्मध्यंप्रदेशिन्याश्च
भारत तेनपित्र्याणिकुर्वीतस्पृष्ट्वापोन्यायतःसदा ७ परापवादंनब्रूयान्नाप्रियंचकदाचन नमन्युःकश्चिदुत्पाद्यःपुरुषेणभवार्थिना
८ पतितैस्तुकथांनेच्छेद्दर्शनंचविवर्जयेत् संसर्गंचनगच्छेततथायुर्विंदतेमहत् नदिवामैथुनंगच्छेन्नकन्यांनचबंधकीम् ९ नचा
स्नातांस्त्रियंगच्छेत्तथायुर्विंदतेमहत् स्वेस्वेतीर्थेसमाचम्यकार्येसमुपकल्पिते त्रिःपीत्वापोद्विःप्रमृज्यकृतशौचोभवेन्नरः १०

यमितिपठंति न्यूनातिरिक्तसंख्यापत्तेरुपेक्ष्यं १०१ शंकाजीर्यतिनवेतिअन्नस्यापूतत्वात्वाअधिकत्वाच्छंकयानैवभोक्तव्यमित्यर्थः दधित्वनुपानंकर्तव्यमेव
यथेष्टंभुंक्ष्वमाभैषीस्तक्रंसलवणंपिबेतितस्यदृष्टार्थत्वस्मृतेः १०२ कृत्वपरिप्लाव्यंतदाहअंगुष्ठमिति ३ ४ प्राणान्नासात् ५ ६ ७ ८ ९ १० ७

११ १२ १३ १४ एतेनैलपायिकानपापायअभ्युदयायेत्यर्थः पारावतादयःसर्वेपक्षिविशेषाएव १५ १६ १७ शारणिकस्यरक्षणार्थिनः १८ १९
२० प्रसाधनंकेशानांसंस्कारादिकं ननक्तंस्नायादिनिगृह्येगत्रौशिरस्नाननिषेधः २१ २२ पानानियानियोग्यानीत्यर्थः वादतानिइतिगौडपाठःअवदातानि-
निर्मलान्यपिशेषाणिवर्जनीयानीत्यर्थः सौहित्यंआतृप्तिभोजनंपरस्यनकर्तव्यंआत्मनश्चसमाचरेत् २३ द्विजच्छेदंपक्षिबंधनं कुर्वीत तर्हिपक्षिमांसमे-

इंद्रियाणिसकृत्स्पृश्यत्रिरभ्युक्ष्यचमानवः कुर्वीतपित्र्यंदैवंचवेददृष्टेनकर्मणा ११ ब्राह्मणार्थेचयच्छौचंतच्चमेशृणुकौरव पवित्रंच
द्विजेचैवभोजनाद्यंतयोस्तथा १२ सर्वशौचेषुब्राह्मेणतीर्थेनसमुपस्पृशेत् निष्ठीव्यतुतथाक्षुत्वास्पृश्यापोहिशुचिर्भवेत् १३ वृद्धो
ज्ञातिस्तथामित्रंदरिद्रोयोभवेदपि गृहेवासयितव्यास्तेधन्यमायुष्यमेवच १४ गृहेपारावताधन्याःशुकाश्चसहसारिकाः गृहेष्वेतेन
पापायतथावैतैलपायिकाः उद्दीपकाश्चगृध्राश्चकपोताभ्रमरास्तथा १५ निविशेयुर्यदातत्रशांतिमेवतदाचरेत् अमंगल्यानिचैता
नितथाक्रोशोमहात्मनाम् १६ महात्मनोतिगुह्यानिनवक्तव्यानिकर्हिचित् अगम्याश्चनगच्छेत्तराज्ञःपत्नीसखीस्तथा १७ वै-
द्यानांबालवृद्धानांभृत्यानांचयुधिष्ठिर बंधूनांब्राह्मणानांचतथाशारणिकस्यच १८ संबंधिनांचराजेंद्रतथायुर्विंदतेमहत् ब्राह्मणस्थ
पतिभ्यांचनिर्मितंयन्निवेशनम् १९ तदावसेत्सदाप्राज्ञोभवार्थीमनुजेश्वर संध्यायांनस्वपेद्राजन्विद्यांनचसमाचरेत् २० नभुंजीतचमे
धावीतथायुर्विंदतेमहत् नक्तंनकुर्यात्पित्र्याणिभुक्त्वाचैवप्रसाधनम् २१ पानीयस्यक्रियानक्तंनकार्याभूतिमिच्छता वर्जनीयाश्चैवनित्यं
सक्तवोनिशिभारत २२ शेषाणिचैवदानानिपानीयंचापिभोजने सौहित्यंनचकर्तव्यंरात्रौनचसमाचरेत् २३ द्विजच्छेदंनकुर्वीतभुक्त्वा
नचसमाचरेत् महाकुलेप्रसूतांचप्रशस्तांलक्षणैस्तथा २४ वयस्थांचमहाप्राज्ञकन्यामावोढुमर्हति अपत्यमुत्पाद्यततःप्रतिष्ठा
प्यकुलंतथा २५ पुत्राःप्रदेयाःज्ञानेषुकुलधर्मेषुभारत कन्याचोत्पाद्यदातव्याकुलपुत्रायधीमते २६ पुत्रानिवेश्याश्चकुलाद्भृत्या
लभ्याश्चभारत शिरस्नातोथकुर्वीतदैवंपित्र्यमथापिच नक्षत्रेनचकुर्वीतयस्मिन्जातोभवेन्नरः नप्रोष्ठपदयोःकार्यंतथाग्नेयेच
भारत २७ दारुणेषुचसर्वेषुप्रत्यरिंचविवर्जयेत् ज्यौतिषेयानिचोक्तानितानिसर्वाणिवर्जयेत् २८ प्राङ्मुखःश्मश्रुकर्माणिका
रयेत्सुसमाहितः उदङ्मुखोवाराजेंद्रतथायुर्विंदतेमहत् २९

वनभोक्तव्यमितिफलितमित्याशंक्याह भुक्त्वानसमाचरेत्क्रयक्रीतमेवमांसंभक्ष्यंनतुस्वयंहिंस्यंकार्यमित्यर्थः भुक्त्वापानसमाचरेदितिपाठआजनांतेनक्तंजलंवापेयमित्यर्थः
२४ २५ ज्ञानेषुबहुज्ञाननिमित्तंपुत्रादेयाः विद्वत्सुसमर्पणीयाः २६ कुलात्स्वकुलसंबंधेननिवेश्याः बान्धवाल्लभ्याल्लभनीयाः २७ आग्नेयेकृत्तिकायांप्रत्य-
ग्स्विनक्षत्राद्दिनक्षत्रंआदित्यात्पश्चिमांगेन्द्रतेपचमतारा प्रत्यरिः २८ २९ ७ ७

३० व्यंगिनीन्यूनांगीव्यंगितांविरुद्धांगेनअधिकेनयुक्तांसमार्षांसमानप्रवरां. ३१ ३२ अयोनिंअज्ञातकुलां ३३ ३४ ३५ ३६ ३७ ३८
३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३

परिवादंनचब्रूयात्परेषामात्मनस्तथा परिवादोह्यधर्माय प्रोच्यतेभरतर्षभ ३० वर्जयेद्व्यंगिनींनारींतथाकन्यांनरोत्तम समार्षांव्यं-
गितांचैवमातुःस्वकुलजांतथा ३१ वृद्धांप्रव्रजितांचैवतथैवचपतिव्रताम् तथानिकृष्टवर्णांचवर्णोत्कृष्टांचवर्ज्जयेत् ३२ अयोनिंच
वियोनिंचनगच्छेतविचक्षणः पिंगलांकुष्ठिनींनारींनत्वमुद्वोढुमर्हसि ३३ अपस्मारिकुलेजातांनिहीनांचापिवर्ज्जयेत् श्वित्रिणांचकु-
लेजातांक्षयिणांमनुजेश्वर ३४ लक्षणैरन्वितायाचप्रशस्तायाचलक्षणैः मनोज्ञादर्शनीयाचतांभवान्वोढुमर्हति ३५ महाकुलेनि-
वेष्टव्यंसदृशेवायुधिष्ठिर अवरापतितांश्चैवनग्राह्याभूतिमिच्छता ३६ अग्नीनुत्पाद्ययत्नेनक्रियाःसुविहिताश्चयाः वेदेचब्राह्मणैःप्रो-
क्तास्ताश्चसर्वाःसमाचरेत् ३७ नचेर्ष्यास्त्रीषुकर्त्तव्यारक्ष्यादाराश्चसर्वशः अनायुष्याभवेदीर्ष्यातस्मादीर्ष्याविवर्ज्जयेत् ३८ अना-
युष्यंदिवास्वप्नंतथाभ्युदितशायिता प्रगेनिशामाश्चतथायेचोच्छिष्टाःस्वपन्तिवै ३९ पारदार्यमनायुष्यंनापितोच्छिष्टतातथा यत्नतोवैन
कर्त्तव्यमभ्यासश्चैवभारत ४० संध्यायांचनभुंजीतनस्नायेन्ननतथापठेत् प्रयतश्चभवेत्तस्यांनचकिंचित्समाचरेत् ४१ ब्राह्मणान्पू-
जयेच्चापितदास्नात्वानराधिप देवांश्चप्रणमेत्स्नातोगुरूंश्चाप्यभिवादयेत् ४२ अनिमंत्रितोनगच्छेतयज्ञंगच्छेतदर्शकः अनर्चितोह्य-
नायुष्यंगमनंतत्रभारत ४३ नचैकेनपरिव्रज्यंनगन्तव्यंतथानिशि अनागतायांसंध्यायांपश्चिमायांगृहेवसेत् ४४ मातुःपितुर्गुरूणां
चकार्यमेवानुशासनम् हितंचाप्यहितंचापिनविचार्यंनरर्षभ ४५ धनुर्वेदेचवेदेचयत्नःकार्योनराधिप हस्तिपृष्ठेश्वपृष्ठेचरथच-
र्यासुचैवहि ४६ यत्नवान्भवराजेंद्रयत्नवान्सुखमेधते अप्रधृष्यश्चशत्रूणांभृत्यानांस्वजनस्यच ४७ प्रजापालनयुक्तश्चनक्ष-
तिंलभतेक्वचित् युक्तिशास्त्रंचतेज्ञेयंशब्दशास्त्रंचभारत ४८ गंधर्वशास्त्रंचकलाःपरिज्ञेयानराधिप पुराणमितिहासंचतथाख्या-
नानियानिच ४९ महात्मनांचचरितंश्रोतव्यंनित्यमेवते पत्नीरजस्वलायाचनाभिगच्छेन्नचाह्वयेत् ५० स्नातांचतुर्थेदिवसेरात्रौग-
च्छेद्विचक्षणः पंचमेदिवसेनारीषष्ठेहनिपुमान्भवेत् ५१ एतेनविधिनापत्नीमुपगच्छेतपंडितः ज्ञातिसंबंधिमित्राणिपूजनीयानिस-
र्वशः ५२ यष्टव्यंचयथाशक्तियज्ञैर्विविधदक्षिणैः अतऊर्ध्वमरण्यंचसेवितव्यंनराधिप ५३ एषतेलक्षणोद्देशआयुष्याणांप्रकीर्त्तितः
शेषस्त्रैविद्यवृद्धेभ्यःप्रत्याहार्योयुधिष्ठिर ५४

आयुष्याणांआयुष्कराणांकर्मणांउद्देशःसंक्षेपः ५४

१५५ १५६ १५७ इतिश्रीमन्महाभारतेआनुशासनिकेपर्वणिटीकायांचतुरधिकशततमोऽध्यायः १०४ १ यावच्छिष्य-
स्यगुरौवृत्तिस्तावत्तांवर्तेत २ ३ तेषांगुरूणाम् ४ कृतंमित्रम् अरयःनराःभेदयेयुः ५ ६ यवीयसः कनीयान् ७ निचुलस्यवेतसस्य निचुलकपुमान्

आचारोभूतिजननआचारःकीर्तिवर्द्धनः आचाराद्वर्द्धतेह्यायुराचारोहंत्यलक्षणम् ५५ आगमानांहिसर्वेषामाचारःश्रेष्ठउच्यते
आचारःप्रभवोधर्मोधर्मादायुर्विवर्द्धते ५६ एतद्यशस्यमायुष्यंस्वर्ग्यंस्वस्त्ययनंमहत् अनुकंप्यसर्ववर्णान्ब्रह्मणा समुदाहृतम्
१५७ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेचतुरधिकशततमोऽध्यायः १०४ युधिष्ठिरउवाच यथाज्येष्ठःकनिष्ठे
षुवर्तेतभरतर्षभ कनिष्ठाश्चयथाज्येष्ठेवर्तेरंस्तद्ब्रवीहिमे १ भीष्मउवाच ज्येष्ठवत्तातवर्तस्वज्येष्ठोसिसततंभवान् गुरोर्गरीयसी
वृत्तिर्याचच्छिष्यस्यभारत २ नगुरावकृतप्रज्ञेशक्यंशिष्येणवर्तितुम् गुरोर्हिदीर्घदर्शित्वंयत्तच्छिष्यस्यभारत ३ अंधःस्याद्धवेलायांज
डःस्यादपिवाबुधः परिहारेणतद्ब्रूयाद्यस्तेषांस्याद्व्यतिक्रमः ४ प्रत्यक्षंभिन्नहृदयाभेदयेयुःकृतंनराः श्रियाभितप्ताःकौंतेयभेदकामा
स्तथारयः ५ ज्येष्ठःकुलंवर्द्धयतिविनाशयतिवापुनः हंतिसर्वमपिज्येष्ठःकुलंयत्रावजायते ६ अथयोविनिकुर्वीतज्येष्ठोभ्रातायवीयसः
अज्येष्ठःस्यादभागश्चनियम्योराजभिश्चसः ७ निकृतीहिनरोलोकान्पापान्गच्छत्यसंशयम् निचुलस्येवतत्पुष्पंमोघंजनयितुःस्मृतम् ८
सर्वानर्थःकुलेयत्रजायतेपापपूरुषः अकीर्तिंजनयत्येवकीर्तिमंतर्दधातिच ९ सर्वेचापिविकर्मस्थाभागंनार्हंतिसोदराः नाप्रदायकनिष्ठे
भ्योज्येष्ठःकुर्वीतयौतकम् १० अनुपघ्नन्पितुर्दायंजंघाश्रमफलोध्वगः स्वयमीहितलब्धंतुनाकामोदातुमर्हति ११ भ्रातॄणामविभक्तानां
मुत्थानमपिचेत्सह नपुत्रभागंविषमंपितादद्यात्कदाचन १२ नज्येष्ठोनावमन्येतदुष्कृतःसुकृतोपिवा यदिस्त्रीयद्यवरजःश्रेयश्चेत्तत्तदाच
रेत् १३ धर्मंहिश्रेयइत्याहुरितिधर्मविदोजनाः दशाचार्यानुपाध्याय उपाध्यायान्पितादश १४ दशचैवपितॄन्मातासर्वांवापृथिवीमपि गौ
रवेणाभिभवतिनास्तिमातृसमोगुरुः १५ मातागरीयसीयच्चतेनैतांमन्यतेजनः ज्येष्ठोभ्रातापितृसमोमृतेपितरिभारत १६ सह्येषांवृ
त्तिदातास्यात्सचैतान्प्रतिपालयेत् कनिष्ठास्तंनमस्येरन्सर्वेछंदानुवर्तिनः १७ तमेवचोपजीवेरन्यथैवपितरंतथा शरीरमेतौसृजतःपि
तामाताचभारत १८ आचार्यशास्तायाजातिःसासत्यासाजराऽमरा ज्येष्ठामातृसमाचापिभगिनीभरतर्षभ १९

वेतसेइतिमेदिनी ८ ९ १०
जंघाश्रमएवफलंधनंयस्य अध्वगःप्रवासी ११ उत्थानंभोजनादौविभागेवा १२ यदिस्त्रीयदिवाकनिष्ठोदुष्कृतस्तर्हियथापितरस्तथैवआचरेत् १३ १४ १५ १६ १७ १८ १९

२० इति आनुशासनिके पर्वणि टीकायां पंचाधिकशततमोऽध्यायः १०५ १ ब्रह्मक्षत्रे त्रिरात्राधिकमुपोषणं नेष्टं त्रिरात्रं षड्रात्रं सर्वेषां अथवा आश्रमांतरे क्वचित् नि
र्दिष्टम् २ ३ ४ ५ ६ ७ ८ ९ १० ११ व्युष्टिः फलम् १२ दिनस्य द्वे भक्ते तत्र चतुर्थस्य भक्तस्य लक्षणम् द्विरात्रमभो-

भ्रातुर्भार्यां च तद्वत्स्या द्यस्या बाल्येस्तनं पिबेत् २०   इति श्रीमहाभारते आनुशासनिके पर्वणि दानधर्मे ज्येष्ठकनिष्ठवृत्तिर्नाम पंचा
धिकशततमोऽध्यायः १०५   युधिष्ठिर उवाच   सर्वेषामेव वर्णानां म्लेच्छानां च पितामह उपवासे मतिरियं कारणं च न विद्महे १ ब्रह्मक्ष
त्रेण नियमाश्चर्तव्या इति नः श्रुतम् उपवासे कथं तेषां कृत्यमस्ति पितामह २ नियमाश्चोपवासांश्च सर्वेषां ब्रूहि पार्थिव आप्नोति कां गतिं तात
उपवासपरायणः ३ उपवासः परं पुण्यमुपवासः परायणम् उपोष्येह नरश्रेष्ठ किं फलं प्रतिपद्यते ४ अधर्मान्मुच्यते केन धर्ममाप्नोति वा कथम्
स्वर्गं पुण्यं च लभते कथं भरतसत्तम ५ उपोष्य चापि किं तेन प्रदेयं स्यान्नराधिप धर्मेण च सुखानर्थाल्लभेद्येन ब्रवीहि तम् ६ वैशंपायन
उवाच   एवं ब्रुवाणं कौंतेयं धर्मज्ञं धर्मतत्त्ववित् धर्मपुत्रमिदं वाक्यं भीष्मः शांतनवोऽब्रवीत् ७ भीष्म उवाच   इदं खलु मया राजन्
श्रुतमासीत्पुरातनम् उपवासविधौ श्रेष्ठा गुणा ये भरतर्षभ ८ ऋषिमंगिरसं पूर्वं पृष्टवानस्मि भारत यथा मां त्वं तथैवाहं पृष्टवांस्तं तपोधन
म् ९ प्रश्नमेतं मया पृष्टो भगवानग्निसंभवः उपवासविधिं पुण्यमाचष्ट भरतर्षभः १० अंगिरा उवाच   ब्रह्मक्षत्रे त्रिरात्रं तु विहितं कुरु
नंदन द्वित्रिरात्रमथैकाहं निर्दिष्टं पुरुषर्षभ ११ वैश्याः शूद्राश्च यन्मोहादुपवासं प्रचक्रिरे त्रिरात्रं वा द्विरात्रं वा तयोर्व्युष्टिर्न विद्यते १२ च
तुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते त्रिरात्रं न तु धर्मज्ञैर्विहितं धर्मदर्शिभिः १३ पंचम्यां वापि षष्ठ्यां च पौर्णमास्यां च भारत उपोष्य एकभक्तेन
नियतात्मा जितेंद्रियः १४ क्षमावान् रूपसंपन्नः श्रुतवांश्चैव जायते नानपत्यो भवेत्प्राज्ञो दरिद्रो वा कदाचन १५ यजिष्णुः पंचमीं षष्ठीं कुले
भोजयते द्विजान् अष्टमीमथ कौरव्य कृष्णपक्षे चतुर्दशीम् १६ उपोष्य व्याधिरहितो वीर्यवानभिजायते मार्गशीर्षं तु यो मासमेकभक्तेन
संक्षिपेत् १७ भोजयेच्च द्विजान् शक्त्या स मुच्येद्व्याधिकिल्बिषैः सर्वकल्याणसंपूर्णः सर्वौषधिसमन्वितः १८ उपोष्य व्याधिरहितो वीर्यवा
नभिजायते कृषिभागी बहुधनो बहुधान्यश्च जायते १९ पौषमासं तु कौंतेय भक्तेनैकेन यः क्षपेत् सुभगो दर्शनीयश्च यशोभागी च जायते
२० माघं तु नियतो मासमेकभक्तेन यः क्षिपेत् श्रीमत्कुले ज्ञातिमध्ये स महत्त्वं प्रपद्यते २१ भगदैवतमासं तु एकभक्तेन यः क्षपेत् स्त्रीषु वल्लभ
तां याति वश्याश्चास्य भवंति ताः २२

जनमित्यर्थः तत्तु त्रिरात्रं तेषामस्तीत्याह १३ १४ १५ यजिष्णुः देवतापूजनशीलः कुले स एव महानन्नदाता भवतीत्यर्थः १६

२३ २४ ज्येष्ठामूलंज्येष्ठमासं २५ २६ २७ २८ २९ ३० ३१ सर्वेषुमासेष्वेवमेकस्मिन्पक्षेगतेद्वितीयपक्षेभक्तंएकभक्तं अश्नाति

चैत्रंतुनियतोमासमेकभक्तेनयःक्षपेत् सुवर्णमणिमुक्ताढ्येकुलेमहतिजायते २३ निस्तरेदेकभक्तेनवैशाखंयोजितेंद्रियः नरोवायदि वानारीज्ञातीनांश्रेष्ठतांव्रजेत् २४ ज्येष्ठामूलंतुयोमासमेकभक्तेनसंक्षपेत् ऐश्वर्यमतुलंश्रेष्ठंपुमान्स्त्रीवाप्रपद्यते २५ आषाढमेकभक्तेनस्थित्वामासमतंद्रितः बहुधान्योबहुधनोबहुपुत्रश्चजायते २६ श्रावणंनियतोमासमेकभक्तेनयःक्षपेत् यत्रतत्राभिषेकेणयुज्यतेज्ञातिवर्द्धनः २७ प्रोष्ठपदंतुयोमासमेकाहारोभवेन्नरः गवाढ्यंस्फीतमचलमैश्वर्यंप्रतिपद्यते २८ तथैवाश्वयुजंमासमेकभक्तेनयःक्षपेत् मृजावान्वाहनाढ्यश्चबहुपुत्रश्चजायते २९ कार्तिकंतुनरोमासंयःकुर्यादेकभोजनम् शूरश्चबहुभार्यश्चकीर्त्तिमांश्चैवजायते ३० इतिमासानरव्याघ्रक्षपतांपरिकीर्त्तिताः तिथीनांनियमायेतुशृणुतानपिपार्थिव ३१ पक्षेपक्षेगतेयस्तुभक्तमश्नातिभारत गवाढ्योबहुपुत्रश्चबहुभार्यश्चजायते ३२ मासिमासित्रिरात्राणिकृत्वावर्षाणिद्वादश गणाधिपत्यंप्राप्नोतिनिःसपत्नमनाविलम् ३३ एतेतुनियमाःसर्वेकर्त्तव्याःशरदोदश द्वेचान्येभरतश्रेष्ठप्रवृत्तिमनुवर्त्तता ३४ यस्तुप्रातस्तथासायंभुंजानोनांतरापिबेत् अहिंसानिरतोनित्यंजुह्वानोजातवेदसम् ३५ षड्भिःसवर्षैर्नृपतेसिध्यतेनात्रसंशयः अग्निष्टोमस्ययज्ञस्यफलंप्राप्नोतिमानवः ३६ अधिवासेसोऽप्सरसांनृत्यगीतविनादिते रमतेस्त्रीसहस्राढ्येसुकृतीविरजोनरः ३७ तप्तकांचनवर्णाभंविमानमधिरोहति पूर्णंवर्षसहस्रंचब्रह्मलोकेमहीयते ३८ तत्क्षयादिहचागम्यमाहात्म्यंप्रतिपद्यते यस्तुसंवत्सरंपूर्णमेकाहारोभवेन्नरः ३९ अतिरात्रस्ययज्ञस्यसफलंसमुपाश्नुते दशवर्षसहस्राणिस्वर्गेचसमहीयते ४० तत्क्षयादिहचागम्यमाहात्म्यंप्रतिपद्यते यस्तुसंवत्सरंपूर्णंचतुर्थंभक्तमश्नुते ४१ अहिंसानिरतोनित्यंसत्यवाग्विजितेंद्रियः वाजपेयस्ययज्ञस्यसफलंसमुपाश्नुते ४२ दशवर्षसहस्राणिस्वर्गलोकेमहीयते षष्ठेकालेतुकौंतेयनरःसंवत्सरंक्षिपन् ४३ अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिमानवः चक्रवाकप्रयुक्तेनविमानेनसगच्छति चत्वारिंशत्सहस्राणिवर्षाणांदिविमोदते ४४ अष्टमेनतुभक्तेनजीवन्संवत्सरंनृप गवामयस्ययज्ञस्यफलंप्राप्नोतिमानवः ४५ हंससारसयुक्तेनविमानेनसगच्छति पंचाशतंसहस्राणि वर्षाणांदिविमोदते ४६ पक्षेपक्षेगतेराजन्योऽश्नीयाद्वर्षमेवतु षण्मासानशनंतस्यभगवानंगिराब्रवीत् ४७

३२ ३३ ३४ ३५ ३६ ३७ ३८

३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ एकस्मिन्पक्षेगतेपरस्मिन्पक्षेभुङ्क्तेइतिवर्षंचेदेवंषण्मासानशनंभवति संवत्सरमितिपक्षैकस्मिन्संवत्सरएकमेकमासंतन्मात्राहारोभवेदितिवाक्यार्थः यथाश्रुतार्थग्रहणेजीवनाशप्रसंगात् ४७

४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ स्वर्गकामस्य क्षीणत्वाद्यवस्थाप्राप्तस्य आप्यायनादयो न रोचंते अपितु तज्जं दुःखं सहमान एव सः स्यात

षष्टिवर्षसहस्राणि दिवमावसते च सः वीणानां वल्लकीनां च वेणूनां च विशांपते ४८ सुघोषैर्मधुरैः शब्दैः सुप्तः स प्रतिबोध्यते संवत्सरमि
हैकं तु मासि मासि पिबेदपः ४९ फलं विश्वजितस्तात प्राप्नोति स नरो नृप सिंहव्याघ्रप्रयुक्तेन विमानेन स गच्छति ५० सप्ततिं च सहस्राणि
वर्षाणां दिवि मोदते मासादूर्ध्वं नरव्याघ्र नोपवासो विधीयते ५१ विधिं त्वनशनस्याहुः पार्थ धर्मविदो जनाः अनार्त्तो व्याधिरहितो गच्छेद
नशनं तु यः पदे पदे यज्ञफलं स प्राप्नोति न संशयः ५२ दिव्यहंसप्रयुक्तेन विमानेन स गच्छति शतं वर्षसहस्राणां मोदते स दिवि प्रभो ५३ श
तं चाप्सरसः कन्या रमयंत्यपि तं नरम् आर्त्तो वा व्याधितो वापि गच्छेदनशनं तु यः शतं वर्षसहस्राणां मोदते स दिवि प्रभो ५४ कांचीनूपुरशब्दे
न सुप्तश्चैव प्रबोध्यते सहस्रहंसयुक्तेन विमानेन तु गच्छति स गत्वा स्त्रीशताकीर्णे रमते भरतर्षभ ५५ क्षीणस्याप्यायनं दृष्टं जायते क्षतरो
हणम् व्याधितस्यौषधग्रामः क्रुद्धस्य च प्रसादनम् ५६ दुःखितस्यार्थमानाभ्यां दुःखानां प्रतिषेधनम् न चैते स्वर्गकामस्य रोचंते सुखमेध
सः ५७ अतः स कामसंयुक्तो विमाने हेमसन्निभे रमते स्त्रीशताकीर्णे पुरुषोऽलंकृतः शुचिः ५८ स्वस्थः सफलसंकल्पः सुखी विगतकल्मषः
अनश्नन्देहमुत्सृज्य फलं प्राप्नोति मानवः ५९ बालसूर्यप्रतीकाशे विमाने हेमवर्चसि वैदूर्यमुक्ताखचिते वीणामुरजनादिते ६० पताकादी
पिकाकीर्णे दिव्यघंटानिनादिते स्त्रीसहस्रानुचरिते स नरः सुखमेधते ६१ यावंति रोमकूपाणि तस्य गात्रेषु पांडव तावंत्येव सहस्राणि वर्षा-
णां दिवि मोदते ६२ नास्ति वेदात्परं शास्त्रं नास्ति मातृसमो गुरुः न धर्मात्परमो लाभस्तपो नानशनात्परं ६३ ब्राह्मणेभ्यः परं नास्ति पावनं दि
वि चेह च उपवासैस्तथा तुल्यं तपःकर्म न विद्यते ६४ उपोष्य विधिवद्देवास्त्रिदिवं प्रतिपेदिरे ऋषयश्च परां सिद्धिमुपवासैरवाप्नुवन् ६५ दिव्यं
वर्षसहस्राणि विश्वामित्रेण धीमता क्षांतमेकेन भक्तेन तेन विप्रत्वमागतः ६६ च्यवनो जमदग्निश्च वसिष्ठो गौतमो भृगुः सर्व एव दिवं प्राप्ताः
क्षमावंतो महर्षयः ६७ इदमंगिरसा पूर्वं महर्षिभ्यः प्रदर्शितं यः प्रदर्शयते नित्यं न स दुःखमवाप्नुते ६८ इमं तु कौंतेय यथाक्रमं विधिं प्रवर्त्तितं
ह्यांगिरसा महर्षिणा पठेच्च यो वै शृणुयाच्च नित्यदा न विद्यते तस्य नरस्य किल्बिषम् ६९ विमुच्यते चापि स सर्वसंकरैर्न चास्य दोषैरभिभूयते म
नः वियोनिजानां च विजानते रुतं ध्रुवां च कीर्त्तिं लभते नरोत्तमः ७० इति श्रीम० आनु० प० दान० षडधिकशततमोऽध्यायः १०६ ॥ ॥

पोवर्धयतीत्यर्थः ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ६७ ६८ ६९ वियोनिजानां पश्वादीनां रुतं शब्दं ७० इति षडधिकशततमोऽध्यायः १०६

१ २ ३ अवगुणैः निर्गुणैः एकात्मभिः एकाकिभिः अतएवासंहतैः असहायैः ४ ५ कल्यं प्रातः ६ ७ ८ ९ १० समाप्तेसंपूर्णे द्वि

युधिष्ठिरउवाच पितामहेनविधिवद्यज्ञाःप्रोक्तामहात्मना गुणाश्चैषांयथातथ्यंप्रेत्यचेहचसर्वशः १ नतेशक्यादरिद्रेणयज्ञाःप्राप्तुंपितामह बहूपकरणायज्ञानानासंभारविस्तराः २ पार्थिवैराजपुत्रैर्वाशक्याःप्राप्तुंपितामह नार्थन्यूनैरवगुणैरेकात्मभिरसंहतैः ३ योदरिद्रैरपिविधिःशक्यःप्राप्तुंसदाभवेत अर्थन्यूनैरवगुणैरेकात्मभिरसंहतैः ४ तुल्योयज्ञफलैरेतैस्तन्मेब्रूहिपितामह भीष्मउवाच इदमंगिरसाप्रोक्तमुपवासफलात्मकम् विधियज्ञफलैस्तुल्यंतन्निबोधयुधिष्ठिर ५ यस्तुकल्यंतथासायंभुंजानोनांतरापिबेत् अहिंसानिरतोनित्यंजुह्वानोजातवेदसम् ६ षड्भिरेवसवर्षैस्तुसिध्यतेनात्रसंशयः तप्तकांचनवर्णंचविमानंलभतेनरः ७ देवस्त्रीणामधीवासेनृत्यगीतनिनादिते प्राजापत्येवसेत्पद्मवर्षाणामग्निसन्निभे ८ त्रीणिवर्षाणियःप्राशेत्सततंत्वेकभोजनम् धर्मपत्नीरतोनित्यमग्निष्टोमफलंलभेत् ९ यज्ञंबहुसुवर्णंवावासवप्रियमाचरेत् सत्यवाग्दानशीलश्चब्रह्मण्यश्चानसूयकः क्षांतोदांतोजितक्रोधःसगच्छतिपरांगतिम् १० पांडुराभ्रप्रतीकाशेविमानेहंसलक्षणे द्वेसमाप्तेततःपद्मेसोप्सरोभिर्वसेत्सह ११ द्वितीयेदिवसेयस्तुप्राश्नीयादेकभोजनम् सदाद्वादशमासांस्तुजुह्वानोजातवेदसम् १२ अग्निकार्यपरोनित्यंनित्यंकल्यप्रबोधनः अग्निष्टोमस्ययज्ञस्यफलंप्राप्नोतिमानवः १३ हंससारसयुक्तंचविमानंलभतेनरः इंद्रलोकेचवसतेवरस्त्रीभिःसमावृतः १४ तृतीयेदिवसेयस्तुप्राश्नीयादेकभोजनम् सदाद्वादशमासांस्तुजुह्वानोजातवेदसम् १५ अग्निकार्यपरोनित्यंनित्यंकल्यप्रबोधनः अतिरात्रस्ययज्ञस्यफलंप्राप्नोत्यनुत्तमम् १६ मयूरहंसयुक्तंचविमानंलभतेनरः सप्तर्षीणांसदालोकेसोप्सरोभिर्वसेत्सह १७ निवर्त्तनंचतत्रास्यत्रीणिपद्मानिवैविभुः १८ दिवसेयश्चतुर्थेतुप्राश्नीयादेकभोजनम् सदाद्वादशमासान्वैजुह्वानोजातवेदसम् १९ वाजपेयस्ययज्ञस्यफलंप्राप्नोत्यनुत्तमम् इंद्रकन्याभिरूढंचविमानंलभतेनरः २० सागरस्यचपर्यंतेवासवंलोकमावसेत् देवराजस्यचक्रीडांनित्यकालमवेक्षते २१ दिवसेपंचमेयस्तुप्राश्नीयादेकभोजनम् सदाद्वादशमासांस्तुजुह्वानोजातवेदसम् २२ अलुब्धःसत्यवादीचब्रह्मण्यश्चाविहिंसकः अनसूयुरपापस्थोद्वादशाहफलंलभेत् २३ जांबूनदमयंदिव्यंविमानंहंसलक्षणम् सूर्यमालासमाभासमारोहेत्पांडुरंगृहम् २४ आवर्त्तनानिचत्वारितथापद्मानिद्वादश शरंग्निपर्यमाणंचतत्रासौवसतेसुखम् २५

पद्मवर्षाणांनिर्जीय अनको
टयएकंपद्मं ११ १२ १३ १४ १५ १६ १७ निवर्त्तननियमेनवर्त्तनं १८ १९ २० २१ २२ . २३ २४ आवर्त्तनानिवर्षाणिचत्वारिद्वादशचेतिपांडुरपद्मानितथाशरा
ग्निरग्निपर्यंचित्तंतत्परसंक्रमणचागत्यद्भानि २५ ६२

दिवसेयस्तुषष्ठेवैमुनिःप्राशेतभोजनम् सदाद्वादशमासान्वैजुह्वानोजातवेदसम् २६ सदात्रिषवणस्नायीब्रह्मचार्यनसूयकः गवामेध
स्ययज्ञस्यफलंप्राप्नोत्यनुत्तमम् २७ अग्निज्वालासमाभासहंसबर्हिणसेवितम् शातकुंभमयंयुक्तंसाधयेद्यानमुत्तमम् २८ नयेत्वा
प्सरसामंकेप्रतिसुप्तःप्रबोध्यते नूपुराणांनिनादेनमेखलानांचनिःस्वनैः २९ कोटिसहस्त्रवर्षाणांत्रीणिकोटिशतानिच पद्मान्यष्टाद
शतथापताकेद्वेतथैवच ३० अयुतानिचपंचाशदृक्षचर्मशतस्यच लोम्नांप्रमाणेनसमंब्रह्मलोकेमहीयते ३१ दिवसेसप्तमेयस्तु
प्राश्नीयादेकभोजनम् सदाद्वादशमासान्वैजुह्वानोजातवेदसम् ३२ सरस्वतीगोपयानोब्रह्मचर्यंसमाचरन् सुमनोवर्णकंचैवम-
धुमांसंचवर्जयन् ३३ पुरुषोमरुतांलोकमिंद्रलोकंचगच्छति तत्रतत्रहिसिद्धार्थोदेवकन्याभिरर्च्यते ३४ फलंबहुसुवर्णस्यय
ज्ञस्यलभतेनरः संख्यामतिगुणांचापितेषुलोकेषुमोदते ३५ यस्तुसंवत्सरंक्षांतोभुंक्तेह्न्यष्टमेनरः देवकार्यपरोनित्यंजुह्वानोजा
तवेदसम् ३६ पौंडरीकस्ययज्ञस्यफलंप्राप्नोत्यनुत्तमम् पद्मवर्णनिभंचैवविमानमधिरोहति ३७ कृष्णाःकनकगौर्यश्चनार्यःश्या-
मास्तथापराः वयोरूपविलासिन्योलभतेनात्रसंशयः ३८ यस्तुसंवत्सरंभुंक्तेनवमेनवमेहनि सदाद्वादशमासान्वैजुह्वानोजातवे
दसम् ३९ अश्वमेधसहस्त्रस्यफलंप्राप्नोत्यनुत्तमम् पुंडरीकप्रकाशंचविमानंलभतेनरः ४० दीप्तसूर्याग्नितेजोभिर्दिव्यमालाभि
रेवच नीयतेरुद्रकन्याभिःसोंतरिक्षंसनातनम् ४१ अष्टादशसहस्त्राणिवर्षाणांकल्पमेवच कोटिशतसहस्त्रंचतेषुलोकेषुमोदते
४२ यस्तुसंवत्सरंभुंक्तेदशाहेवैगतेगते सदाद्वादशमासान्वैजुह्वानोजातवेदसम् ४३ ब्रह्मकन्यानिवासेचसर्वभूतमनोहरे अ
श्वमेधसहस्त्रस्यफलंप्राप्नोत्यनुत्तमम् ४४ रूपवत्यश्चतंकन्यारमयंतिसनातनम् नीलोत्पलनिभैर्वर्णैरक्तोत्पलनिभैस्तथा ४५
विमानमंडलावर्तमावर्तगहनाकुलम् सागरोर्मिप्रतीकाशंसलभेद्यानमुत्तमम् ४६ विचित्रमणिमालाभिर्नादितंशंखनिःस्वनैः
स्फाटिकैर्वज्रसारैश्चस्तंभैःसुकृतवेदिकम् ४७ आरोहतिमहद्यानंहंससारसनादितम् एकादशेतुदिवसेयःप्राप्तेप्राशतेहविः ४८
सदाद्वादशमासांस्तुजुह्वानोजातवेदसम् परस्त्रियंनाभिलषेत्वाचाथमनसापिवा अनृतंचनभाषेतमातापित्रोःकृतेपिवा ४९
अभिगच्छेन्महादेवंविमानस्थंमहाबलम् अश्वमेधसहस्त्रस्यफलंप्राप्नोत्यनुत्तमम् ५०

५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ६७ ६८

स्वारं भुवंच पश्येतर्विमानं संमुपस्थितम् कुमार्यः कांचनाभासा रूपवंत्योनयंतितम् ५१ रुद्राणांतमधीवासं दिविदिव्यंमनोहरः वर्षाण्यपरि
मेयानि युगांताग्निसमप्रभः ५२ कोटिशतसहस्त्रंच दशकोटिशतानिच रुद्रंनित्यंप्रणमते देवदानवसंमतम् सतस्मै दर्शनंप्राप्तोदि
वसोदिवसेभवेत् ५३ दिवसेद्वादशेयस्तु प्राप्तेवैप्राशतेहविः सदाद्वादशमासान्वैसर्वमेधफलंलभेत् ५४ आदित्यद्वादशेतस्याविं-
मानंसविधीयते मणिमुक्ताप्रवालैश्चमहार्हैरूपशोभितम् ५५ हंसभासापरिक्षिप्तनागवीथीसमाकुलम् मयूरैश्चक्रवाकैश्चकू
जद्भिरुपशोभितम् ५६ अट्टैर्महद्भिःसंयुक्तंब्रह्मलोकेप्रतिष्ठितम् नित्यमावसथंराजन्नरनारीसमावृतम् ऋषिरेवंमहाभागस्त्वं
गिराप्राहधर्मवित् ५७ त्रयोदशेतुदिवसेप्राप्तेयःप्राशतेहविः सदाद्वादशमासान्वैदेवसत्रफलंलभेत् ५८ रक्तपद्मोदयंनामविमा
नंसाधयेन्नरः जातरूपप्रयुक्तंचरत्नसंचयभूषितम् ५९ देवकन्याभिराकीर्णंदिव्याभरणभूषणम् पुण्यगंधोदयंदिव्यंवायव्यैरूप
शोभितम् ६० तत्रशंकुपताकेद्वेयुगांतंकल्पमेवच अयुतायुतंतथापद्मंसमुद्रंचतथावसेत् ६१ गीतगंधर्वघोषैश्चभेरीपणवनिःस्व
नैः सदाप्रल्हादितस्ताभिर्देवकन्याभिरिज्यते ६२ चतुर्दशेतुदिवसेयःपूर्णेप्राशतेहविः सदाद्वादशमासांस्तुमहामेधफलंलभेत् ६३
अनिर्देश्यवयोरूपादेवकन्याःस्वलंकृताः मृष्टतप्तांगदधराविमानैरनुयांतितम् ६४ कलहंसविनिर्घोषैर्नूपुराणांचनिःस्वनैः कांचीनां
चसमुत्कर्षैस्तत्रतत्रविबोध्यते ६५ देवकन्यानिवासेचतस्मिन्वसतिमानवः जान्हवीवालुकाकीर्णंपूर्णंसंवत्सरंनरः ६६ यस्तुपक्षेग-
तेभुंक्ते एकभक्तंजितेंद्रियः सदाद्वादशमासांस्तुजुह्वानोजातवेदसम् ६७ राजसूयसहस्रस्यफलंप्राप्नोत्यनुत्तमम् यानमारोहतेदि
व्यंहंसबर्हिणसेवितम् ६८ मणिमंडलकैश्चित्रंजातरूपसमावृतम् दिव्याभरणशोभाभिर्वरस्त्रीभिरलंकृतम् ६९ एकस्तंभंचतुर्द्वा
रंसप्तभौमंसुमंगलम् वैजयंतीसहस्रैश्चशोभितंगीतनिःस्वनैः दिव्यंदिव्यगुणोपेतंविमानमधिरोहति ७० मणिमुक्ताप्रवालैश्च
भूषितंवैद्युतंलभेत् वसेद्युगसहस्रंचखड्गकुंजरवाहनः ७१ षोडशेदिवसेप्राप्तेयःकुर्यादेकभोजनं सदाद्वादशमासान्वैसोमयज्ञ
फलंलभेत् ७२ सोमकन्यानिवासेषुसोध्यावसतिनित्यशः सौम्यगंधानुलिप्तश्चकामकारगतिर्भवेत् ७३ सुदर्शनाभिर्नारीभि-
र्मधुराभिस्तथैवच अर्च्यतेवैविमानस्थःकामभोगैश्चसेव्यते ७४ फलंपद्मशतप्रख्यंमहाकल्पंदशाधिकम् आवर्तनानिचत्वारि-
सागरेयाप्यसौनरः ७५

६९ ७० ७१ ७२ ७३ ७४ ७५

दिवसेसत्यदशमेयः प्राप्ते प्राशते हविः सदाद्वादशमासान्वैजुह्वानोजातवेदसम् ७६ स्थानंवारुणमैंद्रंचरौद्रंवाप्यधिगच्छति मारु
तोशानसेचैवब्रह्मलोकंचगच्छति ७७ तत्रदेवतकन्याभिरासनेनोपचर्यते भूर्भुवंचापिदेवर्षिविश्वरूपमवेक्षते ७८ तत्रदेवाधि
देवस्यकुमार्योरमयंतितम् द्वात्रिंशद्रूपधारिण्योमधुराःसमलंकृताः ७९ चंद्रादित्यावुभौयावद्गगनेचरतःप्रभो तावच्चरत्यसौधी
रैःसुधामृतरसाशनः ८० अष्टादशेयोदिवसेप्राश्नीयादेकभोजनम् सदाद्वादशमासान्वैसप्तलोकान्सपश्यति ८१ रथैःसनंदि
घोषैश्चपृष्ठतःसोनुगम्यते देवकन्याधिरूढैस्तुभ्राजमानैःस्वलंकृतैः ८२ व्याघ्रसिंहप्रयुक्तंचमेघस्वननिनादितम् विमानमुत्तमं
दिव्यंससर्वोत्त्वधिरोहति ८३ तत्रकल्पसहस्रंसकन्याभिःसहमोदते सुधारसंचभुंजीतअमृतोपममुत्तमम् ८४ एकोनविंश
तिदिनेयोभुंक्तेएकभोजनम् सदाद्वादशमासान्वैसप्तलोकान्सपश्यति ८५ उत्तमंलभतेस्थानमप्सरोगणसेवितम् गंधर्वैरुपगी
तंचविमानंसूर्यवर्चसम् ८६ तत्रामरवरस्त्रीभिर्मोदतेविगतज्वरः दिव्यांबरधरःश्रीमानयुतानांशतंशतम् ८७ पूर्णेथविंशेदिवसे
योभुंक्तेत्वेकभोजनम् सदाद्वादशमासांस्तुसत्यवादीधृतव्रतः ८८ अमांसाशीब्रह्मचारीसर्वभूतहितेरतः सलोकान्विपुलान्र
म्यानादित्यानामुपाश्नुते ८९ गंधर्वैरप्सरोभिश्चदिव्यमाल्यानुलेपनैः विमानैःकांचनैर्हंद्यैःपृष्ठतश्चानुगम्यते ९० एकविंशेतुदिव
सेयोभुंक्तेत्वेकभोजनम् सदाद्वादशमासान्वैजुह्वानोजातवेदसम् ९१ लोकमौशनसंदिव्यंशक्रलोकंचगच्छति अश्विनोर्मरुतांचैववसु
नांचधिरंतःसदा ९२ अनभिज्ञश्चदुःखानांविमानवरमास्थितः सेव्यमानोवरस्त्रीभिःक्रीडत्यमरवत्प्रभुः ९३ द्वाविंशेदिवसेप्राप्तेयोभु
क्तेत्वेकभोजनम् सदाद्वादशमासान्वैजुह्वानोजातवेदसम् ९४ अहिंसानिरतोधीमान्सत्यवागनसूयकः लोकान्वसूनामाप्नोतिदिवाकर
समप्रभः ९५ कामचारीसुधाहारोविमानवरमास्थितः रमतेदेवकन्याभिर्दिव्याभरणभूषितः ९६ त्रयोविंशेतुदिवसेप्राशेद्यस्त्वेकभोजन
म् सदाद्वादशमासांस्तुमिताहारोजितेंद्रियः ९७ वायोरुशनसश्चैवरुद्रलोकंचगच्छति कामचारीकामगतःपूज्यमानोप्सरोगणैः ९८
अनेकगुणपर्यंतविमानवरमास्थितः रमतेदेवकन्याभिर्दिव्याभरणभूषितः ९९ चतुर्विंशेतुदिवसेयःप्राप्तेप्राशतेहविः सदाद्वादशमा
सांश्चजुह्वानोजातवेदसम् १०० आदित्यानामधीवासेमोदमानोवसेच्चिरम् दिव्यमाल्यांबरधरोदिव्यगंधानुलेपनः १ विमानेकांचनेदिव्ये
हंसयुक्तेमनोरमे रमतेदेवकन्यानांसहस्रैरयुतैस्तथा २

१०३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९

पंचविंशंतु दिवसे यः प्राशेदेकभोजनम् सदा द्वादश मासांस्तु पुष्पकं यानमारुहेत् १०३ सिंहव्याघ्रप्रयुक्तैस्तु मेघनिःस्वननादितैः
सरथैर्नन्दिघोषैश्च पृष्ठतोह्यनुगम्यते ४ देवकन्यासमारूढैः काञ्चनैर्विमलैः शुभैः विमानमुत्तमं दिव्यमास्थाय सुमनोहरम् ५ तत्र कन्या
सहस्राणि वसते स्त्रीशतावृते सुधारसं चोपजीवन्नमृतोपममुत्तमम् ६ षड्विंशंदिवसे यस्तु प्रकुर्यादेकभोजनम् सदा द्वादश मासांस्तु नि
यतो नियताशनः ७ जितेन्द्रियो वीतरागो जुह्वानो जातवेदसम् सम्प्राप्नोति महाभागः पूज्यमानोऽप्सरोगणैः ८ सप्तानां मरुतां लोकानुवसू
नां चापि सोऽश्नुते विमाने स्फाटिके दिव्ये सर्वरत्नैरलंकृते ९ गंधर्वैरप्सरोभिश्च पूज्यमानः प्रमोदते द्वे युगानां सहस्रे तु दिव्ये दिव्येन तेजसा १०
सप्तविंशेऽथ दिवसे यः कुर्यादेकभोजनम् सदा द्वादश मासांस्तु जुह्वानो जातवेदसम् ११ फलं प्राप्नोति विपुलं देवलोके च पूज्यते अमृताशी व
सस्तत्र स वितृष्णः प्रमोदते १२ देवर्षिचरितं राजन्राजर्षिभिरनुष्ठितम् अध्यावसति दिव्यात्मा विमानवरमास्थितः १३ स्त्रीभिर्मनोभिरा
माभीरममाणो मदोत्कटः युगकल्पसहस्राणि त्रीण्यावसति वै सुखम् १४ योऽष्टाविंशंतु दिवसं प्राश्नीयादेकभोजनम् सदा द्वादश मासांस्तु-
जितात्मा विजितेन्द्रियः १५ फलं देवर्षिचरितं विपुलं समुपाश्नुते भोगवांस्तेजसा भाति सहस्रांशुरिवामलः १६ सुकुमार्यश्च नार्यस्तं रममाणाः
सुवर्चसः पीनस्तनोरुजघना दिव्याभरणभूषणाः १७ रमयंति मनःकांते विमाने सूर्यसन्निभे सर्वकामगमे दिव्ये कल्पायुतशतं समाः १८ ए
कोनत्रिंशे दिवसे यः प्राशेदेकभोजनम् सदा द्वादश मासान्वै सत्यव्रतपरायणः १९ यस्य लोकाः शुभा दिव्या देवराजर्षिपूजिताः विमानं सूर्य
चंद्राभं दिव्यं समधिगच्छति २० जातरूपमयं युक्तं सर्वरत्नसमन्वितम् अप्सरोगणसंपूर्णं गंधर्वैरभिनादितम् २१ तत्र चैनं शुभा नार्यो-
दिव्याभरणभूषिताः मनोभिरामा मधुरा रमयंति मदोत्कटाः २२ भोगवांस्तेजसा युक्तो वैश्वानरसमप्रभः दिव्यो दिव्येन वपुषा भ्राजमान
इवामरः २३ वसूनां मरुतां चैव साध्यानामश्विनोस्तथा रुद्राणां च महाराज व्रह्मलोकं च गच्छति २४ यस्तु मासे गते भुंक्ते एकभक्तं शमात्म
कः सदा द्वादश मासान्वै ब्रह्मलोकमवाप्नुयात् २५ सुधारसकृताहारः श्रीमान्सर्वमनोहरः तेजसा वपुषा लक्ष्म्या भ्राजते रश्मिवानिव २६ दि
व्यमाल्यांबरधरो दिव्यगंधानुलेपनः सुखेष्वभिरतो भोगी दुःखानामविजानकः २७ स्वयंप्रभाभिर्नारीभिर्विमानस्थो महीयते रुद्रदेव-
विकन्याभिः सततं चाभिपूज्यते २८

२० २१ २२ २३ २४ २५ २६ २७ २८ ७ ७ ७ ७

२९ ३० ३१ ३२ ३३ ३४ ३५ अभ्रंमेघस्तस्यावकाशो आकाशंतच्छीलस्तद्वन्निर्मलः ३६ ३७ ३८ ३९ ४० ४१ १४२ इतिश्री

नानारमणरूपाभिर्नानारागाभिरेवच नानामधुरभाषाभिर्नानारतिभिरेवच २९ विमानेगगनाकारेसूर्यवैदूर्यसन्निभे पृष्ठतःसोमसं
काशेउदक्चाभ्रसन्निभे ३० दक्षिणायांतुरक्ताभे अधस्तान्नीलमंडले ऊर्ध्वंविचित्रसंकाशेनैकोवसतिपूजितः ३१ यावद्वर्षसहस्रंवै
जंबुद्वीपेप्रवर्षति तावत्संवत्सराप्रोक्ताब्रह्मलोकस्यधीमतः ३२ विप्रुषश्चैवयावंत्योनिपतंतिनभस्तलात् वर्षासुवर्षतस्तावन्निवसत्यमर
प्रभः ३३ मासोपवासीवर्षैस्तुदशभिःस्वर्गमुत्तमम् महर्षित्वमथासाद्यसशरीरगतिर्भवेत् ३४ मुनिर्दांतोजितक्रोधोजितशिश्नोदरःसदा
जुह्वदग्नींश्चनियतःसंध्योपासनसेविता ३५ बहुभिर्नियमैरेवंसुचिरंभातियोनरः अभ्रावकाशशीलश्चतस्यभानोरिवत्विषः ३६ दिवं
गत्वाशरीरेणस्वेनराजन्यथामरः स्वर्गंपुण्यंयथाकाममुपभुंक्तेतथाविधः ३७ एषतेभरतश्रेष्ठयज्ञानांविधिरुत्तमः व्याख्यातोन्वानुपूर्व्येण
उपवासफलात्मकः ३८ दरिद्रैर्मनुजैःपार्थप्राप्तंयज्ञफलंतथा उपवासमिमंकृत्वागच्छेच्चपरमांगतिम् ३९ देवद्विजातिपूजायांरतोभरतसत्त
मः उपवासविधिस्त्वेषविस्तरेणप्रकीर्तितः ४० नियतेष्वप्रमत्तेषुशौचवत्सुमहात्मसु दंभद्रोहनिवृत्तेषुकृतबुद्धिषुभारत ४१ अचलेष्वप्र
कंपेषुमातेभूदत्रसंशयः १४२ इतिश्रीमहाभारते आनुशासनिकेपर्वणिदानधर्मेउपवासविधिर्नामसप्ताधिकशततमोऽध्यायः १०७
युधिष्ठिरउवाच यद्वरंसर्वतीर्थानांतन्मेब्रूहिपितामह यत्रचैवपरंशौचंतन्मेव्याख्यातुमर्हसि १ भीष्मउवाच सर्वाणिखलुती
र्थानिगुणवंतिमनीषिणः यत्तुतीर्थंचशौचंचतन्मेशृणुसमाहितः २ अगाधेविमलेशुद्धेसत्यतोयेधृतिह्रदे स्नातव्यंमानसेतीर्थेसत्वमा
लंब्यशाश्वतम् ३ तीर्थशौचमनर्थित्वमार्जवंसत्यमार्दवम् अहिंसासर्वभूतानामानृशंस्यंदमःशमः ४ निर्ममानिरहंकारानिर्द्वंद्वानि
ष्परिग्रहाः शुचयस्तीर्थभूतास्तेयेभैक्ष्यमुपभुंजते ५ तत्त्ववित्त्वनहंबुद्धिस्तीर्थंप्रवरमुच्यते शौचलक्षणमेतत्तेसर्वत्रैवान्ववेक्षणम्
६ रजस्तमःसत्वमथोयेषांनिर्धौतमात्मनः शौचाशौचेसमासक्ताःस्वकार्यपरिमार्गिणः ७ सर्वत्यागेष्वभिरताःसर्वज्ञाःसमदर्शिनः शौ
चेनवृत्तशौचार्थास्तेतीर्थाःशुचयश्चये ८ नोदकक्लिन्नगात्रस्तुस्नातइत्यभिधीयते सस्नातोयोदमस्नातःसबाह्याभ्यंतरःशुचिः ९ अ
तीतेष्वनपेक्षायेप्राप्तेष्वर्थेषुनिर्ममाः शौचमेवपरंतेषांयेषांनोत्पद्यतेस्पृहा १० प्रज्ञानंशौचमेवेह शरीरस्यविशेषतः तथानिष्किंचनत्वंच
मनसश्चप्रसन्नता ११

आनुशासनिकेपर्वणिटीकायांसप्ताधिकशततमोऽध्यायः १०७ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११

वृत्तशौचंमनःशौचंतीर्थशौचमतःपरम् ज्ञानोत्पन्नंचयच्छौचंतच्छौचंपरमंस्मृतम् १२ मनसाचप्रदीप्तेनब्रह्मज्ञानजलेनच स्नातियो
मानसेतीर्थेतत्स्नानंतत्त्वदर्शिनः १३ समारोपितशौचस्तुनित्यंभावसमाहितः केवलंगुणसंपन्नःशुचिरेवनरःसदा १४ शरीरस्थानितीर्
थानिप्रोक्तान्येतानिभारत पृथिव्यांयानितीर्थानिपुण्यानिशृणुतान्यपि १५ शरीरस्ययथोद्दिष्टाःशुचयःपरिकीर्तिताः तथापृथिव्याभागा
श्चपुण्यानिसलिलानिच १६ कीर्तनाच्चैवतीर्थस्यस्नानाच्चपितृतर्पणात् धुनंतिपापंतीर्थेषुतेप्रयांतिसुखंदिवम् १७ परिग्रहाच्चसाधूनांपृ
थिव्याश्चैवतेजसा अतीवपुण्यभागास्तेसलिलस्यचतेजसा १८ मनसश्चपृथिव्याश्चपुण्यास्तीर्थास्तथापरे उभयोरेवयःस्नायात्ससिद्धिंशी-
घ्रमाप्नुयात् १९ यथाबलंक्रियाहीनंक्रियावाबलवर्जिता नेहसाधयतेकार्यंसमायुक्तातुसिध्यति २० एवंशरीरशौचेनतीर्थशौचेनचान्वितः
शुचिःसिद्धिमवाप्नोतिद्विविधंशौचमुत्तमम् २१ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेशौचानुपृच्छानामअष्टाधिकशततमो
ऽध्यायः १०८ युधिष्ठिरउवाच सर्वेषामुपवासानांयच्छ्रेयःसुमहत्फलम् यच्चाप्यसंशयंलोकेतन्मेत्वंवक्तुमर्हसि १ भीष्मउवाच
शृणुराजन्यथागीतंस्वयमेवस्वयंभुवा यत्कृत्वानिर्वृतोभूयात्पुरुषोनात्रसंशयः २ द्वादश्यांमार्गशीर्षेतु अहोरात्रेणकेशवम् अर्च्याश्वमे
धंप्राप्नोतिदुष्कृतंचास्यनश्यति ३ तथैवपौषमासेतुपूज्योनारायणेतिच वाजपेयमवाप्नोतिसिद्धिंचपरमांव्रजेत् ४ अहोरात्रेणद्वादश्यां
माघमासेतुमाधवम् राजसूयमवाप्नोतिकुलंचैवसमुद्धरेत् ५ तथैवफाल्गुनेमासिगोविंदेतिचपूजयन् अतिरात्रमवाप्नोतिसोमलोकंच
गच्छति ६ अहोरात्रेणद्वादश्यांचैत्रेविष्णुरितिस्मरन् पौंडरीकमवाप्नोतिदेवलोकंचगच्छति ७ वैशाखमासेद्वादश्यांपूजयन्मधुसूदन
म् अग्निष्टोममवाप्नोतिसोमलोकंचगच्छति ८ अहोरात्रेणद्वादश्यांज्येष्ठेमासित्रिविक्रमम् गवांमेधमवाप्नोतिअप्सरोभिश्चमोदते ९
आषाढेमासिद्वादश्यांवामनेतिचपूजयन् नरमेधमवाप्नोतिपुण्यंचलभतेमहत् १० अहोरात्रेणद्वादश्यांश्रावणेमासिश्रीधरम् पंचयज्ञान
वाप्नोतिविमानस्थश्चमोदते ११ तथाभाद्रपदेमासिहृषीकेशेतिपूजयन् सौत्रामणिमवाप्नोतिपूतात्माभवतेचहि १२ द्वादश्यामाश्विनेमा
सिपद्मनाभेतिचार्चयन् गोसहस्रफलंपुण्यंप्राप्नुयान्नात्रसंशयः १३ द्वादश्यांकार्तिकेमासिपूज्यदामोदरेतिच गवांयज्ञमवाप्नोतिपुमान्स्त्रीवा
नसंशयः १४

अर्च्य अभ्यर्च्य ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ ७ ७ ७ ७ ७ ७

१५ तद्भावमुपेंद्रं उपेंद्रतादात्म्यं कीटभृंगन्यायेन ध्यानेनाधिगच्छति १६ , १७ इति नवाधिकशततमोऽध्यायः १०९ १ २ इष्टकामनासिध्यर्थं चांद्रव्रतमाह मार्गे मार्ग-
शीर्षशुक्लप्रतिपदि मूलनक्षत्रयोगे सति चांद्रं व्रतमारभेत् तत्र चंद्रावयवेषु नक्षत्राणि न्यसेत् पादौ मूलेनेत्यादिना स्वदेवतासहितेन मूलेन चंद्रस्य पादौ कल्पयेदित्य-
र्थः एवं रोहिण्यादिभिः सदेवताभिर्जंघादयः कल्पनीयाः सर्वत्र विभक्तिव्यत्यय आर्षः ३ आषाढयोरिति आषाढाद्वयं फाल्गुनीद्वयं भाद्रपदाद्वयं च ज्ञेयम् ४ अत्रायं प्र
योगः पुण्याहवाचनादिपूर्वकं इष्टकाम्यार्थं व्रतं स्वीकृत्य चंद्रं आत्मानं च चंद्राभिन्नं ध्यात्वा तदवयवेषु तत्तद्देवतासहितानि नक्षत्राणि विन्यस्य तत्तन्मंत्रैस्तेषामाराधनं जप

अर्चयेत्पुंडरीकाक्षमेवं संवत्सरं तु यः जातिस्मरत्वं प्राप्नोति विद्याद्बहुसुवर्णकं १५ अहन्यहनि तद्भावमुपेंद्रं योऽधिगच्छति समाप्ते भोज
येद्विप्रानर्थवादापर्यंतघृतम् १६ अतः परं नोपवासो भवतीति विनिश्चयः उवाच भगवान्विष्णोः स्वयमेव पुरातनम् १७ इति श्रीम० आनु
शासनिके प० दान० विष्णोर्द्वादशकनाम नवाधिकशततमोऽध्यायः १०९ वैशंपायन उवाच शरतल्पगतं भीष्मं वृद्धं कुरुपितामहम् उपग
म्य महाप्राज्ञः पर्यपृच्छद्युधिष्ठिरः १ युधिष्ठिर उवाच अंगानां रूपसौभाग्यं प्रियं चैव कथं भवेत् धर्मार्थकामसंयुक्तः सुखभागी कथं भ
वेत् २ भीष्म उवाच मार्गशीर्षस्य मासस्य चंद्रे मूलेन संयुते पादौ मूलेन राजेंद्र जंघायामथ रोहिणीम् ३ अश्विन्यां सक्थिनी चैव ऊरू त्वा
षाढयोस्तथा गुह्यं तु फाल्गुनी विद्यात्कृत्तिकाः कटिकास्तथा ४ नाभिं भाद्रपदे विद्याद्रेवत्यामक्षिमंडलम् पृष्ठमेव धनिष्ठासु अनुराधोत्तरास्त
था ५ बाहुभ्यां तु विशाखासु हस्तौ हस्तेन निर्दिशेत् पुनर्वस्वंगुलीं राजन्नाश्लेषासु नखास्तथा ६ ग्रीवां ज्येष्ठा च राजेंद्र श्रवणेन तु कर्णयोः मु
खं पुष्येण दानेन दंतोष्ठौ स्वातिरुच्यते ७ हासं शतभिषां चैव मघां चैवाथ नासिकाम् नेत्रे मृगशिरो विद्याल्ललाटे मित्रमेव तु ८ भरण्यां तु शि
रो विद्यात्केशानार्द्रां नराधिप समाप्ते तु घृतं दद्याद्ब्राह्मणे वेदपारगे ९ सुभगो दर्शनीयश्च ज्ञानभाग्यश्च जायते जायते परिपूर्णांगः पौर्णमास्ये
व चंद्रमाः १० इति श्रीम० आनु० दान० दशाधिकशततमोऽध्यायः ११० युधिष्ठिर उ० पितामह महाप्राज्ञ सर्वशास्त्रविशारद श्रोतुमिच्छामि म
र्त्यानां संसारविधिमुत्तमम् १ केन वृत्तेन राजेंद्र वर्त्तमाना नरा भुवि प्राप्नुवंत्युत्तमं स्वर्गं कथं च नरकं नृप २ मृतं शरीरमुत्सृज्य काष्ठलोष्टसम
जनाः प्रयांत्यमुं लोकमितः को वै तानमुगच्छति ३ भीष्म उवाच अयमायाति भगवान्बृहस्पतिरुदारधीः पृच्छैनं त्वं महाभागमेतद्गुह्यं
सनातनम् ४ नैतदन्येन शक्यं हि वक्तुं केनचिदद्य वै वक्ता बृहस्पतिसमो न ह्यन्यो विद्यते क्वचित् ५

होमादिना प्रत्यहं कर्त्तव्यं एवं पौर्णमासीपर्यंतं कृ
त्वा समासे व्रतं होमशेषं समाप्य घृतं आचार्याय निवेदयेत् समासे तु घृतं दद्यादित्यनेन घृतमेव होमद्रव्यं ज्ञायते ५ ६ ७ ८ ९ एवं कुर्वन्निकलांगोऽपि पौर्णमास्यां सक
लांगो भवति एवं सदृष्टांतमाह परिपूर्णांग इति १० इति दशाधिकशततमोऽध्यायः ११० १ २ ३ ४ ५

६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ शरीरस्यनिचय अवस्थितिमितियावत् १९ २० अंतकोयम
अंतार्थंगच्छतीतियोगात् आत्मासाक्षी २१ निशेतिदिवसस्याप्युपलक्षणं एतैःसहधर्मोपूर्वरूपोजीवमनुगच्छति २२ २३ २४ २५ ननुभूनसूक्ष्मव

वैशंपायनउवाच तयोःसंवदतोरेवंपार्थगांगेययोस्तदा आजगामविशुद्धात्मानाकपृष्ठात्बृहस्पतिः ६ ततोराजासमुत्थायधृतराष्ट्र
पुरोगमाः पूजामनुपमांचक्रेसर्वेतेचसभासदः ७ ततोधर्मसुतोराजाभगवंतंबृहस्पतिम् उपगम्यप्रश्नान्यायंप्रश्नंपप्रच्छतत्ववित् ८
युधिष्ठिरउवाच भगवन्सर्वधर्मज्ञसर्वशास्त्रविशारद मर्त्यस्यकःसहायोवैपितामातासुतोगुरुः ९ ज्ञातिसंबंधिवर्गश्चमित्रव
र्गस्तथैवच मृतशरीरमुत्सृज्यकाष्ठलोष्टसमंजनाः गच्छंत्यमुत्रलोकंवैकएनमनुगच्छति १० बृहस्पतिरुवाच एकःप्रसू
यतेराजन्नेकएवविनश्यति एकस्तरतिदुर्गाणिगच्छत्येकस्तुदुर्गतिम् ११ असहायःपितामातातथाभ्रातासुतोगुरुः ज्ञातिसंबंधि
वर्गश्चमित्रवर्गस्तथैवच १२ मृतशरीरमुत्सृज्यकाष्ठलोष्टसमंजनाः मुहूर्त्तमिवरोदित्वाततोयांतिपराङ्मुखाः १३ तैस्तच्छरीर
मुत्सृष्टंधर्मएकोनुगच्छति तस्माद्धर्मःसहायश्चसेवितव्यःसदानृभिः १४ प्राणीधर्मसमायुक्तोगच्छेत्स्वर्गगतिंपराम् तथैवाधर्म
संयुक्तोनरकंचोपपद्यते १५ तस्मान्न्यायागतैरर्थैर्धर्मंसेवेतपंडितः धर्मएकोमनुष्याणांसहायःपारलौकिकः १६ लोभान्मोहाद
नुक्रोशाद्भयाद्वाप्यबहुश्रुतः नरःकरोत्यकार्याणिपरार्थेलोभमोहितः १७ धर्मश्चार्थश्चकामश्चत्रितयंजीवितेफलम् एतत्त्रयमं
वाप्तव्यमधर्मपरिवर्जितम् १८ युधिष्ठिरउवाच श्रुतंभगवतोवाक्यंधर्मयुक्तंपरंहितम् शरीरनिचयंज्ञातुंबुद्धिस्तुममजा
यते १९ मृतशरीरंहिनृणांसूक्ष्ममव्यक्ततांगतम् अचक्षुर्विषयंप्राप्तंकथंधर्मोनुगच्छति २० बृहस्पतिरुवाच पृथिवी
वायुराकाशमापोज्योतिर्मनोंतकः बुद्धिरात्माचसहिताधर्मंपश्यंतिनित्यदा २१ प्राणिनामिहसर्वेषांसाक्षिभूतादिवानिशं एतै
श्चसहधर्मोपितंजीवमनुगच्छति २२ त्वगस्थिमांसंशुक्रंचशोणितंचमहामते शरीरंवर्जयंत्येतेजीवितेनविवर्जितम् २३ त
तोधर्मसमायुक्तःसजीवःसुखमेधते इहलोकेपरेचैवकिंभूयःकथयामिते २४ ततोधर्मसमायुक्तःप्रयातितेजीवएवहि ततोस्यकर्म
पश्यंतिशुभंवायदिवाशुभम् देवताःपंचभूतस्थाःकिंभूयःश्रोतुमिच्छसि २५ युधिष्ठिरउवाच तद्दर्शितंभगवतायथाध
र्मोनुगच्छति एतत्तुज्ञातुमिच्छामिकथंरेतःप्रवर्त्तते २६

त्फलंसूक्ष्मावस्थारूपमपूर्वंजीवमनुगच्छतुरेतस्तुमूलएवस्थूलतरंकथमेतत्प्रवर्त्ततइत्याशंकतेएतदिति २६ ७ ७ ७ ७

सजीवोपूर्वेणभूतैश्चमिश्रितोवायुद्वारावृष्टित्वंप्राप्यान्नरूपेणपरिणम्यरेतोरूपीभवतीत्याह अन्नमिति २७ २८ २९ कथंसूक्ष्मतमस्यपुरुषस्यस्थूलतरेणरेतसानादात्म्यंसत्यपिसंसर्गेअम्भश्छायोरिवभवतीत्याशंकते आख्यातमिति ३० भूतावेशन्यायेनपुरुषःतेस्तैर्भूतैरेतोद्वाराशरीराकारत्वंप्राप्तैःसहसंगमात्रेणाभिभूयतेतादात्म्येनवर्धतेसंगाभावेतुनसुप्तसमाध्यादावित्याह आसन्नेति ३१ ततस्तादात्म्याभिमानरूपादभिभवादयंकर्तृत्वादिमानभ

बृहस्पतिरुवाच अन्नमश्नंतियद्देवाःशरीरस्थानरेश्वर पृथिवीवायुराकाशमापोज्योतिर्मनस्तथा २७ ततस्तृप्तेषुराजेंद्रतेषुभूतेषुपंचसु मनःषष्ठेषुशुद्धात्मनरेतःसंपद्यतेमहत् २८ ततोगर्भःसंभवतिश्लेषात्स्त्रीपुंसयोर्नृप एतत्तेसर्वमाख्यातंभूयःकिंश्रोतुमिच्छसि २९ युधिष्ठिरउवाच आख्यातंमेभगवतागर्भःसंजायतेतथा तथाजातस्तुपुरुषःप्रपद्यातिनदुच्यताम् ३० बृहस्पतिरुवाच आसन्नमात्रःपुरुषस्तैर्भूतैरभिभूयते विप्रयुक्तश्चतैर्भूतैःपुनर्यात्यपरांगतिम् ३१ सर्वभूतसमायुक्तःप्राप्नुतेजीवएवहि ततोस्यकर्मपश्यंतिशुभंवायदिवाशुभम् देवताःपंचभूतस्थाःकिंभूयःश्रोतुमिच्छसि ३२ युधिष्ठिरउवाच त्वगस्थिमांसमुत्सृज्यतैश्चभूतैर्विवर्जितः जीवःसभगवन्क्वस्थःसुखदुःखेसमश्नुते ३३ बृहस्पतिरुवाच जीवःकर्मसमायुक्तःशीघ्रंरेतस्त्वमागतः स्त्रीणांपुष्पंसमासाद्यसूतेकालेनभारत ३४ यमस्यपुरुषैःक्लेशंयमस्यपुरुषैर्वधम् दुःखंसंसारचक्रंचनरःक्लेशंसविंदति ३५ इहलोकेसचप्राणीजन्मप्रभृतिपार्थिव सुकृतंकर्मवैभुंक्तेधर्मस्यफलमाश्रितः ३६ यदिधर्मंयथाशक्तिजन्मप्रभृतिसेवते ततःसपुरुषोभूत्वासेवतेनित्यदासुखम् ३७ अथांतरातुधर्मस्याप्यधर्ममुपसेवते सुखस्यानंतरंदुःखंसजीवोप्यधिगच्छति ३८ अधर्मेणसमायुक्तोयमस्यविषयंगतः महद्दुःखंसमासाद्यतिर्यग्योनौप्रजायते ३९ कर्मणायेनयेनेहयस्यांयोनौप्रजायते जीवोमोहसमायुक्तस्तन्मेनिगदतःशृणु ४० यदेतदुच्यतेशास्त्रेसेतिहासेचछंदसि यमस्यविषयंघोरंमर्त्योलोकःप्रपद्यते ४१ इहस्थानानिपुण्यानिदेवतुल्यानिभूपते तिर्यग्योन्यतिरिक्तानिगतिमंतिचसर्वशः ४२ यमस्यभवनेदिव्येब्रह्मलोकसमेगुणैः कर्मभिर्नियतैर्बद्धोजंतुर्दुःखान्युपाश्नुते ४३ येनयेनतुभावेनकर्मणापुरुषोगतिम् प्रयातिपरुषांघोरांतत्तेवक्ष्याम्यतःपरम् ४४

वति तदस्यकर्मादिकंदेवाःपश्यंति ३२ स्थूलदेहसंगाद्युज्यतामस्यकर्तृत्वंतद्धाहेकथमस्यसुखादिसंगच्छतेइत्याशंकतेत्वगिति ३३ स्थूलदेहनाशक्षणएवसरेतस्त्वंशुक्रक्रमेणसूक्ष्मशरीरभावमेतिततः स्त्रीणांपुष्पंसमाद्येत्यादिस्पष्टंतद्यथातृणजलौकाअन्यत्तृणमाक्रम्यपूर्वंजहातिएवमेतदितिज्ञेयम् ३४ यमस्येतिगर्भत्वमप्राप्तःसूक्ष्मशरीरावच्छिन्नस्तीव्रपापयोगाद्यातनांलभतइत्यर्थः ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ छ

अधीत्यचतुरोवेदान्द्विजोमोहसमन्वितः पतितात्प्रतिगृह्याथखरयोनौप्रजायते ४५ खरोजीवतिवर्षाणिदशपंचचभारत खरोमृतो
बलीवर्दःसप्तवर्षाणिजीवति ४६ बलीवर्दोमृतश्चापिजायतेब्रह्मराक्षसः ब्रह्मरक्षश्चमासांस्त्रींस्ततोजायतिब्राह्मणः ४७ पतितं-
याजयित्वातुकृमियोनौप्रजायते तत्रजीवतिवर्षाणिदशपंचचभारत ४८ कृमिभावाद्विमुक्तस्तुततोजायतिगर्दभः गर्दभःपंचवर्षा
णिपंचवर्षाणिसूकरः ४९ कुक्कुटःपंचवर्षाणिपंचवर्षाणिजंबुकः श्वावर्षमेकंभवतिततोजायतिमानवः उपाध्यायस्ययःपापंशिष्यः
कुर्यादबुद्धिमान् ५० सजीवइहसंसारांस्त्रीनाप्नोतिनसंशयः प्राक्श्वाभवतिराजेंद्रततःक्रव्यात्ततःखरः ततःप्रेतःपरिक्लिष्टःपश्चा
ज्जायतिब्राह्मणः ५१ मनसापिगुरोर्भार्यांयःशिष्योयातिपापकृत् सउग्रान्प्रैतिसंसारानधर्मेणेहचेतसा ५२ श्वयोनौतुससंभूत-
स्त्रीणिवर्षाणिजीवति तत्रापिनिधनंप्राप्तःकृमियोनौप्रजायते ५३ कृमिभावमनुप्राप्तोवर्षमेकंतुजीवति ततस्तुनिधनंप्राप्तोब्रह्म
योनौप्रजायते ५४ यदिपुत्रसमंशिष्यंगुरुर्हन्यादकारणे आत्मनःकामकारेणसोपिहिंस्रःप्रजायते ५५ पितरंमातरंचैवयस्तुपुत्रो
ऽवमन्यते सोपिराजन्मृतोजंतुःपूर्वंजायेतगर्दभः ५६ गर्दभत्वंतुसंप्राप्यदशवर्षाणिजीवति संवत्सरंतुकुंभीरस्ततोजायेतमानवः ५७
पुत्रस्यमातापितरौयस्यरुष्टावुभावपि गुर्वपध्यानतःसोपिमृतोजायतिगर्दभः ५८ खरोजीवतिमासांस्तुदशश्वाचचतुर्दश बिडा
लःसप्तमासांस्तुततोजायतिमानवः ५९ मातापितरावाक्रुश्यसारिकःसंप्रजायते ताडयित्वातुतावेवजायतेकच्छपोनृप ६० कच्छ
पोदशवर्षाणित्रीणिवर्षाणिशल्यकः व्यालोभूत्वाचषण्मासांस्ततोजायतिमानुषः ६१ भर्तृपिंडमुपाश्नन्योराजद्विष्टानिसेवते सो
पिमोहसमापन्नोमृतोजायतिवानरः ६२ वानरोदशवर्षाणिपंचवर्षाणिमूषिकः श्वाथभूत्वातुषण्मासांस्ततोजायतिमानुषः ६३
न्यासापहर्तातुनरोयमस्यविषयंगतः संसाराणांशतंगत्वाकृमियोनौप्रजायते ६४ तत्रजीवतिवर्षाणिदशपंचचभारत दुष्कृतस्य
क्षयंकृत्वाततोजायतिमानुषः ६५ असूयकोनरश्चापिमृतोजायतिशार्ङ्गकः विश्वासहर्तातुनरोमीनोजायतिदुर्मतिः ६६ भूत्वामी
नोष्टवर्षाणिमृतोजायतिभारत मृगस्तुचतुरोमासांस्ततश्छागःप्रजायते ६७ छागस्तुनिधनंप्राप्यपूर्णेसंवत्सरेततः कीटःसंजाय
तेजंतुस्ततोजायतिमानुषः ६८ धान्यान्यवांस्तिलान्माषान्कुलित्थान्सर्षपांश्चणान् कलापानथमुद्गांश्चगोधूमानतसीस्तथा ६९

७० ७१ ७२ ७३ ७४ ७५ ७६ ७७ ७८ ७९ ८० ८१ ८२ ८३ ८४ ८५ ८६ ८७ ८८



सस्यस्यान्यस्य हर्त्ताचमोहाज्जंतुरचेतनः सजायतेमहाराजमूषिकोनिरपत्रपः ७० ततःप्रेत्यमहाराजमृतोजायतिसूकरः सूकरो
जातमात्रस्तुरोगेणम्रियतेनृपः ७१ श्वाततोजायतेमूढःकर्मणातेनपार्थिव भूत्वाश्वापंचवर्षाणिततोजायतिमानवः ७२ परदारा
भिमर्षतुकृत्वाजायतिवैवृकः श्वासृगालस्ततोगृध्रोव्यालःकंकोबकस्तथा ७३ भ्रातुर्भार्यांतुपापात्मायोधर्षयतिमोहितः पुंस्को-
किलत्वमाप्नोतिसोपिसंवत्सरंनृप सखिभार्यांगुरोर्भार्यांराजभार्यांतथैवच ७४ प्रधर्षयित्वाकामात्मामृतोजायतिसूकरः सूकरः
पंचवर्षाणिदशवर्षाणिश्वाविधः पिपीलिकस्तुमासांस्त्रीन्कीटःस्यान्मासमेवतु ७५ एतानासाद्यसंसारान्कृमियोनौप्रजायते
तत्रजीवतिमासांस्तुकृमियोनौचतुर्दश ततोऽधर्मक्षयंकृत्वापुनर्जायतिमानवः ७६ उपस्थितेविवाहेतुयज्ञेदानेपिवाविभो मो
हात्करोतियोविघ्नंसमृतोजायते कृमिः ७७ कृमिर्जीवतिवर्षाणिदशपंचचभारत अधर्मस्यक्षयंकृत्वाततोजायतिमानवः ७८
पूर्वंदत्वातुयःकन्यांद्वितीयेदातुमिच्छति सोपिराजन्मृतोजंतुःकृमियोनौप्रजायते ७९ तत्रजीवतिवर्षाणित्रयोदशयुधिष्ठिर
अधर्मसंक्षयेमुक्तस्ततोजायतिमानवः ८० देवकार्यमकृत्वातुपितृकार्यमथापिवा अनिर्वाप्यसमश्नन्वैमृतोजायतिवायसः
८१ वायसःशतवर्षाणिततोजायतिकुक्कुटः जायतेव्यालकश्चापिमासंतस्मात्तुमानुषः ८२ ज्येष्ठंपितृसमंचापिभ्रातरंयोवमन्यते सो-
पिमृत्युमुपागम्यक्रौंचयोनौप्रजायते ८३ क्रौंचोजीवतिवर्षंतुततोजायतिचीरकः ततोनिधनमापन्नोमानुषत्वमुपाश्नुते ८४ वृषलो
ब्राह्मणींगत्वाकृमियोनौप्रजायते ततःसंप्राप्यनिधनंजायतेसूकरःपुनः ८५ सूकरोजातमात्रस्तुरोगेणम्रियतेनृप श्वाततोजायते
मूढःकर्मणातेनपार्थिव ८६ श्वाभूत्वाकृतकर्मासौजायतेमानुषस्ततः तत्रापत्यंसमुत्पाद्यमृतोजायतिमूषिकः ८७ कृतघ्नस्तुमृतोरा
जन्यमस्यविषयंगतः यमस्यपुरुषैःक्रुद्धैर्वधंप्राप्नोतिदारुणम् ८८ दंडंसमुद्गरंशूलमग्निकुंभंचदारुणम् असिपत्रवनंघोरंवालु
कंकूटशाल्मली ८९ एताश्चान्याश्चबह्वीश्चयमस्यविषयंगतः यातनाःप्राप्यतत्रोग्रास्ततोवध्यतिभारत ९० ततोहतःकृतघ्नःस
तत्रोग्रैर्भरतर्षभ संसारचक्रमासाद्यकृमियोनौप्रजायते ९१ कृमिर्भवतिवर्षाणिदशपंचचभारत ततोगर्भंसमासाद्यतत्रैवम्रि
यतेशिशुः ९२ ततोगर्भशतैर्जंतुर्बहुभिःसंप्रपद्यते संसारांश्चबहून्गत्वाततस्तिर्यक्प्रजायते ९३ ततोदुःखमनुप्राप्यबहुवर्षगणा-
निह अपुनर्भवसंयुक्तस्ततःकूर्मःप्रजायते ९४



८९ ९० ९१ ९२ ९३ ९४ ६७ ६७ ६७ ६७

९५ निष्पावंराजमाषंहल्लगोलकः दीर्घपुच्छोगोलरूपीकीटविशेषः ९६ कुंभोल्कूकउल्कूकजातिभेदः ९७ हारितःपक्षिविशेषः ९८ ९९ पत्रोर्णधौतकौशेयं

दधितल्लावकश्चापिपूर्णामत्स्यानसंस्कृतान् चोरयित्वातुदुर्बुद्धिर्मधुदंशःप्रजायते ९५ फलंवामूलकंत्दृत्वाअपूपंवापिपीलिकाः चो
रयित्वाचनिष्पावंजायतेहलगोलकः ९६ पायसंचोरयित्वातुनित्तिरित्वमवाप्नुते हृत्वापिष्टमयंपूपंकुंभोल्कूकःप्रजायते ९७ अ
योहृत्वातुदुर्बुद्धिर्वायसोजायतेनरः कांस्यंहृत्वातुदुर्बुद्धिर्हारितोजायतेनरः ९८ राजतंभाजनंहृत्वाकपोतःसंप्रजायते हृत्वातु
कांचनंभांडंकृमियोनौप्रजायते ९९ पत्रोर्णंचोरयित्वातुकृकलत्वंनियच्छति. कौशिकंतुनतोहृत्वानरोजायतिवर्त्तकः १०० अंशु
कंचोरयित्वातुशुकोजायतिमानवः चोरयित्वादुकूलंतुमृतोहंसःप्रजायते १०१ क्रौंचःकार्पासिकंहृत्वामृतोजायतिमानवः चोर-
यित्वानरःपट्टंत्वाविकंचैवभारत २ क्षौमंचवस्त्रमादायशशोजंतुःप्रजायते वर्णानहृत्वातुपुरुषोमृतोजायतिवर्हिणः ३ हृत्वार-
क्तानिवस्त्राणिजायतेजीवजीवकः वर्णकादींस्तथागंधांश्चोरयित्वेहमानवः ४ छुछुंदरित्वमाप्नोतिराजन्लोभपरायण तत्रजीव
तिवर्षाणिततोदशचपंचच ५ अधर्मस्यक्षयंगत्वाततोजायतिमानुषः चोरयित्वापयश्चापिवलाकासंप्रजायते ६ यस्तुचोरयते
तैलंनरोमोहसमन्वितः सोपिराजन्मृतोजंतुस्तैलपायीप्रजायते ७ अशस्त्रंपुरुषंहत्वासशस्त्रःपुरुषाधमः अर्थार्थीयदिवावैरी
समृतोजायतेखरः ८ खरोजीवतिवर्षेद्वेततःशस्त्रेणवध्यते समृतोमृगयोनौतुनित्योद्विग्नोभिजायते ९ मृगोवध्यतिशस्त्रेण
गतेसंवत्सरेतुसः हतोमृगस्ततोमीनःसोपिजालेनवध्यते ११० मासेचतुर्थेसंप्राप्तेश्वापदःसंप्रजायते श्वापदोदशवर्षाणिद्वी
पिवर्षाणिपंचच ११ ततस्तुनिधनंप्राप्तःकालपर्यायचोदितः अधर्मस्यक्षयंकृत्वाततोजायतिमानुषः १२ स्त्रियंहत्वातुदुर्बुद्धियम
स्यविषयगतः बहूनक्लेशान्समासाद्यसंसारांश्चैवविंशतिम् १३ ततःपश्चान्महाराजकृमियोनौप्रजायते कृमिर्विंशतिवर्षाणिभूत्वा
जायतिमानुषः १४ भोजनंचोरयित्वातुमक्षिकाजायतेनरः मक्षिकासंघवशगोबहून्मासानभवत्युत १५ ततःपापक्षयंकृत्वामानु
षत्वमवाप्नुते. धान्यंहृत्वातुपुरुषोलोमशःसंप्रजायते १६ तथापिण्याकसंमिश्रमशनंचोरयन्नरः संजायतेश्रुसमोदारुणोमू
षिकोनरः १७ दशन्वैमानुषान्नित्यंपापात्मासविशांपते घृतंहृत्वातुदुर्बुद्धिःकाकमद्गुःप्रजायते १८ मत्स्यमांसमथोहृत्वाकाकोजा
यतिदुर्मतिः लवणंचोरयित्वातुचीरिकाकःप्रजायते १९ विश्वासेनतुनिक्षिप्तंयोजिहीर्षतिमानवः सगतायुर्नरस्तातमत्स्ययोनौप्र
जायते २०

१०० १ २ वर्णान् हरितालादीन ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ काकमद्गुर्भृंगवान् जलपक्षी १८
१९ २० ७

मत्स्ययोनिमनुप्राप्यमृतोजायतिमानुषः मानुषत्वमनुप्राप्यक्षीणायुरुपपद्यते २१ पापानितुनराःकृत्वातिर्यग्जायंतिभारत नचात्मनः
प्रमाणंतेधर्मंजानंतिकिंचन २२ येपापानिनराःकृत्वानिरस्यंतिव्रतैःसदा सुखदुःखसमायुक्ताव्याधितास्तेभवन्त्युत २३ असंवासाः
प्रजायंतेम्लेच्छाश्चापिनसंशयः नराःपापसमाचारालोभमोहसमन्विताः २४ वर्जयंतिचपापानिजन्मप्रभृतियेनराः अरोगारूपवं
तस्तेधनिनश्चभवन्त्युत २५ स्त्रियोप्येतेनकल्पेनकृत्वापापमवाप्नुयुः एतेषामेवजंतूनांभार्यात्वमुपयांतिताः २६ परस्वहरणेदोषाः
सर्वएवप्रकीर्तिताः एतद्विलेशमात्रेणकथ्यतेमयानघ २७ अपरस्मिन्कथायोगेभूयःश्रोष्यसिभारत एतन्मयामहाराजब्रह्मणो
वदतःपुरा २८ सुरर्षीणांश्रुतंमध्येपृष्टश्चापियथातथम् २९ मयापितच्चकार्त्स्न्येनयथावदनुवर्णितम् एतच्छ्रुत्वामहाराजध-
र्मेकुरुमनःसदा १३० इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेसंसारचक्रंनामएकादशाधिकशततमोऽध्यायः १११
युधिष्ठिरउवाच अधर्मस्यगतिर्ब्रह्मन्कथितामेत्वयानघ धर्मस्यतुगतिंश्रोतुमिच्छामिवदतांवर १ कृत्वाकर्माणिपापानिकथं-
यांतिशुभांगतिम् कर्मणाचकृतेनेहकेनयांतिशुभांगतिम् २ बृहस्पतिरुवाच कृत्वापापानिकर्माणिअधर्मवशमागतः म
नसाविपरीतेननिरयंप्रतिपद्यते ३ मोहादधर्मंयःकृत्वापुनःसमनुतप्यते मनःसमाधिसंयुक्तोनसंसेवेतदुष्कृतम् ४ यथायथा
मनस्तस्यदुष्कृतंकर्मगर्हते तथातथाशरीरंतुतेनाधर्मेणमुच्यते ५ यदिव्याहरतेराजन्विप्राणांधर्मवादिनाम् ततोऽधर्मकृतात्क्षि
प्रमपवादात्प्रमुच्यते ६ यथायथानरःसम्यगधर्ममनुभाषते समाहितेनमनसाविमुच्येततथातथा ७ भुजंगइवनिर्मोकात्पू
र्वभुक्ताज्जरान्वितात् दत्वाविप्रस्यदानानिविविधानिसमाहितः ८ मनःसमाधिसंयुक्तःसुगतिंप्रतिपद्यते प्रदानानितुवक्ष्या-
मियानिदत्वायुधिष्ठिर ९ नरःकृत्वाप्यकार्याणिततोधर्मेणयुज्यते ९ सर्वेषामेवदानानामन्नंश्रेष्ठमुदाहृतम् पूर्वमन्नंप्रदातव्यं
मृजुनाधर्ममिच्छता १० प्राणाह्यन्नंमनुष्याणांतस्माज्जंतुश्चजायते अन्नेप्रतिष्ठितोलोकस्तस्मादन्नंप्रशस्यते ११ अन्नमेवप्रशं
संतिदेवर्षिपितृमानवाः अन्नस्यहिप्रदानेनस्वर्गमश्नातिकौशिकः १२ न्यायलब्धंप्रदातव्यंद्विजातिभ्योन्नमुत्तमम् स्वाध्यायस-
मुपेतेभ्यःप्रहृष्टेनात्मना १३ यस्यह्यन्नमुपाश्नंतिब्राह्मणानांशतंदश हृष्टेनमनसादत्तंनसतिर्यग्गतिर्भवेत् १४

१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ इतिआनुशासनिकेपर्वणिटीकायांद्वाद-
शाधिकशततमोऽध्यायः ११२ १ २ ३ त्रीन्दोषानकामक्रोधलोभान् अंकेषुनिधायनतुस्वान्मनिकामक्रोधौचात्क्षोभं ४ ५ ६ सर्वेषांभूतानांआत्मभूतस्यआ

ब्राह्मणानांसहस्राणिदशभोज्यंनरर्षभ नरोधर्मात्प्रमुच्येतयोगेषभिरतःसदा १५ भैक्ष्येणान्नंसमाहृत्यविप्रोवेदपुरस्कृतः स्वाध्याय
निरतेविप्रेदत्त्वेहसुखमेधते १६ अहिंसन्ब्राह्मणस्वानिन्यायेनपरिपाल्यच क्षत्रियस्तरसाप्राप्तमन्नंयोवैप्रयच्छति १७ द्विजेभ्योवे
दवृद्धेभ्यःप्रयतःसुसमाहितः तेनापोहतिधर्मात्मन्दुष्कृतंकर्मपांडव १८ षड्भागपरिशुद्धंचकृषेर्भागमुपार्जितम् वैश्योददद्द्वि-
जातिभ्यःपापेभ्यःपरिमुच्यते १९ अवाप्यप्राणसंदेहंकार्कश्येनसमार्जितम् अन्नंदत्वाद्विजातिभ्यःशूद्रःपापात्प्रमुच्यते २०
औरसेनबलेनान्नमर्जयित्वाविहिंसकः यःप्रयच्छतिविप्रेभ्योनसदुर्गाणिपश्यति २१ न्यायेनवाप्तमन्नंतुनरोहर्षसमन्वितः
द्विजेभ्योवेदवृद्धेभ्योदत्वापापात्प्रमुच्यते २२ अन्नमूर्जस्करंलोकेदत्वोर्जस्वीभवेन्नरः सतांपथानमावृत्यसर्वपापैःप्रमुच्यते २३ दानवद्भिःकृ-
तःपंथायेनयांतिमनीषिणः तेहिप्राणस्यदातारस्तेभ्योधर्मःसनातनः २४ सर्वावस्थमनुष्येणन्यायेनान्नमुपार्जितम् कार्यंपात्रगतंनित्य
मन्नंहिपरमागतिः २५ अन्नस्यहिप्रदानेननरोदुर्गंनसेवते तस्मादन्नंप्रदातव्यमन्यायपरिवर्जितम् २६ एतद्ब्राह्मणपूर्वंहिभोक्तुमन्नं
गृहीसदा अवंध्यंदिवसंकुर्यादन्नदानेनमानवः २७ भोजयित्वादशशतंनरोवेदविदांनृप न्यायविद्धर्मविदुषामितिहाससविदांतथा
२८ नयातिनरकंघोरंसंसारांश्चनसेवते सर्वकामसमायुक्तःप्रेत्यचाप्यश्नुतेसुखम् २९ एवंखलुसमायुक्तोरमतेविगतज्वरः रूपवान्
कीर्तिमांश्चैवधनवांश्चोपपद्यते ३० एतत्तेसर्वमाख्यातमन्नदानफलंमहत् मूलमेतत्तुधर्माणांप्रदानानांचभारत ३१ इतिश्रीमहा०
आनु० दानधर्मेसंसारचक्रेद्वादशाधिकशततमोऽध्यायः ११२ युधिष्ठिरउवाच अहिंसावैदिकंकर्मध्यानमिंद्रियसंयमः तपोथ-
गुरुशुश्रूषाकिंश्रेयःपुरुषंप्रति १ बृहस्पतिरुवाच सर्वाण्येतानिधर्म्याणिपृथग्द्वाराणिधर्मशः शृणुसंकीर्त्यमानानिषडेवभरतर्षभ
२ हंतनिःश्रेयसंजंतोरहंवक्ष्याम्यनुत्तमम् अहिंसापाश्रयंधर्मंयःसाधयतिवैनरः ३ त्रीन्दोषान्सर्वभूतेषुनिधायपुरुषःसदा काम-
क्रोधौचसंयम्यततःसिद्धिमवाप्यते ४ अहिंसकानिभूतानिदंडेनविनिहंतियः आत्मनःसुखमन्विच्छन्सप्रेत्यनसुखीभवेत् ५ आ
त्मोपमस्तुभूतेषुयोवैभवतिपूरुषः न्यस्तदंडोजितक्रोधःसप्रेत्यसुखमेधते ६ सर्वभूतात्मभूतस्यसर्वभूतानिपश्यतः देवापिमार्गेमुह्य
न्तिअपदस्यपदैषिणः ७ नतत्परस्यसंदध्यात्प्रतिकूलंयदात्मनः एषसंक्षेपतोधर्मःकामादन्यःप्रवर्तते ८

स्मदुःखेनैवपरदुःखेनापिउद्विजन
सर्वभूतानिआत्मत्वेनतच्चदृशापश्यतःमार्गेदेवाःमुह्यंतिसव्यापकोभूत्वामुच्यतइत्यर्थः अपदस्यगत्यागमनहीनत्वान्मार्गसूचकपदरहितस्यपदैषिणःस्थानैषिणःना
द्विमुंसाइत्यर्थः ७ ८ ९

स्यये तिहिंस्रितोहिनस्ति पालितः पालयतितस्मात्पालयेदेवनोहिंसयेदित्यर्थः ॥ १० ॥ ११ इतिआनु॰ टीकायांत्रयोदशाधिकशततमोऽध्यायः ११३ १ २ ३ मनसावचसाकर्मणा भक्षणेनेति चतुर्विधाहिंसातत्रएकेनत्यक्तासर्वात्मनात्यक्तानभवतिन भक्षयतः असंकल्पयतः अन्यमांसं भोदयेदत्सवदतः अकुर्वतोवाहिंसाकेनचिदंशेनभवति ४ तत्रदृष्टांतमाहयथेति एकेनपादेनविनात्रिभिःपादैःपशुःस्थिरोभवेयमप्येकेनांशेनहीनाअंशत्रयेणननिष्ठतीत्यर्थः ५ यथेतिनागपदेगजपदेक्षुद्रपदानामि

प्रत्याख्यानेचदानेचसुखदुःखेप्रियाप्रिये आत्मौपम्येनपुरुषःप्रमाणमधिगच्छति ९ यथापरःप्रक्रमतेपरेषुतथापरेप्रक्रमतेपरस्मिन् तथैव तेषूपमाजीवलोकेयथाधर्मोनैपुणेनोपदिष्टः १० वैशंपायनउवाच इत्युक्तःसुरगुरुर्धर्मराजयुधिष्ठिरम् दिवमाचक्रमेधीमान्पश्यतामेव नस्तदा ११ इतिश्रीम॰ आनु॰ दानधर्मेसंसारचक्रसमाप्तौत्रयोदशाधिकशततमोऽध्यायः ११३ वैशंपायनउवाच ततोयुधिष्ठिरोराजाशरत ल्पेपितामहम् पुनरेवमहातेजाःपप्रच्छवदतांवरः १ युधिष्ठिरउवाच ऋषयोब्राह्मणादेवाःप्रशंसन्तिमहामते अहिंसालक्षणंधर्मंवेदप्रा माण्यदर्शनात २ कर्मणामनुजःकुर्वन्हिंसांपार्थिवसत्तम वाचाचमनसाचैवकथंदुःखात्प्रमुच्यते ३ भीष्मउवाच चतुर्विधेयंनिर्दिष्टा- ह्यहिंसाब्रह्मवादिभिः एकैकतोपिविभ्रष्टानभवत्यरिसूदन ४ यथासर्वश्चतुष्पाद्वैत्रिभिःपादैर्नतिष्ठति तथैवेयंमहीपालकारणैःप्रोच्य तेत्रिभिः ५ यथानागपदेन्यानिपदानिपदगामिनाम् सर्वाण्येवापिधीयन्तेपदजातानिकौञ्जरे एवंलोकेष्वहिंसातुनिर्दिष्टाधर्मतःपुरा क मणालिप्यतेजंतुर्वाचाचमनसापिच ७ पूर्वंतुमनसात्यक्त्वातथावाचाथकर्मणा नभक्षयतियोमांसंत्रिविधंसविमुच्यते ८ त्रिकारणं तुनिर्दिष्टंश्रूयतेब्रह्मवादिभिः मनोवाचितथास्वादेदोषाह्येषुप्रतिष्ठिताः ९ नभक्षयंत्यतोमांसंतपोयुक्तामनीषिणः दोषांस्तुभक्षणेरा जन्मांसस्येहनिबोधमे १० पुत्रमांसोपमंराजन्स्वादतेयोविचेतनः मांसंमोहसमायुक्तःपुरुषःसोऽधमःस्मृतः ११ पितृमातृसमायोगे पुत्रत्वंजायतेतथा हिंसांकृत्वावशःपापोभूयिष्ठंजायतेतथा १२ रसंचप्रतिजिह्वायाज्ञानंप्रज्ञायतेयथा तथाशास्त्रेषुनियतंरागोह्या स्वादितान्द्भवेत् १३ संस्कृतासंस्कृताःपक्वालवणालवणास्तथा प्रजायन्तेयथाभावास्तथाचित्तंनिरुध्यते १४ भेरीमृदंगशब्दांश्चतं त्रीशब्दांश्चपुष्कलान् निषेविष्यन्तिवैमंदामांसभक्षाःकथंनराः १५ अचिंतितमनिर्दिष्टमसंकल्पितमेवच रसंगृध्याभिभूतायेप्रशं सन्तिफलार्थिनः १६ प्रशंसाह्येवमांसस्यदोषकर्मफलान्विता जीवितंहिपरित्यज्यबहवःसाधवोजनाः १७ स्वमांसैःपरमांसानिपरिपा- ल्यदिवंगताः १८ एवमेषामहाराजचतुर्भिःकारणैर्वृता अहिंसातवनिर्दिष्टासर्वधर्मानुसंहिता १९ इतिश्री॰ आ॰ दानधर्मेमांसवर्ज नकथनेचतुर्दशाधिकशततमोऽध्यायः ११४

वसर्वेषांधर्माणांसमावेशोभवतिअहिंसायांकुंजरेपदेदत्तेसति सर्वाणिपदानियथापि धीयंतेएवंहिंसायां- सर्वेधर्माःपिधीयंते ६ ७ ८ ९ १० ११ पितृति यथास्त्रीपुंयोगेनांतरीयकंपुत्रजन्मएवंहिंसकस्यभूयिष्ठंपापयोनौजन्मेत्यर्थः १२ १३ १४ १५ १६ जीवितंहीतियथा स्वमांसार्पणात्शिबिरूध्र्वंगतः एवंपरमांसादनादधोगच्छतीत्यर्थः १७ १८ १९ इति आनु॰ टीकायांचतुर्दशाधिकशततमोऽध्यायः ११४

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ सर्वेद

युधिष्ठिरउवाच अहिंसापरमोधर्मइत्युक्तंबहुशस्त्वया श्राद्धेषुचभवानाहपितॄनामिषकांक्षिणः १ मांसैर्बहुविधैःप्रोक्तस्त्वयाश्रा
द्धविधिःपुरा अहत्वाचकुतोमांसमेवमेतद्विरुध्यते २ जातोनःसंशयोधर्मेमांसस्यपरिवर्जने दोषोभक्षयतःकःस्यात्कश्चाभक्षयतो
गुणः ३ हत्वाभक्षयतोवापिपरेणोपहृतस्यवा हन्याद्वायःपरस्यार्थेक्रीत्वावाभक्षयेन्नरः ४ एतदिच्छामितत्वेनकथ्यमानंत्वयानघ
निश्चयेनचिकीर्षामिधर्ममेतंसनातनम् ५ कथमायुरवाप्नोतिकथंभवतिसत्ववान् कथमव्यंगतामेतिलक्षण्योजायतेकथम् ६ भी
ष्मउवाच मांसस्याभक्षणाद्राजन्योधर्मःकुरुनंदन तन्मेशृणुयथातत्वंयथास्यविधिरुत्तमः ७ रूपमव्यंगतामायुर्बुद्धिंसत्वंबलंस्मृति
म् प्राप्तुकामैर्नरैर्हिंसावर्जितावैमहात्मभिः ८ ऋषीणामत्रसंवादोबहुशःकुरुनंदन बभूवतेषांतुमतंयत्तच्छृणुयुधिष्ठिर ९ योयजेता
श्वमेधेनमासिमासियतव्रतः वर्जयेन्मधुमांसंचसममेतद्युधिष्ठिर १० सप्तर्षयोवालखिल्यास्तथैवचमरीचिपाः अमांसभक्षणंराजन्प्रश
संतिमनीषिणः ११ नभक्षयतियोमांसंनचहन्यान्नघातयेत् तन्मित्रंसर्वभूतानांमनुःस्वायंभुवोब्रवीत् १२ अधृष्यःसर्वभूतानांवि
श्वास्यःसर्वजंतुषु साधूनांसंमतोनित्यंभवेन्मांसंविवर्जयन् १३ स्वमांसंपरमांसेनयोवर्द्धयितुमिच्छति नारदःप्राहधर्मात्मानियतंसोव
सीदति १४ ददातियजतेचापितपस्वीचभवत्यपि मधुमांसनिवृत्त्येतिप्राहचैवंबृहस्पतिः १५ मासिमास्यश्वमेधेनयोयजेतशतंसमाः न
खादतिचयोमांसंसममेतन्मतंमम १६ सदायजतिसत्रेणसदादानंप्रयच्छति सदातपस्वीभवतिमधुमांसविवर्जनात् १७ सर्वेवेदानत
त्कुर्युःसर्वयज्ञाश्चभारत योभक्षयित्वामांसानिपश्चादपिनिवर्त्तते १८ दुष्करंचरसज्ञानेमांसस्यपरिवर्जनम् चर्तुंव्रतमिदंश्रेष्ठंसर्व
प्राण्यभयप्रदम् १९ सर्वभूतेषुयोविद्वान्ददात्यभयदक्षिणाम् दाताभवतिलोकेसप्राणानांनात्रसंशयः २० एवंवैपरमंधर्मंप्रशंसंतिमनी
षिणः प्राणायथात्मनोभीष्टाभूतानामपिवैतथा २१ आत्मौपम्येनमंतव्यंबुद्धिमद्भिःकृतात्मभिः मृत्युतोभयमस्तीतिविदुषांभूतिमिच्छ
ताम् २२ किंपुनर्हन्यमानानांतरसाजीवितार्थिनाम् अरोगाणामपापानांपापैर्मांसोपजीविभिः २३ तस्माद्विद्धिमहाराजमांसस्यपरिव
र्जनम् धर्मस्यायतनंश्रेष्ठंस्वर्गस्यचसुखस्यच २४ अहिंसापरमोधर्मस्तथाहिंसापरंतपः अहिंसापरमंसत्यंयतोधर्मःप्रवर्त्तते २५

ति अहिंस्यात्सर्वावेदः तथातद्बोधिता यज्ञाश्चपुरुषंहिंसायांप्रवर्तयंतिकिंतुपरिसंख्याविधयानिवृत्तिमेवबोधयंतीत्यर्थः १८ १९ २० २१ २२ २३ २४ २५

नहिमांसंतृणात्काष्ठादुपलाद्वापिजायते हत्वाजंतुंततोमांसंतस्माद्दोषस्तुभक्षणे २६ स्वाहास्वधामृतभुजोदेवाःसत्यार्जवप्रियाः
क्रव्यादान्राक्षसान्विद्धिजिह्मानृतपरायणान् २७ कांतारेष्वथघोरेषुदुर्गेषुगहनेषुच रात्रावहनिसंध्यासुचत्वरेषुसभासुच २८
उद्यतेषुचशस्त्रेषुमृगव्यालहतेषुच अमांसभक्षणेराजन्भयमन्यैर्नगच्छति २९ शरण्यःसर्वभूतानांविश्वास्यःसर्वजंतुषु अनुद्वेगक
रोलोकेनचाप्युद्विजतेसदा ३० यदिचेत्खादकोनस्यान्नतदाघातकोभवेत् घातकःखादकार्थायतद्घातयतिवैनरः ३१ अभक्ष्यमेत
दितिवैइतिहिंसानिवर्त्तते खादकार्थमतोहिंसामृगादीनांप्रवर्त्तते ३२ यस्माद्ग्रसतिचैवायुर्हिंसकानांमहाद्युते तस्माद्विवर्जयेन्मांसंयइ
च्छेद्भूतिमात्मनः ३३ त्रातारंनाधिगच्छंतिरौद्राःप्राणिविहिंसकाःउद्वेजनीयाभूतानांयथाव्यालमृगास्तथा ३४ लोभाद्वाबुद्धिमोहाद्वाब
लवीर्यार्थमेवच संसर्गाद्वथपापानामधर्मरुचिनांनृणाम् ३५ स्वमांसंपरमांसेनयोवर्धयितुमिच्छति उद्विग्नवासोवसतियत्रयत्राभिजा
यते ३६ धन्यंयशस्यमायुष्यंस्वर्ग्यंस्वस्त्ययनंमहत् मांसस्याभक्षणंप्राहुर्नियताःपरमर्षयः ३७ इदंतुखलुकौंतेयश्रुतमासीत्पुरामया
मार्कंडेयस्यवदतोयेदोषामांसभक्षणे ३८ योहिखादतिमांसानिप्राणिनांजीवितैषिणाम् हतानांवामृतानांवायथाहंतातथैवसः ३९
धनेनक्रयिकोहंतिखादकश्चोपभोगतः घातकोवधबंधाभ्यामित्येषत्रिविधोवधः ४० अखादन्ननुमोदंश्चभावदोषेणमानवः योनुमोद
तिहंतव्यःसोपिदोषेणलिप्यते ४१ अधृष्यःसर्वभूतानामायुष्मान्निरुजःसदा भवत्यभक्षयन्मांसंदयावान्प्राणिनामिह ४२ हिरण्य
दानैर्गोदानैर्भूमिदानैश्चसर्वशः मांसस्याभक्षणेधर्मोविशिष्टइतिनःश्रुतिः ४३ अप्रोक्षितंवृथामांसंविधिहीनंनभक्षयेत् भक्षयन्नि
रययातिनरोनास्त्यत्रसंशयः ४४ प्रोक्षिताभ्युक्षितंमांसंतथाब्राह्मणकाम्यया अल्पदोषमिहज्ञेयंविपरीतेतुलिप्यते ४५ खादकस्यकृ
तेजंतून्योहन्यात्पुरुषाधमः महादोषतरस्तत्रघातकोनतुखादकः ४६ इज्यायज्ञश्रुतिकृतैर्योमार्गैरबुधोधमः हन्याज्जंतून्मांसगृध्नुः
सवैनरकभाङ्नरः ४७ भक्षयित्वापियोमांसंपश्चादपिनिवर्त्तते तस्यापिसुमहान्धर्मोयःपापाद्विनिवर्त्तते ४८ आहर्त्ताचानुमंताच
विशस्ताक्रयविक्रयी संस्कर्त्ताचोपभोक्ताचखादकाःसर्वएवते ४९ इदमन्यत्तुवक्ष्यामिप्रमाणंविधिनिर्मितं पुराणमृषिभिर्जुष्टंवेदेषुपरि
निष्ठितम् ५०

४३ ४४ ४५ ४६ इज्यादेवपूजायज्ञोअश्वमेधादिःतदर्थंश्रुतिकृतैर्मार्गैरुपायैः अबुधःयज्ञोपनिषदमजानन्केवलंयज्ञव्याजेनमांसंभोक्तुकामः ४७ ४८ ४९ ५०

५१ ५२ ५३ ५४ ५५ व्रीहिमयः पशुः पुरोडाशादिरूपः तएतदुत्क्रांतमेधा अमेध्याः पशवइत्यन्वातस्मादाहुः पुरोडाशसत्रंलोक्यमितिब्राह्मणात् ५६

प्रवृत्तिलक्षणोधर्मः प्रजार्थिभिरुदाहृतः यथोक्तंराजशार्दूलननुतन्मोक्षकांक्षिणाम् ५१ हविर्यत्संस्कृतंमंत्रैःप्रोक्षिताभ्युक्षितंशुचि
वेदोक्तेनप्रमाणेनपितॄणांप्रक्रियासुच ५२ अतोन्यथावृथामांसमभक्ष्यंमनुरब्रवीत् अस्वर्ग्यमयशस्यंचरक्षोवद्भरतर्षभ ५३ विधि
हीनंनरःपूर्वंमांसंराजन्नभक्षयेत् अप्रोक्षितंवृथामांसंविधिहीनंनभक्षयेत् ५४ यइच्छेत्पुरुषोत्यंतमात्मानंनिरुपद्रवम् सवर्जयेतमां
सानिप्राणिनामिहसर्वशः ५५ श्रूयतेहिपुराकल्पेनृणांव्रीहिमयःपशुः येनायजंतयज्वानःपुण्यलोकपरायणाः ५६ ऋषिभिःसंशयंपृष्टो
वसुश्चेदिपतिःपुरा अभक्ष्यमितिमांसंयःप्राहभक्ष्यमितिप्रभो ५७ आकाशान्मेदिनींप्राप्तस्ततःसपृथिवीपतिः एतदेवपुनश्चोक्त्वाविवेश
धरणीतलम् ५८ प्रजानांहितकामेनत्वगस्त्येनमहात्मना आरण्याःसर्वदैवत्याःप्रोक्षितास्तपसामृगाः ५९ क्रियाह्येवंनहीयंतेपितृदैवत
संश्रिताः प्रीयंतेपितरश्चैवन्यायतोमांसतर्पिताः ६० इदंतुशृणुराजेंद्रकीर्त्यमानंमयानघ अभक्षणेसर्वसुखंमांसस्यमनुजाधिप ६१ य
स्तुवर्षशतंपूर्णंतपस्तप्येत्सुदारुणम् यश्चैववर्जयेन्मांसंसममेतन्मतंमम ६२ कौमुदेतुविशेषेणशुक्लपक्षेनराधिप वर्जयेन्मधुमांसानि
धर्मोह्यत्रविधीयते ६३ चतुरोवार्षिकान्मासान्योमांसंपरिवर्जयेत् चत्वारिभद्राण्याप्नोतिकीर्तिमायुर्यशोबलम् ६४ अथवामासमेकं
वैसर्वमांसान्यभक्षयन् अतीत्यसर्वदुःखानिसुखंजीवेन्निरामयः ६५ वर्जयंतिहिमांसानिमासशःपक्षशोपिवा तेषांहिंसानिवृत्तानांब्र
ह्मलोकोविधीयते ६६ मांसंतुकौमुदंपक्षंवर्जितंपार्थराजभिः सर्वभूतात्मभूतस्थैर्विदितार्थपरावरैः ६७ नाभागेनांबरीषेणगयेनच
महात्मना आयुनाथानरण्येनदिलीपरघुपूरुभिः ६८ कार्तवीर्यानिरुद्धाभ्यांनहुषेणययातिना नृगेणविष्वगश्वेनतथैवशशबि
दुना ६९ युवनाश्वेनचतथाशिबिनौशीनरेणच मुचुकुंदेनमांधात्राहरिश्चंद्रेणवाविभो ७० सत्यंवदतमासत्यंसत्यंधर्मःसनात
नः हरिश्चंद्रश्चरतिवैदिविसत्येनचंद्रवत् ७१ श्येनचित्रेणराजेंद्रसोमकेनवृकेणच रैवतेरंतिदेवेनवसुनासृंजयेनच ७२ एतैश्चा
न्यैश्चराजेंद्रकृपेणभरतेनच दुष्यंतेनकरूषेणरामालर्कनरैस्तथा विरूपाश्वेननिमिनाजनकेनचधीमता ७३ शिनेनपृथुनाचैव
वीरसेनेनचैवह इक्ष्वाकुणाशंभुनाचश्वेतेनसगरेणच ७४

५७ अभक्ष्यमपिमांसंभक्ष्यमित्याह अतःपपातेत्यर्थः ५८ आरण्याप्रोक्षितार्द्रस्तेनमु
क्तानारण्यान्सृजंतीतिश्रुतेरारण्यैर्यज्ञंकृत्वापितेषांवधोनकृतइत्यर्थः ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ६७ ६८ ६९ ७० ७१ ७२ इत्यर्थः ७३

अजेनधुंधुनाचैवतथैवचसुबाहुना हर्यश्वेनचराजेंद्रक्षुपेणभरतेनच ७५ एतैश्चान्यैश्चराजेंद्रपुरामांसंनभक्षितम् शारदंकौ
मुदंमासंततस्तेस्वर्गमाप्नुवन् ७६ ब्रह्मलोकेचतिष्ठंतिज्वलमानाःश्रियान्विताः उपास्यमानागंधर्वैःस्त्रीसहस्रसमन्विताः ७७ तथैत
दुत्तमंधर्ममहिंसाधर्मलक्षणम् येचरंतिमहात्मानोनाकपृष्ठेवसंतिते ७८ मधुमांसंचयेनित्यंवर्जयंतीहधार्मिकाः जन्मप्रभृतिमद्यंचस
र्वेतेमुनयःस्मृताः ७९ इदंधर्ममांसादंयश्चरेच्छ्रावयीतवा अपिचेत्सुदुराचारोनजातुनिरयंव्रजेत् ८० पठेद्वायइदंराजन्छृणुयाद्वा
प्यभीक्ष्णशः अमांसभक्षणविधिंपवित्रमृषिपूजितम् ८१ विमुक्तःसर्वपापेभ्यःसर्वकामैर्महीयते विशिष्टतांज्ञातिषुचलभतेनात्रसं-
शयः ८२ आपन्नश्चापदोमुच्येतबद्धोमुच्येतबंधनात् मुच्येत्तथातुरोरोगाद्दुःखान्मुच्येतदुःखितः ८३ तिर्यग्योनिंनगच्छेतरूपवांश्चभवे
न्नरः ऋद्धिमान्वैकुरुश्रेष्ठप्राप्नुयाच्चमहद्यशः ८४ एतत्तेकथितंराजन्मांसस्यपरिवर्जने प्रवृत्तौचनिवृत्तौचविधानमृषिनिर्मितम् ८५
इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेमांसभक्षणनिषेधेपंचदशाधिकशततमोऽध्यायः ११५ युधिष्ठिरउवाच इमेवैमा
नवालोकेनृशंसामांसगृद्धिनः विसृज्यविविधान्भक्ष्यान्महारक्षोगणाइव १ अपूपान्विविधाकारान्शाकानिविविधानिच खाडवान्रसयो
गान्नतथेच्छंतियथामिषम् २ तत्रमेबुद्धिरत्रैवविषयेपरिमुह्यते नमन्येरसतःकिंचिन्मांसतोस्तीतिकिंचन ३ तदिच्छामिगुणान्श्रोतुंमां
सस्याभक्षणेप्रभो भक्षणेचैवयेदोषास्तांश्चैवपुरुषर्षभ ४ सर्वंतत्त्वेनधर्मज्ञयथावदिहधर्मतः किंवाभक्ष्यमभक्ष्यंवासर्वमेतद्वदस्वमे ५
यथैतद्यादृशंचैवगुणायेचास्यवर्जने दोषाभक्षयतोयेपितन्मेब्रूहिपितामह ६ भीष्मउवाच एवमेतन्महाबाहोयथावदसिभारत
नमांसात्परमंकिंचिद्रसतोविद्यतेभुवि ७ क्षतक्षीणाभितप्तानांग्राम्यधर्मरतात्मनाम् अध्वनाकर्शितानांचनमांसाद्विद्यतेपरम् ८ सद्योव
र्धयतिप्राणान्पुष्टिमग्र्यांदधातिच नभक्ष्योभ्यधिकःकश्चिन्मांसादस्तिपरंतप ९ विवर्जितेतुबहवोगुणाःकौरवनंदन येभवंतिमनुष्याणां
तान्मेनिगदतःशृणु १० स्वमांसंपरमांसेनयोवर्धयितुमिच्छति नास्तिक्षुद्रतरस्तस्मात्सनृशंसतरोनरः ११ नहिप्राणात्प्रियतरंलोकेकिंच
नविद्यते तस्माद्दयांनरःकुर्याद्यथात्मनितथापरे १२ शुक्राच्चतातसंभूतिर्मांसस्येहनसंशयः भक्षणेतुमहान्दोषोनिवृत्त्यापुण्यमुच्यते १३

१४ १५ आरण्याइति यजमानेनउत्सृष्टानामप्यारण्यानांराज्ञांमृगयायांवधोन्याय्यएव उत्सृष्टपशोर्जीवनेनतद्देवतायास्तृप्त्ययोगात् अतएवकपिंजलानामाल
भेनेत्यत्र अधिकानामालंभेदोषप्रसंगात् त्रितयेनैवशास्त्रार्थस्यानुष्ठितत्वात् बहुत्वस्यत्रित्वेपर्यवसानमुक्तम् अन्यथाकपिंजलानामारण्यत्वेनपर्यग्निकरणांते
उत्सृष्टानांवधस्याप्रसक्तेरधिकानामालंभेदोषोनप्रसज्जेत तथाचयदित्र्यधिकानुत्सृजेत्तर्हिनहृ धेउत्सृष्टुःपापं यदित्रीनेवतर्ह्यधिकवधेहंतुः पापमितिसिद्धेत
दिदमुक्तम् आरण्याःसर्वदैवत्याःसर्वशःप्रोक्षितामृगाः अगस्त्येनपुराराजन्मृगयायेनपूज्यतइति सर्वशइतिउत्पन्नमात्रस्यग्रहणम् १६ किंचहन्यमानान्प-

विधिनावेदहृष्टेनतद्भुक्त्केहनदुष्यति यज्ञार्थेपशवःसृष्टाइत्यपिश्रूयतेश्रुतिः १४ अतोन्यथाप्रवृत्तानांराक्षसोविधिरुच्यते क्षत्रि
याणांतुयोदृष्टोविधिस्तमपिमेशृणु १५ वीर्येणोपार्जितंमांसंयथाभुंजन्नदुष्यति आरण्याःसर्वदैवत्याःसर्वशःप्रोक्षितामृगाः
१६ अगस्त्येनपुराराजन्मृगयायेनपूज्यते नात्मानमपरित्यज्यमृगयानामविद्यते १७ समतामुपसंगम्यभूतानिघ्नंतिमानवाः अतो
राजर्षयःसर्वेमृगयांयांतिभारत १८ नहिलिप्यंतिपापेननचैतत्पातकंविदुः नत्यतःसदृशंकिंचिदिहलोकेपरत्रच १९ यत्सर्वेष्विहभू
तेषुदयांकौरवनंदन नभयंविद्यतेजातुनरस्येहदयावतः २० दयावतामिमेलोकाःपरेचापितपस्विनाम् अहिंसालक्षणोधर्मइति
धर्मविदोविदुः यदहिंसात्मकंकर्मतत्कुर्यादात्मवान्नरः पितृदैवतयज्ञेषुप्रोक्षितंहविरुच्यते २२ अभयंसर्वभूतेभ्योयोददातिदयापरः
अभयंतस्यभूतानिददतीत्यनुशुश्रुम २३ क्षतंचस्खलितंचैवपतितंक्लिष्टमाहतम् सर्वभूतानिरक्षंतिसमेषुविषमेषुच २४ नैनंव्याल
मृगाघ्नंतिनपिशाचानराक्षसाः मुच्यंतेभयकालेषुमोक्षयंतेयोभयेपरान् २५ प्राणदानात्परंदानंनभूतंनभविष्यति नह्यात्मनःप्रियत
रंकिंचिदस्तीहनिश्चितम् २६ अनिष्टंसर्वभूतानांमरणंनामभारत मृत्युकालेहिभूतानांसद्योजायतिवेपथुः २७ जातिजन्मजरादुःखैर्नि
त्यंसंसारसागरे जंतवःपरिवर्त्तंतेमरणादुद्विजंतिच २८ गर्भवासेषुपच्यंतेक्षाराम्लकटुकैरसैः मूत्रस्वेदपुरीषाणांपरुषैर्भृशदारुणैः २९
जाताश्चाप्यवशास्तत्रछिद्यमानाःपुनःपुनः पाच्यमानाश्चदृश्यंतेविवशामांसगृद्धिनः ३० कुंभीपाकेचपच्यंतेतांतांयोनिमुपागताः आक्र
म्यमार्यमाणाश्चभ्राम्यंतेवैपुनःपुनः ३१

शोःस्ववधस्यापिसंभवात् प्राणापर्णेनेयंक्रियमाणामृगयानदोषायेत्याह नात्मानमिति हन्यते
नभूतंचैनंहंति १७ १८ एवंप्रवृत्तिमार्गमुक्त्वाचस्तत्त्वमाह नहीति नहि अ... ... यद्यपिसर्वेषांपशूनामान्नप्रोक्षणादिकमिदानींनतेननकर्त्तव्यमेवास्तिनमु
प्रोक्षितानांवधेदोषएवनापिप्राणापर्णत्वेनमृगयायाअदोषत्वंतस्मात्प्राणमपितथानिर्दोषत्वप्रसंगादितिनहिशब्देनसूचितं १९ २० २१ २२ २३ २४ अन्यतःइत्यर्थः ५
न्मगर्भजन्म २८ २९ ३०

नात्मनोस्तिप्रियतरःपृथिवीमनुसृत्यह तस्मात्प्राणिषुसर्वेषुदयावानात्मवान्भवेत् ३२ सर्वमांसानियोराजन्यावज्जीवन्नभक्षयेत् स्व
र्गेसविपुलस्थानंप्राप्नुयान्नात्रसंशयः ३३ येभक्षयन्तिमांसानिभूतानांजीवितैषिणाम् भक्ष्यन्तेतेपिभूतैस्तैरितिमेनास्तिसंशयः ३४
मांसभक्षयतेयस्माद्भक्षयिष्येतमप्यहम् एतन्मांसस्यमांसत्वमनुबुध्यस्वभारत ३५ घातकोबध्यतेनित्यंतथाबध्यतिभक्षिता आ
क्रोष्टाक्रुध्यतेराजंस्तथाद्वेष्यत्वमाप्नुते ३६ येनयेनशरीरेणयद्यत्कर्मकरोतियः तेनतेनशरीरेणतत्तत्फलमुपाश्नुते ३७ अहिंसाप
रमोधर्मस्तथाहिंसापरोदमः अहिंसापरमंदानमहिंसापरमंतपः ३८ अहिंसापरमोयज्ञस्तथाहिंसापरंफलम् अहिंसापरमंमि
त्रमहिंसापरमंसुखम् ३९ सर्वयज्ञेषुवादानंसर्वतीर्थेषुचाप्लुतम् सर्वदानफलंवापिनैतत्तुल्यमहिंसया ४० अहिंस्रस्यतपोक्षय्यम
हिंस्रोयजतेसदा अहिंस्रःसर्वभूतानांयथामातायथापिता ४१ एतत्फलमहिंसायाभूयश्चकुरुपुंगव नहिशक्यागुणावक्तुमपिव
र्षशतैरपि ४२ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेअहिंसाफलकथनेषोडशाधिकशततमोऽध्यायः ११६ युधिष्ठि
रउवाच अकामाश्चसकामाश्चयेहताःस्ममहामृधे कांगतिंप्रतिपन्नास्तेतन्मेब्रूहिपितामह १ दुःखंप्राणपरित्यागःपुरुषाणांमहामृधे जा
नासित्वंमहाप्राज्ञप्राणत्यागंसुदुष्करम् २ समृद्धोवाऽसमृद्धोवाशुभेवायदिवाशुभे कारणंतत्रमेब्रूहिसर्वज्ञोह्यसिमेमतः ३ भीष्मउवाच
समृद्धोवासमृद्धोवाशुभेवायदिवाशुभे संसारेस्मिन्समाजाताःप्राणिनःपृथिवीपते ४ निरतायेनभावेनतत्रमेशृणुकारणम् सम्यक्चाय
मनुप्रश्नस्त्वयोक्तस्तुयुधिष्ठिर ५ ब्रह्मभूतश्चरन्विप्रःकृष्णद्वैपायनःपुरा ददर्शकीटंधावन्तंशीघ्रंशकटवर्त्मनि ६ गतिज्ञःसर्वभूता
नांभाषाज्ञश्चशरीरिणाम् सर्वज्ञःसतदादृष्ट्वाकीटंवचनमब्रवीत् ७ व्यासउवाच कीटसंत्रस्तरूपोसित्वरितश्चैवलक्ष्यसे क्वधाव
सितदाचक्ष्वकुतस्तेभयमागतम् ८ कीटउवाच शकटस्यास्यमहतोघोषंश्रुत्वाभयंमम आगतंवैमहाबुद्धेस्वनएषहिदारुणः ९
श्रूयतेनचमाहन्यादितितस्मादपक्रमे श्वसतांचशृणोम्येनंगोपुत्राणांप्रतोद्यताम् १० वहतांसुमहाभारंसन्निकर्षेस्वनंप्रभो
नृणांचसंवाहयतांश्रूयतेविविधःस्वनः ११ श्रोतुमस्माद्विधेनैषनशक्यःकीटयोनिना तस्मादतिक्रमाम्येषभयादस्मात्सुदारुणात् १२ दुःखंहिमृ
त्युर्भूतानांजीवितंचसुदुर्लभम् अतोभीतःपलायामिगच्छेयंनासुखंसुखात् १३ भीष्मउवाच इत्युक्तःसततंप्राहकुतःकीटसुखंतव मरणंतेसुखंम
न्येतिर्यग्योनौतुवर्त्तसे १४ १५३

१५ १६ इहेतिमानुषाणांस्थैर्यजानांस्थावराणांचविशेषतोभोगाःसंति जंगमानांतुसाधारण्येनैवसर्वविषयजंसुखंदुःखंचास्तीत्यर्थः १७ १८ १९ प
र्यशितःभृत्यादीन्परित्यज्याशनंकृतवानस्मीत्यर्थः २० २१ २२ नबुभूषकःअन्यैश्वर्यमिच्छन् २३ २४ २५ २६ २७ २८ इतिआनुशास-
निकेपर्वणिटीकायांसप्तदशाधिकशततमोऽध्यायः ११७ शुभेनयेननमुत्स्यसेतन्ममैवकर्म १२३ तिर्यगाइत्यत्रवर्णलोपआर्षःसिद्धइत्यर्थः धर्मोपिमनुष्ये

शब्दंस्पर्शंरसंगंधंभोगांश्चोच्चावचान्बहून् नाभिजानासिकीटत्वंश्रेयोमरणमेवते १५ कीटउवाच सर्वत्रनिरतोजीवइतश्चापि
सुखंमम चिंतयामिमहाप्राज्ञतस्मादिच्छामिजीवितुम् १६ इहापिविषयःसर्वोयथादेहंप्रवर्त्तितः मानुषास्थैर्यजाश्चैवपृथग्भोगा
विशेषतः १७ अहमासंमनुष्योवैशूद्रोबहुधनःप्रभो अब्रह्मण्योनृशंसश्चकदर्योवृद्धिजीवनः १८ वाक्तीक्ष्णोनिकृतिप्रज्ञो
द्वेष्टाविश्वस्यसर्वशः मिथ्याकृतोपिविधिनापरस्वहरणेरतः १९ भृत्यातिथिजनश्चापिगृहेपर्यशितोमया मात्सर्यात्स्वादुकामेननृ
शंसेनबुभुक्षता २० देवार्थपितृयज्ञार्थमन्नंश्रद्धाहृतमया नदत्तमर्थकामेनदेयमन्नंपुराकिल गुप्तंशरणमाश्रित्यभयेषुशरणा
गताः २१ अकस्मात्तेमयात्यक्तानत्राताअभयैषिणः धनधान्यप्रियान्दारान्यानवासस्तथाद्भुतम् २२ श्रियंदृष्ट्वामनुष्याणा
मसूयामिनिरर्थकम् ईर्षुःपरसुखंदृष्ट्वाअन्यस्यनबुभूषकः २३ त्रिवर्गहंताचान्येषामात्माकामानुवर्त्तकः नृशंसगुणभूयिष्ठंपुरा
कर्मकृतंमया २४ स्मृत्वातदनुतप्येहंहित्वाप्रियमिवात्मजम् शुभानांनाभिजानामिकृतानांकर्मणांफलम् २५ माताचपूजितावृ
द्धाब्राह्मणश्चार्चितोमया सकृज्जातिगुणोपेतःसंगत्यागृहमागतः २६ अतिथिःपूजितोब्रह्मंस्तेनमांनाजहात्स्मृतिः २७ कर्म-
णापुनरेवाहंसुखमागामिलक्षये तच्छ्रोतुमहमिच्छामित्वत्तःश्रेयस्तपोधन २८ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदा
नधर्मेकीटोपाख्यानेसप्तदशाधिकशततमोऽध्यायः ११७ व्यासउवाच शुभेनकर्मणायद्वैतिर्यग्योनौनमुह्यसे ममैव-
कीटतत्कर्मयेनत्वंनप्रमुह्यसे १ अहंत्वांदर्शनादेवतारयामितपोबलात तपोबलाद्धिबलवद्बलमन्यन्नविद्यते २ जानामिपापैःस्व
कृतैर्गतंत्वांकीटकीटताम् अवाप्स्यसिपुनर्धर्मंधर्मंतुयदिमन्यसे ३ कर्मभूमिकृतंदेवाभुंजतेतिर्यगाश्चये धर्मोपिहिमनुष्येषुका
मार्थश्चतथागुणाः ४ वाग्बुद्धिपाणिपादैश्चव्यपेतश्चापिपश्चितः किंहास्यतिमनुष्यस्यमंदस्यापिहिजीवतः ५

प्रभूतेषुकामार्थःकाम्यएवास्तिनमु
क्तिक्रमः एवंगुणाअपिकामार्थाम्व ४ वागितिकर्णेगिपश्चौ वागादिहीनंमुथभूतंवाजीवितंनरकंहास्यतिकिंत्यक्ष्यतिनरकिमपिसर्वैःपुरुषार्थैरयंत्यक्तइत्यर्थः ५

जीवन्नहीतिहेकीटयत्रविभाग्यः तत्रत्वंगप्यसि ६ गुणेनितत्रविभन्येन्त्वंभृतानिभक्ष्यसेतत्रयोनौनेतुभ्यं अहंब्रह्मविनिवेशयामिब्रह्मविद्यांदास्यामियत्रवात्वं
एष्यसिवांछसितत्रत्वांनेष्यामीतियोजना ७ ८ ९ सउतियत्रयत्रगंतुंमनसाउच्छितवान्तत्रतत्रऋषिमेवददर्शेत्यर्थः १० ११ १२ १३ १४ १५

जीवन्हिकुरुतेपूजांविप्राग्र्यः शशिसूर्ययोः ब्रुवन्नपिकथांपुण्यांतत्रकीटत्वमेष्यसि ६ गुणभूतानिभूतानितत्रत्वमुपभोक्ष्यसे तत्रते
हंविनेष्यामिब्रह्मत्वंयत्रचेष्यसि ७ सतथेतिप्रतिश्रुत्यकीटोवर्त्मन्यतिष्ठत शकटोप्यजगामाथमहानागतश्चयदृच्छया ८ चक्राक्रमेण
भिन्नश्चकीटःप्राणान्मुमोचह संभूतःक्षत्रियकुलेप्रसादादमितौजसः ९ तमृषिंद्रष्टुमगमत्सर्वास्वन्यासुयोनिषु श्वाविच्छल्यकगोधावराहाणां
तथैवमृगपक्षिणाम् १० श्वपाकशूद्रवैश्यानांक्षत्रियाणांचयोनिषु सकीटएवमासाद्यऋषिणासत्यवादिना ११ प्रतिस्मृत्याथजग्रा
हपादौमूर्ध्निकृतांजलिः १२ कीटउवाच इदंतदतुलंस्थानमीप्सितंदशभिर्गुणैः यदहंप्राप्यकीटत्वमागतोराजपुत्रताम् १३
वहंतिमामतिबलाःकुंजराहेममालिनः स्यंदनेषुचकांबोजायुक्ताःपरमवाजिनः १४ उष्ट्राश्वतरयुक्तानियानानिचवहंतिमाम् सबांध
वःसहामात्यश्चाश्नामिपिशितौदनम् १५ गृहेषुस्वनिपातेषुसुखेषुशयनेषुच वरार्हेषुमहाभागस्वपामिचसुपूजितः १६ सर्वेष्वपर
रात्रेषुसूतमागधबंदिनः स्तुवंतिमांयथादेवामहेन्द्रंप्रियवादिनः १७ प्रसादात्सत्यसंधस्यभवतोमिततेजसः यदहंकीटतांप्राप्यसंप्राप्तो
राजपुत्रताम् १८ नमस्तेस्तुमहाप्राज्ञकिंकरोमिप्रशाधिमाम् त्वत्तपोबलनिर्दिष्टमिदंह्यधिगतंमया १९ व्यासउवाच अर्चितोहं
त्वयाराजन्वाग्भिरद्ययदृच्छया अद्यतेकीटतांप्राप्यस्मृतिर्जाताजुगुप्सिता २० नतुनाशोस्तिपापस्ययत्त्वयोपचितंपुरा शूद्रेणार्थ
प्रदानेननृशंसेनाततायिना २१ ममतेदर्शनंप्राप्तंतच्चैवसुकृतंत्वया तिर्यग्योनौस्मजातेनममचाप्यर्चनात्तथा २२ इतस्त्वंराजपुत्रत्वा
द्ब्राह्मण्यंसमवाप्स्यसि गोब्राह्मणकृतेप्राणान्हुत्वात्मानंरणाजिरे २३ राजपुत्रसुखंप्राप्यक्रतूंश्चैवाप्तदक्षिणान् अथमोदिष्यसेस्वर्गे
ब्रह्मभूतोव्ययःसुखी २४ तिर्यग्योन्याःशूद्रतामभ्युपैति शूद्रोवैश्यत्वंक्षत्रियत्वंचवैश्यः वृत्तश्लाघीक्षत्रियोब्राह्मणत्वंस्वर्गंपुण्यंब्राह्म
णःसाधुवृत्तः २५ इतिश्रीमहाभारते आनुशासनिकेपर्वणिदानधर्मेकीटोपाख्यानेनामशतोपरिअष्टादशोऽध्यायः ११८ भी
ष्मउवाच क्षत्रधर्ममनुप्राप्तःस्मरन्नेवचवीर्यवान् त्यक्त्वासकीटतांराजंश्चचारविपुलंतपः १

१६ १७ १८ १९ २० २१ २२ गोब्राह्मण
कृतेप्राणान्हित्वाब्राह्मण्यमवाप्स्यसीतियोजना २३ २४ २५ इतिदानधर्मेटीकायांशतोपरिअष्टादशोऽध्यायः ११८ १ छ छ छ

२ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ इतिआनुशासनिकेपर्वणिटीकायांऊनविंश

तस्यधर्मार्थविदुषोदृष्ट्वातंद्विपुलंतपः आजगामद्विजश्रेष्ठः कृष्णद्वैपायनस्तदा २ व्यासउवाच क्षात्रंचैवव्रतंकीटभूतानांपरिपा-
लनम् क्षात्रंदेवव्रतंध्यायंस्ततोविप्रत्वमेष्यसि ३ पाहिसर्वाःप्रजाःसम्यक्शुभाशुभविदात्मवान् शुभैःसंविभजन्कामैरशुभानां
चपावनैः ४ आत्मवान्भवसुप्रीतःस्वधर्माचरणेरतः क्षात्रींतनुंसमुत्सृज्यततोविप्रत्वमेष्यसि ५ भीष्मउवाच सोऽथारण्यम
नुप्राप्यपुनरेवयुधिष्ठिर महर्षेर्वचनंश्रुत्वाप्रजाधर्मेणपाल्यच ६ अचिरेणैवकालेनकीटःपार्थिवसत्तम प्रजापालनधर्मेणप्रेत्य
विप्रत्वमागतः ७ ततस्तंब्राह्मणंदृष्ट्वापुनरेवमहायशाः आजगाममहाप्राज्ञःकृष्णद्वैपायनस्तदा ८ व्यासउवाच भो-
भोब्रह्मर्षभश्रीमन्माव्यथिष्ठाःकथंचन शुभकृच्छुभयोनीषुपापकृत्पापयोनिषु ९ उपपद्यतिधर्मज्ञयथापापफलोपगम् तस्मान्मृ
त्युभयात्कीटमाव्यथिष्ठाःकथंचन १० धर्मलोपभयंतेस्यात्तस्माद्धर्मंचरोत्तमम् ११ कीटउवाच सुखात्सुखतरंप्राप्तोभगं
वंस्त्वत्कृतेत्वहम् धर्ममूलांश्रियंप्राप्यपाप्मानष्टइहाद्यमे १२ भीष्मउवाच भगवद्वचनात्कीटोब्राह्मण्यंप्राप्यदुर्लभम्
अकरोत्पृथिवीराजन्यज्ञयूपशताङ्किताम् १३ ततःसालोक्यमगमद्ब्रह्मणोब्रह्मवित्तमः अवापचपदंकीटःपार्थब्रह्मसनातनम्
१४ स्वकर्मफलनिर्वृत्तंव्यासस्यवचनात्तदा तेपियस्मात्प्रभावेणहताःक्षत्रियपुंगवाः १५ संप्राप्तास्तेगतिंपुण्यांतस्मान्माशोचपुत्रक
१६ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेकीटोपाख्याननामऊनविंशत्यधिकशततमोऽध्यायः ११९ युधिष्ठिरउ
वाच विद्यातपोभ्यांदानाच्चकमेतेषांविशिष्यते पृच्छामित्वांसतांश्रेष्ठतन्मेब्रूहिपितामह १ भीष्मउवाच अत्राप्युदाह
रंतीममितिहासंपुरातनम् मैत्रेयस्यचसंवादंकृष्णद्वैपायनस्यच २ कृष्णद्वैपायनोराजन्नज्ञातचरितंचरन् वाराणस्यामुपाति
ष्ठन्मैत्रेयंस्वैरिणीकुले ३ तमुपस्थितमासीनंज्ञात्वासमुनिसत्तमम् अर्चित्वाभोजयामासमैत्रेयोऽशनमुत्तमम् ४ तदन्नमुत्तमं-
भुक्त्वागुणवत्सार्वकामिकम् प्रतिष्ठमानोऽस्मयतप्रीतःकृष्णोमहामनाः ५ तमुत्स्मयतंसंप्रेक्ष्यमैत्रेयःकृष्णमब्रवीत् कारणंब्रूहि
धर्मात्मन्व्यस्मयिष्ठाःकुतस्त्वते ६ तपस्विनोधृतिमतःप्रमोदःसमुपागतः एतत्पृच्छामितेविद्वन्नभिवाद्यप्रणम्यच आत्मनश्च
तपोभाग्यंमहाभाग्यंतवेहच ७

त्यधिकशततमोऽध्यायः ११९ १ २ मैत्रेयमपिअज्ञातचरितंचरंतमित्यर्थः स्वैरयतिधर्माय प्रेरयतिस्वैरिणीमुनिश्रेणीतस्याःकुलेगृहे ३ ४ अस्मय
तविस्मयंप्राप्तवान् ५ कुतस्त्वतेप्रमोदइतिसंबंधः ६ एततआत्मनस्तपोभाग्यंतवमहाभाग्यंतेत्वांपृच्छामि आश्चर्यदर्शनंविनाविस्मयोनभवतीतिभावः ७ ७

पृथगिति पृथगात्मा उपाधिपरिच्छिन्नो जीवः सुखात्मा अनुपाधिकं ब्रह्म पंचम्यर्थे षष्ठी ततः पृथगाचरतः नवजीवन्मुक्तस्य मुक्तामुक्तोभयात्मनः अपेक्षयाहं आ-
त्मानं अल्पांतरं मन्ये यतस्त्वं मद्भाग्यं दृष्ट्वा विस्मितोसि अतोहं त्वत्तोल्पांतरोस्मीति आत्मानमनुमिनोमीत्यर्थः अन्वयात मित्रवंश्यत्वात् विशिष्टमल्पांतरेभ्यः ८
अतिच्छेदो ऽत्यंतमंतरं मशकेन समुद्रशोषणमिव अतिच्छंद इति पाठेपि स एवार्थः अतिवादस्तस्यैवार्थस्य कथनं लोके ताभ्यां विस्मयो मे भवत् इदं स्थानं क्रतुशतैर्वि
नानप्राप्यत इति वेदवचनमसत्यं जन्ममात्रदानेन तवतत्प्राप्तिदर्शनात् देशकालपात्रश्रद्धाविशेषादल्पमपि महत्तमत्वं जलमौक्तिकन्यायेन प्राप्नोतीति दर्शनात् कस्मा

पृथगाचरतस्तात पृथगात्मसुखात्मनोः अल्पांतरमहं मन्ये विशिष्टमपि चान्वयात् ८ व्यास उवाच अतिच्छेदातिवादाभ्यां स्म
योयं समुपागतः असत्यं वेदवचनं कस्माद्वेदोनृतं वदेत् ९ त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं व्रतम् १० न द्रुह्येच्चैव दद्याच्च सत्यं चैव
परं वदेत् इति वेदोक्तमृषिभिः पुरस्तात्परिकल्पितम् ११ इदानीं चैव नः कृत्यं पुरस्ताच्च परिश्रुतम् अल्पोपि ताद्दृशो दायो भवत्युत महाफलः
१२ तृषिताय च यद्दत्तं हृदयेनानसूयता तृषितस्तृषितायत्वं दत्त्वैवं दर्शनं मम १३ अजैषीर्महतो लोकान्महायज्ञैरिव प्रभो ततो दानप
वित्रेण प्रीतोस्मि तपसैव च १४ पुण्यस्यैव हि ते सत्त्वं पुण्यस्यैव च दर्शनम् पुण्यस्यैवाधिगंधस्ते मन्ये कर्मविधानजम् १५ अधिकं मा
र्जनात्तात तथा चैवानुलेपनात् शुभं सर्वपवित्रेभ्यो दानमेव परं द्विज नो चेत्सर्वपवित्रेभ्यो दानमेव परं भवेत् १६ यानीमान्युत्तमा-
नीह वेदोक्तानि प्रशंससि तेषां श्रेष्ठतरं दानमिति मे नात्र संशयः १७ दानकृद्भिः कृतः पंथा येन यांति मनीषिणः ते हि प्राणस्य दातारस्ते-
षु धर्मः प्रतिष्ठितः १८ यथा वेदाः स्वधीताश्च यथा चेंद्रियसंयमः सर्वत्यागो यथा चेह तथा दानमनुत्तमम् १९ त्वं हि तात महाबुद्धे सु
खमेष्यसि शोभनम् सुखात्सुखतरं प्राप्तिमाप्नुते मतिमान्नरः २० तन्नः प्रत्यक्षमेवेदमुपलभ्यमसंशयम् श्रीमंतः प्राप्नुवंत्यर्थान्दान
यज्ञं तथा सुखम् २१ सुखादेव परं दुःखं दुःखादन्यत्परं सुखम् दृश्यते हि महाप्राज्ञ नियतं वै स्वभावतः २२ त्रिविधानीह वृत्तानि न
रस्याहुर्मनीषिणः पुण्यमन्यत्पापमन्यन्न पुण्यं न च पापकम् २३ न वृत्तं मन्यतेन्यस्य मन्यते न च पातकम् तथा स्वकर्मनिर्वृत्तं न पुण्यं
न च पातकम् २४

वेदोनृतं वदेदिति उक्तं ९ पदानि पदनीयानि एतदेव त्रयं उत्तमं व्रतं १० ११ न अस्माभिरपि कृत्यं अवश्यकर्तव्यम् दायो दानं १२ १३ त्वं महतो लोकानजै
षीरित्येतन्मम दर्शनम् प्रत्यक्षं तेनाहं विस्मितोस्मीति भावः एतद्दर्शनमिति पाठे स्पष्टोर्थः १४ धर्मतपोदानानि पुण्यत्रये दृष्टांता इत्याह पुण्यस्यैवेति १५ मार्जना
त् तीर्थस्नानात् अनुलेपनात् वेदव्रतसमापनात् १६ १७ १८ १९ २० २१ २२ २३ त्रिविधानीत्यस्यार्थं पादत्र्याचष्टे न वृत्तमिति तस्य ब्रह्मनिष्ठस्य यज्ञादीनि पुण्यं द्रोहादी
निपापं ततो न्यत्र पुण्यं न च पातकमिति स्वकर्मनिर्वृत्तं पुण्यं पापं च न मन्यत इत्यर्थः २४ ७

२५ २६ स्वंतुपुण्यस्यैवाधिकारीत्याहरमस्वेति २७ इति आनुशासनिके पर्वणिटीकायांविंशत्यधिकशततमोऽध्यायः १२० एवमिति १ २ ३
पात्रगुणाद्दानस्यमहाफलत्वंमैत्रेयआह निर्दोषमितिद्वाभ्यां ४ ५ भवतोदर्शनात् नः अस्माकं अभ्युदयोभवेदितियोजना ६ ७ शास्त्रज्ञानंब्राह्मणादृते
८ इदमंधंतमएवस्याद्यतोवर्णधर्मादिकंतेनविनानप्रज्ञायेत ९ १० ११ अदन्निति तमदंतंस अबुधः अदत्तोऽन्नस्यचतादृशस्यहंता स्वयमपिहन्यते दोषे
णेत्यर्थः तच्चान्नंपातियच्चान्नमितिपाठे तच्चान्नमद्यमानंसततमत्तारंहंतीतिपूर्वेणान्वयः यच्चान्नंसतस्यहंतामूर्खस्ताभ्यांहताभ्यामयमबुधोदाताहन्यतइत्यर्थः

यज्ञदानतपःशीलानरावैपुण्यकर्मिणः येभिद्रुह्यंतिभूतानितेवैपापकृतोजनाः २५ द्रव्याण्याददतेचैवदुःखंयांतिपतंतिच ततोन्यत्क
र्मयत्किंचिन्नपुण्यंनचपातकम् २६ रमस्वैधस्वमोदस्वदेहिचैवयजस्वच नत्वामभिभविष्यंतिवैद्यानचतपस्विनः २७ इतिश्रीम
हाभारतेआनुशासनिकेपर्वणिदानधर्मेमैत्रेयभिक्षायांविंशत्यधिकशततमोऽध्यायः १२० भीष्मउवाच एवमुक्तःप्रत्युवाचमै
त्रेयःकर्मपूजकः अत्यंतश्रीमतिकुलेजातःप्राज्ञोबहुश्रुतः १ मैत्रेयउवाच असंशयंमहाप्राज्ञयथैवात्थतथैवतत् अनु
ज्ञातस्तुभवताकिंचिद्ब्रूयामहंविभो २ व्यासउवाच यद्यदिच्छसिमैत्रेययावद्यावद्यथायथा ब्रूहितत्त्वंमहाप्राज्ञशुश्रूषेवचनं
तव ३ मैत्रेयउवाच निर्दोषंनिर्मलंचैववचनंदानसंहितम् विद्यातपोभ्यांहिभवान्भावितात्मानसंशयः ४ भवतोभावितात्म
त्वाल्लाभोयंसुमहान्मम भूयोबुध्यानुपश्यामिसुसमृद्धतपा इव ५ अपिनोदर्शनादेवभवतोभ्युदयोभवेत् मन्येभवत्प्रसादोयंतद्धि
कर्मस्वभावतः ६ तपःश्रुतंचयोनिश्चाप्येतद्ब्राह्मण्यकारणम् त्रिभिर्गुणैःसमुदितस्ततोभवतिवैद्विजः ७ अस्मिंस्तृप्तेचतृप्यंतेपितरो
देवतानिच नहिश्रुतवतांकिंचिदधिकंब्राह्मणादृते ८ अंधंस्यात्तमएवेदंनप्रज्ञायेतकिंचन चातुर्वर्ण्यंनिवर्त्तेतधर्माधर्मावृतानृते
९ यथाहिसुकृतेक्षेत्रेफलंविंदतिमानवः एवंदत्वाश्रुतवतिफलंदातासमश्नुते १० ब्राह्मणश्चेन्नविंदेतश्रुतवृत्तोपसंहितः प्रतिग्रही
तादानस्यमोघंस्याद्धनिनांधनम् ११ अदन्ह्यविद्वान्हन्त्यन्नमद्यमानंचहंतितम् तच्चान्नपातियश्चान्नंसहंताहन्यतेबुधः १२ प्रभुर्ह्यन्न
मदन्विद्वान्पुनर्जनयतीश्वरः सचान्नाज्जायतेतस्मात्सूक्ष्मएषव्यतिक्रमः १३

१२ प्रभुरिति यतिश्चब्रह्मचारीचपक्वान्नस्वामिनावुभौ
इतिस्मृतेः विद्वानन्नमदन् नस्यप्रभुर्भवति ईश्वरत्वाच्चक्षेत्रभूतःसन् पुनर्जनयति दात्रे अनेकगुणितंप्रयच्छतीत्यर्थः सचदातुरन्नाज्जायतेप्रजारूपेणगृह
स्थस्त्वन्नत्रयस्यान्नंतस्यसंततिरितिसूक्ष्मोव्यतिक्रमोस्तितेनगृहस्थःपरपाकेनानीयादितिगम्यते १३ ७ ७ ७ ७ ७

यदेवेति प्रतिग्रहीत्रभावे अन्नस्यवृद्धिर्नस्यात तृष्ण्यभावेदातुर्दाने प्रवृत्तिर्नस्यादितिदातृप्रति   गृहीतारौचक्रवच्चोक्तंतत्रैवहतइत्यर्थः १४ १५ १६
१७ इतिआनुशासनिकेपर्वणिटीकायांशतोपरिएकविंशोऽध्यायः १२१ / १ आर्यगुणान्प्रभुगुणान २ वर्त्तयिष्यामिकथयिष्यामि ३ ४ ५

१

यदेवददतःपुण्यंतदेवप्रतिगृण्हतः नन्ह्येकचक्रंवर्त्तेनइत्येवमृषयोविदुः १४ यत्रवैब्राह्मणाःसंतिश्रुतवृत्तोपसंहिताः तत्रदानफ
लपुण्यमिहचामुत्रचाश्नुते १५ येयोनिशुद्धाःसततंतपस्यभिरताभृशम् दानाध्ययनसंपन्नास्तेवैपूज्यतमाःसदा १६ तैर्हिसद्भिःकृतः
पंथास्तेनयातोनमुह्यते तेहिस्वर्गस्यनेतारोयज्ञवाहाःसनातनाः १७ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेमैत्रेयभिक्षा
यांशतोपरिएकविंशोऽध्यायः १२१ भीष्मउवाच एवमुक्तःसभगवान्मैत्रेयंप्रत्यभाषत दिष्ट्यैवंत्वंविजानासिदिष्ट्यातेबुद्धिरीदृ
शी १ लोकोह्यार्यगुणानेवभूयिष्ठंतुप्रशंसति रूपमानवयोमानश्रीमानाश्चाप्यसंशयम् २ दिष्ट्यानाभिभवंतित्वांदैवस्तेयमनुग्र
हः यत्तेभृशतरंदानाद्वर्तयिष्यामितत्शृणु ३ यानीहागमशास्त्राणियाश्चकाश्चित्प्रवृत्तयः तानिवेदंपुरस्कृत्यप्रवृत्तानियथाक्रमम्
४ अहंदानप्रशंसामिभवानपितपःश्रुते तपःपवित्रंवेदस्यतपःस्वर्गस्यसाधनम् ५ तपसामहदाप्नोतिविद्ययाचेतिनःश्रुतम् तप
सैवचापनुदेद्यच्चान्यदपिदुष्कृतम् ६ यद्यद्धिकिंचित्संधायपुरुषस्तप्यतेतपः सर्वमेतदवाप्नोतिविद्ययाचेतिनःश्रुतम् ७ दुरन्वयंदुः
प्रधर्षंदुरापंदुरतिक्रमम् सर्वंवैतपसाभ्येतितपोहिबलवत्तरम् ८ सुरापोऽसमतादायीभ्रूणहागुरुतल्पगः तपसातरतेसर्वमेनस-
श्चप्रमुच्यते ९ सर्वविद्यस्तुचक्षुष्मानपियादृशतादृशः तपस्विनयथैवाहुस्ताभ्यांकार्यंसदानमः १० सर्वेपूज्याःश्रुतधनास्तथैव-
चतपस्विनः दानप्रदाःसुखंप्रेत्यप्राप्नुवंतीहचश्रियम् ११ इमंचब्रह्मलोकंचलोकंचबलवत्तरम् अन्नदानैःसुकृतिनःप्रतिपद्यंति
लौकिकाः १२ पूजिताःपूजयंत्येतेमानितामानयंतिच सदातायत्रयत्रेतिसर्वतःसंप्रणुद्यते १३ अकर्ताचैवकर्ताचलभतेयस्ययादृ
शम् यद्दिचोर्ध्वंयद्यधोवास्वान्लोकानतियास्यसि १४ प्राप्स्यसित्वंनपानानियानिवांच्छसिकानिचित् मेधाव्यसिकुलेजातःश्रुतवा
ननृशंसवान् १५ कौमारचारीश्रुतवान्मैत्रेयनिरतोभव एतद्गृहाणप्रथमंप्रशस्तंगृहमेधिनाम् १६ योभर्त्तावासितातुष्टोभर्तुस्तु
ष्टाचवासिता यस्मिन्नेवंकुलेसर्वंकल्याणंतत्रवर्त्तते १७ अद्भिर्गात्रान्मलमिवतमोग्निप्रभयायथा दानेनतपसाचैवसर्वपापम
पोहति १८

६ ७ ८ असमतादायीयथाचपरं प्रतिग्रहमभिमन्यतेस्तेनोभवतीतिस्मृतेःस्तेनः ९ यःसर्ववित्सचक्षुष्मान्यादृशतादृशमपितप
स्विनं तथैवचक्षुष्मंतमेवाहुः ताभ्यांसर्वविद्यतपस्विभ्यां १० ११ १२ १३ १४ १५ कौमारचारीप्रथमवयाः १६ वासितास्वस्त्री १७ १८ ७

१९ २० इतिआनुशासनिकेपर्वणिटीकायांशतोपरिद्वाविंशोऽध्यायः १२२ सत्स्त्रीणामिति १ २ ३ ४ ५ ६ ७ ८ ९

स्वस्तिप्राप्नुहिमैत्रेयगृहान्साधुव्रजाम्यहम् एतन्मनसिकर्त्तव्यंश्रेयएवंभविष्यति १९ तंप्रणम्यायमैत्रेयःकृत्वाचापिप्रदक्षिणम्
स्वस्तिप्राप्नोतुभगवानित्युवाचकृताञ्जलिः २० इतिश्रीमहाभारते आनुशासनिकेपर्वणिदानधर्मेमैत्रेयभिक्षायांशतोपरिद्वावि
शोऽध्यायः १२२ युधिष्ठिरउवाच सत्स्त्रीणांसमुदाचारंसर्वधर्मविदांवर श्रोतुमिच्छाम्यहंत्वत्तस्तन्मेब्रूहिपितामह १
भीष्मउवाच सर्वज्ञांसर्वतत्त्वज्ञांदेवलोकेमनस्विनीम् कैकेयीसुमनानामशाण्डिलींपर्यपृच्छत २ केनवृत्तेनकल्याणिसमा
चारेणकेनवा विधूयसर्वपापानिदेवलोकत्वमागता ३ हुताशनशिखेवत्वंज्वलमानास्वतेजसा सुतातारागधिपस्येवप्रभयादिव
मागता ४ अरजांसिचवस्त्राणिधारयन्तीगतक्लमा विमानस्थाशुभाभासिसहस्रगुणमोजसा ५ नत्वमल्पेनतपसादानेन
नियमेनवा इमंलोकमनुप्राप्तात्वंहितत्त्वंवदस्वमे ६ इतिपृष्टासुमनयामधुरंचारुहासिनी शाण्डिलीनिभृतंवाक्यंसुमनामिद
मब्रवीत् ७ नाहंकाषायवसनानापिवल्कलधारिणी नचमुण्डानचजटिलाभूत्वादेवत्वमागता ८ अहितानिचवाक्यानिस
र्वाणिपरुषाणिच अप्रमत्ताचभर्त्तारंकदाचिन्नाहमब्रुवम् ९ देवतानांपितृणांचब्राह्मणानांचपूजने अप्रमत्तासदायुक्ताश्वश्रू
श्वशुरवर्त्तिनी १० पैशून्येनप्रवर्त्तामिनममैतन्मनोगतम् अद्वारेनचतिष्ठामिचिरंनकथयामिच ११ असद्वाहसितंकिंचि
दहितंवापिकर्मणा रहस्यमरहस्यंवानप्रवर्त्तामिसर्वथा १२ कार्यार्थेनिर्गतंचापिभर्त्तारंगृहमागतम् आसनेनोपसंयोज्यपूज
यामिसमाहिता १३ यदन्नंनाभिजानातियद्भोज्यंनाभिनन्दति भक्ष्यंवायदिवालेह्यंतत्सर्वंवर्जयाम्यहम् १४ कुटुम्बार्थेसमानीतं
यत्किंचित्कार्यमेवतु प्रातरुत्थायतत्सर्वंकारयामिकरोमिच १५ प्रवासंयदिमेयातिभर्त्ताकार्येणकेनचित् मंगलैर्बहुभिर्युक्ताभवा
मिनियतातदा १६ अञ्जनंरोचनांचैवस्नानंमाल्यानुलेपनम् प्रसाधनंचनिष्क्रान्तेनाभिनन्दामिभर्त्तरि १७ नोत्थापयामिभर्त्तारं
सुखंसुप्तमहंसदा आतुरेष्वपिकार्येषुतेनतुष्यतिमेमनः १८ नायासयामिभर्त्तारंकुटुम्बार्थेपिसर्वदा गुप्तगुह्यासदाचास्मिसुसं
मृष्टनिवेशना १९ इमंधर्मपथंनारीपालयन्तीसमाहिता अरुन्धतीवनारीणांस्वर्गलोकेमहीयते २० भीष्मउवाच एत
दाख्यायसादेवीसुमनायैतपस्विनी पतिधर्मंमहाभागाजगामादर्शनंतदा २१

१० ११ १२ १३ १४ १५ मंगलैर्नियतेतिमंगलसूत्रमात्रंधारयामिनतुनानाभूषणादीनित्यर्थः १६ १७ १८ १९ २० २१ ६७ ५

यश्चैवंपांडवाख्यानंपठेत्पर्वणिपर्वणि सदेवलोकंसंप्राप्यनंदतेससुखीवसेत् २२ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मे शांडिलीसुमनासंवादेशतोपरित्रयोविंशोऽध्यायः १२३ युधिष्ठिरउवाच सान्त्विचापिप्रदानेचज्यायःकिंभवतोमतम् प्रब्रूहि भरतश्रेष्ठयदत्रव्यतिरिच्यते १ भीष्मउवाच सान्त्वाप्रसाद्यतेकश्चिद्दानेनचतथापरः पुरुषःप्रकृतिंज्ञात्वातयोरेकतरंभजेत् २ गुणांस्तुशृणुमेराजन्सान्त्वस्यभरतर्षभ दारुणान्यपिभूतानिसांत्वेनाराधयेद्यथा ३ अत्राप्युदाहरंतीममितिहासंपुरातनम् गृहीत्वारक्षसामुक्तोद्विजातिःकाननेयथा ४ कश्चिद्वाग्बुद्धिसंपन्नोब्राह्मणोविजनेवने गृहीतःकृच्छ्रमापन्नोरक्षसाभक्षयिष्यता ५ सबुद्धिःश्रुतिसंपन्नस्तंदृष्ट्वातीवभीषणम् सामेवास्मिन्प्रयुयुजेनमुमोहनविव्यथे ६ रक्षस्तुवाचसंपूज्यप्रश्नंपप्रच्छतद्द्विजम् मोक्ष्यसेब्रूहिमेप्रश्नंकेनास्मिहरिणःकृशः ७ मुहूर्त्तमथसंचिंत्यब्राह्मणस्तस्यरक्षसः आभिर्गाथाभिरव्यग्रःप्रश्नंप्रतिजगादह ८ ब्राह्मणउवाच विदेशस्थोविलोकस्थोविनानूनंसुहृज्जनैः विषयानतुलान्भुंक्षेतेनासिहरिणःकृशः ९ नूनंमित्राणितेरक्षःसाधूपचरितान्यपि स्वदोषादपरज्यंतेतेनासिहरिणःकृशः १० धनैश्वर्याधिकाःस्तब्धास्त्वद्गुणैःपरमावराः अवजानंतिनूनंत्वांतेनासिहरिणःकृशः ११ गुणवान्विगुणानन्यान्नूनंपश्यसिसत्कृतान् प्राज्ञोप्राज्ञान्विनीतात्मातेनासिहरिणःकृशः १२ अवृत्त्याक्लिश्यमानोपिवृत्त्युपायान्विगर्हयन् माहात्म्याद्व्यथसेनूनंतेनासिहरिणःकृशः १३ संपीड्यात्मानमार्यत्वात्त्वयाकश्चिदुपस्कृतः जितंत्वंमन्यतेसाधोतेनासिहरिणःकृशः १४ क्लिश्यमानान्विमार्गेषुकामक्रोधावृतात्मनः मन्येत्वंध्यायसिजनांस्तेनासिहरिणःकृशः १५ प्रज्ञासंभावितोनूनमप्रज्ञैरुपसंहितः ह्रीयमानोसिदुर्वृत्तैस्तेनासिहरिणःकृशः १६ नूनंमित्रमुखःशत्रुःकश्चिदार्यवदाचरन् वंचयित्वागतस्त्वांवैतेनासिहरिणःकृशः १७ प्रकाशार्थगतिर्नूनंरहस्यकुशलःकृती तज्ज्ञैर्नपूज्यसेनूनंतेनासिहरिणःकृशः १८ असत्स्वपिनिविष्टेषुब्रुवतोमुक्तसंशयम् गुणास्तेनविराजंतेतेनासिहरिणःकृशः १९ धनबुद्धिश्रुतैर्हीनःकेवलंतेजसान्वितः महत्प्रार्थयसेनूनंतेनासिहरिणःकृशः २० तपःप्रणिहितात्मानंमन्येत्वारण्यकांक्षिणम् बांधवानाभिनंदंतितेनासिहरिणःकृशः २१ इष्टभार्यस्यतेनूनंप्रातिवेश्योमहाधनः युवासुललितःकामीतेनासि॰ २२ नूनमर्थवतांमध्येतववाक्यमनुत्तमम् नभातिकालेभिहितंतेनासिहरिणःकृशः २३

११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ २३ ६७

२४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ अनात्मविषयिणीचिंतापां
इत्यकुशलेहेतुः दानाभावेसामैवजीवनोपायइत्यध्यायतात्पर्यं. ३९ इतिआनुशासनिकेपर्वणिटीकायांशतोपरिचतुर्विंशोऽध्यायः १२४ १ २ ३ ४

दृष्टपूर्वश्रुतंमूर्खंकुपितंत्हृदयप्रियम् अनुनेतुंनशक्नोषितेनासिहरिणःकृशः २४ नूनमासंजयित्वात्वांकृतेकस्मिंश्चिदीप्सिते कश्चिद-
र्थयतेनित्यंतेनासिहरिणःकृशः २५ नूनंत्वासगुणैर्युक्तंपूजयानंसुहृद्ध्रुवम् ममायमितिजानीतेतेनासिह० २६ अंतर्गतमभिप्रायंनूनंने-
च्छसिलज्जया विवेक्तुंप्राप्तिशैथिल्यात्तेनासिह० २७ नानाबुद्धिरुचीँल्लोकेमनुष्यान्नूनमिच्छसि गृहीतुंस्वगुणैःसर्वांस्तेनासि० २८
अविद्वान्भीरुरल्पार्थोविद्याविक्रमदानजम् यशःप्रार्थयसेनूनंतेनासिह० २९ चिराभिलषितंकिंचित्फलंप्राप्तमेवच कृतमन्यैरपहृतं
तेनासिह० ३० नूनमात्मकृतंदोषमपश्यन्किंचिदात्मनः अकारणेभिशस्तोसितेनासि० ३१ साधून्गृहस्थान्दृष्ट्वाचतथासाधून्वनेच
रान् मुक्तांश्चावसथेसक्तांस्तेनासिह० ३२ सुहृदांदुःखमार्त्तानांनप्रमोक्ष्यसिआर्त्तिजम् अलमर्थगुणैर्हीनंतेनासिह० ३३ धर्म्यम
र्थ्यंचकाम्यंचकालेचाभिहितंवचः नप्रतीयंतितेनूनंतेनासि० ३४ दत्तानकुशलैरर्थान्मनीषीसंजिजीविषुः प्राप्यवर्त्तयसेनूनंतेनासि
ह० ३५ पापान्प्रवर्धतोदृष्ट्वाकल्याणानावसीदतः ध्रुवंगर्हयसेनित्यंतेनासिहरिणःकृशः ३६ परस्परविरुद्धानांप्रियंनूनंचिकीर्ष
सि सुहृदामुपरोधेनतेनासि० ३७ श्रोत्रियांश्चविकर्मस्थान्प्राज्ञांश्चाप्यजितेंद्रियान् मन्यनुध्यायसिजनांस्तेनासि० ३८ एवंसं
पूजितंरक्षोविप्रंतंप्रत्यपूजयत् सखायमकरोच्चैनंसंयोज्यार्थैर्मुमोचह ३९ इतिश्रीमहा० आनु० दानधर्मेहरिणकृशकाख्यानंनामशतोपरि
चतुर्विंशोऽध्यायः १२४ युधिष्ठिरउवाच जन्ममानुष्यकंप्राप्यकर्मक्षेत्रंसुदुर्लभम् श्रेयोर्थिनादरिद्रेणकिंकर्त्तव्यंपितामह १ दा
नानामुत्तमंयच्चदेयंयच्चयथायथा मान्यान्पूज्यांश्चगांगेयरहस्यंवक्तुमर्हसि २ वैशंपायनउवाच एवंपृष्टोनरेंद्रेणपांडवेनयशस्विना ध
र्माणांपरमंगुह्यंभीष्मःप्रोवाचपार्थिवम् ३ भीष्मउवाच शृणुष्वावहितोराजन्धर्मगुह्यानिभारत यथामेभगवान्व्यासःपुराकथितवा
न्मयि ४ देवगुह्यमिदंराजन्यमेनाक्लिष्टकर्मणा नियमस्थेनयुक्तेनतपसोमहतःफलम् ५ येनयःप्रीयतेदेवःप्रीयंतेपितरस्तथा ऋ
षयःप्रमथाश्चैवश्रीश्चचित्रगुप्तोदिशागजाः ६ ऋषिधर्मःस्मृतोयत्रसरहस्योमहाफलः महादानफलंचैवसर्वयज्ञफलंतथा ७ यश्चैतदेवं
जानीयाज्ज्ञात्वावाकुरुतेनघ सदोषोदोषवांश्चेहतैर्गुणैःसहयुज्यते ८ दशसूनासमंचक्रंदशचक्रसमोध्वजः दशध्वजसमावेश्यादश
वेश्यासमोनृपः ९
यमेनप्राप्तमितिशेषः ५ ६ ७ ८ दशानांपशूनांसूनावधोयत्रसापशुघ्नजातिर्दशसूनाचक्रंचक्रवान्तैलिकः ध्वजःसुरापायीनृप सद्रोराजा ९ ७ ७

अधिकोनृपतिस्तुएतानिसर्वाणिअर्धेनतुल्यनकथ्यते एनच्चतारतम्यमंतिग्रहार्थमुच्यते एवंदुष्प्रतिग्रहपरत्वेनत्रिवर्गशास्त्रंधर्मार्थकामशास्त्राणिज्ञेयानि १० तत्रा
पर्थकामयोःप्रसिद्धत्वाद्धर्मशास्त्राण्येवश्रोतव्यानीत्याहधर्ममित्यादिना ११ १२ १३ पठतिशास्त्रंउपतिष्ठतिरम्यंकुरुतेआचष्टेचयःसस्वयंनारायणएवेतिज्ञातव्यः १४

अर्धेनैतानिसर्वाणिनृपतिःकथ्यतेधिकः त्रिवर्गसहितंशास्त्रंपवित्रंपुण्यलक्षणम् १० धर्मव्याकरणंपुण्यंरहस्यश्रवणंमहत् श्रोतव्यंधर्म
संयुक्तंविहितंत्रिदशैःस्वयम् ११ पितॄणांयत्रगुह्यानिप्रोच्यंतेश्राद्धकर्मणि दैवतानांचसर्वेषांरहस्यंकथ्यतेखिलम् १२ ऋषिधर्मःस्मृ
तोयत्रसरहस्योमहाफलः महायज्ञफलंचैवसर्वदानफलंतथा १३ येपठंतिसदामर्त्याएषांचैवोपतिष्ठति श्रुत्वाचफलमाचष्टेस्वयंना-
रायणःप्रभुः १४ गवांफलंतीर्थफलंयज्ञानांचैवयत्फलम् एतत्फलमवाप्नोतियोनरोतिथिपूजकः १५ श्रोतारःश्रद्दधानाश्चयेषांशुद्धंच
मानसम् तेषांव्यक्तंजितालोकाःश्रद्दधानेनसाधुना १६ मुच्यतेकिल्बिषाच्चैवनसपापेनलिप्यते धर्मंचलभतेनित्यंप्रेत्यलोकगतोन
रः १७ कस्यचित्त्वथकालस्यदेवदूतोयदृच्छया स्थितोह्यंतर्हितोभूत्वापर्यभाषतवासवम् १८ यौतौकामगुणोपेतावश्विनौभिषजां-
वरौ आज्ञयाहंतयोःप्राप्तःसनरान्पितृदैवतान् १९ कस्माद्धिमैथुनंश्राद्धेदातुर्भोक्तुश्चवर्जितम् किमर्थंचत्रयःपिंडाःप्रविभक्ताःपृ
थक्पृथक् २० प्रथमःकस्यदातव्योमध्यमःक्वचगच्छति उत्तरश्चस्मृतःकस्यएतदिच्छामिवेदितुम् २१ श्रद्दधानेनदूतेनभाषितंधर्मसंहितम्
पूर्वस्थास्त्रिदशाःसर्वेपितरःपूज्यखेचरम् २२ पितरऊचुः स्वागतंतेस्तुभद्रंतेश्रूयतांखेचरोत्तम गूढार्थःपरमःप्रश्नोभवतासमुदीरितः २३ श्रा
द्धंदत्वाचभुक्त्वाचपुरुषोयःस्त्रियंव्रजेत् पितरस्तस्यतंमासंतस्मिन्रेतसिशेरते २४ विभागंतुपिंडानांप्रवक्ष्याम्यनुपूर्वशः पिंडोह्यधस्ताद्ग
च्छंस्तुअपआविश्यभावयेत् २५ पिंडंतुमध्यमंतत्रपत्नीत्वेकातमश्नुते पिंडस्तृतीयोयस्तेषांतंदद्याज्जातवेदसि २६ एषश्राद्धविधिःप्रोक्तो
यथाधर्मोनलुप्यते पितरस्तस्यतुष्यंतिप्रहृष्टमनसःसदा २७ प्रजाविवर्द्धतेचास्यअक्षयंचोपतिष्ठति २८ देवदूतउवाच आ
नुपूर्व्येणपिंडानांप्रविभागःपृथक्पृथक् पितॄणांत्रिषुसर्वेषांनिरुक्तंकथितंत्वया २९ एकःसमुद्धृतःपिंडोह्यधस्तात्कस्यगच्छति कंवाप्रीण
यतेदेवंकथंतारयतेपितॄन् ३० मध्यमंतुतदापत्नीभुंक्तेनुज्ञातमेवहि किमर्थंपितरस्तस्यकव्यमेवचभुंजते ३१ अत्रयस्त्वंतिमःपिंडोगच्छ
तेजातवेदसम् भवतेकागतिस्तस्यकंवासमनुगच्छति ३२ एतदिच्छाम्यहंश्रोतुंपिंडेषुत्रिषुयागतिः फलंवृत्तिंचमार्गंचयश्चैनंप्रतिपद्य
ते ३३ पितरऊचुः सुमहानेषप्रश्नोवैयस्त्वयासमुदीरितः रहस्यमद्भुतंचापिपृष्टाःस्मगगनेचर ३४

एवस्तुत्वाशास्त्रमारभतेगवांफलमितिशास्त्रसंक्षे-
पः १५ श्रोतारइतिद्वाभ्यांश्रद्धाप्रशंसा १६ १७ १८ सनरान्सहर्षान्प्राप्तःप्रष्टुमितिशेषः १९ २० २१ पूज्यसंपूज्य २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४

३५ ३६ ३७ ३८ ३९ ४० ४१ यतः ऋत्विक् श्राद्धभोक्ता यजमानस्य पितृत्वं गच्छति तस्मादन्यात्मतां गतः स्वस्त्रियं न गच्छेत् सा परदार्यदोष

एतदेव प्रशंसंति देवाश्च मुनयस्तथा तेप्येवं नाभिजानंति पितृकार्यविनिश्चयम् ३५ वर्जयित्वा महात्मानं चिरजीविनमुत्तमम् पि
तृभक्तस्तपोविप्रो वरलब्धो महायशाः ३६ त्रयाणामपि पिंडानां श्रुत्वा भगवतो गतिम् देवदूतेन यत्पृष्टः श्राद्धस्य विधिनिश्चयः ३७
गतिं त्रयाणां पिंडानां शृणुष्वावहितो मम अपो गच्छति यो ह्यत्र शशिनं ह्येष प्रीणयेत् ३८ शशी प्रीणयते देवान् पितॄंश्चैव महामते भुं
क्ते तु पत्नी यं चैषामनुज्ञातां तु मध्यमम् ३९ पुत्रकामाय पुत्रं तु प्रयच्छति पितामहाः हव्यवाहे तु यः पिंडो दीयते तन्निबोध मे ४० पितरस्ते
न तृप्यंति प्रीताः कामान् दिशंति च एतत्ते कथितं सर्वं त्रिषु पिंडेषु या गतिः ४१ ऋत्विग्भ्यो यजमानस्य पितृत्वमनुगच्छति तस्मिन्नहनि
मन्यंते परिहार्यं हि मैथुनम् ४२ शुचिना तु सदा श्राद्धं भोक्तव्यं खेचरोत्तम ये मया कथिता दोषास्ते तथा स्युर्न चान्यथा ४३ तस्मात्स्नातः
शुचिः क्षांतः श्राद्धं भुंजीत वै द्विजः प्रजा विवर्धते चास्य यश्चैवं संप्रयच्छति ४४ ततो विद्युत्प्रभो नाम ऋषिराह महातपाः आदित्यतेजसा
तस्य तुल्यरूपः प्रकाशते ४५ स च धर्मरहस्यानि श्रुत्वा शक्रमथाब्रवीत् तिर्यग्योनिगतान्सत्त्वान् मर्त्या हिंसंति मोहिताः ४६ कीटान्पिपी-
लिकान्सर्पान्मेषान्समृगपक्षिणः किल्बिषं सुबहु प्राप्ताः किंस्विदेषां प्रतिक्रिया ४७ ततो देवगणाः सर्वे ऋषयश्च तपोधनाः पितरश्च
महाभागाः पूजयंति स्म तं मुनिम् ४८ शक्र उवाच कुरुक्षेत्रं गयां गंगां प्रभासं पुष्कराणि च एतानि मनसा ध्यात्वा अवगाहेत्ततो
जलम् ४९ तथा मुच्यति पापेन राहुणा चंद्रमा यथा त्र्यहं स्नातः स भवति निराहारश्च वर्तते ५० स्पृशते यो गवां पृष्ठं वालधिं च नमस्यति त
तो विद्युत्प्रभो वाक्यमभ्यभाषत वासवम् ५१ अयं सूक्ष्मतरो धर्मस्तं निबोध शतक्रतो घृष्टो वटकषायेण अनुलिप्तः प्रियंगुणा ५२ क्षीरे
ण षष्टिकान्भुक्त्वा सर्वपापैः प्रमुच्यते श्रूयतां चापरं गुह्यं रहस्यमृषिचिंतितम् ५३ श्रुतं मे भाषमाणस्य स्थाणोः स्थाने बृहस्पतेः रुद्रेण
सह देवेश तन्निबोध शचीपते ५४ पर्वतारोहणं कृत्वा एकपादो विभावसुम् निरीक्षेत निराहार ऊर्ध्वबाहुः कृतांजलिः ५५ तपसा मह
ता युक्त उपवासफलं लभेत् रश्मिभिस्तापितोर्कस्य सर्वपापमपोहति ५६ ग्रीष्मकाले थवा शीते एवं पापमपोहति ततः पापात्प्रमुक्तस्य
द्युतिर्भवति शाश्वती ५७ तेजसा सूर्यवद्दीप्तो भ्राजते सोमवत्पुनः मध्ये त्रिदशवर्गस्य देवराजः शतक्रतुः ५८

तुल्यं येन दिव्यर्यः ४२ एतच्च चरणमात्रस्य द्र-
ष्टव्यमित्याशयेनाह शुचिनेति ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ वटकषायः णवटजटाकषायेण प्रियंगु गजसर्षप. ५२ षष्टिकानृषष्टिरात्रेणपक्वधान्यं ५३ ५४
५५ ५६ ५७ ५८

उवाचमधुरंवाक्यंबृहस्पतिमनुत्तमम् धर्मगुह्यंतुभगवन्मानुषाणांसुखावहम् ५९ सरहस्याश्चयेदोषास्तान्यथावदुदीरय ६०
बृहस्पतिरुवाच प्रतिमेहंतियेसूर्यमनिलंद्विषतेचये हव्यवाहंप्रदीप्तंचसमिधंयेनजुह्वति ६१ बालवत्सांचयेधेनुंदुहंतिक्षीरकारणात्
तेषांदोषान्प्रवक्ष्यामितान्निबोधशचीपते ६२ भानुमाननिलश्चैवहव्यवाहश्चवासव लोकानांमातरश्चैवगावःसृष्टाःस्वयंभुवा ६३
लोकांस्तारयितुंशक्तामर्त्येष्वेतेषुदेवताः ६४ सर्वेभवंतःशृण्वंतुएकैकंधर्मनिश्चयम् वर्षाणिषडशीतिंतुदुर्वृत्ताःकुलपांसनाः ६५ स्त्रियः
सर्वाश्चदुर्वृत्ताःप्रतिमेहंतियारविम् अनिलद्वेषिणःशक्रगर्भस्थाच्च्यवतेप्रजा ६६ हव्यवाहस्यदीप्तस्यसमिधंयेनजुह्वति अग्निकार्येषु
वैतेषांहव्यंनाश्नातिपावकः ६७ क्षीरंतुबालवत्सानांयेपिबंतीहमानवाः नतेषांक्षीरपाःकेचिज्जायंतेकुलवर्धनाः ६८ प्रजाक्षयेणयुज्यं
तेकुलवंशक्षयेणच एवमेतत्पुराद्दृष्टंकुलवृद्धैर्द्विजातिभिः ६९ तस्माद्वर्ज्यानिवर्ज्यानिकार्यंकार्यंचनित्यशः भूतिकामेनमर्त्येनसत्यमेत
द्ब्रवीमिते ७० ततःसर्वेमहाभागादेवताःसमरुद्गणाः ऋषयश्चमहाभागाःपृच्छंतिस्मपितॄंस्ततः ७१ पितरःकेनतुष्यंतिमर्त्यानामल्पचे
तसाम् अक्षयंचकथंदानंभवेच्चैवौर्ध्वदेहिकम् ७२ आनृण्यंवाकथंमर्त्यागच्छेयुःकेनकर्मणा एतदिच्छामहेश्रोतुंपरंकौतूहलंहिनः
७३ पितरऊचुः न्यायतोवैमहाभागाःसंशयःसमुदाहृतः श्रूयतांयेनतुष्यामोमर्त्यानांसाधुकर्मणाम् ७४ नीलषंडप्रमोक्षेणअमा
वास्यांतिलोदकैः वर्षासुदीपकैश्चैवपितॄणामनृणोभवेत् ७५ अक्षयंनिर्व्यलीकंचदानमेतन्महाफलम् अस्माकंपरितोषश्चअक्षयः
परिकीर्त्यते ७६ श्रद्दधानाश्चयेमर्त्याआहरिष्यंतिसंततिम् दुर्गात्तेतारयिष्यंतिनरकात्प्रपितामहान् ७७ पितॄणांभाषितंश्रुत्वाहृष्टरो
मातपोधनः वृद्धगार्ग्योमहातेजास्तानेवंवाक्यमब्रवीत् ७८ केगुणानीलषंडस्यप्रमुक्तस्यतपोधनाः वर्षासुदीपदानेनतथैवचतिलोदकैः
७९ पितरऊचुः नीलषंडस्यलांगूलंतोयमभ्युद्धरेद्यदि षष्टिवर्षसहस्राणिपितरस्तेनतर्पिताः ८० यस्तुशृंगगतंपंकंकूलादुद्धरतेप्यति
ष्ठति पितरस्तेनगच्छंतिसोमलोकमसंशयम् ८१ वर्षासुदीपदानेनशशीवच्छोभतेनरः तमोरूपंनतस्यास्तिदीपकंयःप्रयच्छति ८२
अमावास्यांतुयेमर्त्याःप्रयच्छंतितिलोदकम् पात्रमौदुंबरंगृह्यमधुमिश्रंतपोधन ८३ कृतंभवतितैःश्राद्धंसरहस्यंयथार्थवत् हृष्टपुष्ट
मनास्तेषांप्रजाभवतिनित्यदा ८४

८५ ८६ इतिआनुशासनिकेपर्वणिदानधर्मेटीकायांशतोपरिपंचविंशोऽध्यायः १२५ १ २ पादोत्सीयावप्यभिवाद्यौ संध्यायांशिष्टाचारात चक्रेगोमयेपलिप्ते

कुलवंशस्यवृद्धिस्तुपिंडदस्यफलंभवेत् श्रद्दधानस्तुयःकुर्यात्पितृणामनृणोभवेत् ८५ एवमेषसमुद्दिष्टःश्राद्धकालक्रमस्तथा वि
धिःपात्रंफलंचैवयथावदनुकीर्तितम् ८६ इतिश्रीमहाभारते आनुशासनिकेपर्वणिदानधर्मेपितृरहस्यनामशतोपरिपंचविंशोऽध्या
यः १२५ भीष्मउवाच केनतेचभवेत्प्रीतिःकथंतुष्टिंतुगच्छसि इतिपृष्टःसरुद्रेणप्रोवाचहरिरीश्वरः १ विष्णुरुवाच ब्रा
ह्मणानांपरीवादोममविद्वेषणंमहत् ब्राह्मणैःपूजितैर्नित्यंपूजितोहंनसंशयः २ नित्याभिवाद्याविप्रेंद्राभुक्त्वापादौतथात्मनः तेषांतु
ष्यामिमर्त्यानांयश्चक्रेचबलिंहरेत् ३ वामनंब्राह्मणंदृष्ट्वावराहंचजलोत्थितम् उद्धृताधरणीचैवमूर्ध्नाधारयतेतुयः ४ नतेषामशु
भंकिंचित्कल्मषंचोपपद्यते अश्वत्थसेवनंगांचपूजयेद्योनरःसदा ५ पूजितंचजगत्तेनसदेवासुरमानुषम् तेनरूपेणतेषांचपूजां
गृण्हामितत्त्वतः ६ पूजाममैषान्नास्त्यन्यायावल्लोकाःप्रतिष्ठिताः अन्यथाहिवृथामर्त्याःपूजयंत्यल्पबुद्धयः ७ नाहंतत्प्रतिगृण्हामिन
सातुष्टिकरीमम ८ इंद्रउवाच चक्रंपादौवराहंचब्राह्मणंचापिवामनम् उद्धृताधरणींचैवकिमर्थंत्वंप्रशंससि ९ भवान्सृज
तिभूतानिभवान्संहरतिप्रजाः प्रकृतिःसर्वभूतानांसमर्त्यानांसनातनी १० भीष्मउवाच संप्रहस्यततोविष्णुरिदंवचनमब्रवी
त् चक्रेणनिहतादैत्याःपद्भ्याक्रांतावसुंधरा ११ वाराहंरूपमास्थायहिरण्याक्षोनिपातितः वामनंरूपमास्थायजितोराजामयाबलिः
१२ परितुष्टोभवाम्येवंमानुषाणांमहात्मनाम् तन्मांयेपूजयिष्यंतिनास्तितेषांपराभवः १३ अपिवाब्राह्मणंदृष्ट्वाब्रह्मचारिणमाग
तम् ब्राह्मणाग्र्याहुतिंदत्वाअमृतंतस्यभोजनम् १४ ऐंद्रींसंध्यामुपासित्वाआदित्याभिमुखःस्थितः सर्वतीर्थेषुसस्नातोमुच्यतेसर्वकि
ल्बिषैः १५ एतद्वःकथितंगुह्यमखिलेनतपोधनाः संशयंपृच्छमानानांकिंभूयःकथयाम्यहम् १६ बलदेवउवाच श्रूयतांपर
मंगुह्यंमानुषाणांसुखावहम् अजानंतोयदबुधाःक्लिश्यंतेभूतपीडिताः १७ कल्यउत्थाययोमर्त्यःस्पृशेद्गांवैघृतंदधि सर्षपंचप्रियं
गुंचकल्मषात्प्रतिमुच्यते १८ भूतानिचैवसर्वाणिअग्रतःपृष्ठतोपिवा उच्छिष्टंवापिच्छिद्रेषुवर्जयंतितपोधनाः १९ देवाऊचुः प्र
गृह्यौदुंबरंपात्रंतोयपूर्णमुदङ्मुखः उपवासंतुगृण्हीयाद्यद्वासंकल्पयेद्व्रतम् २०

सुदर्शनमंत्रेणपूजिते ३ ४ ५ ६ ७
८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० १ २ ३

देवतास्तस्यतुष्यंतिकामिकंचापिसिध्यति अन्यथाहिवृथामर्त्याःकुर्वतेस्वल्पबुद्धयः २१ उपवासेबलौचापिताम्रपात्रंविशिष्यते ब
लिभिक्षातथार्घंचपितॄणांचतिलोदकम् २२ ताम्रपात्रेणदातव्यमन्यथाल्पफलंभवेत् गुह्यमेतत्समुद्दिष्टंयथातुष्यंतिदेवताः २३
धर्मउवाच राजपौरुषिकेविप्रेघांटिकेपरिचारिके गोरक्षकेवाणिजकेतथाकारुकुशीलवे २४ मित्रद्रुह्यनधीयानेयश्चस्याद्वृषली
पतिः एतेषुदैवंपित्र्यंवानदेयंस्यात्कथंचन २५ पिंडदास्तस्यहीयंतेनचप्रीणातिवैपितॄन् अतिथिर्यस्यभग्नाशोगृहात्प्रतिनिवर्त्तते
२६ पितरस्तस्यदेवाश्चअग्नयश्चतथैवहि निराशाःप्रतिगच्छंतिअतिथेरप्रतिग्रहात् २७ स्त्रीघ्नैर्गोघ्नैःकृतघ्नैश्चब्रह्मघ्नैर्गुरुतल्पगैः
तुल्यदोषोभवत्येभिर्यस्यातिथिरनर्चितः २८ अग्निरुवाच पादमुद्यम्ययोमर्त्यःस्पृशेद्गाश्चसदुर्मतिः ब्राह्मणंवामहाभागंदी
प्यमानंतथानलम् २९ तस्यदोषान्प्रवक्ष्यामितच्छृणुध्वंसमाहिताः दिवंस्पृशत्यशब्दोस्यत्रस्यंतिपितरश्चवै ३० वैमनस्यंचदेवानां
कृतंभवतिपुष्कलम् पावकश्चमहातेजाहव्यंनप्रतिगृण्हति ३१ आजन्मनांशतंचैवनरकेपच्यतेतुसः निष्कृतिंचनतस्यापिअनुमन्यं
तिकर्हिचित् ३२ तस्माद्गावोनपादेनस्प्रष्टव्यावैकदाचन ब्राह्मणश्चमहातेजादीप्यमानस्तथानलः ३३ श्रद्दधानेनमर्त्येनआत्मनो
हितमिच्छता एतेदोषामयाप्रोक्तास्त्रिषुयःपादमुत्सृजेत् ३४ विश्वामित्रउवाच श्रूयतांपरमंगुह्यंरहस्यंधर्मसंहितम् परमा
न्नेनयोदद्यात्पितॄणामौपहारिकम् ३५ गजच्छायायांपूर्वस्यांकुतपेदक्षिणामुखः यदाभाद्रपदेमासिभवतेबहुलेमघा ३६ श्रूयतांत
स्यदानस्ययादृशोगुणविस्तरः कृतंतेनमहच्छ्राद्धंवर्षाणीहत्रयोदश ३७ गावऊचुः बहुलेसमगेत्वकुतोभयेचक्षेमेचसख्येव
हिभूयसीच यथापुराब्रह्मपुरेसवत्साशतक्रतोर्वज्रधरस्ययज्ञे ३८ भूयश्चयाविष्णुपदेस्थितायाविभावसोश्चापिपथेस्थितायाः दे
वाश्चसर्वेसहनारदेनप्रकुर्वतेसर्वसहेतिनाम ३९ मंत्रेणतेनाभिवदेतयोवैविमुच्यतेपापकृतेनकर्मणा लोकानवाप्नोतिपुरंदरस्यग
वांफलंचंद्रमसोद्युतिंच ४० एवंहिमंत्रंत्रिदशाभिजुष्टंपठेतयःपर्वसुगोष्ठमध्ये ननस्यपापंनभयंनशोकःसहस्रनेत्रस्यचयातिलोक
म् ४१ भीष्मउवाच अथसप्तमहाभागाऋषयोलोकविश्रुताः वसिष्ठःप्रमुखाःसर्वेब्रह्माणंपद्मसंभवम् ४२ प्रदक्षिणमभिक्रम्य
सर्वेप्रांजलयःस्थिताः उवाचवचनंतेषांवसिष्ठोब्रह्मवित्तमः ४३

४४ ४५ ४६ ४७ ४८ ४९ ५० इतिआनुशासनिकेपर्वणिटीकायांशतोपरिषड्विंशोऽध्यायः १२६ १ २ ३ ४ ५ ६

सर्वप्राणिहितंप्रश्नंब्रह्मक्षत्रेविशेषतः द्रव्यहीनाःकथंमर्त्यादरिद्राःसाधुवर्त्तिनः ४४ प्राप्नुवंतीहयज्ञस्यफलंकेनचकर्मणा एतच्छ्रु
त्वावचस्तेषांब्रह्मावचनमब्रवीत् ४५ ब्रह्मोवाच अहोप्रश्नोमहाभागागूढार्थःपरमःशुभः सूक्ष्मःश्रेयांश्चमर्त्यानांभवद्भिःसं-
मुदाहृतः ४६ श्रूयतांसर्वमाख्यास्येनिखिलेनतपोधनाः यथायज्ञफलंमर्त्योलभतेनात्रसंशयः ४७ पौषमासस्यशुक्लेवैयदायुज्येतरो
हिणी तेननक्षत्रयोगेनआकाशशयनोभवेत् ४८ एकवस्त्रःशुचिःस्नातःश्रद्दधानःसमाहितः सोमस्यरश्मयःपीत्वामहायज्ञफलंल
भेत् ४९ एतद्वःपरमंगुह्यंकथितंद्विजसत्तमाः यन्मांभवंतःपृच्छन्तिसूक्ष्मतत्त्वार्थदर्शिनः ५० इतिश्रीमहाभारतेआनुशासनिकेपर्वणि
दानधर्मेदेवरहस्येशतोपरिषड्विंशोऽध्यायः १२६ विभावसुरुवाच सलिलस्यांजलिंपूर्णमक्षतांश्चघृतोत्तराः सोमस्योत्तिष्ठमानस्य
तज्जलंचाक्षतांश्चतान् १ स्थितोह्यभिमुखोमर्त्यःपौर्णमास्यांबलिंहरेत् अग्निकार्यंकृतंतेनहुतास्चास्याग्नयस्त्रयः २ वनस्पतिंचयोहन्या
दमावास्याममबुद्धिमान् अपिह्येकेनपत्रेणलिप्यतेब्रह्महत्यया ३ दंतकाष्ठंतुयःखादेदमावास्याममबुद्धिमान् हिंसितश्चंद्रमास्तेनपितरः
श्चोद्विजंतिच ४ हव्यंनतस्यदेवाश्चप्रतिगृह्णंतिपर्वसु कुप्यंतेपितरश्चास्यकुलेवंशोस्यहीयते ५ श्रीरुवाच प्रकीर्णंभाजनंयत्रभि
न्नभांडमथासनम् योषितश्चैवहन्यंतेकश्मलोपहतेगृहे ६ देवताःपितरश्चैवउत्सवेपर्वणीषुवा निराशाःप्रतिगच्छंतिकश्मलोपहताद्गृ
हात् ७ अंगिराउवाच यस्तुसंवत्सरंपूर्णंदद्याद्दीपंकरंजके सुवर्चलामूलहस्तःप्रजानस्यविवर्धते ८ गार्ग्यउवाच आति
थ्यंसततंकुर्याद्दीपंदद्यात्प्रतिश्रये वर्जयानोदिवास्वापंनचमांसानिभक्षयेत् ९ गोब्राह्मणंनहिंस्याच्चपुष्कराणिचकीर्तयेत् एषश्रेष्ठत
मोधर्मःसरहस्योमहाफलः १० अपिक्रतुशतैरिष्ट्वाक्षयंगच्छतितद्धविः नतुक्षीयंतितेधर्माःश्रद्दधानैःप्रयोजिताः ११ इदंचपरमंगुह्यंस
रहस्यंनिबोधत श्राद्धकल्पेचदैवेचतैर्थिकेपर्वणीषुच १२ रजस्वलाचयानारीश्चित्रिकापुत्रिकाचया एताभिश्चक्षुषादृष्टंहविर्नाश्नंतिदे
वताः १३ पितरश्चनतुष्यंतिवर्षाण्यपित्रयोदश शुक्लवासाःशुचिर्भूत्वाब्राह्मणान्स्वस्तिवाचयेत् १४ कीर्तयेद्भारतंचैवतथास्यादक्ष
यंहविः १५ धौम्यउवाच भिन्नभांडंचखट्वांचकुक्कुटंशुनकंतथा अप्रशस्तानिसर्वाणियश्चवृक्षोगृहेरुहः १६

७ करंजसुवर्चलेवृक्षवल्लिविशेषौ ८ ९ १० ११ १२ अपुत्रिकेतिच्छेदः १३ १४ १५ १६ ७ ७ ७

१७ सलंदृश्चिकसर्पादि नरोपयेत्गृहेद्रुमिति शेषः १८ १९ २० २१ इति आनुशासनिकेपर्वणिदानधर्मेटीकायांशतोपरिसप्तविंशोऽध्यायः १२७ १ २



भिन्नभांडेकलिंप्राहुःखट्वायांतुधनक्षयः कुक्कुटेशुनकेचैवहविर्नाश्नंतिदेवताः १७ वृक्षमूलेध्रुवंसत्वंतस्मात्वृक्षंनरोपयेत् १८
जमदग्निरुवाच योयजेदश्वमेधेनवाजपेयशतेनह अवाक्शिरावलंबेतसत्रंवास्फीतमाहरेत् १९ नयस्यहृदयंशुद्धंनरकंसध्रुवंव्र
जेत् तुल्यंयज्ञश्वसत्यंचहृदयस्यचशुद्धता २० शुद्धेनमनसादत्वासक्तुप्रस्थंद्विजातये ब्रह्मलोकमनुप्राप्तःपर्याप्तंतन्निदर्शनम् २१ इ
तिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेदेवरहस्येशतोपरिसप्तविंशोऽध्यायः १२७ वायुरुवाच किंचिद्धर्मंप्रवक्ष्यामिमान्
षाणांसुखावहम् सरहस्याश्चयेदोषास्तान्शृणुध्वंसमाहिताः १ चतुरोवार्षिकान्मासान्योददातितिलोदकम् भोजनंचयथाशक्त्याब्राह्म
णेवेदपारगे २ अग्निकार्यंचकर्तव्यंपरमान्नेनभोजनम् दीपकश्चापिकर्तव्यःपितृणांसतिलोदकः ३ एतेनविधिनामर्त्यःश्रद्दधानःसमा
हितः पशुबंधशतस्येहफलंप्राप्नोतिपुष्कलम् ४ इदंचैवापरंगुह्यमप्रशस्तंनिबोधत अग्नेस्तुवृषलोनेताहविर्मूढाश्चयोषितः ५ मन्य
तेधर्मएवेतिसचाधर्मेणलिप्यते अग्नयस्तस्यकुप्यंतिशूद्रयोनिंसगच्छति ६ पितरश्चनतुष्यंतिसहदेवैर्विशेषतः प्रायश्चित्तंतुयत्त
त्रंब्रुवतस्तन्निबोधमे ७ यत्कृत्वातुनरःसम्यक्सुखीभवतिविज्वरः गवांमूत्रपुरीषेणपयसाचघृतेनच ८ अग्निकार्यंत्र्यहंकुर्यान्नि
राहारःसमाहितः ततःसंवत्सरेपूर्णेप्रतिगृण्हंतिदेवताः ९ हृष्यंतिपितरश्चास्यश्राद्धकालउपस्थिते एषह्यधर्मोधर्मश्चरहस्यःसंप्रकी
र्तितः १० मर्त्यानांस्वर्गकामानांप्रेत्यस्वर्गसुखावहः ११ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेदेवरहस्येशतोपरिअ
ष्टाविंशोऽध्यायः १२८ लोमशउवाच परदारेषुयेसक्ताअकृत्वादारसंग्रहम् निराशाःपितरस्तेषांश्राद्धकालेभवंतिवै १ परदा
ररतिर्यश्चयश्चवंध्यामुपासते ब्रह्मस्वंहरतेयश्चसमदोषाभवंतिते २ असंभाष्याभवंत्येतेपितृणांनात्रसंशयः देवताःपितरश्चैषांना
भिनंदंतितद्धविः ३ तस्मात्परस्यवैदारांस्त्यजेद्वंध्यांचयोषितम् ब्रह्मस्वंहिनहर्तव्यमात्मनोहितमिच्छता ४ श्रूयतांचापरंगुह्यंरहस्यं
धर्मसंहितम् श्रद्दधानेनकर्तव्यंगुरूणांवचनंयथा ५ द्वादश्यांपौर्णमास्यांचमासिमासिघृताक्षतम् ब्राह्मणेभ्यःप्रयच्छेततस्यपुण्यं
निबोधत ६ सोमश्चवर्धतेतेनसमुद्रश्चमहोदधिः अश्वमेधचतुर्भागंफलंसृजतिवासवः ७

३ ४ अग्नेरग्रणीस्यास्यप्रत्यक्षस्यवावैदिकस्यनेतादेशांतरप्राप- १६१
कोयदिशूद्रःस्यात्यदियोषितःहविषासोमाज्यपयःप्रभृतिनायज्ञावशिष्टेनइडादिस्थानीयेनमूढाःस्युस्तर्हितस्यदोषःप्रायश्चित्तंचवक्ष्यमाणंज्ञेयं ५ ६ ७ ८ ९
१० ११ इतिशतोपरिअष्टाविंशोऽध्यायः १२८ १ २ ३ ४ ५ ६ महोदधिःजलसमुद्रः ७

८ ९ १० ११ १२ १३ १४ १५ इतिआनुशासनिकेपर्वणिटीकायांशतोपरिऊनत्रिंशोऽध्यायः १२९ १ २ ३ ४ मयोक्तव्याःधर्मवाच्याः ५ ६

दानेनैतेनतेजस्वीवीर्यवांश्चभवेन्नरः प्रीतश्चभगवान्सोमइष्टान्कामान्प्रयच्छति ८ श्रूयतांचापरोधर्मःसरहस्योमहाफलः इमंकलि
युगमाप्यमनुष्याणांसुखावहः ९ कल्यमुत्थाययोमर्त्यःस्नातःशुक्लेनवाससा तिलपात्रंप्रयच्छेतब्राह्मणेभ्यःसमाहितः १० तिलोदकंच
योदद्यात्पितृणांमधुनासह दीपकंकृसरंचैवश्रूयतांतस्ययत्फलम् ११ तिलपात्रेफलंप्राहभगवान्पाकशासनः गोप्रदानंचयःकुर्याद्भूमि
दानंचशाश्वतम् १२ अग्निष्टोमंचयोयज्ञंयजेतबहुदक्षिणम् तिलपात्रंसहैतेनसमंमन्यंतिदेवताः १३ तिलोदकंसदाश्राद्धेमन्यंतेपित
रोऽक्षयम् दीपेचकृसरेचैवतुष्यंतेस्यपितामहाः १४ स्वर्गेचपितृलोकेचपितृदेवाभिपूजितम् एवमेतन्मयोद्दिष्टमृषिदृष्टंपुरातनम् १५ इ
तिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेलोमशरहस्ये शतोपरिऊनत्रिंशोऽध्यायः १२९ भीष्मउवाच ततस्त्वृषिगणाःसर्वेपितर
श्चसदेवताः अरुंधतींतपोवृद्धामपृच्छंतसमाहिताः १ समानशीलांवीर्येणवसिष्ठस्यमहात्मनः त्वत्तोधर्मरहस्यानिश्रोतुमिच्छामहेवयम्
२ यत्तेगुह्यतमंभद्रेतत्प्रभाषितुमर्हसि ३ अरुंधत्युवाच तपोवृद्धिर्मयाप्राप्ताभवतांस्मरणेनवै भवतांचप्रसादेनधर्मान्वक्ष्यामिशा
श्वतान् ४ सगुह्यांश्चरहस्यांश्चतान्शृणुध्वमशेषतः श्रद्दधानेप्रयोक्तव्यायस्यप्रसन्नंयथामनः ५ अश्रद्दधानोमानीचब्रह्महागुरुतल्पगः
असंभाष्याहिचत्वारोनैषांधर्मंप्रकाशयेत् ६ अहन्यहनियोदद्यात्कपिलांद्वादशीःसमाः मासिमासिचसत्रेणयोयजेतसदानरः ७ गवां
शतसहस्रंचयोदद्याज्ज्येष्ठपुष्करे नतद्धर्मफलंतुल्यमतिथिर्यस्यतुष्यति ८ श्रूयतांचापरोधर्मोमनुष्याणांसुखावहः श्रद्दधानेनकर्तव्यः
सरहस्योमहाफलः ९ कल्यमुत्थायगोमध्येगृह्यदर्भान्सहोदकान् निषिंचेतगवांशृंगेमस्तकेनचतज्जलम् १० प्रतीच्छेतनिराहारस्तस्य
धर्मफलंशृणु श्रूयंतेयानितीर्थानित्रिषुलोकेषुकानिचित् ११ सिद्धचारणजुष्टानिसेवितानिमहर्षिभिः अभिषेकःसमस्तेषांगवांशृंगोदक
स्यच १२ साधुसाध्वितिचोद्दिष्टंदैवतैःपितृभिस्तथा भूतैश्चैवसुसंहृष्टैःपूजितासाप्यरुंधती १३ पितामहउवाच अहोधर्मोमहाभागेस
रहस्यउदाहृतः वरंददामितेधन्येतपस्तेवर्धतांसदा १४ यमउवाच रमणीयाकथादिव्यायुष्मत्तोयामयाश्रुता श्रूयतांचित्रगुप्तस्यभाषितं
ममचप्रियम् १५ रहस्यंधर्मसंयुक्तंशक्यंश्रोतुंमहर्षिभिः श्रद्दधानेनमर्त्येनआत्मनोहितमिच्छता १६ नहिपुण्यंतथापापंकृतंकिंचिद्विनश्य
ति पर्वकालेचयत्किंचिदादित्यंचाधितिष्ठति १७ प्रेतलोकंगतेमर्त्येतत्तत्सर्वंविभावसुः प्रतिजानातिपुण्यात्मातच्चतत्रोपयुज्यते १८

७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ प्रतिजानातिअर्पयति उपयुज्यतेपुण्यपापकर्ता १८ ७ ७ ७ ७

किंचिद्धर्मंप्रवक्ष्यामिचित्रगुप्तमतंशुभम् पानीयंचैवदीपंचदातव्यंसततंनया १९ उपानहौचछत्रंचकपिलांचयथातथम् पुष्करेकपि
लादेयाब्राह्मणेवेदपारगे २० अग्निहोत्रंचयत्नेनसर्वशःप्रतिपालयेत् अयंचैवापरोधर्मश्चित्रगुप्तेनभाषितः २१ फलमस्यपृथक्त्वेन
श्रोतुमर्हंतिसत्तमाः प्रलयंसर्वभूतैस्तुगंतव्यंकालपर्ययात् २२ तत्रदुर्गमनुप्राप्ताःक्षुत्तृष्णापरिपीडिताः दह्यमानाविपच्यंतेनतत्रास्ति
पलायनम् २३ अहंकारंतमोघोरंप्रविशंत्यल्पबुद्धयः तत्रधर्मंप्रवक्ष्यामियेनदुर्गाणिसंतरेत् २४ अल्पव्ययंमहार्थंचप्रेत्यचैवसु
खोदयम् पानीयस्यगुणादिव्याःप्रेतलोकेविशेषतः २५ तत्रपुण्योदकानामनदीतेषांविधीयते अक्षयंसलिलंतत्रशीतलंह्यमृतोप
मम् २६ सतत्रतोयंपिबतिपानीयंयःप्रयच्छति प्रदीपस्यप्रदानेनश्रूयतांगुणविस्तरः २७ तमोंधकारंनियतंदीपदानेप्रणश्यति
प्रभांचास्यप्रयच्छंतिसोमभास्करपावकाः २८ देवताश्चास्यमन्यंतेविमलाःसर्वतोदिशः द्योततेचयथादित्यःप्रेतलोकगतोनरः २९
तस्माद्दीपःप्रदातव्यःपानीयंचविशेषतः कपिलांयेप्रयच्छंतिब्राह्मणेवेदपारगे ३० पुष्करेचविशेषेणश्रूयतांतस्ययत्फलम् गोशतंस
वृषतेनदत्तंभवतिशाश्वतम् ३१ पापकर्मचयत्किंचिद्ब्रह्महत्यासमंभवेत् शोधयेत्कपिलाह्येकाप्रदत्तंगोशतंयथा ३२ तस्मात्तुक
पिलादेयाकौमुद्यांज्येष्ठपुष्करे नतेषांविषमंकिंचिन्नदुःखंनचकंटकाः ३३ उपानहौचयोदद्यात्पात्रभूतेद्विजोत्तमे छत्रदानेसुखां
च्छायांलभतेपरलोकगः ३४ नहिदत्तस्यदानस्यनाशोस्तीहकदाचन चित्रगुप्तमतंश्रुत्वात्हृष्टरोमाविभावसुः ३५ उवाचदेवताःस
र्वाःपितॄंश्चैवमहाद्युतिः श्रुतंहिचित्रगुप्तस्यधर्मगुह्यंमहात्मनः ३६ श्रद्दधानाश्चयेमर्त्याब्राह्मणेषुमहात्मसु दानमेतत्प्रयच्छंतिन
तेषांविद्यतेभयम् ३७ कर्मदोषास्त्विमेपंचयेषांनास्तीहनिष्कृतिः असंभाष्याअनाचाराववर्जनीयानराधमाः ३८ ब्रह्महाचैवगोघ्नश्च
परदाररतश्चयः अश्रद्दधानश्चनरःस्त्रियंयश्चोपजीवति ३९ प्रेतलोकगतान्ह्येतेनरकेपापकर्मिणः पच्यंतेवैयथामीनाःपूयशोणि
तभोजनाः ४० असंभाष्याःपितॄणांचदेवानांचैवपंचते स्नातकानांचविप्राणांयेचान्येचतपोधनाः ४१ इतिश्रीमहाभारतेआनुशा
सनिकेपर्वणिदानधर्मेचित्रगुप्तरहस्येशततोपरित्रिंशोऽध्यायः १३० भीष्मउवाच ततःसर्वेमहाभागादेवाश्चपितरश्चह ऋषयश्चमहाभा
गाःप्रमथान्वाक्यमब्रुवन् १ 

२ ३ ४ अधरोत्तरेप्रांते अधरओष्ठःउत्तरोयत्रओष्ठस्यावसानेकृतेसति ५ आमिषंमांसंशिरसिदधानःपादतःशय्यायांपादस्थानेशिरःकृत्वायःसंविशेत्

भवंतोवैमहाभागाअपरोक्षनिशाचराः उच्छिष्टानशुचीन्क्षुद्रान्कथंहिंसथमानवान् २ केचस्मृताःप्रतीघाताःयेनमर्त्यान्नहिंसथ रक्षोघ्नानिचकानिस्युर्यैर्गृहेषुप्रणश्यथ ३ श्रोतुमिच्छामयुष्माकंसर्वमेतन्निशाचराः ४ प्रमथाऊचुः मैथुनेनसदोच्छिष्टाःकृतेचैवाधरोत्तरे मोहान्मांसानिखादेतवृक्षमूलेचयःस्वपेत् ५ आमिषंशीर्षतोयस्यपादतोयश्चसंविशेत् ततउच्छिष्टकाःसर्वेबहुच्छिद्राश्चमानवाः ६ उदकेचाप्यमेध्यानिश्लेष्माणंचप्रमुंचति एतेभक्ष्याश्चवध्याश्चमानुषानात्रसंशयः ७ एवंशीलसमाचारान्धर्षयामोहिमानवान् श्रूयतांचप्रतीघातान्येनशक्नुमहिंसितुम् ८ गोरोचनासमालंभोवचाहस्तश्चयोभवेत घृताक्षतंचयोदद्यान्मस्तकेतत्परायणः ९ येचमांसंनखादंतितान्नशक्नुमहिंसितुम् यस्यचाग्निर्गृहेनित्यंदिवारात्रौचदीप्यते १० तरक्षोश्चर्मदंष्ट्राश्चतथैवगिरिकच्छपः आज्यधूमोबिडालश्चछागःकृष्णोथपिंगलः ११ येषामेतानितिष्ठंतिगृहेषुगृहमेधिनाम् तान्यधृष्याण्यगाराणिपिशितांशैःसुदारुणैः १२ लोकानस्माद्विधायेचविचरंतियथासुखाः तस्मादेतानिगेहेषुरक्षोघ्नानिविशांपते १३ एतद्वःकथितंसर्वंयत्रवःसंशयोमहान् १४ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेप्रमथरहस्येशतोपरिएकत्रिंशोऽध्यायः १३१ भीष्मउवाच ततःपद्मप्रतीकाशःपद्मोद्भूतःपितामहः उवाचवचनंदेवान्वासवंचशचीपतिम् १ अयंमहाबलोनागोरसातलचरोबली तेजस्वीरेणुकोनाममहासत्वपराक्रमः २ अतितेजस्विनःसर्वेमहावीर्यामहागजाः धारयंतिमहींकृत्स्नांसशैलवनकाननाम् ३ भवद्भिःसमनुज्ञातोरेणुकःस्तान्महागजान् धर्मगुह्यानिसर्वाणिगत्वापृच्छतुनत्त्वै ४ पितामहवचःश्रुत्वातेदेवारेणुकंतदा प्रेषयामासुरव्यग्रायत्रतेधरणीधराः ५ रेणुकउवाच अनुज्ञातोस्मिदेवैश्चपितृभिश्चमहाबलाः धर्मगुह्यानियुष्माकंश्रोतुमिच्छामितत्त्वतः ६ कथयध्वंमहाभागायद्वस्तत्त्वमनीषितम् ७ दिग्गजाऊचुः कार्तिकेमासिचाश्लेषाबहुलस्याष्टमीशिवा तेननक्षत्रयोगेनयोददातिगुडोदनम् ८ इमंमंत्रंजपन्श्राद्धेयताहारोह्यकोपनः बलदेवप्रभृतयोयेनागाबलवत्तराः ९ अनंतान्यक्षयानित्यंभोगिनःसुमहाबलाः तेषांकुलोद्भवायेचमहाभूताभुजंगमाः १० एवमुक्त्वाबलिंतत्रवल्मीकेतुनिवेदयेत् तेभ्योबलिंप्रयच्छतुबलतेजोभिवृद्धये ११

६ ७ ८ ९ १० तरक्षोर्व्याघ्रस्यगिरिकच्छपःपर्वतदरीशायीस्थूलकूर्मः ११ १२ १३ १४ इतिश्रीमन्महाभारते आनुशासनिकेपर्वणिटीकायांशतोपरिएकत्रिंशोऽध्यायः १३१ ७ १ नागोगजः २ ३ ४ ५ ६ ७ ८ ९ १० ११ ७

यदानारायणःश्रीमानुज्जहारवसुंधराम् तद्बलंतस्यदेवस्यधरानुद्धरतस्तथा एवमुक्त्वाबलिंतत्रवल्मीकेतुनिवेदयेत् १२ गजेंद्रकुसु
माकीर्णंनीलवस्त्रानुलेपनम् निर्वपेत्तंतुवल्मीकेअस्तंयातेदिवाकरे १३ एवंतुष्टास्ततःसर्वेअधस्ताद्भारपीडिताः श्रमंतंनावबुध्यामो
धारयंतोवसुंधराम् १४ एवंमन्यामहेसर्वेभारार्त्तानिरपेक्षिणः ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवाप्युपोषितः १५ एवंसंवत्सरंकृत्वादा
नंबहुफलंलभेत् वल्मीकेबलिमादायतन्नोबहुफलंमतम् १६ येचनागामहावीर्यास्त्रिषुलोकेषुकृत्स्नशः कृतातिथ्याभवेयुस्तेशतं
वर्षाणितत्त्वतः १७ दिग्गजानांचतच्छ्रुत्वादेवतापितरस्तथा ऋषयश्चमहाभागाःपूजयंतिस्मरेणुकम् १८ इतिश्रीमहाभारतेआ
नुशासनिकेपर्वणिदानधर्मेदिग्गजानांरहस्येशततोपरिद्वात्रिंशोऽध्यायः १३२ महेश्वरउवाच सारमुद्धृत्ययुष्माभिःसाधुधर्म
उदाहृतः धर्मगुह्यमिदंमत्तःशृणुध्वंसर्वएवह १ येषांधर्माश्रिताबुद्धिःश्रद्दधानाश्चयेनराः तेषांस्यादुपदेष्टव्यःसरहस्योमहाफलः
२ निरुद्विग्नस्तुयोदद्यान्मासमेकंगवाह्निकम् एकभक्तंतथाश्नीयाच्छ्रूयतांतस्ययत्फलम् ३ इमागावोमहाभागाःपवित्रंपरमंस्मृताः
त्रींल्लोकान्धारयंतिस्मसदेवासुरमानुषान् ४ तासुचैवमहापुण्यंशुश्रूषाचमहाफलम् अहन्यहनिधर्मेणयुज्यतेवैगवाह्निकः ५
मयाह्येताह्यनुज्ञाताःपूर्वमासन्कृतेयुगे ततोहमनुनीतोवैब्रह्मणापद्मयोनिना ६ तस्माद्व्रजस्थानगतस्तिष्ठत्युपरिमेवृषः रमेहंस-
हगोभिश्चतस्मात्पूज्याःसदैवताः ७ महाप्रभावावरदावरंदद्युरुपासिताः तागावोस्यानुमन्यंतेसर्वकर्मसुयत्फलम् ८ तस्यतत्र
चतुर्भागोयोदद्यातिगवाह्निकम् ९ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेमहादेवरहस्येशततोपरित्रयस्त्रिंशोऽध्यायः १३३
स्कंदउवाच ममाप्यनुमतोधर्मस्तंशृणुध्वंसमाहिताः नीलषंडस्यशृंगाभ्यांगृहीत्वामृत्तिकांतुयः १ अभिषेकंत्र्यहंकुर्यात्तस्यध
र्मंनिबोधत शोधयेदशुभंसर्वमाधिपत्यंपरत्रच २ यावच्चजायतेमर्त्यस्तावच्छूरोभविष्यति इदंचाप्यपरंगुह्यंसरहस्यंनिबोधत
३ प्रगृह्यौदुंबरपात्रंपक्वान्नंमधुनासह सोमस्योत्तिष्ठमानस्यपौर्णमास्यांबलिंहरेत् ४ तस्यधर्मफलंनित्यंश्रद्दधानानिबोधत सा
ध्यारुद्रास्तथादित्याविश्वेदेवास्तथाश्विनौ ५ मरुतोवसवश्चैवप्रतिगृण्हंतितंबलिम् सोमश्चवर्धतेतेनसमुद्रश्चमहोदधिः ६ एष-
धर्मोमयोद्दिष्टःसरहस्यःसुखावहः ७ विष्णुरुवाच धर्मगुह्यानिसर्वाणिदेवतानांमहात्मनाम् ऋषीणांचैवगुह्यानियःपठेदाह्निकं
सदा ८ १६३

९ १० ११ १२ १३ १४ १५ १६ १७ इतिआनुशासनिकेपर्वणिटीकायांशतोपरिचतुस्त्रिंशोऽध्यायः १३४ केभोज्याःभोज्या
न्नाः १ २ ३ वैश्याःभोज्याः भोजनीयाः ४ ५ ६ नकेवलंशूद्रान्नमेववर्ज्यंकिंतुशूद्रस्यकर्मनिष्ठायांसेवायांवर्त्तमानो विकर्मस्थोविशिष्टकर्मस्थः संध्यावं

शृणुयाद्दानसूर्युर्यःश्रद्दधानःसमाहितः नास्यविघ्नःप्रभवतिभयंचास्यनविद्यते ९ येचधर्माःशुभाःपुण्याःसरहस्याउदाहृताः तेषां
धर्मफलंतस्ययःपठेतजितेंद्रियः १० नास्यपापंप्रभवतिनचपापेनलिप्यते पठेद्वाश्रावयेद्वापिश्रुत्वावालभतेफलम् ११ भुंजतेपित-
रोदेवाहव्यंकव्यमथाक्षयम् श्रावयंश्चापिविप्रेंद्रान्पर्वसुप्रयतोनरः १२ ऋषीणांदेवतानांचपितॄणांचैवनित्यदा भवत्यभिमतःश्रीमा
न्धर्मेषुप्रयतःसदा १३ कृत्वापिपापकंकर्ममहापातकवर्जितम् रहस्यधर्मंश्रुत्वेमंसर्वपापैःप्रमुच्यते १४ भीष्मउवाच एतद्ध
र्मरहस्यंवैदेवतानांनराधिप व्यासोद्दिष्टंमयाप्रोक्तंसर्वदेवनमस्कृतम् १५ पृथिवीरत्नसंपूर्णाज्ञानंचेदमनुत्तमम् इदमेवततःश्राव्य
मितिमन्येतधर्मवित् १६ नाश्रद्दधानायननास्तिकायननष्टधर्मायननिर्घृणाय नहेतुदुष्टायगुरुद्विषेवानानात्मभूतायनिवेद्यमेतत्
१७ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेदेवरहस्येशतोपरिचतुस्त्रिंशोऽध्यायः १३४ युधिष्ठिरउवाच केभो-
ज्याब्राह्मणस्येहकेभोज्याःक्षत्रियस्यह तथावैश्यस्यकेभोज्याःकेशूद्रस्यचभारत १ भीष्मउवाच ब्राह्मणाब्राह्मणस्येहभो
ज्यायेचैवक्षत्रियाः वैश्याश्चापितथाभोज्याःशूद्राश्चपरिवर्जिताः २ ब्राह्मणाःक्षत्रियावैश्याभोज्यावैक्षत्रियस्यह वर्जनीयास्तुवैशू
द्राःसर्वभक्ष्याविकर्मिणः ३ वैश्यास्तुभोज्याविप्राणांक्षत्रियाणांतथैवच नित्याग्नयोविविक्ताश्चचातुर्मास्यरताश्चये ४ शूद्राणाम
थयोभुंक्तेसभुंक्तेपृथिवीमलम् मलंनृणांसपिबतिमलंभुंक्तेजनस्यच ५ शूद्राणांयस्तथाभुंक्तेसभुंक्तेपृथिवीमलम् पृथिवीमलम
श्नन्तियेद्विजाःशूद्रभोजिनः ६ शूद्रस्यकर्मनिष्ठायांविकर्मस्थोहिपच्यते ब्राह्मणःक्षत्रियोवैश्योविकर्मस्थश्चपच्यते ७ स्वाध्यायनि
रताविप्रास्तथास्वस्त्ययनेनृणाम् रक्षणेक्षत्रियंप्राहुर्वैश्यंपुष्ट्यर्थमेवच ८ करोतिकर्मयद्वैश्यस्तद्गत्वाह्युपजीवति कृषिगोरक्ष्य
वाणिज्यमकुत्सावैश्यकर्मणि ९ शूद्रकर्मतुयःकुर्यादवहायस्वकर्मच सविज्ञेयोयथाशूद्रोनचभोज्यःकदाचन १० चिकित्सकः
काण्डपृष्ठःपुराध्यक्षःपुरोहितः सांवत्सरोवृथाध्यायीसर्वेतेशूद्रसंमिताः ११ शूद्रकर्मस्वथैतेषुयोभुंक्तेनिरपत्रपः अभोज्यभोजनं
भुक्त्वाभयंप्राप्नोतिदारुणम् १२ कुलंवीर्यंचतेजश्चतिर्यग्योनित्वमेवच समयातिश्वयाश्चैवनिष्क्रियोधर्मवर्जितः १३

दनादियुक्तोपिपच्यतेनरकइतिशेषः ९ ८ ९ १० काण्डपृष्ठःअधमः ११ १२ १३ ५ ७ ७ १७

१४ १५ पिशुनं तत्संबंधि १६ १७ नगरी रक्षति तस्य १८ १९ २० २१ इति आनुशासनिके पर्वणि टीकायां शतोपरि पंचत्रिंशोऽध्यायः १३५ १
२ ३ सावित्री समिदाहुतिरिति सर्वत्र संबध्यते ४ आदित्योदयनं तत्पर्यंतं स्थित्वा ५ विवृतं लोकप्रत्यक्षं धारयन् ६ ७ ८ ९ १० ग्रहसूतकयोः कारागा



भुक्तेः चिकित्सकस्यान्नं तदन्नं च पुरीषवत्‌ पुंश्चल्यन्नं च मूत्रं स्यात्कारुकान्नं च शोणितम्‌ १४ विद्योपजीविनोन्नं च यो भुंक्ते साधुसंमतः तद
प्यन्नं यथा शौद्रं तत्साधुः परिवर्जयेत्‌ १५ वचनीयस्य यो भुंक्ते तमाहुः शोणितं ह्रदम्‌ पिशुनं भोजनं भुंक्ते ब्रह्महत्यासमं विदुः १६ असत्कृ
तमवज्ञातं न भोक्तव्यं कदाचन १७ व्याधिं कुलक्षयं चैव क्षिप्रं प्राप्नोति ब्राह्मणः नगरीरक्षिणो भुंक्ते श्वपचप्रवणो भवेत्‌ १८ गोघ्ने च ब्रा
ह्मणघ्ने च सुरापे गुरुतल्पगे भुक्त्वान्नं जायते विप्रो रक्षसां कुलवर्धनः १९ न्यासापहारिणो भुक्त्वा कृतघ्ने क्लीबवर्तिनि जायते शबरावा-
से मध्यदेशबहिष्कृते २० अभोज्याश्चैव भोज्याश्च मया प्रोक्ता यथाविधि किमन्यदद्य कौंतेय मत्तस्त्वं श्रोतुमिच्छसि २१ इति श्रीमहा
भारते आनुशासनिके पर्वणि दानधर्मे भोज्याभोज्यान्नकथनं नाम शतोपरि पंचत्रिंशोऽध्यायः १३५ युधिष्ठिर उवाच उक्तास्तु भ
वता भोज्यास्तथाऽभोज्याश्च सर्वशः अत्र मे प्रश्नसंदेहस्तन्मे वद पितामह १ ब्राह्मणानां विशेषेण हव्यकव्यप्रतिग्रहे नानाविधेषु भो
ज्येषु प्रायश्चित्तानि शंस मे २ भीष्म उवाच हंत वक्ष्यामि ते राजन्ब्राह्मणानां महात्मनाम्‌ प्रतिग्रहेषु भोज्ये च मुच्यते येन पाप्मनः
३ घृतप्रतिग्रहे चैव सावित्री समिदाहुतिः तिलप्रतिग्रहे चैव सममेतद्युधिष्ठिर ४ मांसप्रतिग्रहे चैव मधुनो लवणस्य च आदित्योदयनं
स्थित्वा पूतो भवति ब्राह्मणः ५ कांचनं प्रतिगृह्याथ जपमानो गुरुश्रुतिम्‌ कृष्णायसं च विवृतं धारयन्मुच्यते द्विजः ६ एवं प्रतिगृहीतेऽथ ध
ने वस्त्रे तथा स्त्रियाम्‌ एवमेव नरश्रेष्ठ सुवर्णस्य प्रतिग्रहे ७ अन्नप्रतिग्रहे चैव पायसेक्षुरसे तथा इक्षुतैलपवित्राणां त्रिसंध्ये-
ऽप्सु निमज्जनम्‌ ८ व्रीहौ पुष्पे फले चैव जले पिष्टमये तथा यावके दधिदुग्धे च सावित्रीं शतशोन्विताम्‌ ९ उपानहौ च छत्रं च
प्रतिगृह्यौर्ध्वदैहिके जपेच्छतं समायुक्तस्तेन मुच्येत पाप्मना १० क्षेत्रप्रतिग्रहे चैव ग्रहसूतकयोस्तथा त्रीणि रात्र्याण्युपोषित्वा
तेन पापाद्विमुच्यते ११ कृष्णपक्षे तु यः श्राद्धं पितॄणामश्नुते द्विजः अन्नमेतदहोरात्रात्पूतो भवति ब्राह्मणः १२ न च संध्यामुपा
सीत न च जाप्यं प्रवर्तयेत्‌ न संकिरेत्तदन्नं च ततः पूयेत ब्राह्मणः १३

रस्थाशौचवतोः ११ १२ न च संध्यामुपासीतेत्यत्र अस्नात इति शेषः न संकिरेदिति पुनर्भोजनं न कुर्यादित्यर्थः १३ ७ ७ ७

अभ्यीप्सुरित्यर्थमिति संबंधः अपराह्णे इक्ष्वाद्यैधाश्सम्यगन्नमश्नन्निन्त्यर्थः केतिताः निमन्त्रिता. १४ हविः अन्नं १५ १६ दशरात्रेण दशरात्रावधि मृतस्यान्नतः ग
वमेव प्रायश्चित्तानीत्यर्थः सावित्रीं जपन् रैवतीमिष्टिं पवित्रेष्टिं कूष्माण्डं यद्देवा देवहेडनकृतमित्यनुवाकपञ्चकं अघमर्षणं जले मज्जंश्च दशप्रणवसं
युक्तगायत्र्याः ऋतं चेति तृचस्य वा जपः प्रायश्चित्तानीति बहुवचनात्सर्वेषां समुच्चयः १७ १८ १९ २० आशौचशौचमात्रं प्रायश्चित्तमेव २१ २२

इत्यर्थमपराह्णे तु पितॄणां श्राद्धमुच्यते यथोक्तानां यदश्नीयुर्ब्राह्मणाः पूर्वकेतिताः १४ मृतकस्य तृतीयाहे ब्राह्मणो योऽन्नमश्नुते सत्रि
वेलं स समुन्मज्य द्वादशाहेन शुध्यति १५ द्वादशाहे व्यतीते तु कृतशौचो विशेषतः ब्राह्मणेभ्यो हविर्दत्त्वा मुच्यते तेन पाप्मना १६ मृतस्य द
शरात्रेण प्रायश्चित्तानि दापयेत् सावित्रीं रैवतीमिष्टिं कूष्माण्डमघमर्षणम् १७ मृतकस्य त्रिरात्रे यः समुद्दिष्टे समश्नुते सप्तत्रिषवणं स्नात्वा पू
तो भवति ब्राह्मणः १८ सिद्धिमाप्नोति विपुलामापदं चैव नाप्नुयात् १९ यस्तु शूद्रैः समश्नीयाद्ब्राह्मणोऽप्येकभोजने आशौचं विधिवत्तस्य शौ
चमात्रं विधीयते २० यस्तु वैश्यैः सहाश्नीयाद्ब्राह्मणोऽप्येकभोजने स वै त्रिरात्रं दीक्षित्वा मुच्यते तेन कर्मणा २१ क्षत्रियैः सह योऽश्नीयाद्ब्रा
ह्मणोऽप्येकभोजने आप्लुतः सह वासोभिस्तेन मुच्येत पाप्मना २२ शूद्रस्य तु कुलं हन्ति वैश्यस्य पशुबान्धवान् क्षत्रियस्य श्रियं हन्ति ब्राह्मणस्य
सुवर्चसम् २३ प्रायश्चित्तं च शान्तिं च जुहुयात्तेन मुच्यते सावित्रीं रैवतीमिष्टिं कूष्माण्डमघमर्षणम् २४ अथोच्छिष्टमथान्योन्यं समाशन्ना
त्यसंशयः रोचनां विरजां रात्रिं मङ्गलालम्भनानि च २५ इति श्रीमहाभारते आनुशासनिके पर्वणि दानधर्मे प्रायश्चित्तविधिर्नाम शतोप
रिषट्त्रिंशोऽध्यायः १३६ युधिष्ठिर उवाच दानेन वर्तते त्याह तपसा चैव भारत तदेतन्मे मनो दुःखं व्यपोह त्वं पितामह १ किंस्वित्पृ
थिव्यां ह्येतन्मे भवान्शंसितुमर्हति भीष्म उवाच शृणु यैर्धर्मनिरतैस्तपसा भावितात्मभिः लोका ह्यसंशयं प्राप्ता दानपुण्यरतैर्नृपैः
२ सत्कृतश्च तथात्रेयः शिष्येभ्यो ब्रह्म निर्गुणम् उपदिश्य तदा राजन्गतो लोकाननुत्तमान् ३ शिबिरौशीनरः प्राणान्प्रियस्य तनयस्य च
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ४ प्रतर्दनः काशिपतिः प्रदाय तनयं स्वकम् ब्राह्मणायातुलां कीर्तिमिह चामुत्र चाश्नुते ५ रन्तिदे
वश्च सांकृत्यो वसिष्ठाय महात्मने अर्घ्यं प्रदाय विधिवल्लेभे लोकाननुत्तमान् ६ दिव्यं शतशलाकं च यज्ञार्थं काञ्चनं शुभम् छत्रं देवावृधो द
त्त्वा ब्राह्मणायास्थितो दिवम् ७

विरजा दूर्वा रात्रिर्हरिद्रा तिलश्च २५ इति आनुशासनिके पर्वणि टीकायां शतोपरिषट्त्रिंशोऽध्यायः १३६ दानेन वर्तते
मध्ये पृथिव्यां कः श्रेष्ठ इति दानेनेति सार्द्धेनाह वर्तते स्वर्गे इति शेषः तयोर्दानमेव प्रशस्तमिति पृथिव्यामित्यादिना १ २ ३ ४ ५ ६ ७ ७

८ सावित्रःकर्णः ९ १० ११ मनसोमनःसंकल्पादप्यधिकान् १२ देवराट्भूदेवोपमिन्द्रः १३ १४ न्यासंदानरूपेणस्थापनम् १५ १६ अनुज्ञाप्यदत्त्वा १७

भगवानंबरीषश्चब्राह्मणायामितौजसे प्रदायसकलंराष्ट्रंसुरलोकमवाप्तवान् ८ सावित्रःकुंडलेदिव्येयानंचजनमेजयः ब्राह्मणाय
चगादत्त्वागतोलोकाननुत्तमान् ९ वृषादर्भिश्चराजर्षीरत्नानिविविधानिच रम्यांश्चावसथान्दत्त्वाद्विजेभ्योदिवमागतः १० निमीराष्ट्रंच
वैदर्भिःकन्यांदत्त्वामहात्मने अगस्त्यायगतःस्वर्गंसपुत्रपशुबांधवः ११ जामदग्न्यश्चविप्रायभूमिंदत्त्वामहायशाः रामोक्षयांस्तथालोका
ञ्जगाममनसोधिकान् १२ अवर्षतिचपर्जन्येसर्वभूतानिदेवराट् वसिष्ठोजीवयामासयेनयातोक्षयांगतिम् १३ रामोदाशरथिश्चैवहुत्वा
यज्ञेषुवैवसु सगतोक्षयान्लोकान्यस्यलोकेमहद्यशः १४ कक्षसेनश्चराजर्षिर्वसिष्ठायमहात्मने न्यासंयथावत्संन्यस्यजगामसुम-
हायशाः १५ करंधमस्यपौत्रस्तुमरुत्तोविक्षितःसुतः कन्यामांगिरसेदत्त्वादिवमाशुजगामसः १६ ब्रह्मदत्तश्चपांचाल्योराजाधर्मभृतांव
रः निधिंशंखमनुज्ञाप्यजगामपरमांगतिम् १७ राजामित्रसहश्चैववसिष्ठायमहात्मने मदयंतींप्रियांभार्यांदत्त्वाचत्रिदिवंगतः १८ म
नोःपुत्रश्चसुद्युम्नोलिखितायमहात्मने दंडमुद्धृत्यधर्मेणगतोलोकाननुत्तमान् १९ सहस्रचित्योराजर्षिःप्राणानिष्टान्महायशाः ब्राह्म
णार्थेपरित्यज्यगतोलोकाननुत्तमान् २० सर्वकामैश्चसंपूर्णंदत्त्वावेश्महिरण्मयम् मौद्गल्यायगतःस्वर्गंशतद्युम्नोमहीपतिः २१ भक्ष्य
भोज्यस्यचकृतान्राशयःपर्वतोपमान् शांडिल्यायपुरादत्त्वासुमन्युर्दिवमास्थितः २२ नाम्नाचद्युतिमान्नामशाल्वराजोमहाद्युतिः दत्त्वा
राज्यमृचीकायगतोलोकाननुत्तमान् २३ मदिराश्वश्चराजर्षिर्दत्त्वाकन्यांसुमध्यमाम् हिरण्यहस्तायगतोलोकान्देवैरधिष्ठितान् २४ लो
मपादश्चराजर्षिःशांतांदत्त्वासुतांप्रभुः ऋष्यशृंगायविपुलैःसर्वैःकामैरयुज्यत २५ कौत्सायदत्त्वाकन्यांतुहंसींनामयशस्विनीम् गतो
क्षयानतोलोकान्राजर्षिश्चभगीरथः २६ दत्त्वाशतसहस्रंतुगवांराजाभगीरथः सवत्सानांकोहलायगतोलोकाननुत्तमान् २७ एतेचा
न्येचबहवोदानेनतपसाचह युधिष्ठिरगताःस्वर्गंनिवर्तंतेपुनःपुनः २८ तेषांप्रतिष्ठिताकीर्तिर्यावत्स्थास्यतिमेदिनी गृहस्थैर्दानतपसा
यैर्लोकावैविनिर्जिताः २९ शिष्टानांचरितंह्येतत्कीर्तितंमेयुधिष्ठिर दानयज्ञप्रजासर्गैरेतेहिदिवमास्थिताः ३० दत्त्वातुसततंतेस्मिन्कौर
वाणांधुरंधर दानयज्ञक्रियायुक्ताबुद्धिर्धर्मोपचायिनी ३१ यत्रतेनृपशार्दूलसंदेहोवैभविष्यति श्वःप्रभातेहिवक्ष्यामिसंध्याहिसमुपस्थि
ता ३२

१८ दंडंचोरयोग्यंहस्तच्छेदरूपं १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ७.

इतिआनुशासनिकेपर्वणिटीकायांशतोपरिसप्तत्रिंशोऽध्यायः १३७ १ २ ३ ४ ५ धर्मादृनव्याचष्टेइहेति ६ अथार्थिनस्यलक्षणमाहददातीति ७
८ ९ १० ११ इतिआनुशासनिकेपर्वणिटीकायांशतेपरि अष्टत्रिंशोऽध्यायः १३८ पितामहेत्यध्यायद्वयस्पष्टार्थं तस्यतात्पर्यंगरुडगवप्रभुः पर्वतस्यदाहरू उ

इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेशतोपरिसप्तत्रिंशोऽध्यायः १३७ युधिष्ठिरउवाच श्रुतंमेभवतस्तातसत्यव्रतपरा
क्रम दानधर्मेणमहतायेप्रमास्त्रिदिवंनृपाः १ इमांस्तुश्रोतुमिच्छामिधर्मान्धर्मभृतांवर दानंकतिविधंदेयंकिंतस्यचफलंलभेत् २ क-
थंकेभ्यश्चधर्म्यंचदानंदातव्यमिष्यते कैःकारणैःकतिविधंश्रोतुमिच्छामितत्त्वतः ३ भीष्मउवाच शृणुतत्त्वेनकौंतेयदानंप्रतिममा
नघ यथादानंप्रदातव्यंसर्ववर्णेषुभारत ४ धर्मादर्थाद्भयात्कामात्कारुण्यादितिभारत दानंपंचविधंज्ञेयंकारणैर्यैर्निबोधतत् ५
इहकीर्तिमवाप्नोतिप्रेत्यचानुत्तमंसुखम् इतिदानंप्रदातव्यंब्राह्मणेभ्योनसूयता ६ ददातिवादास्यतिवामह्यंदत्तमनेनवा इत्यर्थिभ्यो
निशम्यैवसर्वंदातव्यमर्थिने ७ नास्याहंनमदीयोयंपापंकुर्याद्विमानितः इतिदद्याद्भयादेवदृढमूढायपंडितः ८ प्रियोमेयंप्रियोस्या
हंममेतिसंप्रेक्ष्यबुद्धिमान् वयस्यायैवमक्लिष्टंदानंदद्यादतंद्रितः ९ दीनश्चयाचतेयाच्यमल्पेनापिहितुष्यति इतिदद्याद्दरिद्रायकारु
ण्यादितिसर्वथा १० इतिपंचविधंदानंपुण्यकीर्तिविवर्द्धनम् यथाशक्त्याप्रदातव्यमेवमाहप्रजापतिः ११ इतिश्रीमहाभारते
आनुशासनिकेपर्वणिदानधर्मेशतोपरिअष्टत्रिंशोऽध्यायः १३८ युधिष्ठिरउवाच पितामहमहाप्राज्ञसर्वशास्त्रविशारद
आगमैर्बहुभिःस्फीतोभवान्नःप्रवरेकुले १ त्वत्तोधर्मार्थसंयुक्तमायत्यांचसुखोदयम् आश्चर्यभूतंलोकस्यश्रोतुमिच्छाम्यरिंदम
२ अयंचकालःसंप्राप्तोदुर्लभोज्ञातिबांधवैः शास्ताचनहिनःकश्चित्त्वामृतेपुरुषर्षभ ३ यदितेहमनुग्राह्योभ्रातृभिःसहितोनघ व
क्तुमर्हसिनःप्रश्नंयत्त्वापृच्छामिपार्थिव ४ अयंनारायणःश्रीमान्सर्वपार्थिवसत्तमः भवंतंबहुमानेनप्रश्रयेणचसेवते ५ अस्यचैव
समक्षंत्वंपार्थिवानांचसर्वशः भ्रातृणांचप्रियार्थंमेस्नेहाद्भाषितुमर्हसि ६ वैशंपायनउवाच तस्यतद्वचनंश्रुत्वास्नेहादागतसं-
भ्रमः भीष्मोभागीरथीपुत्रइदंवचनमब्रवीत् ७ भीष्मउवाच अहंतेकथयिष्यामिकथामतिमनोहराम् अस्यविष्णोःपुराराजन्प्र
भावोयोमयाश्रुतः ८

छासकश्चसगववैष्णवैर्विष्णुरित्यभिगतःपूर्वाध्याये माहेश्वरैर्महेश्वरइत्युत्तराध्याये अत्रैवनेत्रसंमीलनेदेवैस्त्वयावाल्याद-
निर्दिते नष्टाल्लोकस्तदालोकक्षणेनसमपद्यतेतिमहेश्वरवचनेनशिवमूर्तेर्ब्रह्मांडस्यचाभेदोदर्शितः १ २ ३ ४ ५ ६ ७ ८

यश्चगोवृषभांकस्यप्रभावस्तंचमेशृणु रुद्राण्याःसंशयोयश्चदंपत्योस्तंचमेशृणु ९ व्रतंचचारधर्मात्माकृष्णोद्वादशवार्षिकम् दीक्षि
तंचागतौद्रष्टुंमुनीनारदपर्वतौ १० कृष्णद्वैपायनश्चैवधौम्यश्चजपतांवरः देवलःकाश्यपश्चैवहस्तिकाश्यपएवच ११ अपरेचऋषयः
सन्तोदीक्षादमसमन्विताः शिष्यैरनुगताःसिद्धैर्देवकल्पैस्तपोधनैः १२ तेषामतिथिसत्कारमर्चनीयंकुलोचितम् देवकीतनयःप्रीतोदे
वकल्पमकल्पयत् १३ हरितेषुसुवर्णेषुबर्हिष्केषुनवेषुच उपोपविविशुःप्रीताविष्टरेषुमहर्षयः १४ कथाश्चक्रुस्ततस्तेतुमधुराधर्मसंहिताः
राजर्षीणांसुराणांचयेवसन्तितपोधनाः १५ ततोनारायणंतेजोव्रतचर्येन्धनोत्थितम् वक्त्रान्निःसृत्यकृष्णस्यवह्निरद्भुतकर्मणः १६ सोऽग्नि
र्ददाहतंशैलंसद्रुमंसलताक्षुपम् सपक्षिमृगसंघातंसश्वापदसरीसृपम् १७ मृगैश्चविविधाकारैर्हाहाभूतमचेतनम् शिखरंतस्यशैल
स्यमथितंदीनदर्शनम् १८ सतुवह्निर्महाज्वालोदग्ध्वासर्वमशेषतः विष्णोःसमीपमागम्यपादौशिष्यवदस्पृशत् १९ ततोविष्णुर्गिरिंदृष्ट्वा
निर्दग्धमरिकर्शनः सौम्यैर्दृष्टिनिपातैस्तंपुनःप्रकृतिमानयत् २० तथैवसगिरिर्भूयःप्रपुष्पितलताद्रुमः सपक्षिगणसंघुष्टःसश्वापदसरी-
सृपः २१ तमद्भुतमचिन्त्यंचदृष्ट्वामुनिगणस्तदा विस्मितोहृष्टरोमाचबभूवास्राविलेक्षणः २२ ततोनारायणोदृष्ट्वातानृषीन्विस्मयान्विता
न् प्रश्रितंमधुरंस्निग्धंपप्रच्छवदतांवरः २३ किमर्थमृषिपूगस्यत्यक्तसंगस्यनित्यशः निर्ममस्यागमवतोविस्मयःसमुपागमत् २४ एत-
न्मेसंशयंसर्वंयाथातथ्यमनिन्दिताः ऋषयोवक्तुमर्हन्तिनिश्चितार्थंतपोधनाः २५ ऋषयऊचुः भवान्विसृजतेलोकान् भवान्संहरतेपुनः
भवान्शीतंभवानुष्णंभवानेवचवर्षति २६ पृथिव्यांयानिभूतानिस्थावराणिचराणिच तेषांपितात्वंमातात्वंप्रभुःप्रभवएवच २७ एवंनो
विस्मयकरंसंशयंमधुसूदन त्वमेवार्हसिकल्याणवक्तुंवह्नेर्विनिर्गमम् २८ ततोविगतसंत्रासावयमप्यरिकर्शन यच्छ्रुतंयच्चदृष्टंनस्तत्प्रव-
क्ष्यामहेहरे २९ वासुदेवउवाच एतद्वैष्णवंतेजोममवक्त्राद्विनिःसृतम् कृष्णवर्त्मायुगान्ताभोयेनायंमथितोगिरिः ३० ऋषयश्चा
र्तिमापन्नाजितक्रोधाजितेन्द्रियाः भवन्तोव्यथिताश्चासन्देवकल्पास्तपोधनाः ३१ व्रतचर्यापरीतस्यतपस्विव्रतसेवया ममवह्निःसमुद्भू
तोनवैव्यथितुमर्हथ ३२ व्रतंचर्तुमिहायातस्त्वहंगिरिमिमंशुभम् पुत्रंचात्मसमंवीर्येतपसालब्धुमागतः ३३

ततोममात्मायोदेहेसोऽग्निर्मूत्वाधिनिःसृतः गतश्चवरदंद्रष्टुंसर्वलोकपितामहम् ३४ तेनचात्मानुशिष्टोमेपुत्रत्वेमुनिसत्तमाः तेजसोऽर्थेनपु
त्रस्तेभवितेतिवृषध्वजः ३५ सोऽयंवन्हिमुपागम्यपादमूलेममांतिकम् शिष्यवत्परिचर्यार्थंशांतःप्रकृतिमागतः एतदेवरहस्यंवःपद्मना
भस्यधीमतः मयाप्रोक्तंसमासेननभीःकार्यातपोधनाः ३७ सर्वत्रगतिरव्ययाभवतांदीर्घदर्शनात् तपस्विव्रतसंदीप्ताज्ञानविज्ञानशो
भिताः ३८ यच्छ्रुतंयच्चवोदृष्टंदिविवायदिवाभुवि आश्चर्यंपरमंकिंचित्तद्भवंतोब्रुवंतुमे ३९ तस्यामृतनिकाशस्यवाङ्मधोरस्तिमेस्पृ
हा भवद्भिःकथितस्येहतपोवननिवासिभिः ४० यद्यथेहमदृष्टंवोदिव्यमद्भुतदर्शनम् दिविवाभुविवाकिंचित्पश्याम्यमरदर्शनाः ४१
प्रकृतिःसाममधरानक्वचित्प्रतिहन्यते नचात्मागतमैश्वर्यमाश्चर्यंप्रतिभातिमे ४२ श्रद्धेयःकथितोह्यर्थःसज्जनश्रवणंगतः चिरंति
ष्ठतिमेदिन्यांशैलेलेख्यमिवार्पितम् ४३ तदहंसज्जनमुखान्निःसृतंतत्समागमम् कथयिष्याम्यहमहोबुद्धिदीपकरंनृणाम् ४४ ततो
मुनिगणाःसर्वेविस्मिताःकृष्णसन्निधौ नेत्रैःपद्मदलप्रख्यैरपश्यंस्तंजनार्दनम् ४५ वर्धयंतस्तथैवान्येपूजयंतस्तथापरे वाग्भिर्ऋ
ग्भूषितार्थाभिःस्तुवंतोमधुसूदनम् ४६ ततोमुनिगणाःसर्वेनारदंदेवदर्शनम् तदानियोजयामासुर्वचनेवाक्यकोविदम् ४७
मुनयऊचुः यदाश्चर्यमचिंत्यंचगिरौहिमवतिप्रभो अनुभूतंमुनिगणैस्तीर्थयात्रापरैर्मुने ४८ तद्भवान्नृषिसंघस्यहितार्थंसर्वमादितः
यथादृष्टंहृषीकेशेसर्वमाख्यातुमर्हसि ४९ एवमुक्तःसमुनिभिर्नारदोभगवान्मुनिः कथयामासदेवर्षिःपूर्ववृत्तामिमांकथाम् ५०
इतिश्रीमहाभारते आनुशासनिकेपर्वणिदानधर्मेशततोपरिऊनचत्वारिंशोऽध्यायः १३९ भीष्मउवाच ततोनारायणसुहृन्ना
रदोभगवान्नृषिः शंकरस्योमयासार्धंसंवादंप्रत्यभाषत १ नारदउवाच तपश्चचारधर्मात्मावृषभांकःसुरेश्वरः पुण्येगिरौ
हिमवतिसिद्धचारणसेविते २ नानौषधियुतेरम्येनानापुष्पसमाकुले अप्सरोगणसंकीर्णेभूतसंघनिषेविते ३ तत्रदेवोमुदायुक्तो
भूतसंघशतैर्वृतः नानारूपैर्विरूपैश्चदिव्यैरद्भुतदर्शनैः ४ सिंहव्याघ्रगजप्रख्यैःसर्वजातिसमन्वितैः क्रोष्टुकद्वीपिवदनैरृक्षर्षभ
मुखैस्तथा ५ उलूकवदनैर्भीमैर्वृकश्येनमुखैस्तथा नानावर्णैर्मृगमुखैःसर्वजातिसमन्वितैः ६ किंनरैर्यक्षगंधर्वैरक्षोभूतगणैस्त-
था दिव्यपुष्पसमाकीर्णंदिव्यज्वालासमाकुलम् ७ दिव्यचंदनसंयुक्तंदिव्यधूपेनधूपितम् तत्सदोवृषभांकस्यदिव्यवादित्रनादितम् ८

मृदंगपणवोतघुष्टंशंखभेरीनिनादितम् नृत्यद्भिर्भूतसंघैश्च बर्हिणैश्चसमंततः ९ प्रनृत्ताप्सरसंदिव्यंदेवर्षिगणसेवितम् दृष्टिकांत
मनिर्देश्यंदिव्यमद्भुतदर्शनम् १० सगिरिस्तपसातस्यगिरिशस्यव्यरोचत स्वाध्यायपरमैर्विप्रैर्ब्रह्मघोषोनिनादितः ११ षट्पदैरुप-
गीतैश्चमाधवाप्रतिमोगिरिः तन्महोत्सवसंकाशंभीमरूपधरंततः १२ दृष्ट्वामुनिगणस्यासीत्पराप्रीतिजनार्दन मुनयश्चमहाभागाःसि
द्धाश्चैवोर्ध्वरेतसः १३ मरुतोवसवःसाध्याविश्वेदेवाःसवासवाः यक्षानागाःपिशाचाश्चलोकपालाहुताशनाः १४ वाताःसर्वेमहाभू
तास्तत्रैवासन्समागताः ऋतवःसर्वपुष्पैश्चव्यकिरंतमहाद्भुतैः १५ ओषध्योज्वलमानाश्चद्योतयंतिस्मतद्वनम् विहंगाश्चमुदायुक्ताः
प्रानृत्यन्व्यनदंश्चह १६ गिरिपृष्ठेषुरम्येषुव्याहरंतोजनप्रियाः तत्रदेवोगिरितटेदिव्यधातुविभूषिते १७ पर्यंकइवविभ्राजन्नुपवि
ष्टोमहामनाः व्याघ्रचर्मांबरधरःसिंहचर्मोत्तरच्छदः १८ व्यालयज्ञोपवीतीचलोहितांगदभूषणः हरिश्मश्रुर्जटीभीमोभयकर्त्तासु
रद्विषाम् १९ अभयःसर्वभूतानांभक्तानांवृषभध्वजः दृष्ट्वामहर्षयःसर्वेशिरोभिरवनिंगताः २० विमुक्ताःसर्वपापेभ्यःक्षांताविगत
कल्मषाः तस्यभूतपतेःस्थानंभीमरूपधरंबभौ २१ अप्रधृष्यतरंचैवमहोरगसमाकुलम् क्षणेनैवाभवत्सर्वमद्भुतंमधुसूदन
२२ तत्सदोवृषभांकस्यभीमरूपधरंबभौ तमभ्ययाच्छैलसुताभूतस्त्रीगणसंवृता २३ हरतुल्यांबरधरासमानव्रतधारिणी बि
भ्रतीकलशंरौक्मंसर्वतीर्थजलोद्भवम् २४ गिरिस्रवाभिःसर्वाभिःपृष्ठतोनुगताशुभा पुष्पवृष्ट्याभिवर्षंतीगंधैर्बहुविधैस्तथा सेवंती
हिमवत्पार्श्वेहरपार्श्वमुपागमत् २५ ततःस्मयंतीपाणिभ्यांनर्मार्थंचारुहासिनी हरनेत्रेशुभेदेवीसहसासासमावृणोत् २६ संवृता
भ्यांतुनेत्राभ्यांतमोभूतमचेतनं निर्होमंनिर्वषट्कारंजगद्वैसहसाभवत् २७ जनश्चविमनाःसर्वोभयत्राससमन्वितः निमीलितेभू
तपतौनष्टसूर्यइवाभवत् २८ ततोवितिमिरोलोकःक्षणेनसमपद्यत ज्वालाचमहतीदीप्राल्ललाटात्तस्यनिःसृता २९ तृतीयंचास्य
संभूतंनेत्रमादित्यसन्निभम् युगांतसदृशंदीप्तंयेनासौमथितोगिरिः ३० ततोगिरिसुतादृष्ट्वादीप्ताग्निसदृशेक्षणम् हरंप्रणम्यशिर
सादर्शायतलोचना ३१ दह्यमानेतटेतस्मिन्ससालसरलद्रुमे सचंदनवनेरम्येदिव्यौषधिविदीपिते ३२ मृगयूथैर्द्रुतैर्भीतैर्हरपा-
र्श्वमुपागतैः शरणंचाप्यविदद्भिस्तत्सदःसंकुलंबभौ ३३ ततोनभस्पृशज्ज्वालोविद्युल्लोलाग्निरुल्बणः द्वादशादित्यसदृशोयुगांता
ग्निरिवापरः ३४

क्षणेनतेननिर्दग्धोहिमवानभवन्नगः सधातुशिखराभोगोदीनदग्धलतौषधिः ३५ तंदृष्ट्वामथितंशैलंशैलराजसुताततः भगवंतंप्रप-
न्नावैसांजलिःप्रग्रहास्थिता ३६ उमाशर्वस्तदादृष्ट्वास्त्रीभावगतमार्दवाम् पितुर्दैन्यमनिच्छंतींप्रीत्यापश्यत्तदागिरिम् ३७ क्षणेनहिम
वान्सर्वःप्रकृतिस्थःसुदर्शनः प्रहृष्टविहगश्चैवसुपुष्पितवनद्रुमः ३८ प्रकृतिस्थंगिरिंदृष्ट्वाप्रीतादेवंमहेश्वरम् उवाचसर्वलोकानांपतिं
शिवमनिंदिता ३९ उमोवाच भगवन्सर्वभूतेशशूलपाणेमहाव्रत संशयोमेमहाञ्जातस्तन्मेव्याख्यातुमर्हसि ४० किमर्थंतेललला
टेवैतृतीयंनेत्रमुत्थितम् किमर्थंचगिरिर्दग्धःसपक्षिगणकाननः ४१ किमर्थंचपुनर्देवप्रकृतिस्थस्त्वयाकृतः तथैवद्रुमसंच्छन्नःकृ
तोयंतेपितामम ४२ महेश्वरउवाच नेत्रेमेसंवृतेदेवित्वयाबाल्यादनिंदिते नष्टालोकस्तदालोकःक्षणेनसमपद्यत ४३ नष्टा-
दित्येतथालोकेतमोभूतेनगात्मजे तृतीयंलोचनंदीप्तंसृष्टंमेरक्षताप्रजाः ४४ तस्यचाक्ष्णोमहत्तेजोयेनायंमथितोगिरिः त्वत्प्रियार्थं
चमेदेविप्रकृतिस्थःपुनःकृतः ४५ उमोवाच भगवन्केनतेवक्त्रंचंद्रवत्प्रियदर्शनम् पूर्वंतथैवश्रीकांतमुत्तरंपश्चिमंतथा ४६
दक्षिणंचमुखंरौद्रंकेनोर्ध्वंकपिलाजटाः केनकंठश्चतेनीलोबर्हिबर्हनिभःकृतः ४७ हस्तेदेवपिनाकंतेसततंकेनतिष्ठति जटिलोब्र
ह्मचारीचकिमर्थमसिनित्यदा ४८ एतन्मेसंशयंसर्वंवक्तुमर्हसिवैप्रभो सधर्मचारिणीचाहंभक्ताचेतिवृषध्वज ४९ भीष्मउवाच
एवमुक्तःसभगवाञ्छैलपुत्र्यापिनाकधृक् तस्याधृत्याचबुध्याचप्रीतिमानभवत्प्रभुः ५० ततस्तामब्रवीद्देवःसुभगेश्रूयतामिति हेतुभि
र्यैर्ममैतानिरूपाणिरुचिरानने ५१ इतिश्रीम० आनु० दानधर्मेउमामहेश्वरसंवादोनामशततोपरिचत्वारिंशोऽध्यायः १४० श्रीभ
गवानुवाच तिलोत्तमानामपुराब्रह्मणायोषिदुत्तमा तिलंतिलंसमुद्धृत्यरत्नानांनिर्मिताशुभा १ साभ्यगच्छतमांदेविरूपेणाप्र-
तिमाभुवि प्रदक्षिणंलोभयंतीमांशुभेरुचिरानना २ यतोयतःसासुदतीमामुपाधावदंतिके ततस्ततोमुखंचारुममदेविविनिर्ग-
तम् ३ तांदिदृक्षुरहंयोगाच्चतुर्मूर्तित्वमागतः चतुर्मुखश्चसंवृत्तोदर्शयन्योगमुत्तमम् ४ पूर्वेणवदनेनाहमिंद्रत्वमनुशास्मिह उ
त्तरेणत्वयासार्धंरमाम्यहमनिंदिते ५ पश्चिमंमेमुखंसौम्यंसर्वप्राणिसुखावहम् दक्षिणंभीमसंकाशंरौद्रंसंहरतिप्रजाः ६

एवंशंभोःकृष्णादन्यत्वंजगदात्मत्वंचोक्त्वाचतुर्मुखादनन्यत्वंचाहतिलोत्तमेत्यादिना १ २ ३ ४ पूर्वेणवदनेनेत्यादिनासकलदिक्पा
लान्नप्याहमेवैकः ५ ६ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७ ७

एवंभूतोपिस्वात्मभूतलोकरक्षार्थंवपआयुधचधारयामीत्याह जटिलइति ७ इंद्रेणेतिएवमहंदासानामतिक्रमंसोढ्वातन्नीत्त्यर्थंनीलकंठमपिधारयामीतिस्वस्यपर मकारुणिकत्वंचदर्शितम ८ ९ सुरभीमिति वाचंधेनुमुपासीततस्याश्चत्वारस्तनाःस्वाहाकारःस्वधाकारोहंतकारोवषट्कारइतिवाग्धेनोश्चतुर्भिःस्तनैःपुष्टो गोधर्मोगोवृषस्तस्यफलभूतंपरंवैराग्यविवेकादिकंफेनस्थानीयंयदायत्तोपगतंभवतितदावाग्धेनोःपारमार्थिकंप्रामाण्यमयतेव्यावहारिकमेवतन्नस्थाप्यते १० ११ सोयंगवाम् विवर्णभावःधर्मश्चएवंभूतस्यजीवन्मुक्तस्वरूपसूचकोध्वजइवतत्त्वविदिदृश्यतइतिप्रयत्नकार्यः १२ १३ १४ १५ पूर्वंमैत्रेयभिक्षायांवारा

जटिलोब्रह्मचारीचलोकानांहितकाम्यया देवकार्यार्थसिध्यर्थंपिनाकंमेकरेस्थितम् ७ इंद्रेणचपुरावज्रंक्षिप्तंश्रीकांक्षिणाममदग्ध्वाकं ठतुनद्यातंतेनश्रीकंठतामम ८ उमोवाच वाहनेषुत्रसर्वेषुश्रीमत्स्वन्येषुसत्तम कथंवृषभोदेववाहनत्वमुपागतः ९ म- हेश्वरउवाच सुरभीमसृजद्ब्रह्मादेवधेनुंपयोमुचम सासृष्टाबहुधाजातास्क्षरमाणापयोमृतम् १० तस्यावत्समुखोत्सृष्टःफेनो- मद्गात्रमागतः ततोदुग्धामयागावोनानावर्णत्वमागताः ११ ततोहंलोकगुरुणाशमनीतोर्थविदा वृषश्चैनध्वजार्थमेददौवाहनमे वच १२ उमोवाच निवासाबहुरूपास्तेदिविसर्वगुणान्विताः तांश्चसंत्यज्यभगवन्श्मशानेरमसेकथम् १३ केशास्थिकलि- लेभीमेकपालघटसंकुले गृध्रगोमायुबहुलेचिताग्निशतसंकुले १४ अशुचौमांसकलिलेवसाशोणितकर्दमे विकीर्णांत्रास्थिनिच येशिवानादविनादिते १५ महेश्वरउवाच मेध्यान्वेषीमहींकृत्स्नांविचराम्यनिशंसदा नचमेध्यतरंकिंचिच्छ्मशानादिहलक्ष्यते १६ तेनमेसर्ववासानांश्मशानेरमतेमनः न्यग्रोधशाखासंच्छन्नेनिर्भुग्नस्रग्विभूषिते १७ तत्रचैवरमंतीमेभूतसंघाःशुचिस्मिते न चभूतगणैर्देविविनाहंवस्तुमुत्सहे १८ एषवासोहिमेमेध्यःस्वर्गीयश्चमतःशुभे पुण्यःपरमकश्चैवमेध्यकामैरुपास्यते १९ उमोवाच भगवन्सर्वभूतेशसर्वधर्मविदांवर पिनाकपाणेवरदसंशयोमेमहानयम् २०

णस्यामज्ञातैर्मुमुक्षुभिर्वस्तव्यमितिव्यासवा क्येनसूचितम् अग्रेचकाश्यांशवदर्शनाच्छिवदर्शनंसंवर्तवासेनसूच्यते पूर्वत्रअल्पयाभिक्षयादत्तयामैत्रेयस्यानंतपुण्योत्पत्तिवचनेनवाराणस्याःपुण्यक्षेत्रत्व मुक्तं अग्रेचकाश्यांशवदर्शनाच्छिवदर्शनस्यान्यथासिद्धिसूचनेनामृतानांशरीरंशिवलिंगमयंभवतीतिअत्रपवित्रत्वेनतदेवप्रदृश्यतेमेध्यात्वेधीत्यादिनामेधायां धीवृत्तौअविदितंमेध्यंब्रह्मतत्प्राप्तिकामैःइदंश्मशानंउपास्यतइतिवचनान्नान्यत्श्मशानरुद्रावासइतिज्ञेयम् १६ १७ १८ १९ योगजधर्मवृषवारा णसीश्मशानंचसेवितुमशक्तानांतपआदिकंविधातुंभगवन्नित्यादिर्ग्रंथःप्रवर्तते २० ७ ७ ७ ७ ७ ७

तपस्तपोवेषः तपःसूचकोवेषः नखलोमजटाधारित्यादिः २१ २२ २३ २४ २५ २६ पंचविधः अहिंसादिविशिष्टोगार्हस्थ्यधर्मादिः धर्मस्यपुण्य

अयंमुनिगणःसर्वस्तपस्तेपइतिप्रभो तपोन्वेषकरोल्लोकेभ्रमतेविविधाकृतिः २१ अस्यचैवर्षिसंघस्यममचप्रियकाम्यया एतंममेह
संदेहंवक्तुमर्हस्यरिंदम २२ धर्मःकिंलक्षणःप्रोक्तःकथंवाचरितुंनरैः शक्योधर्ममविदद्भिर्धर्मज्ञवदमेप्रभो २३ नारदउवाच ततो
मुनिगणःसर्वस्तांदेवींप्रत्यपूजयत् वाग्भिर्ऋग्भूषितार्थाभिःस्तवैश्चार्थविशारदैः २४ महेश्वरउवाच अहिंसासत्यवचनंसर्वभू
तानुकंपनम् शमोदानंयथाशक्तिगार्हस्थ्योधर्मउत्तमः २५ परदारेष्वसंसर्गोन्यासस्त्रीपरिरक्षणम् अदत्तादानविरमोमधुमांसस्यवर्जन
म् २६ एषपंचविधोधर्मोबहुशाखःसुखोदयः देहिभिर्धर्मपरमैश्चर्तव्योधर्मसंभवः २७ उमोवाच भगवन्संशयःपृष्टस्तन्मेशंसितु
मर्हसि चातुर्वर्ण्यस्ययोधर्मःस्वेस्वेवर्णेगुणावहः २८ ब्राह्मणेकीदृशोधर्मःक्षत्रियेकीदृशोभवेत् वैश्येकिंलक्षणोधर्मःशूद्रेकिंलक्षणोभवे
त् २९ महेश्वरउवाच न्याय्यतस्तेमहाभागेसंशयःसमुदीरितः भूमिदेवामहाभागाःसदालोकेद्विजातयः ३० उपवासःसदाधर्मोब्रा
ह्मणस्यनसंशयः सहिधर्मार्थसंपन्नोब्रह्मभूयायकल्पते ३१ तस्यधर्मक्रियादेविब्रह्मचर्याचन्यायतः व्रतोपनयनंचैवद्विजोयेनोपपद्यते
३२ गुरुदैवतपूजार्थंस्वाध्यायाभ्यसनात्मकः देहिभिर्धर्मपरमैश्चर्तव्योधर्मसंभवः ३३ उमोवाच भगवन्संशयोमेत्रतन्मेव्याख्या
तुमर्हसि चातुर्वर्ण्यस्यधर्मंवैनैपुण्येनप्रकीर्तय ३४ महेश्वरउवाच रहस्यश्रवणंधर्मोवेदव्रतनिषेवणम् अग्निकार्यंतथाधर्मो
गुरुकार्यप्रसाधनम् ३५ भैक्षचर्यापरोधर्मोनित्ययज्ञोपवीतिना नित्यस्वाध्यायिताधर्मोब्रह्मचर्याश्रमस्तथा ३६ गुरुणाचाभ्यनुज्ञातः
समावर्तेततवैद्विजः विंदेतानंतरंभार्यामनुरूपांयथाविधि ३७ शूद्रान्नवर्जनंधर्मस्तथासत्पथसेवनम् धर्मोनित्योपवासित्वंब्रह्मचर्यंत
थैवच ३८ आहिताग्निरधीयानोजुह्वानःसंयतेंद्रियः विघसाशीयताहारोगृहस्थःसत्यवाक्शुचिः ३९ अतिथिव्रततताधर्मोधर्मस्त्रेताग्नि
धारणम् इष्टीश्चपशुबंधांश्चविधिपूर्वंसमाचरेत् ४० यज्ञश्चपरमोधर्मस्तथाहिंसाचदेहिषु अपूर्वभोजनंधर्मोविघसाशित्वमेवच ४१
भुक्तेपरिजनेपश्चाद्भोजनंधर्मउच्यते ब्राह्मणस्यगृहस्थस्यश्रोत्रियस्यविशेषतः ४२ दंपत्योःसमशीलत्वंधर्मःस्याद्गृहमेधिनः गृह्याणांचैव
वदेवानांनित्यपुष्पबलिक्रिया ४३

स्मरंमनोयोनिं २७ २८ २९ ३० उपवास इंद्रियजय ३१ ३२ ३३ ३४ ३५ ३६ ३७
३८ ३९ ४० अपूर्वभोजनंशाकभोजनंतदभावे.सकृद्भोजनमित्यर्थः ४१ ४२ ४३ ७. ७. ७. ७. ७. ७. ७.

शुभांगः शांतिदः स्रष्टा कुमुदः कुवलेशयः गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ७६ अनिवर्त्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतांवरः ७७ श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः श्रीधरः श्रीकरः श्रेयः श्रीमान्लोकत्र-
याश्रयः ७८ स्वक्षः स्वंगः शतानंदो नंदिर्ज्योतिर्गणेश्वरः विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ७९ उदीर्णः सर्वतश्चक्षुरनीशः
शाश्वतः स्थिरः भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ८० अर्चिष्मानर्चितः कुंभो विशुद्धात्मा विशोधनः अनिरुद्धोऽप्रतिरथः प्र
द्युम्नोऽमितविक्रमः ८१ कालनेमिनिहा वीरः शूरिः शौरिर्जनेश्वरः त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ८२ कामदेवः का
मपालः कामी कांतः कृतागमः अनिर्देश्यवपुर्विष्णुर्वीरोऽनंतो धनंजयः ८३ ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्द्धनः ब्रह्मविद्ब्रा
ह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ८४ महाक्रमो महाकर्मा महातेजा महोरगः महाक्रतुर्महायज्वा महायज्ञो महाहविः ८५ स्त-
व्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः पूर्णः पूरयिता पुण्यः पुण्यकीर्त्तिरनामयः ८६ मनोजवस्तीर्थकरो वसुरेता वसुप्रदः वसुप्र
दो वासुदेवो वसुर्वसुमना हविः ८७ सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ८८ भूता
वासो वासुदेवः सर्वासुनिलयोऽनलः दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ८९ विश्वमूर्त्तिर्महामूर्त्तिर्दीप्तमूर्त्तिरमूर्त्तिमान् अने
कमूर्त्तिरव्यक्तः शतमूर्त्तिः शताननः ९० एकोनैकः सवः कः किं यत्तत्पदमनुत्तमम् लोकबंधुर्लोकनाथो माधवो भक्तवत्सलः
९१ सुवर्णवर्णो हेमांगो वरांगश्चंदनांगदी वीरहा विषमः शून्यो घृताशीरचलश्चलः ९२ अमानी मानदो मान्यो लोकस्वामी-
त्रिलोकधृक् सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ९३ तेजोवृषो द्युतिधरः सर्वशस्त्रभृतांवरः प्रग्रहो निग्रहो व्यग्रो नैकशृंगो
गदाग्रजः ९४ चतुर्मूर्त्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ९५ समावर्त्तो निवृत्तात्मा दुर्जयो दुरति
क्रमः दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ९६ शुभांगो लोकसारंगः सुतंतुस्तंतुवर्द्धनः इंद्रकर्मा महाकर्मा कृतकर्मा कृतागमः
९७ उद्भवः सुंदरः सुंदो रत्ननाभः सुलोचनः अर्को वाजसनः शृंगी जयंतः सर्वविज्जयी ९८ सुवर्णबिंदुरक्षोभ्यः सर्ववागीश्वरेश्वरः
महाह्रदो महागर्त्तो महाभूतो महानिधिः ९९ कुमुदः कुंदरः कुंदः पर्जन्यः पावनोऽनिलः अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः १००

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः न्यग्रोधोदुंबरोश्वत्थश्चाणूरांध्रनिषूदनः १०१ सहस्रार्चिः सप्तजिव्हः सप्तैधाः सप्तवाहनः
अमूर्त्तिरनघोचिंत्योभयकृद्भयनाशनः २ अणुर्बृहत्कृशः स्थूलोगुणभृन्निर्गुणोमहान् अधृतः स्वधृतः स्वास्यः प्राग्वंशोवंशवर्द्धनः
३ भारभृत्कथितोयोगीयोगीशः सर्वकामदः आश्रमः श्रमणः क्षामः सुपर्णोवायुवाहनः ४ धनुर्द्धरोधनुर्वेदोदंडोदमयितादमः अ
पराजितः सर्वसहोनियंतानियमोयमः ५ सत्ववान्सात्विकः सत्यः सत्यधर्मपरायणः अभिप्रायः प्रियार्होर्हः प्रियकृत्प्रीतिवर्द्धनः ६
विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः रविर्विरोचनः सूर्यः सविता रविलोचनः ७ अनंतोहुतभुग्भोक्ता सुखदोनैकदोग्रजः अनि
र्विण्णः सदामर्षीलोकाधिष्ठानमद्भुतः ८ सनात्सनातनतमः कपिलः कपिरव्ययः स्वस्तिदः स्वस्तिकृत्स्वस्तिः स्वस्तिभुक्स्वस्तिदक्षि
णः ९ अरौद्रः कुंडलीचक्रीविक्रम्यूर्जितशासनः शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ११० अक्रूरः पेशलोदक्षोदक्षिणः क्षमि-
णांवरः विद्वत्तमोवीतभयः पुण्यश्रवणकीर्त्तनः ११ उत्तारणोदुष्कृतिहापुण्योदुःस्वप्ननाशनः वीरहारक्षणः संतोजीवनः पर्यवस्थितः
१२ अनंतरूपोनंतश्रीर्जितमन्युर्भयापहः चतुरस्रोगभीरात्माविदिशोव्यादिशोदिशः १३ अनादिर्भूर्भुवोलक्ष्मीः सुवीरोरुचिरांगदः
जननोजनजन्मादिर्भीमोभीमपराक्रमः १४ आधारनिलयोधाता पुष्पहासः प्रजागरः ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः १५
प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः तत्वंतत्वविदेकात्माजन्ममृत्युजरातिगः १६ भूर्भुवः स्वस्तरुस्तारः सविताप्रपितामहः यज्ञो
यज्ञपतिर्यज्वायज्ञांगोयज्ञवाहनः १७ यज्ञभृद्यज्ञकृद्यज्ञीयज्ञभुग्यज्ञसाधनः यज्ञांतकृद्यज्ञगुह्यमन्नमन्नादएवच १८ आत्म
योनिः स्वयंजातोवैखानः सामगायनः देवकीनंदनः स्रष्टाक्षितीशः पापनाशनः १९ शंखभृन्नंदकीचक्रीशार्ङ्गधन्वागदाधरः रथांग
पाणिरक्षोभ्यः सर्वप्रहरणायुधः ओन्नमइति १२० इतीदंकीर्त्तनीयस्यकेशवस्यमहात्मनः नाम्नांसहस्रंदिव्यानामशेषेणप्रकी
र्त्तितम् २१ यइदंशृणुयान्नित्यंयश्चापिपरिकीर्त्तयेत् नाशुभंप्राप्नुयात्किंचित्सोमुत्रेहचमानवः २२ वेदांतगोब्राह्मणस्यात्क्षत्रियो
विजयीभवेत् वैश्योधनसमृद्धःस्याच्छूद्रः सुखमवाप्नुयात् २३ धर्मार्थीप्राप्नुयाद्धर्ममर्थार्थीचार्थमाप्नुयात् कामानवाप्नुयात्कामी
प्रजार्थीप्राप्नुयात्प्रजाम् २४ भक्तिमान्यः सदोत्थायशुचिस्तद्गतमानसः सहस्रंवासुदेवस्यनाम्नामेतत्प्रकीर्त्तयेत् १२५

यशः प्राप्नोतिविपुलंज्ञातिप्राधान्यमेवच अचलांश्रियमाप्नोतिश्रेयःप्राप्नोत्यनुत्तमम् २६ नभयंक्वचिदाप्नोतिवीर्यंतेजश्चविंदति भव
त्यरोगोद्युतिमान्बलरूपगुणान्वितः २७ रोगार्त्तोमुच्यतेरोगाद्बद्धोमुच्येतबंधनात् भयान्मुच्येतभीतस्तुमुच्येदापन्नआपदः १२८ दु
र्गाण्यतितरत्याशुपुरुषःपुरुषोत्तमम् स्तुवन्नामसहस्रेणनित्यंभक्तिसमन्वितः १२९ वासुदेवाश्रयोमर्त्योवासुदेवपरायणः सर्व
पापविशुद्धात्मायातिब्रह्मसनातनम् १३० नवासुदेवभक्तानामशुभंविद्यतेक्वचित् जन्ममृत्युजराव्याधिभयंनैवोपजायते ३१
इमंस्तवमधीयानःश्रद्धाभक्तिसमन्वितः युज्येतात्मासुखक्षांतिःश्रीधृतिस्मृतिकीर्त्तिभिः ३२ नक्रोधोनचमात्सर्यंनलोभोनाशुभामतिः
भवंतिकृतपुण्यानांभक्तानांपुरुषोत्तमे ३३ द्यौःसचंद्रार्कनक्षत्राखंदिशोभूर्महोदधिः वासुदेवस्यवीर्येणविधृतानिमहात्मनः ३४
ससुरासुरगंधर्वंसयक्षोरगराक्षसम् जगद्वशेवर्त्ततेदंकृष्णस्यसचराचरम् १३५ इंद्रियाणिमनोबुद्धिःसत्वंतेजोबलंधृतिः वासुदे
वात्मकान्याहुःक्षेत्रंक्षेत्रज्ञमेवच ३६ सर्वागमानामाचारःप्रथमंपरिकल्पते आचारःप्रथमोधर्मोधर्मस्यप्रभुरच्युतः १३७ ऋ
षयःपितरोदेवामहाभूतानिधातवः जंगमाजंगमंचेदंजगन्नारायणोद्भवम् ३८ योगोज्ञानंतथासांख्यंविद्याशिल्पादिकर्मच वे
दाःशास्त्राणिविज्ञानमेतत्सर्वंजनार्दनात् १३९ एकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः त्रीन्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुग
व्ययः १४० इमंस्तवंभगवतोविष्णोर्व्यासेनकीर्त्तितम् पठेद्यइच्छेत्पुरुषःश्रेयःप्राप्तुंसुखानिच १४१ विश्वेश्वरमजंदेवंज
गतःप्रभवाप्ययम् भजंतियेपुष्कराक्षंनतेयांतिपराभवम् १४२ अर्जुनउवाच पद्मपत्रविशालाक्षपद्मनाभसुरोत्तम
भक्तानामनुरक्तानांत्राताभवजनार्दन १४३ श्रीभगवानुवाच योमांनामसहस्रेणस्तोतुमिच्छतिपांडव सोह
मेकेनश्लोकेनस्तुतएवनसंशयः १४४ नमोस्त्वनंतायसहस्रमूर्त्तयेसहस्रपादाक्षिशिरोरुबाहवे सहस्रनाम्नेपुरुषायशाश्व
तेसहस्रकोटीयुगधारिणेनमः १४५ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यांआनुशासनिकेपर्वणिदानधर्मे
विष्णुसहस्रनामरूपःशतोपरिएकोनचत्वारिंशोऽध्यायः १४९

श्रीगणेशायनमः अथगजेंद्रमोक्षप्रारंभः शतानीकउवाच मयाहिदेवदेवस्यविष्णोरमिततेजसः श्रुताःसंभूतयःसर्वागदतः
स्तवस्कृचत १ यदिप्रसन्नोभगवाननुग्राह्योस्मिवायदि तदहंश्रोतुमिच्छामिनृणांदुःस्वप्ननाशनम् २ स्वप्नादिषुमहाभागदृश्यंतेयेशु
भाशुभाः फलानिचप्रयच्छंतितद्गुणान्यवभार्गव ३ तादृक्पुण्यपवित्रंचनृणामतिशुभप्रदम् दुःस्वप्नोपशमनंतन्मेविस्तरतोवद ४
शौनकउवाच इदमेवमहाभागपृष्टवान्प्रपितामहम् भीष्मंधर्मभृतांश्रेष्ठंधर्मपुत्रोयुधिष्ठिरः ५ भीष्मउवाच जितंतेपुंडरीका
क्षनमस्तेविश्वभावन नमस्तेस्तुहृषीकेशमहापुरुषपूर्वज ६ आद्यंपुरुषमीशानंपुरुहूतंपुरातनम् ऋतमेकाक्षरंब्रह्मव्यक्ताव्यक्तंसनातन
नम् ७ असच्चासच्चयद्विश्वंनित्यंसदसतःपरम् परंपराणांपरमंपुराणंपरमव्ययम् ८ मंगल्यंमंगलंविष्णुंवरेण्यमनघंशुचिम् नमस्कृत्य
हृषीकेशंचराचरगुरुंहरिम् ९ प्रवक्ष्यामिमहापुण्यंकृष्णद्वैपायनस्यच येनोक्तेनश्रुतेनापिनश्यतेसर्वपातकम् १० नारायणसमोदेवोनभू
तोनभविष्यति एतेनसत्यवाक्येनसर्वार्थान्साधयाम्यहम् ११ किंतस्यबहुभिर्मंत्रैःकिंतस्यबहुभिर्व्रतैः नमोनारायणायेतिमंत्रःसर्वार्थसा
धकः १२ जज्ञेबहुज्ञंपरमत्युदारंयंद्वीपमध्येसुतमात्मवंतम् पराशराद्गंधवतीमहर्षेस्तस्मैनमोज्ञानतमोनुदाय १३ नमोभगवतेतस्मैव्या
सायामिततेजसे यस्यप्रसादाद्वक्ष्यामिनारायणकथामिमाम् १४ वैशंपायनमासीनंपुराणोक्तिविचक्षणम् इममर्थंसराजर्षिःपृष्टवान्ज
नमेजयः १५ जनमेजयउवाच किंजपन्मुच्यतेपापात्किंजपन्स्मरयमश्नुते दुःस्वप्ननाशनंपुण्यंश्रोतुमिच्छामिमानद १६ वैशंपा
यनउवाच एवमेवपुराप्रश्नंपृष्टवांस्तेपितामहः भीष्मंवैव्रतिनांश्रेष्ठंतच्चाहंकथयामिते १७ देवव्रतंमहाप्राज्ञंसर्वशास्त्रविशारदम् वि
नयेनोपसंगम्यपर्यपृच्छद्युधिष्ठिरः १८ युधिष्ठिरउवाच दुःस्वप्ननाशनंघोरमवेक्ष्यभरतर्षभ प्रयतःकिंजपेत्प्राप्यविबुध्यर्थंकिमनु
स्मरेत् १९ यस्यकुर्यान्नमस्कारंप्रातरुत्थायमानवः किंचध्यायेतसततंकिंपूज्यंवाभवेत्सदा २० पितामहप्रसादेनबुद्धिभेदोभवेन्मम त
दहंश्रोतुमिच्छामिब्रूहिनोवदतांवर २१ भीष्मउवाच शृणुराजन्महाबाहोकथयिष्यामिशांतिकम् दुःस्वप्नदर्शनेजाप्यंयदेनित्यं
समाहितैः २२ अत्राप्युदाहरंतीममितिहासंपुरातनम् गजेंद्रमोक्षणंचैवकृष्णस्याद्भुतकर्मणः २३ सर्वरत्नमयःश्रीमान्त्रिकूटोनामप-
र्वतः सुतःपर्वतराजस्यसुमेरोर्भास्करद्युतेः २४

क्षीरोदजलवीच्यग्रैर्धौतामलशिलातलः उत्थितःसागरंभित्त्वा देवर्षिगणसेवितः २५ अप्सरोभिःपरिवृतःश्रीमत्प्रस्रवणाकुलः गंधर्वैः
किन्नरैर्यक्षैःसिद्धचारणपन्नगैः २६ मृगैःसिंहैर्गजेंद्रैश्चवृतगात्रोविराजते पुन्नागैःकर्णिकारैश्चसुरूबिल्वैर्दिव्यपाटलैः २७ चूतनिंबक
दंबैश्चचंदनागरुचंपकैः शालैस्तालैस्तमालैश्चतरुभिश्चार्जुनैस्तथा २८ बकुलैःकुंदपुष्पैश्चसरलैर्देवदारुभिः मंदारकुसुमैश्चान्यैःपारि
जातैश्चसर्वशः २९ एवंबहुविधैर्वृक्षैःसर्वतःसमलंकृतः नानाधात्वंकितैःशृंगैःप्रस्रवद्भिःसमंततः ३० शोभितोरुचिरप्रख्यैस्त्रिभिर्विस्तीर्ण
सानुभिः मृगैःशाखामृगैःसिंहैर्मातंगैश्चसदामदैः ३१ जीवंजीवकसंघुष्टंचकोरशिखिनादितम् तस्यैकंकांचनंशृंगंसेव्यतेयद्दिवाकरः
३२ नानापुष्पसमाकीर्णनानाशृंगैःसमाकुलम् द्वितीयराजतंशृंगंसेव्यतेयंनिशाकरः ३३ पांडराबुदसंकाशंतुषाराचलसन्निभम् वज्रें
द्रनीलवैडूर्यतेजोभिर्भासयन्नभः ३४ तृतीयंब्रह्मसदनंप्रकृष्टंशृंगमुत्तमम् पद्मरागसमप्रख्यंतारागणसमन्वितम् ३५ नैतत्कृतघ्नाःप
श्यंतिननृशंसानानास्तिकाः नातप्ततपसोलोकेयेचपापकृतोजनाः ३६ नानाराधितगोविंदाःशैलंपश्यंतितंनराः तस्यसानुमतःपृष्ठेसरः
कांचनपंकजम् ३७ कारंडवसमाकीर्णराजहंसोपशोभितम् मत्तभ्रमरसंघुष्टंचकोरशिखिनादितम् ३८ कमलोत्पलकल्हारपुंडरी
कोपशोभितम् कुमुदैःशतपत्रैश्चकांचनैःसमलंकृतम् ३९ पत्रैर्मरकतप्रख्यैःपुष्पैःकांचनसन्निभैः गुल्मैःकीचकवेणूनांसमंतात्परि
वारितम् ४० अत्यद्भुतमहास्थानंविचित्रशिखराकुलम् शतयोजनविस्तीर्णदशयोजनमायतम् ४१ पंचयोजनमूर्धानंसरःपुण्यतमं
ततः हिमखंडोदकराजन्नुरुस्वादममृतोपमम् ४२ त्रैलोक्येदृष्टपूर्वंचयत्तत्सरमनुत्तमम् सुप्रसन्नंसरोदिव्यंदेवानामपिदुर्लभम् ४३
ख्यातेनाद्विगुणंप्रोक्तंशरद्द्यौरिवनिर्मलम् उपहारायदेवानांसिद्धाद्यर्चितपंकजम् ४४ तस्मिन्सरसिदुष्टात्माविरूपोंतर्जलाशयः आ
सीद्ग्राहोगजेंद्राणांदुराधर्षोमहाबलः ४५ अथदंतोज्ज्वलमुखःकदाचिद्गजयूथपः आजगामतृषाक्रांतःकरेणुपरिवारितः ४६ मदस्रा
वीजलाकांक्षीपादचारीवपर्वतः वासयन्मदगंधेनमहानैरावतोपमः ४७ गजोंजनसंकाशोमदाच्चलितलोचनः तृषितःपानकामोय
मवतीर्णश्चतत्सरः ४८ पिबतस्तस्यतत्तोयंग्राहश्चसमपद्यत सलीनःपंकजवनेयूथमध्यगतःकरी ४९ गृहीतस्तेनरौद्रेणग्राहेणातिबली
यसा पश्यंतीनांकरेणूनांक्रोशंतीनांसुदारुणम् ५०

५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३

नीयतेपंकजवनेग्राहेणाव्यक्तमूर्त्तिना गजोप्याकर्षतेतीरंग्राहस्थाकर्षतेजलम् ५१ तयोर्युद्धंमहाघोरंदिव्यवर्षसहस्रकम् वारुणैः
संयुतःपाशैर्निष्प्रयत्नगतिःकृतः ५२ वेष्ट्यमानस्सघोरैस्तुपाशैर्नागदृढैस्तथा विस्फूर्जितमहाशक्तिर्विक्रोशञ्चमहारवान् ५३ व्यथि
तःसनिरुत्साहोगृहीतोघोरकर्मणा परमापदमापन्नोमनसाचिंतयद्धरिम् ५४ सतुनागवरःश्रीमान्नारायणपरायणः तमेवशरणंदेवंग
तःसर्वात्मनातदा ५५ एकाग्रोनिगृह्यात्माविशुद्धेनांतरात्मना नैकजन्मांतराभ्यासाद्भक्तिमान्गरुडध्वजे ५६ नान्यंदेवंमहादेवात्पूज
यामासकेशवात् दिग्बाहुंसर्गमूर्धानंभूःपादंगगनोदरम् ५७ आदित्यचंद्रनयनमनंतंविश्वतोमुखम् भृतात्मानंचमेघाभंशंखच
क्रगदाधरम् ५८ सहस्रशुभनामानमादिदेवमजंविभुम् संगृह्यपुष्कराग्रेणकांचनंकमलोत्तमम् ५९ निवेद्यमनसाध्यात्वापूजांकृत्वा
जनार्दनं आपद्विमोक्षमन्विच्छन्गजःस्तोत्रमुदीरयत् ६० गजेंद्रउवाच नमोमूलप्रकृतयेअजितायमहात्मने अनाश्रयायदे
वायनिस्पृहायनमोनमः ६१ नमआद्यायबीजायआर्षेयायप्रवर्तिने अनंतायचनैकायअव्यक्तायनमोनमः ६२ नमोगुह्यायगूढायगु
णायगुणधर्मिणे अतर्क्यायाप्रमेयायअतुलायनमोनमः ६३ नमःशिवायशांतायनिश्चयाययशस्विने सनातनायपूर्वायपुराणायनमो
नमः ६४ नमोजगत्प्रतिष्ठायगोविंदायनमोनमः नमोदेवाधिदेवायस्वभावायनमोनमः ६५ नमोस्तुपद्मनाभायसांख्ययोगोद्भवायच वि
श्वेश्वरायदेवायशिवायहरयेनमः ६६ नमोस्तुतस्मैदेवायनिर्गुणायगुणात्मने नारायणायदेवायदेवानांपतयेनमः ६७ नमोनमःका
रणवामनायनारायणायामितविक्रमाय श्रीशार्ङ्गचक्रासिगदाधरायनमोस्तुतस्मैपुरुषोत्तमाय ६८ गुह्यायवेदनिलयायमहोदराय
सिंहायदैत्यनिधनायचतुर्भुजाय ब्रह्मेंद्ररुद्रमुनिचारणसंस्तुतायदेवोत्तमायवरदायनमोच्युताय ६९ नागेंद्रभोगशयनायनमःप्रिया
यगोक्षीरहेमशुककनीलघनोपमाय पीतांबरायमधुकैटभनाशनायविश्वायचारुमुकुटायनमोक्षराय ७० नाभिप्रजातकमलासनसंस्तु
तायक्षीरोदकार्णवनिकेतयशोधराय नानाविचित्रमुकुटांगदभूषणाययोगेश्वरायविरजायनमोवराय ७१ भक्तिप्रियायवरदीप्तिसुद
र्शनायफुल्लारविंदविपुलायतलोचनाय देवेंद्रविघ्नशमनोद्यतपौरुषायनारायणायवरदायनमोच्युताय ७२ नारायणायपरलोकपरा
यणायकालायकालकमलायतलोचनाय रामायरावणविनाशकृतोद्यमायधीरायधीरतिलकायनमोवराय ७३

६४ ६५ ६६ ६७ ६८ ६९ ७० ७१ ७२ ७३ ७. ७

७४ ७५ ७६ ७७ ७८ ७९ ८० ८१ ८२ ८३ ८४ ८५ ८६ ८७



पद्मासनायमणिकुंडलभूषणायकंसांतकायशिशुपालविनाशनाय गोवर्धनायस्वरशत्रुनिकृंतनायदामोदरायविरजायनमोवराय ७४
ब्रह्मायनायत्रिदशायनायलोकैकनाथायहितात्मकाय नारायणायार्तिविनाशनायमहावराहायनमस्करोमि ७५ कूटस्थमव्यक्तमचिं
त्यरूपंनारायणंकारणमादिदेवम् युगान्तशेषंपुरुषंपुराणंतंवासुदेवंशरणंप्रपद्ये ७६ अदृश्यमच्छेद्यमनंतमव्ययंमहर्षयोब्रह्ममयंस
नातनम् वदंतियंवैपुरुषंपुरातनंतंवासुदेवंशरणंप्रपद्ये ७७ उत्तिष्ठतस्तस्यजलोरुकुक्षेर्महावराहस्यमहींविदार्य विधुन्वतोवेदमयंश
रीरंलोकांतरस्थामुनयोगृणाति ७८ योगेश्वरंचारुविचित्रमौलिंज्ञेयंसमस्तप्रकृतेःपरस्थम् क्षेत्रज्ञमात्मप्रवरंवरेण्यंतंवासुदेवंशरणंप्रप
द्ये ७९ किरीटकेयूरमहार्हनिष्कैर्मण्युत्तमालंकृतसर्वगात्रम् पीतांबरंकांचनचित्रनद्धमालाधरंकेशवमभ्युपैमि ८० कार्यंक्रियाकारणमप्र
मेयंहिरण्यबाहुंवरपद्मनाभम् महाबलंवेदनिधिंसुरोत्तमंतंवासुदेवंशरणंप्रपद्ये ८१ भूर्वाङ्ग्वंवेदविदांवरिष्ठंयोगात्मकंसांख्यविदांव
रिष्ठम् आदित्यरुद्राश्विवसुप्रभावंप्रभुंप्रपद्येऽच्युतमात्मवंतम् ८२ यदक्षरंब्रह्मवदंतिसर्वगंनिशाम्ययंमृत्युमुखात्प्रमुच्यते तमीश्वरंयुक्त
मनुत्तमैर्गुणैःसनातनंलोकगुरुंनमामि ८३ नमस्तस्मैवराहायलीलयोद्धरतेमहीम् खुरमध्यगतोयस्यमेरुःखुरखुरायते ८४ श्रीवत्सां
कंमहादेवंदेवगुह्यमनूपमम् प्रपद्येसूक्ष्ममचलंवरेण्यमभयप्रदम् ८५ प्रभवंसर्वभूतानांनिर्गुणंपरमेश्वरम् प्रपद्येमुक्तसंगानांयतीनां
परमांगतिम् ८६ प्रभवंतंगुणाध्यक्षमक्षरंपरमंपदम् शरण्यंशरणंभक्त्याप्रपद्येभक्तवत्सलम् ८७ त्रिविक्रमंत्रिलोकेशंसर्वेषांप्रपिता
महम् योगात्मानंमहात्मानंप्रपद्येहंजनार्दनम् ८८ आदिदेवमजंविष्णुंव्यक्ताव्यक्तंसनातनम् नारायणमणीयांसंप्रपद्येब्राह्मणप्रियम्
८९ अकूपारायदेवायनमःसर्वमहाद्युते प्रपद्येदेवदेवेशमणीयांसमणोःसदा ९० एकायलोकनाथायपरतःपरमात्मने नमःसहस्रशि
रसेअनंतायनमोनमः ९१ तमेवपरमंदेवमृषयोवेदपारगाः कीर्तयंतिचसर्वेवैब्रह्मादीनांपरायणम् ९२ नमस्तेपुंडरीकाक्षभक्तानामभ
यंकर सुब्रह्मण्यनमस्तेस्तुत्राहिमांशरणागतम् ९३ तावद्भवंतिमेदुःखचिंतासंसारसागरे यावत्कमलपत्राक्षंनस्मरामिजनार्दनम्
९४ भीष्मउवाच भक्तिंतस्यतुसंचिंत्यनागस्यामोघसंस्तवान् प्रीतिमानभवद्राजन्प्रभुत्वाच्चक्रगदाधरः ९५ आरुह्यगरुडंविष्णुरा
जगामसुरोत्तमः सांनिध्यंकल्पयामासतस्मिन्सरसिलोकधृक् ९६

८८ ८९ ९० ९१ ९२ ९३ ९४ ९५ ९६ ९७

९७ ९८ ९९ १०० १०१ १०२ १०३ १०४ १०५ १०६ १०७ १०८ १०९ ११०

ग्राहग्रस्तंगजेंद्रंचतंग्राहंचजलाशयात् उज्जहाराप्रमेयात्मातरसामधुसूदनः ९७ जलस्थंदारयामासग्राहंचक्रेणमाधवः मोचयामा
सनागेंद्रंपाशेभ्यःशरणागतम् ९८ सहिदेवलशापेनहूहूर्गंधर्वसत्तमः इदमप्यपरंगुह्यंराजन्पुण्यतमंशृणु ९९ युधिष्ठिरउवाच
कथंशापोभवत्तातगंधर्वस्यमहात्मनः एतदिच्छाम्यहंश्रोतुंविस्तरेणपितामह १०० भीष्मउवाच यथातौशापितौतेनदेवलेनम
हात्मना हाहाहूहूरितिख्यातौगीतवाद्यविशारदौ १०१ उर्वशीमेनकारंभातथान्येचाप्सरोगणाः शक्रस्यपुरतोराजन्नृत्यंतेताःक्रमध्य
माः १०२ ततस्तौगायमानौगंधर्वौराजसद्मनि अन्योन्यंचक्रतुःस्पर्द्धांशक्रस्यपुरतःस्थितौ ३ आवयोरुभयोर्मध्येयःश्रेष्ठोगीतवाद्य
योः तंवदस्वसुरश्रेष्ठज्ञात्वागीतस्यलक्षणम् ४ गंधर्वयोर्वचःश्रुत्वामघवावाचशतक्रतुः युवयोर्गीतवाद्येषुविशेषोनोपलभ्यते ५ एका
ग्रमुनिःश्रेष्ठोदेवलोनामनामतः युवयोःसंशयच्छेत्ताभविष्यतिनसंशयः ६ ततस्तुतौशक्रवचोनिशम्यप्रणम्यराजन्शिरसासुरोत्तमम्
गतौस्तुवन्तौजयकांक्षिणौतौयत्राश्रमेतिष्ठतिसद्विजाग्र्यः ७ ततोदृष्ट्वामुनिश्रेष्ठंदेवलंशंसितव्रतम् अभिवाद्यमहात्मानमूचतुःपार्श्व
संस्थितौ ८ शक्रेणप्रेषितौदेवलत्वत्समीपेद्विजोत्तम एकस्यनौजयंदेहियत्तेमनसिवर्त्तते ९ पृथक्पृथक्ततोगायंतौमधुरंमधुराक्षरम् न
किंचिद्वदतेवाक्यंमुनिर्मौनस्यधारणात् १० शृण्वन्नपिपदंतेषांनकिंचिद्वदतेमुनिः तदातौकुपितौतस्यदेवलस्यमहात्मनः ११ ऊचतु
स्तौतदावाक्यंगंधर्वौकालनोदितौ मूढोऽयंनाभिजानातिनिश्चयंगीतवाद्ययोः १२ निशाम्यतद्वचस्तेषांगंधर्वाणांमदान्वितम् क्रोधादुत्था
यविप्रेंद्रइदंवचनमब्रवीत् १३ एषहूहूर्दुरात्मातुग्राहत्वंयातुमूढधीः त्वमेवगजराजस्त्वंभवस्वगिरिगह्वरे १४ एवंशापंददौक्रुद्धोदेव
लःसुमहातपाः ततस्तौशापितौतेनदेवलेनमहात्मना १५ प्रणम्यशिरसाविप्रंगंधर्वौविदमूचतुः भूमंडलगतौत्वावांप्रसादंकुरुसु
व्रत १६ निश्चयंकुरुविप्रेंद्रयेनशापाद्विमुच्यते ततस्तौपुरुषौदृष्ट्वाभीतौशापभयाद्दितौ १७ प्रेक्ष्यवाचसमुनिःश्रेष्ठोगंधर्वाणांभयापहम्
मेरुपृष्ठेसरोरम्यंबहुवृक्षसमाकुलम् १८ नानापक्षिगणाढ्यंचद्वितीयइवसागरः तस्मिन्सरोवरेरम्येग्रहोनित्यंभविष्यति १९ तृषा
तस्तत्रमातंगोगमिष्यतिनगोत्तमात् तयोर्मध्येमहद्युद्धंभविष्यतिसुदारुणम् २० ग्राहेणाकृष्यमाणस्तुगजस्त्रासंकरिष्यति नदेव
देवदेवेशस्तोष्यतेनात्रसंशयः २१

१११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१

२२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५

ततोनारायणःप्रीतः शापात्त्वांमोचयिष्यति इत्युक्ताऋषिणातेनवरेणैतौप्रमोदितौ २२ ग्राहत्वमगमत्सोथवधंप्राप्यदिवंगतः
आपद्विमुक्तोयुगपद्गजोगंधर्वएवच २३ गजोऽपिमुक्ततांयातःश्रीकृष्णेनविमोक्षितः तस्माच्छापाद्विनिर्मुक्तोगजोगंधर्वएवच २४
तौचस्वंस्वंवपुःप्राप्यप्रणिपत्यजनार्दनम् गजोगंधर्वराजश्चपरांनिर्वृतिमागतौ २५ प्रीतिमान्पुंडरीकाक्षःशरणागतवत्सलः अभव
द्देवदेवेशस्ताभ्यांचैवप्रपूजितः २६ भजंतंगजराजानमवदन्मधुसूदनः श्रीभगवानुवाच येमांत्वांचसरश्चैवग्राहस्यचविदारण
म् २७ गुल्मकीचकवेणूनांतथाशैलवरंतथा प्रभासंभास्करंगंगांनैमिषारण्यपुष्करम् २८ प्रयागंब्रह्मतीर्थंचदंडकारण्यमेवच ये
स्मरिष्यंतिमनुजाःप्रयताःस्थिरबुद्धयः २९ दुःस्वप्नोनश्यतेतेषांसुस्वप्नश्चभविष्यति अनिरुद्धंगजंग्राहंवासुदेवंमहाद्युतिम् ३०
संकर्षणंमहात्मानंप्रद्युम्नंचतथैवच मत्स्यंकूर्मंवराहंचवामनंतार्क्ष्यमेवच ३१ नारसिंहंचनागेंद्रंसृष्टिप्रलयकारकम् विश्वरूपंहृषी
केशंगोविंदंमधुसूदनम् ३२ सहस्राक्षंचतुर्बाहुंमुरारिंगरुडध्वजम् त्रिदशैर्वंदितंदेवंदृढभक्तिमनुत्तमम् ३३ वैकुंठंदुष्टदमनंमु
क्तिदंमधुसूदनम् एतानिप्रातरुत्थायसंस्मरिष्यंतियेनराः ३४ सर्वपापैःप्रमुच्यंतेविष्णुलोकमवाप्नुयुः भीष्मउवाच एवमु
क्त्वामहाराजराजेंद्रंमधुसूदनः ३५ स्पर्शयामाससहस्तेनगजंगंधर्वमेवच तौचस्पृष्टौततःसद्योदिव्यमाल्यांबरावुभौ ३६ तमेवमनसा
प्राप्यजग्मतुस्त्रिदशालयम् ततोदिव्यवपुर्भूत्वाहस्तिराट्परमंपदम् ३७ गच्छतिस्ममहाबाहोनारायणपरायणः ततोनारायणः
श्रीमान्मोचयित्वागजोत्तमम् ३८ ऋषिभिःस्तूयमानोऽथवेदगुह्यपराक्षरैः ततःसभगवान्विष्णुर्दुर्विज्ञेयगतिःप्रभुः ३९ शंख-
चक्रगदापाणिरंतर्धानंसमाविशत् वैशंपायनउवाच गजेंद्रमोक्षणंश्रुत्वाकुंतीपुत्रोयुधिष्ठिरः ४० भ्रातृभिःसहितःस
म्यक्ब्राह्मणैर्वेदपारगैः पूजयामासदेवेशंपार्श्वस्थंमधुसूदनम् ४१ विस्मयोत्फुल्लनयनःश्रुत्वानागस्यमोक्षणम् ऋषयश्चमहा
भागाःसर्वेप्रांजलयःस्थिताः ४२ अजंवरेण्यंवरपद्मनाभंमहाबलंवेदनिधिंसुरोत्तमम् तंवेदगुह्यंपुरुषंपुराणंववंदिरेवेदवि
दांवरिष्ठम् ४३ एतत्पुण्यंमहाबाहोनराणांपुण्यकर्मणाम् दुःस्वप्नदर्शनेघोरेश्रुत्वापापैःप्रमुच्यते ४४ तस्मात्त्वंहिमहाराजप्रपद्यशरणंहरि
म् विमुक्तःसर्वपापेभ्यःप्राप्स्यसेपरमंपदम् ४५ १८५

३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ९२

यदा महाग्राहगृहीतकातरं क्षुधितेपद्मवने महाद्विपम् विमोक्षयामास गजं जनार्दनो दुःस्वप्ननाशं च करोति सदा ४६ परंपराणां
परमपवित्रपरेशमीशं करलोकनाथम् सुरासुरैरर्चितपादपद्मं सनातनं लोकगुरुं नमामि ४७ वरगजस्मरणाद्धि मुक्तिहेतुं पुरुषवरं
स्तुतिदिव्यदेहगीतम् सततमपि पठंति ये तु तेषामभिहितमरणांतक किल्बिषापहं स्यात् ४८ धर्मद्रुमः स्मृतिबद्धमूलो वेदस्कंधः पुराण
शाखाढ्यः क्रतुकुसुमो मोक्षफलो मधुसूदनपादपो जयति ४९ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च जगद्धिताय कृष्णाय गोविंदाय न
मो नमः ५० आकाशात्पतितं तोयं यथा गच्छति सागरम् सर्वदेवनमस्कारः केशवं प्रति गच्छति १५१ इति श्रीमहाभारते आनुशास-
निके शांतिपर्वणि दानधर्मे गजेंद्रमोक्षणं शतोपरिपंचाशत्तमोऽध्यायः १५० युधिष्ठिर उवाच पितामह महाप्राज्ञ सर्वशास्त्रविशार
द किं जप्यं जपतो नित्यं भवेद्धर्मफलं महत् १ प्रस्थाने वा प्रवेशे वा प्रवृत्ते वापि कर्मणि दैवे वा श्राद्धकाले वा किं जप्यं कर्मसाधनम् २ शांति
कं पौष्टिकं रक्षा शत्रुघ्नं भयनाशनम् जप्यं यद्ब्रह्मसमितं तद्भवान्वक्तुमर्हति ३ भीष्म उवाच व्यासप्रोक्तमिमं मंत्रं शृणुष्वैकमना
नृप सावित्र्या विहितं दिव्यं सद्यः पापविमोचनम् ४ शृणु मंत्रविधिं कृत्स्नं प्रोच्यमानं मयानघ यं श्रुत्वा पांडवश्रेष्ठ सर्वपापैः प्रमुच्यते ५ रात्राव
हनि धर्मज्ञ जपन्पापैर्न लिप्यते तत्तेऽहं संप्रवक्ष्यामि शृणुष्वैकमना नृप ६ आयुष्मान्भवते चैव यं श्रुत्वा पार्थिवात्मज पुरुषस्तु सुसिद्धार्थः प्रे
त्य चेह च मोदते ७ सेवितं सततं राजन्पुरा राजर्षिसत्तमैः क्षत्रधर्मपरैर्नित्यं सत्यव्रतपरायणैः ८ इदमाह्निकमव्यग्रं कुर्वद्भिर्नियतैः सदा
नृपैर्भरतशार्दूल प्राप्यते श्रीरनुत्तमा ९ नमो वसिष्ठाय महाव्रताय पराशरं वेदनिधिं प्रणम्य नमोऽस्त्वनंताय महोरगाय नमोऽस्तु सिद्धेभ्य
इहाक्षयेभ्यः १० नमोऽस्त्वृषिभ्यः परमं परेषां देवेषु देवं वरदं वराणाम् सहस्रशीर्षाय नमः शिवाय सहस्रनामाय जनार्दनाय ११ अजैकपा
दहिर्बुध्नः पिनाकी चापराजितः ऋतश्च पितृरूपश्च त्र्यंबकश्च महेश्वरः १२ वृषाकपिश्च शंभुश्च हवनोऽथेश्वरस्तथा एकादशैते प्रथिता
रुद्रास्त्रिभुवनेश्वराः १३ शतमेतत्समाम्नातं शतरुद्रे महात्मनाम् अंशो भगश्च मित्रश्च वरुणश्च जलेश्वरः १४ तथा धाता र्यमा चैव ज
यंतो भास्करस्तथा त्वष्टा पूषा तथैवेंद्रो द्वादशो विष्णुरुच्यते १५ इत्येते द्वादशादित्याः काश्यपेया इति श्रुतिः धरो ध्रुवश्च सोमश्च सावित्रो
ऽथानिलोऽनलः १६

१२ सञ्ज्ञायाः अश्वरूपाया नासतः नासिकायाःसकाशात्‌विनिर्गतौ १८ १९ २० २१ २२ २३ २४ २५ २६



प्रत्यूषश्चप्रभासश्चवसवोष्टौप्रकीर्तिताः नासत्यश्चापिदस्रश्चस्मृतौद्वावश्विनावपि १७ मार्तंडस्यात्मजावेतौसंज्ञानासाविनिर्गतौ अतःप
रंप्रवक्ष्यामिलोकानांकर्मसाक्षिणः १८ अपियज्ञस्यवेत्तारोदत्तस्यसुकृतस्यच अदृश्याःसर्वभूतेषुपश्यंतित्रिदशेश्वराः १९ शुभाशुभानिस
र्वाणिमृत्युःकालश्चसर्वशः विश्वेदेवाःपितृगणामूर्त्तिमंतस्तपोधनाः २० मुनयश्चैवसिद्धाश्चतपोमोक्षपरायणाः शुचिस्मिताःकीर्त्तयतांप्रय
च्छंतिशुभंनृणाम् प्रजापतिकृतानेतान्लोकान्दिव्येनतेजसा २१ वसंतिसर्वलोकेषुप्रयताःसर्वकर्मसु प्राणानामीश्वरानेतान्कीर्त्तयन्प्रयतोन
रः २२ धर्मार्थकामैर्विपुलैर्युज्यतेसहनित्यशः लोकांश्चलभतेपुण्यान्विश्वेश्वरकृतांच्छुभान् २३ एतेदेवास्त्रयस्त्रिंशत्सर्वभूतगण-
श्वराः नंदीश्वरोमहाकायोग्रामणीर्वृषभध्वजः २४ ईश्वराःसर्वलोकानांगणेश्वरविनायकाः सौम्यारौद्रागणाश्चैवयोगभूतगणास्तथा
२५ ज्योतींषिसरितोव्योमसुपर्णःपन्नगेश्वरः पृथिव्यांतपसासिद्धाःस्थावराश्चचराश्चह २६ हिमवान्गिरयःसर्वेचत्वारश्चमहार्ण
वाः भवस्यानुचराश्चैवहरतुल्यपराक्रमाः २७ विष्णुर्देवोथजिष्णुश्चस्कंदश्चांबिकयासह कीर्त्तयन्प्रयतःसर्वान्सर्वपापैःप्रमुच्यते २८
अतऊर्ध्वंप्रवक्ष्यामिमानवानृषिसत्तमान् यवक्रीतश्चरैभ्यश्च अर्वावसुपरावसू २९ औशिजश्चैवकक्षीवान्बलश्चांगिरसःसुतः ऋषि
र्मेधातिथेःपुत्रःकण्वोबर्हिषदस्तथा ३० ब्रह्मतेजोमयाःसर्वेकीर्त्तितालोकभावनाः लभंतेहिशुभंसर्वेरुद्रानलवसुप्रभाः ३१ भुविकृत्वा
शुभंकर्ममोदंतेदिविदेवताः महेंद्रगुरवःसप्तप्राचींवैदिशमाश्रिताः ३२ प्रयतःकीर्त्तयेदेतान्शक्रलोकेमहीयते उन्मुचुःप्रमुचुश्चैवस्व
स्त्यात्रेयश्चवीर्यवान् ३३ दृढव्यश्चोर्ध्वबाहुश्चतृणसोमांगिरस्तथा मित्रावरुणयोःपुत्रस्तथागस्त्यःप्रतापवान् ३४ धर्मराजर्त्विजःसप्त
दक्षिणांदिशमाश्रिताः दृढेयुश्चऋतेयुश्चपरिव्याधश्चकीर्त्तिमान् ३५ एकतश्चद्वितश्चैवत्रितश्चादित्यसन्निभाः अत्रेःपुत्रश्चधर्मा-
त्माऋषिःसारस्वतस्तथा ३६ वरुणस्यर्त्विजःसप्तपश्चिमांदिशमाश्रिताः अत्रिर्वसिष्ठोभगवान्कश्यपश्चमहानृषिः ३७ गौतमश्चभर-
द्वाजोविश्वामित्रोथकौशिकः ऋचीकतनयश्चोग्रोजमदग्निःप्रतापवान् ३८ धनेश्वरस्यगुरवःसप्तैतेउत्तराश्रिताः अपरेमुनयःसप्तदि
क्षुसर्वास्वधिष्ठिताः ३९ कीर्त्तिस्वस्तिकरानृणांकीर्त्तितालोकभावनाः धर्मःकामश्चकालश्चवसुर्वासुकिरेवच ४०



२७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४०

४१ ४२ ४३ ४४ ; ४५ ४६ ४७ ४८ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७

अनंतःकपिलश्चैवसप्तैतेधरणीधराः रामोव्यासस्तथाद्रौणिरश्वत्थामाचलोमशः ४१ इत्येतेमुनयोदिव्याएकैकःसप्तसप्तधा शां
तिस्वस्तिकरालोकेदिशांपालाःप्रकीर्त्तिताः ४२ यस्यांयस्यांदिशिह्येतेतन्मुखःशरणंव्रजेत् स्रष्टारःसर्वभूतानांकीर्त्तितालोकपावनाः ४३
संवर्त्तोमेरुसावर्णोमार्कंडेयश्चधार्मिकः सांख्ययोगौनारदश्च दुर्वासाश्चमहानृषिः ४४ अत्यंततपसोदांतास्त्रिषुलोकेषुविश्रुताः
अपरेरुद्रसंकाशाःकीर्त्तिताःब्रह्मलौकिकाः ४५ अपुत्रोलभतेपुत्रंदरिद्रोलभतेधनम् तथाधर्मार्थकामेषुसिद्धिंचलभतेनरः ४६
पृथुंवैन्यंनृपवरंपृथ्वीयस्याभवत्सुता प्रजापतिंसार्वभौमंकीर्त्तयेद्वसुधाधिपम् ४७ आदित्यवंशप्रभवंमहेंद्रसमविक्रमम् पुरू
रवसमैलंचत्रिषुलोकेषुविश्रुतम् ४८ बुधस्यदयितंपुत्रंकीर्त्तयेद्वसुधाधिपम् त्रिलोकविश्रुतंवीरंभरतंचप्रकीर्त्तयेत् ४९ गवा
मयेनयज्ञेनयेनेष्टंवैकृतेयुगे रंतिदेवंमहादेवंकीर्त्तयेत्परमद्युतिम् ५० विश्वजित्तपसोपेतंलक्षण्यंलोकमंगलम् तथाश्वेतंचरा-
जर्षिंकीर्त्तयेत्परमद्युतिम् ५१ सगरस्यात्मजायेनप्लाविितास्तारितास्तथा हुताशनसमानेतान्महारूपान्महौजसः ५२ उग्रकायान्म
हासत्वान्कीर्त्तयेत्कीर्त्तिवर्द्धनान् देवानृषिगणांश्चैवनृपांश्चजगतीश्वरान् ५३ सांख्ययोगंचपरमंहव्यकव्यंतथैवच कीर्त्तितंपरं
मब्रह्मसर्वश्रुतिपरायणम् ५४ मंगल्यंसर्वभूतानांपवित्रंबहुकीर्त्तितम् व्याधिप्रशमनंश्रेष्ठंपौष्टिकंसर्वकर्मणाम् ५४ प्रयतःकी
र्त्तयेच्चैतान्कल्यंसायंचभारत एतेवैयांतिवर्षंतिभांतिवांतिसृजंतिच ५५ एतेविनायकाःश्रेष्ठा दक्षाःक्षांताजितेंद्रियाः नराणामशु
भंसर्वंव्यपोहंतिप्रकीर्त्तिताः ५६ साक्षिभूतामहात्मानःपापस्यसुकृतस्यच एतान्वैकल्यमुत्थायकीर्त्तयन्शुभमश्नुते ५७ नाग्निचौ
रभयंतस्यनमार्गप्रतिरोधनम् एतान्कीर्त्तयतांनित्यंदुःस्वप्नोनश्यतेनृणाम् ५८ मुच्यतेसर्वपापेभ्यःस्वस्तिमांश्चगृहंव्रजेत् दीक्षाका
लेषुसर्वेषुयःपठेन्नियतोद्विजः ५९ न्यायवानात्मनिरतःक्षांतोदांतोनसूयकः रोगार्त्तोव्याधियुक्तोवापठन्पापात्प्रमुच्यते ६० वा-
स्तुमध्येतुपठतःकुलेस्वस्त्ययनंभवेत् क्षेत्रमध्येतुपठतःसर्वसस्यंप्ररोहति ६१ गच्छतःक्षेममध्वानंग्रामांतरगतःपठन् आत्मनश्च
सुतानांचदाराणांचधनस्यच ६२ बीजानामोषधीनांचरक्षामेतांप्रयोजयेत् एतान्संग्रामकालेतुपठतःक्षत्रियस्यतु ६३ व्रजंतिरि
पवोनाशंक्षेमंचपरिवर्त्तते एतान्दैवेचपित्र्येचपठतःपुरुषस्यहि ६४ भुंजतेपितरःकव्यंहव्यंचत्रिदिवौकसः नव्याधिश्वापदभयंन
द्विपान्नहितस्कराः ६५

५८ ५९ ६० ६१ ६२ ६३ ६४ ६५

कन्यकालंलभतेयातिपापनाच्चप्रमुच्यते पानपात्रेचयानेचप्रवासेराजवेश्मनि ६६ परांसिद्धिमवाप्नोतिसावित्रीह्युत्तमांपठन् नचराजभ-
यंतेषांनपिशाचान्नराक्षसान् ६७ नाग्न्यम्बुपवनव्यालाद्भयंतस्योपजायते चतुर्णामपिवर्णानामाश्रमस्यविशेषतः ६८ करोतिसत
तंशांतिंसावित्रीमुत्तमांपठन् नाग्निर्दहतिकाष्ठानिसावित्रीयत्रपठ्यते ६९ नतत्रबालोम्रियतेनचतिष्ठंतिपन्नगाः नतेषांविद्यते
दुःखंगच्छंतिपरमांगतिम् ७० येशृण्वंतिमहद्ब्रह्मसावित्रीगुणकीर्तनम् गवांमध्येतुपठतोगावोस्यबहुवत्सलाः ७१ प्रस्थानेवा-
प्रवासेवासर्वावस्थांगतःपठेत् जपतांजुह्वतांचैवनित्यंचप्रयतात्मनाम् ७२ ऋषीणांपरमंजप्यंगुह्यमेतन्नराधिप याथातथ्येनसि
द्धस्यइतिहासंपुरातनम् ७३ पराशरमतंदिव्यंशक्रायकथितंपुरा तदेतत्तेसमाख्यातंतथ्यंब्रह्मसनातनम् ७४ हृदयंसर्वभूता
नांश्रुतिरेषासनातनी सोमादित्यान्वयाःसर्वेराघवाःकुरवस्तथा ७५ पठंतिशुचयोनित्यंसावित्रींप्राणिनांगतिम् अभ्यासेनित्य
देवानांसप्तर्षीणांध्रुवस्यच ७६ मोक्षणंसर्वकृच्छ्राणांमोचयत्यशुभात्सदा ७७ वृद्धैःकाश्यपगौतमप्रभृतिभिर्भृग्वंगिरोऽत्र्यादि
भिः शुक्रागस्त्यबृहस्पतिप्रभृतिभिर्ब्रह्मर्षिभिःसेवितम् भारद्वाजमतंऋचीकतनयैःप्राप्तंवशिष्ठात्पुनःसावित्रीमधिगम्यशक्रवसुभिः
कृत्स्नाजितादानवाः ७८ योगोशतंकनकशृंगमयंददातिविप्रायवेदविदुषेचबहुश्रुताय दिव्यांचभारतकथांकथयेच्चनित्यंतुल्यं-
फलंभवतितस्यचतस्यचैव ७९ धर्मोविवर्धतिभृगोःपरिकीर्त्तनेनवीर्यंविवर्धतिवसिष्ठनमोनतेन संग्रामजिद्भवतिचैवरघुंनमस्य
न्स्यादश्विनौचपरिकीर्त्तयतोनरोगः ८० एषातेकथितराजन्सावित्रीब्रह्मशाश्वती विवक्षुरसियच्चान्यत्तत्तेवक्ष्यामिभारत ८१
इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेसावित्रीव्रतोपाख्यानेशतोपरिएकपंचाशत्तमोऽध्यायः १५१ युधिष्ठिरउवाच
केपूज्याःकेनमस्कार्याःकथंवर्त्तेतकेषुच किमाचारःकीदृशेषुपितामहनरिष्यते १ भीष्मउवाच ब्राह्मणानांपरिभवःसाध
येदपिदेवताः ब्राह्मणांस्तुनमस्कृत्ययुधिष्ठिरनरिष्यते २ तेपूज्यास्तेनमस्कार्यावर्त्तेथास्तेषुपुत्रवत् तेहिलोकानिमान्सर्वान्धारयं
तिमनीषिणः ३ ब्राह्मणाःसर्वलोकानांमहांतोधर्मसेतवः धनत्यागाभिरामाश्चवाक्यथमरताश्चये ४ रमणीयाश्चभूतानांनिधा-
नंचधृतव्रताः प्रणेतारश्चलोकानांशास्त्राणांचयशस्विनः ५ तपोयेषांधनंनित्यंवाक्चैवविपुलंबलम् प्रभवश्चैवधर्माणांधर्मज्ञाः
सूक्ष्मदर्शिनः ६

धर्मकामाःस्थिताधर्मेसुकृतैर्धर्मसेतवः यान्समाश्रित्यजीवंतिप्रजाःसर्वाश्चतुर्विधाः ७ पंथानःसर्वनेतारोयज्ञवाहाःसनातनाः पि
तृपैतामहींगुर्वीमुद्वहंतिधुरंसदा ८ धुरियेनावसीदंतिविषयेसद्गवाइव पितृदेवातिथिमुखाहव्यकव्याग्रभोजनाः ९ भोजनादे
वलोकांस्त्रींस्त्रायंतेमहतोभयात् दीपःसर्वस्यलोकस्यचक्षुश्चक्षुष्मतामपि १० सर्वशिक्षाश्रुतिधनानिपुणामोक्षदर्शिनः गति
ज्ञाःसर्वभूतानामध्यात्मगतिचिंतकाः ११ आदिमध्यावसानानांज्ञातारश्छिन्नसंशयाः परावरविशेषज्ञागंतारःपरमांगतिम् १२
विमुक्ताधूतपाप्मानोनिर्द्वंद्वानिष्परिग्रहाः मानार्हामानितानित्यंज्ञानविद्भिर्महात्मभिः १३ चंदनेमलपंकेचभोजनेभोजनेसमाः या
सोयेषांदुकूलंचतथाक्षौमाजिनानिच १४ तिष्ठेयुरप्यभुंजानाबहूनिदिवसान्यपि शोषयेयुश्चगात्राणिस्वाध्यायैःसंयतेंद्रियाः १५
अदैवंदैवतंकुर्युर्दैवतंचाप्यदैवतम् लोकानन्यान्सृजेयुस्तेलोकपालांश्चकोपिताः १६ अपेयःसागरोयेषामभिशापान्महात्मनाम्
येषांकोपाग्निरद्यापिदंडकेनोपशाम्यति १७ देवानामपियेदेवाःकारणंकारणस्यच प्रमाणस्यप्रमाणंचकस्तानभिभवेद्बुधः १८
येषांवृद्धश्चबालश्चसर्वःसंमानमर्हति तपोविद्याविशेषात्तुमानयंतिपरस्परम् १९ अविद्वान्ब्राह्मणोदेवःपात्रंवैपावनंमहत् वि
द्वान्भूयस्तरोदेवःपूर्णसागरसन्निभः २० अविद्वांश्चैवविद्वांश्चब्राह्मणोदैवतंमहत् प्रणीतश्चाप्रणीतश्चयथाग्निर्दैवतंमहत्
२१ श्मशानेष्वपितेजस्वीपावकोनैवदुष्यति हविर्यज्ञेचविविधेवहुहभ्यवाभिशोभते २२ एवंयद्यप्यनिष्टेषुवर्ततेसर्वकर्मसु सर्वथा
ब्राह्मणोमान्योदैवतंविद्धितत्परम् २३ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेब्राह्मणप्रशंसायांशतोपरिद्विपंचाश-
त्तमोऽध्यायः १५२ युधिष्ठिरउवाच कांतुब्राह्मणपूजायांव्युष्टिंदृष्ट्वाजनाधिप कंवाकर्मोदयंमत्वातानर्चसिमहामते
१ भीष्मउवाच अत्राप्युदाहरंतीममितिहासंपुरातनम् पवनस्यचसंवादमर्जुनस्यचभारत २ सहस्रभुजभृच्छ्रीमान्का
र्तवीर्योभवत्प्रभुः अस्यलोकस्यसर्वस्यमाहिष्मत्यांमहाबलः ३ सतुरत्नाकरवतींसद्वीपांसागराम्बराम् शशासपृथिवींसर्वांहैह
यःसत्यविक्रमः ४ स्ववित्तंतेनदत्तंतुदत्तात्रेयायकारणे क्षत्रधर्मंपुरस्कृत्यविनयंश्रुतमेवच ५ आराधयामासचतंकृतवीर्यात्म
जोमुनिम् न्यमंत्रयतसंतुष्टोद्विजश्चैनंवरैस्त्रिभिः ६ सवरैश्छंदितस्तेननृपोवचनमब्रवीत् सहस्रबाहुर्भूयांवैचमूमध्येगृहेन्य-
था ७

८ ९ १० ११ १२ १३ १४ १५ पूर्वोवादोब्रह्मोत्तरःयत्रब्राह्मणाधिक्यवचनंपूर्वपक्षः क्षत्रियाधिक्यंसिद्धांतइत्यर्थः हे
तुयुक्तौप्रजापालनेनहेतुनायुक्तौसहितौतौब्राह्मणक्षत्रियौ १६ ब्रह्मवेदोयज्ञोवाअध्यापनयजनार्थएवउपधाच्छलंयेषांतेतथाक्षत्रियान्खादंतिउपजीवंति १७



ममबाहुसहस्रंतुपश्यंतांसैनिकारणे विक्रमेणमहींकृत्स्नांजयेयंसंशितव्रतः ८ तांचधर्मेणसंप्राप्यपालयेयमतंद्रितः चतुर्थंतुवरंया
चेत्त्वामहंद्विजसत्तम ९ तन्ममानुग्रहकृतेदातुमर्हस्यनिंदित अनुशासंतुमांसंतोमिथ्यावृत्तंत्वदाश्रयम् १० इत्युक्तःसद्विजःप्राह
तथास्त्वितिनराधिपम् एवंसमभवंस्तस्यवरास्तेदीप्ततेजसः ११ ततःसरथमास्थायज्वलनार्कसमद्युतिम् अब्रवीद्वीर्यसंमोहात्को
वास्तिपुरुषोत्तमः १२ धैर्यवीर्ययशःशौर्यैर्विक्रमेणौजसापिवा तद्वाक्यांतेचांतरिक्षेवागुवाचाशरीरिणी १३ नत्वंमूढविजानीषे
ब्राह्मणंक्षत्रियाद्वरं सहितोब्राह्मणेनेहक्षत्रियःशास्तिवैप्रजाः १४ अर्जुनउवाच कुर्यांभूतानितुष्टोहंक्रुद्धोनाशंतथानये
कर्मणामनसावाचानमत्तोस्तिवरोद्विजः १५ पूर्वोब्रह्मोत्तरोवादोद्वितीयःक्षत्रियोत्तरः त्वयोक्तौहेतुयुक्तौतौविशेषस्तत्रदृश्यते १६
ब्राह्मणाःसंश्रिताःक्षत्रंनक्षत्रंब्राह्मणाश्रितम् श्रिताब्रह्मोपधाविप्राःखादंतिक्षत्रियान्भुवि १७ क्षत्रियेष्वाश्रितोधर्मःप्रजानांपरि-
पालनम् क्षत्राद्वृत्तिर्ब्राह्मणानांतैःकथंब्राह्मणोवरः १८ सर्वभूतप्रधानांस्तान्भैक्षवृत्तीनहंसदा आत्मसंभावितान्विप्रान्स्थापया
म्यात्मनोवशे १९ कथितंत्वनयाऽसत्यंगायत्र्याकन्ययादिवि विजेष्याम्यवशान्सर्वान्ब्राह्मणांश्चर्मवाससः २० नचमांच्यावयेद्रा
ष्ट्रात्त्रिषुलोकेषुकश्चन देवोवामानुषोवापितस्माज्ज्येष्ठोद्विजादहम् २१ अद्यब्रह्मोत्तरंलोकंकरिष्येक्षत्रियोत्तरम् नहिमेसंयुगेक
श्चित्सोढुमुत्सहतेबलम् २२ अर्जुनस्यवचःश्रुत्वावित्रस्ताभून्निशाचरी अथैनमंतरिक्षस्थस्ततोवायुरभाषत २३ त्यजैनंकलु
षंभावंब्राह्मणेभ्योनमस्कुरु एतेषांकुर्वतःपापंराष्ट्रक्षोभोभविष्यति २४ अथवात्वांमहीपालशमयिष्यंतिवैद्विजाः निरशिष्यंतिते
राष्ट्राद्धतोत्साहंमहाबलाः २५ तंराजाकस्त्वमित्याहततस्तंप्राहमारुतः वायुर्वैदेवदूतोस्मिहितंत्वांप्रब्रवीम्यहम् २६ अर्जुनउवाच
अहोत्वयाद्यविप्रेषुभक्तिरागःप्रदर्शितः यादृशंपृथिवीभूतंतादृशंब्रूहिमेद्विजम् २७ वायोर्वासदृशंकिंचिद्ब्रूहित्वंब्राह्मणोत्तमम् अ
पांवेसदृशंवह्निसूर्यस्यनभसोपिवा २८ इतिश्रीम॰आनुशा॰दानधर्मेपवनार्जुनसंवादेब्राह्मणमाहात्म्येशतोपरित्रिपंचाशत्तमोऽध्यायः
१५३

१८ १९ गायत्र्यासरस्वत्याअसत्यंकथितंचर्मवाससःअजिनवस्त्रान् २० २१ ब्रह्मोत्तरंसंतं २२ निशाचरीअंतर्हितासरस्वतीयद्वानिशाचरीराक्षस्यपिवित्र
स्ताभूत्किमुतान्येआस्तिकाइतिभावः २३ २४ २५ २६ पृथिवीभूतंपृथिव्यात्मकंभूतं २७ २८ इतिआनुशा॰टीकायांशतोपरित्रिपंचाशत्तमोऽध्यायः १५३

शृणुवेति १ २ ३ ४ अहंवायुः ५ ६ ७ कविःअग्निः ८ महतःसागरपुत्रान् आसंतउपासंत सुवर्णधारिणाशोभनोब्राह्मणवर्णस्तस्यधारिणा धात्राद्विजातिनाकपिलेन ९ १० ११ १२ अग्निंब्राह्मणमित्यन्वयः १३ अनुभृतंप्रतिभूतंअनुपालकंपोषकं १४ १५ ननुब्रह्मांडेजातत्वात्कथमंडमजनयदित्यत्राह अंडेतिकेचिदितित्वत्त्वेत्यर्थः १६ दूषयतिद्रष्टव्यमिति अजत्वादेवब्रह्मानअंडजातःअंडजत्ववचनंतस्यप्रकारांतरेणेत्याह स्मृतमिति आकाशंअव्याकृतं १७ आकाशजःपितामहः किमाश्रयेणातिष्ठेदितिचेत् कश्चिदुपास्त्वंप्रतिब्रूहितदानकिंचिद्भवेदिति पितामहस्यनिरधिष्ठानत्वेसति

वायुरुवाच शृणुमूढगुणान्कांश्चिद्ब्राह्मणानांमहात्मनाम् येत्वयाकीर्त्तिताराजस्तेभ्योथब्राह्मणोवरः १ त्यक्त्वामहीत्वंभूमि-
स्तुस्पर्धयांगनृपस्यह नाशंजगामतांविप्रोव्यस्तम्भयतकश्यपः २ अजेयाब्राह्मणाराजन्दिविचेहचनित्यदा अपिबत्तेजसाह्यापस्त्वय
मेवांगिराःपुरा ३ सताःपिबन्क्षीरमिवनातृप्यतमहामनाः अपूरयन्महौघेनमहींसर्वांचपार्थिव ४ तस्मिन्नहंचक्रुद्धेवैजगत्त्यक्त्वा
ततोगतः व्यतिष्ठमग्निहोत्रेचचिरमंगिरसोभयात् ५ अथशप्तश्चभगवान्गौतमेनपुरंदरः अहल्यांकामयानोवैधर्मार्थंचनहिंसि
तः ६ यथासमुद्रोनृपतेपूर्णोमृष्टेनवारिणा ब्राह्मणैरभिशप्तश्चबभूवलवणोदकः ७ सुवर्णवर्णोनिर्धूमःसंगतोर्ध्वशिखःकविः क्रु
द्धेनांगिरसाशप्तोगुणैरेतैर्विवर्जितः ८ मरुतश्चूर्णितान्पश्ययेह्यासंतमहोदधिम् सुवर्णधारिणानित्यमवशप्ताद्विजातिना ९ समो
नत्वंद्विजातिभ्यःश्रेयोविद्धिनराधिप गर्भस्थान्ब्राह्मणान्सम्यङ्नमस्यतिकिलप्रभुः १० दंडकानांमहद्राज्यंब्राह्मणेनविनाशितं ता
लजंघंमहाक्षत्रमौर्वेणैकेननाशितम् ११ त्वयाचविपुलंराज्यंबलंधर्मंश्रुतंतथा दत्तात्रेयप्रसादेनप्राप्तंपरमदुर्लभम् १२ अ-
ग्निंत्वंयजसेनित्यंकस्माद्ब्राह्मणमर्जुन सहिसर्वस्यलोकस्यहव्यवाट्किंनवेत्सितम् १३ अथवाब्राह्मणश्रेष्ठमनुभूतानुपालकम्
कर्त्तारंजीवलोकस्यकस्माज्जानन्विमुह्यसे १४ तथाप्रजापतिर्ब्रह्माअव्यक्तःप्रभुरव्ययः येनेदंनिखिलंविश्वंजनितंस्थावरंचरम् १५
अंडजातंतुब्रह्माणंकेचिदिच्छन्त्यपंडिताः अंडाद्भिन्नाद्बभुःशैलादिशोम्भःपृथिवीदिवं १६ द्रष्टव्यंनैतदेवंहिकथंजायेदजोहिसः स्मृत
माकाशमंडंतुतस्माज्जातःपितामहः १७ तिष्ठेत्कथमितिब्रूहिनकिंचिद्धितदाभवेत् अहंकारइतिप्रोक्तःसर्वतेजोमयःप्रभुः १८

तज्जमिदंसर्वंशून्यमेवस्यान्नकिंचिद्भवेदित्यर्थः ननुकोयंप्रजापतिपदेनोच्यतेअतआह अहंकारइतिप्रोक्तइतिप्रभुर्व्यापकः यतःसर्वतेजोगतिगतजन्यत्वंदन्याये नकृत्स्नंचैतन्यज्योतिःप्राप्तः द्वितीयाश्रितेतिसमासः अयंभावःसुषुप्तिसदृशाद्व्याकृताकाशादुत्थितोहंकाररूपउपाधिस्तेनसाक्षीसर्वात्मनाऽवच्छिन्नःसोयमहंकारविशिष्टोवात्वंव्योमादिकंकल्पितवान् एवंशास्त्रानुभवाभ्यांजानातिसब्राह्मणोजगत्कर्त्तानेन तत्साम्यंसमृद्धेणतरगस्यैवकदाचिदपिनसंभवति १८ ६७

अतएव अंडनास्तित्स्त्तुरगवत्कल्पनामात्रत्वात् कल्पकस्तुसत्रह्माब्राह्मणोऽस्तीत्युक्तःसराजार्जुनः इतिवायुनाउक्तःसन् तूष्णीमभूत्ततोवायुरब्रवीद्वक्ष्यमाणमर्थ मितिशेषः १९ इतिआनुशासनिकेपर्वणिटीकायांशतोपरिचतुष्पंचाशत्तमोऽध्यायः १५४ इमामिति १ २ भूमित्वंत्यक्त्वाब्रह्मणःपदंगमिष्यामीतिसंबंधः ३ आत्मानंदेहंत्यक्त्वानिर्जीवमहीदेहंप्रविश्यसजीवंयोगबलेनकृतवान् ४ भूमिस्तुधर्मोत्तरास्वधर्मबलेनब्रह्मलोकंगत्वानष्टभयासीदित्यर्थः ५ कश्य

नास्त्यंडमस्तितुब्रह्मासराजालोकभावनः इत्युक्तःसतदातूष्णीमभूद्वायुस्ततोब्रवीत् १९ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेपवनार्जुनसंवादेशतोपरिचतुःपंचाशत्तमोऽध्यायः १५४ वायुरुवाच इमांभूमिंद्विजातिभ्योदित्सुर्वैदक्षिणापुरा अंगोनामनृपोराजंस्ततश्चिंतांमहीययौ १ धारणीसर्वभूतानामयंप्राप्यवरोनृपः कथमिच्छतिमांदातुंद्विजेभ्योब्रह्मणःसुताम् २. साहंत्यक्त्वागमिष्यामिभूमित्वंब्रह्मणःपदम् अयंसराष्ट्रोनृपतिर्माभूदितिततोगमत् ३ ततस्तांकश्यपोदृष्ट्वाव्रजंतींपश्यतांतदा प्रविवेशमहींसद्योत्यक्त्वात्मानंसमाहितः ४ दत्तासासर्वतोयज्ञेतृणौषधिसमन्विता धर्मोत्तरानष्टभयाभूमिरासीत्ततोनृप ५ एवंवर्षसहस्राणिदिव्यानिविपुलव्रतः त्रिंशतःकश्यपोराजन्भूमिरासीदतंद्रितः ६ अथागम्यमहाराजनमस्कृत्यचकश्यपम् पृथिवीकाश्यपीजज्ञेसुतातस्यमहात्मनः ७ एषराजन्नीदृशोवैब्राह्मणःकश्यपोभवत् अन्यंप्रब्रूहिवात्वंचकश्यपात्क्षत्रियवरम् ८ तूष्णींबभूवनृपतिःपवनस्त्वब्रवीत्पुनः शृणुराजन्नुतथ्यस्यजातस्यांगिरसेकुले ९ भद्रासोमस्यदुहितारूपेणापरमामता तस्यास्तुल्यंपतिंसोमउतथ्यंसमपश्यत १० साचतीव्रंतपस्तेपेमहाभागायशस्विनी उतथ्यार्थेतुचार्वंगीपरंनियममास्थिता ११ ततआहूयसोतथ्यंददावत्रिर्यशस्विनीम् भार्यार्थेसचजग्राहविधिवद्भूरिदक्षिणः १२ तांत्वकामयतश्रीमान्वरुणःपूर्वमेवह सचागम्यवनप्रस्थंयमुनायाजहारताम् १३ जलेश्वरस्तुहृत्वातामनयत्स्वपुरंप्रति परमाद्भुतसंकाशंषट्सहस्रशतन्हृदम् १४ नहिरम्यतरंकिंचित्तस्मादन्यत्पुरोत्तमम् प्रासादैरप्सरोभिश्चदिव्यैःकामैश्चशोभितम् १५ तत्रदेवस्तयासार्धंरेमेराजन्जलेश्वरः अथाख्यातमुतथ्यायततःपत्न्यवमर्दनम् १६ तच्छ्रुत्वानारदात्सर्वमुतथ्योनारदंतथा प्रोवाचगच्छब्रूहित्वंवरुणंपरुषंवचः १७ मद्वाक्यान्मुंचमेभार्यांकस्मात्तांहृतवानसि लोकपालोसिलोकानांनलोकस्यविलोपकः १८

पोभूमिर्भूत्वासीदित्यन्वयः ६ ७ ८ ९ १० ११ सोत्रिःसोमपिताउतथ्यमाहूयतांतस्मैददौसोतथ्यमितिसंधिरार्षः १२ १३ १४ १५ देवःवरुणःतयाभद्रया १६ १७ १८ ७ ७ ७ ७ ७ ७ ७

सोमेनदत्ताभार्यामेत्वयाचापहृताद्यवै इत्युक्तोवचनात्तस्यनारदेनजलेश्वरः १९ मुंचभार्यामुतथ्यस्यकस्मात्त्वंहृतवानसि इति
श्रुत्वावचस्तस्यसोप्येतंवरुणोब्रवीत् २० ममैषासुप्रियाभार्यानैनामुत्स्रष्टुमुत्सहे इत्युक्तोवरुणेनाथनारदःप्राप्यतंमुनिम् उ
तथ्यमब्रवीद्वाक्यंनातिहृष्टमनाइव २१ गलेगृहीत्वाक्षिप्तोस्मिवरुणेनमहामुने नप्रयच्छतितेभार्यांयत्तेकार्यंकुरुष्वतत् २२
नारदस्यवचःश्रुत्वाक्रुद्धःप्राज्वलदंगिराः अपिबत्तेजसावारिविष्टभ्यसुमहातपाः २३ पीयमानेतुसर्वस्मिंस्तोयेपिसलिलेश्व
रः सुहृद्भिःक्षोभ्यमाणोपिनैवामुंचततातदा २४ ततःक्रुद्धोब्रवीद्भूमिमुतथ्योब्राह्मणोत्तमः दर्शयस्वस्थलंभद्रेषट्सहस्रशत
हृदम् २५ ततस्तदीरणंजातंसमुद्रश्चापिसर्पितः तस्माद्देशान्नदींचैवप्रोवाचासौद्विजोत्तमः २६ अदृश्यागच्छभीरुत्वंसरस्व
तिमरून्प्रति अपुण्यएषभवतुदेशस्त्यक्तस्त्वयाशुभे २७ तस्मिन्संशोषितेदेशेभद्रामादायवारिपः अददाच्छरणंगत्वाभार्या-
मांगिरसायवै २८ प्रतिगृह्यतुतांभार्यामुतथ्यःसुमनाभवत् मुमोचचजगद्दुःखाद्वरुणंचैवहैहय २९ ततःसलब्ध्वातांभा
र्यांवरुणंप्राहधर्मवित् उतथ्यःसुमहातेजायत्तच्छृणुनराधिप ३० ममैषातपसाप्राप्ताक्रोशतस्तेजलाधिप इत्युक्त्वातामुपा
दायस्वमेवभवनंययौ ३१ एषराजन्नीदृशोवैउतथ्योब्राह्मणर्षभः ब्रवीम्यहंब्रूहिवात्वमुतथ्यात्क्षत्रियंवरम् ३२ इति
श्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेपवनार्जुनसंवादोनामशतोपरिपंचपंचाशत्तमोऽध्यायः १५५ भीष्मउवाच
इत्युक्तःसनृपस्तूष्णीमभूद्वायुस्ततोब्रवीत् शृणुराजन्नगस्त्यस्यमाहात्म्यंब्राह्मणस्यह १ असुरैर्निर्जितादेवानिरुत्साहाश्चते
कृताः यज्ञाश्चैषांहृताःसर्वेपितृणांचस्वधास्तथा २ कर्मेज्यामानवानांचदानवैर्हैहयर्षभ भ्रष्टैश्वर्यास्ततोदेवाश्चेरुःपृथ्वीमि
तिश्रुतिः ३ ततःकदाचित्तेराजन्दीप्तमादित्यवर्चसम् ददृशुस्तेजसायुक्तमगस्त्यंविपुलव्रतम् ४ अभिवाद्यतुतंदेवापृष्ट्वाकुशल
मेवच इदमूचुर्महात्मानंवाक्यंकालेजनाधिप ५ दानवैर्युधिभग्नाःस्मतथैश्वर्याच्चभ्रंशिताः तदस्मान्नोभयात्तीव्रात्त्राहित्वंमु-
निपुंगव ६

इत्युक्तः सतदा देवैरगस्त्यः कुपितोभवत् प्रजज्वालचतेजस्वी कालाग्निरिवसंक्षये ७ तेनदीप्तांशुजालेननिर्दग्धादानवास्तदा अं
तरिक्षान्महाराजनिपेतुस्ते सहस्रशः ८ दह्यमानास्तुतेदैत्यास्तस्यागस्त्यस्यतेजसा उभौलोकौपरित्यज्यगताः काष्ठांतुदक्षिणा
म् ९ बलिस्तुयजतेयज्ञमश्वमेधमहीगतः येऽन्येऽधस्थामहीस्थाश्चतेनदग्धामहासुराः १० ततोलोकाः पुनः प्राप्ताः सुरैः शांतंच
तद्रजः अथैनमब्रुवन्देवाभूमिष्ठानसुरान्जहि ११ इत्युक्तः प्राहदेवान्सनशक्ष्यामिमहीगतान् दग्धुंतपोहिक्षीयेन्मेनशक्ष्यामीति
पार्थिव १२ एवंदग्धाभगवतादानवाः स्वेनतेजसा अगस्त्येनतदाराजन्तपसाभावितात्मना १३ ईदृशश्चाप्यगस्त्योहिकथि
तस्तेमयानघ ब्रवीम्यहंब्रूहिवात्वमगस्त्यात्क्षत्रियंवरम् १४ भीष्मउवाच इत्युक्तः सतदातूष्णीमभूद्वायुस्ततोऽब्रवीत् शृ
णुराजन्वसिष्ठस्यमुख्यंकर्मयशस्विनः १५ आदित्याः सत्रमासंततसरोवैमानसंप्रति वसिष्ठंमनसागत्वाज्ञात्वातत्रास्यगौरवम्
१६ यजमानांस्तुतान्दृष्ट्वासर्वान्दीक्षानुकर्शितान् हंतुमैच्छंतशैलाभाःखलिनोनामदानवाः १७ अदूरात्तुततस्तेषांब्रह्मदत्तवरं
सरः हताहतावैतत्रतेजीवंत्याप्लुत्यदानवाः १८ तेप्रगृह्यमहाघोरान्पर्वतान्परिघान्द्रुमान् विक्षोभयंतः सलिलमुत्थितंशतयोज
नम् १९ अभ्यद्रवंतदेवांस्तेसहस्राणिदशैवहि ततस्तैरर्दितादेवाः शरणंवासवंययुः २० सचतैर्व्यथितः शक्रोवसिष्ठंशरणंय
यौ ततोऽभयंददौतेभ्योवसिष्ठोभगवानृषिः २१ तदातान्दुःखितान्ज्ञात्वाआनृशंस्यपरोमुनिः अयत्नेनादहत्सर्वान्खलिनः स्वेन
तेजसा २२ कैलासंप्रस्थितांचैवनदींगंगांमहातपाः आनयत्तत्सरोदिव्यंतयाभिन्नंचतत्सरः २३ सरोभिन्नंतयानद्यासरयूः सा
ततोऽभवत् हताश्चखलिनोयत्रसदेशःखलिनोऽभवत् २४ एवंसेंद्रावसिष्ठेनरक्षितास्त्रिदिवौकसः ब्रह्मदत्तवराश्चैवहतादैत्यामहात्मना
२५ एतत्कर्मवसिष्ठस्यकथितंहिमयानघ ब्रवीम्यहंब्रूहिवात्वंवसिष्ठात्क्षत्रियंवरम् २६ इतिश्रीमहाभारतेआ
नुशासनिकेपर्वणिदानधर्मेपवनार्जुनसंवादेशतोपरिषट्पंचाशत्तमोऽध्यायः १५६

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६

भीष्मउवाच इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्तमब्रवीत् शृणुमे हैहयश्रेष्ठकर्मात्रेःसुमहात्मनः १ घोरेतमस्ययुध्यंतसहि
तादेवदानवाः अविध्यतशरैस्तत्रस्वर्भानुःसोमभास्करौ २ अथतेतमसाग्रस्तानिहन्यतेस्मदानवैः देवानृपतिशार्दूलसहैवबलि
भिस्तदा ३ असुरैर्वध्यमानास्तेक्षीणप्राणादिवौकसः अपश्यततपस्यंतमत्रिंविप्रंतपोधनम् ४ अथैनमब्रुवन्देवाःशांतक्रोधंजि
तेंद्रियम् असुरैरिषुभिर्विद्धौचंद्रादित्याविमावुभौ ५ वयंवध्यामहेचापिशत्रुभिस्तमसावृते नाधिगच्छामशांतिंचभयात्त्रायस्वनः
प्रभो ६ अत्रिरुवाच कथंरक्ष्यामिभवतस्तेब्रुवंश्चंद्रमाभव तिमिरघ्नश्चसविताद्स्युहताचनोभव ७ एवमुक्तस्तदात्रिर्वैतमो
नुदभवच्छशी अपश्यत्सौम्यभावाच्चसोमवत्प्रियदर्शनः ८ दृष्ट्वानातिप्रभंसोमंतथासूर्यंचपार्थिव प्रकाशमकरोदत्रिस्तपसास्वेन-
संयुगे ९ जगद्वितिमिरंचापिप्रदीप्तमकरोत्तदा १० व्यजयच्छत्रुसंघांश्चदेवानांस्वेनतेजसा अत्रिणादह्यमानांस्तान्दृष्ट्वादेवामहा
सुरान् ११ पराक्रमैस्तेपितदाव्यभ्यन्नत्रिसुरक्षिताः उद्भासितश्चसवितादेवास्त्राताहतासुराः १२ अत्रिणात्वथसामर्थ्यंकृतमुत्तमते
जसा द्विजेनाग्निद्वितीयेनजपताचर्मवाससा १३ फलभक्षेणराजर्षेपश्यकर्मात्रिणाकृतम् तस्यापिविस्तरेणोक्तंकर्मात्रेःसुमहात्म-
नः ब्रवीम्यहंब्रूहिवात्वमत्रितःक्षत्रियवरम् १४ इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्ततोऽब्रवीत् शृणुराजन्महत्कर्मच्यवनस्यमहात्म
नः १५ अश्विनोःप्रतिसंश्रुत्यच्यवनःपाकशासनम् प्रोवाचसहितोदेवैःसोमपावश्विनौकुरु १६ इंद्रउवाच अस्माभिर्निंदि
तावेतौभवेतांसोमपौकथम् देवैर्नसंमितावेतौतस्मान्मैववदस्वनः १७ अश्विभ्यांसहनेच्छामसोमंपातुंमहाव्रत यदन्यद्वक्ष्यसेवि
प्रतत्करिष्यामतेवचः १८ च्यवनउवाच पिबेतामश्विनौसोमंभवद्भिःसहिताविमौ उभावेतावपिसुरौसूर्यपुत्रौसुरेश्वर १९
क्रियतांमद्वचोदेवायथावैसमुदाहृतम् एतद्वःकुर्वतांश्रेयोभवेन्नैतदकुर्वताम् २० इंद्रउवाच अश्विभ्यांसहसोमंवैनपा
स्यामिद्विजोत्तम पिबंत्वन्येयथाकामंनाहंपातुमिहोत्सहे २१ च्यवनउवाच नचेत्करिष्यसिवचोमयोक्तंबलसूदन मया
प्रमथितःसद्यःसोमंपास्यसिवैमख २२ वायुरुवाच ततःकर्मसमारब्धंहितायसहसाश्विनोः च्यवनेनततोमंत्रैरभिभू
ताःसुराभवन् २३

१७ १८ १९ २० २१ २२ २३ छ छ छ छ

तत्तुकर्मसमारब्धंदृष्ट्वेंद्रःक्रोधमूर्छितः उद्यम्यविपुलंशैलंच्यवनंसमुपाद्रवत् २४ तथावज्रेणभगवानमर्षाकुललोचनः तमापतंतंदृ
ष्ट्वैवच्यवनस्तपसान्वितः २५ अद्भिःसिक्त्वास्तंभयत्तंसवज्रंसहपर्वतम् अथेंद्रस्यमहाघोरंसोसृजच्छत्रुमेवहि २६ मदंनामाहुतिमयंव्या
दितास्यंमहामुनिः तस्यदंतसहस्रंतुबभूवशतयोजनम् २७ द्वियोजनशतास्तस्यदंष्ट्राःपरमदारुणाः हनुस्तस्याभवद्भूमावास्यंचास्यास्पृ
शद्दिवम् २८ जिह्वामूलेस्थितास्तस्यसर्वेदेवाःसवासवाः तिमेरास्यमनुप्राप्तायथामत्स्यामहार्णवे २९ तेसंमंत्र्यततोदेवामदस्यास्यसमीप
गाः अब्रुवन्सहिताःशक्रंप्रणमास्मैद्विजातये ३० अश्विभ्यांसहसोमंचपिबामविगतज्वराः ततःसप्रणतःशक्रश्चकारच्यवनस्यतत् ३१ च्य
वनःकृतवानेतावश्विनौसोमपायिनौ ततःप्रत्याहरत्कर्ममदंचव्यभजन्मुनिः ३२ अक्षेषुमृगयायांचपानेस्त्रीषुचवीर्यवान् एतैर्दोषैर्नरोरा
जन्क्षयंयातिनसंशयः ३३ तस्मादेतान्नरोनित्यंदूरतःपरिवर्जयेत् ३४ एतत्तेच्यवनस्यापिकर्मराजन्प्रकीर्तितम् ब्रवीम्यहंब्रूहिवात्वंक्ष
त्रियंब्राह्मणाद्वरम् ३५ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेपवनार्जुनसंवादेशतोपरिसप्तपंचाशत्तमोऽध्यायः १५७
भीष्मउवाच तूष्णीमासीदर्जुनस्तुपवनस्त्वब्रवीत्पुनः शृणुमेब्राह्मणेष्वेवमुख्यंकर्मजनाधिप १ मदस्यास्यमनुप्राप्तायदासेंद्रादिवौ
कसः तदेवच्यवनेनेहहृतातेषांवसुंधरा २ उभौलोकौहृतौमत्वातेदेवादुःखिताभवन् शोकार्ताश्चमहात्मानंब्रह्माणंशरणंययुः ३ दे
वाऊचुः मदास्यव्यतिषिक्तानामस्माकंलोकपूजित च्यवनेनहृताभूमिःकपैश्चैवदिवंप्रभो ४ ब्रह्मोवाच गच्छध्वंशरणंविप्राना
शुसेंद्रादिवौकसः प्रसाद्यतांस्तुभौलोकाववाप्स्यथयथापुरा ५ तेययुःशरणंविप्रानूचुस्तेकान्जयामहे इत्युक्तास्तेद्विजान्प्राहुर्जयतेहकपा
निति ६ भूगतान्हिविजेतारोवयमित्यब्रुवन्द्विजाः ततःकर्मसमारब्धंब्राह्मणैःकपनाशनम् ७ तच्छ्रुत्वाप्रेषितोदूतोब्राह्मणेभ्योधनी
कपैः सचतान्ब्राह्मणानाहधनीकपवचोयथा ८ भवद्भिःसदृशाःसर्वेकपाःकिमिहवर्त्तते सर्ववेदविदःप्राज्ञाःसर्वेचक्रतुयाजिनः ९ सर्वे
सत्यव्रताश्चैवसर्वेतुल्यामहर्षिभिः श्रीश्चैवरमतेतेषुधारयंतिश्रियंचते १० वृथादारान्नगच्छंतिवृथामांसंनभुंजते दीप्तमग्निंजुह्वतेच
गुरूणांवचनेस्थिताः ११ सर्वेचनियतात्मानोबालानांसंविभागिनः उपेत्यशनकैर्यांतिनसेवंतिरजस्वलाम् १२

१३ १४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७

अभक्तवस्तुनाश्नंतिगर्भिणीरूद्रकादिषु पूर्वाण्हेषुनदीव्यंतिदिवाचैवनशेरते १३ एतैश्चान्यैश्चबहुभिर्गुणैर्युक्तान्कथंकपान्
विजेष्यथनिवर्त्तध्वनिरत्तानास्त्रवहिवः १४ ब्राह्मणाऊचुः कपान्वयंविजेष्यामोयेदेवास्तेवयंस्मृताः तस्माद्वध्याःकपा स्मा
कंधनिन्याहियथागतम् १५ धनीगत्वाकपानाहनवोविप्राःप्रियकराः गृहीत्वास्त्राण्यतोविप्रान्कपाःसर्वेसमाद्रवन् १६ समुदग्रध्वजा
न्दृष्ट्वाकपान्सर्वेद्विजातयः व्यसृजन्ज्वलितानग्नीन्कपानांप्राणनाशनान् १७ ब्रह्मसृष्टाहव्यभुजःकपान्हत्वाहुताशनाः नभसीवय
थाभ्राणिव्यराजंतनराधिप १८ हत्वावैदानवान्देवाःसर्वेसंभूयसंयुगे तेनाभ्यजानन्हितदाब्राह्मणैर्निहतान्कपान् १९ अथागम्यमहा
तेजानारदोकथयद्विभो यथाहतामहाभागैस्तेजसाब्राह्मणैःकपाः २० नारदस्यवचःश्रुत्वाप्रीताःसर्वेदिवौकसः प्रशशंसुर्द्विजांश्चापि
ब्राह्मणाश्चयशस्विनः २१ तेषांतेजस्तथावीर्यंदेवानांववृधेततः अवाप्नुवंश्चामरत्वंत्रिषुलोकेषुपूजितम् २२ इत्युक्तवचनंवायुमर्जुनः
प्रत्युवाचह प्रतिपूज्यमहाबाहोयत्तच्छृणुयुधिष्ठिर २३ अर्जुनउवाच जीवाम्यहंब्राह्मणार्थंसर्वथासततंप्रभो ब्रह्मण्योब्रा
ह्मणेभ्यश्चप्रणमामिचनित्यशः २४ दत्तात्रेयप्रसादाच्चमयाप्राप्तमिदंबलम् लोकेचपरमाकीर्तिर्धर्मश्चाचरितोमहान् २५ अहोब्रा
ह्मणकर्माणिमयामारुततत्त्वतः त्वयाप्रोक्तानिकार्त्स्न्येनश्रुतानिप्रयतेनच २६ वायुरुवाच ब्राह्मणान्क्षात्रधर्मेणपालयस्वेंद्रिया
णिच भृगुभ्यस्तेभयंघोरंतत्तुकालाद्भविष्यति २७ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेपवनार्जुनसंवादेशतोपरिअ
ष्टपंचाशत्तमोऽध्यायः १५८ युधिष्ठिरउवाच ब्राह्मणानर्चसेराजन्सततंसंशितव्रतान् किंतुकर्मोदयंदृष्ट्वातानर्चसिजनाधिप १
कांवाब्राह्मणपूजायांव्युष्टिंदृष्ट्वामहाव्रत तानर्चसिमहाबाहोसर्वमेतद्वदस्वमे २ भीष्मउवाच एषतेकेशवःसर्वमाख्यास्यतिमहा
मतिः व्युष्टिंब्राह्मणपूजायांदृष्टव्युष्टिर्महाव्रतः ३ बलंश्रोत्रेवाङ्मनश्चक्षुषीचज्ञानंतथासविशुद्धंममाद्य देहन्यासोनातिचिरान्मतोमेनचा
तितूर्णंसविताद्ययाति ४ उक्ताधर्मायेपुराणेमहांतोराजन्ब्राह्मणानांक्षत्रियाणांविशांच तथाशूद्राणांधर्ममुपासतेचशेषंकृष्णादुपशिक्ष
स्वपार्थ ५ अहंह्येनंवेद्मितत्त्वेनकृष्णंयोयंहियच्चास्यबलंपुराणम् अमेयात्माकेशवःकौरवेंद्रसोयंधर्मंवक्ष्यतिसंशयेषु ६

इतिदानधर्मेटीकायांशतोपरिअष्टपंचाशत्तमोऽध्यायः १५८ ब्राह्मणान्कर्मोदयंफलोदयं १ २ ३ नचेतिदुःखिनस्यदिनंमहद्भवतीत्यर्थः ४ ५ ६ ७ ७

७ अस्य चाध इत्याकाशादेरुपर्युपरि अयमेवास्तीत्युक्तं ८ अर्णवं तर्जयानमित्यगाधत्वमपारत्वं चोक्तम् ९ कृत इति ज्ञानं अकर्त्तव्यकोटेरपि उपस्थानात् त्रेता-
यांत्विवेक आसीत् द्वापरे तु द्वितीयकोटेः साम्याद्बलं प्रधानमासीन्न धर्मः कलौ तु अधर्म एव बलवानिति भावः १० स एव पूर्वं आदिदेवो दैत्यान्निजघान स एव सम्राट् बलि
रूपी पूर्वदेवो दैत्यो बभूव ११ ग्लानिर्ग्लायति १२ एवमेनं च राहुं सोमं शक्रं च विद्धि १३ शोणितभृच्छरि १४ रायः धनं तस्य पोषः पोषकः १५ १६ महीं सत्रं पृथिव्या

कृष्णः पृथ्वीमसृजत् खं दिवं च कृष्णास्य देहान्मेदिनी संबभूव वराहोयं भीमबलः पुराणः स पर्वतान्व्यसृजद्वै दिशश्च ७ अस्य चाधोथांतरिक्षं
दिवं च दिशश्चतस्रो विदिशाश्चतस्रः सृष्टिस्तथैवेयमनुप्रसूता स निर्ममे विश्वमिदं पुराणम् ८ अस्य नाभ्यां पुष्करं संप्रभूतं यत्रोत्पन्नः स्वयमेवा
मितौजाः येनाच्छिन्नं तत्तमः पार्थ घोरं यत्तत्तिष्ठत्यर्णवं तर्जयानम् ९ कृते युगे धर्म आसीत्समग्रस्त्रेताकाले ज्ञानमनुप्रपन्नः बलं त्वासीद्द्वापरे पार्थ
कृष्णः कलौ त्वधर्मः क्षितिमेवाजगाम १० स एव पूर्वं निजघान दैत्यान्स पूर्वदेवश्च बभूव सम्राट् स भूतानां भावनो भूतभव्यः स विश्वस्यास्य जगत
श्चाभिगोप्ता ११ यदा धर्मो ग्लाति वंशे सुराणां तदा कृष्णो जायते मानुषेषु धर्मे स्थित्वा स तु वै भावितात्मा परांश्च लोकानपरांश्च पाति १२ त्या
ज्यांस्त्यक्त्वाथो सुराणां वधाय कार्याकार्ये कारणं चैव पार्थ कृतं करिष्यन्क्रियते न राहुं देवो सोमं विद्धि च शक्रमेनम् १३ स विश्वकर्मा स हि वि
श्वरूपः स विश्वभुग्विश्वसृग्विश्वजिच्च स शूलभृच्छोणितभृत्करालस्तं कर्मभिर्विदितं वै स्तुवंति १४ तं गंधर्वाणामप्सरसां च नित्यमुप
तिष्ठते विबुधानां शतानि तं राक्षसाश्च परिसंवदंति रायस्पोषः स विजिगीषुरेकः १५ तमध्वरे शंसितारः स्तुवंति रथंतरे सामगाश्च स्तुव
ंति तं ब्राह्मणा ब्रह्ममंत्रैः स्तुवंति तस्मै हविरध्वर्यवः कल्पयंति १६ स पौराणीं ब्रह्मगुहां प्रविष्टो महीसत्रं भारताग्रे ददर्श स चैव गामुद्दधा
राग्र्यकर्मा विक्षोभ्य दैत्यानुरगान्दानवांश्च १७ तं घोषार्थे गीर्भिरिंद्राः स्तुवंति स चापीशो भारतैकः पशूनाम् तस्य भक्षान्विविधान्वे
दयंति तमेवाजौ वाहनं वेदयंति १८ तस्यांतरिक्षं पृथिवी दिवं च सर्वं वशे तिष्ठति शाश्वतस्य स कुंभे रेतः ससृजे सुराणां यत्रोत्पन्नमृषि
माहुर्वसिष्ठम् १९

श्छादनमर्जुनमिति यावत् सत्रं यज्ञे महादानाच्छादनारण्यकैतवे इति मेदिनी १७ घोषार्थे गोवर्द्धनोद्धरणकाले पोषो बुनादो वा द्रष्टव्य थमित्यर्थः प
शूनां गवां जीवानां च १७ वाहनं जयप्रापकम् १८ सुराणां मित्रावरुणयोरेतः कुंभे ससर्ज १९ ५ ५ ५ ५ ५

विक्रांतैःपादविक्षेपैःत्रीणिभुवनानि २० देवानां आसेतिशेषः २१ जुषंतिसेवंते २२ विधत्तेऽध्वरमित्यर्थात् त्रिनाभिशीतोष्णवृष्टिकालगर्भंचक्रंसंवत्सरंत्रिधा मेति
वर्षवातोष्णप्रकारं २३ हंसंसूर्यं २४ २५ बंधुरःसंसाररथस्ययोक्तात्रिचक्रःसत्वरजस्तमोमयःत्रिवृच्छिराःऊर्ध्वमध्याधोगतिफलःचतुरश्वःकालादृष्टेश्वरेच्छा

समातरिश्वाविभुरश्ववाजीसरश्मिवान्सविताचादिदेवः तेनासुराविजिताःसर्वएवनहिक्रांतैर्विजितानीहत्रीणि २० सदेवानांमानुषाणां
पितॄणांतमेवाहुर्यज्ञविदांवितानम् सएवकालंविभजन्नुदेतितस्योत्तरंदक्षिणंचायनेद्वे २१ तस्यैवोर्ध्वंतिर्यगधश्चरंतिगभस्तयोमेदि
नींभासयंतः तंब्राह्मणावेदविदोजुषंतितस्यादित्योभासमुपयुज्यभाति २२ समासिमास्यध्वरकृद्विधत्तेतमध्वरेवेदविदःपठंति सए
वोक्तश्चक्रमिदंत्रिनाभिसप्ताश्वयुक्तंवहतेवैत्रिधाम २३ महातेजाःसर्वगःसर्वसिंहःकृष्णोलोकान्धारयतेयथैकः हंसंतमोघ्नंचतम्-
मेववीरकृष्णंसदापार्थकर्त्तारमेहि २४ सएकदाकक्षगतोमहात्मातुष्टोविभुःखांडवेधूमकेतुः सराक्षसानुरगांश्चावजित्यसर्वत्रगः
सर्वमग्नौजुहोति २५ सएवपार्थायश्वेतमश्वंप्रायच्छत्सएवाश्वानथसर्वांश्चकार संबंधुरस्तस्यरथस्त्रिचक्रस्त्रिवृच्छिराश्चतुर-
श्वस्त्रिनाभिः २६ सविहायोव्यदधात्पंचनाभिःसनिर्ममेगांदिवमंतरिक्षम् सोरण्यानिव्यसृजत्पर्वतांश्चहृषीकेशोमितदीप्ताग्नितेजाः
२७ अलंघयद्वैसरितोजिघांसन्शक्रंवज्रंप्रहरंतंनिरास समहेंद्रःस्तूयतेवैमहाध्वरेविप्रैरेकोऋक्सहस्रैःपुराणैः २८ दुर्वासावैतं
नान्येनशक्योगृहेराजन्वासयितुंमहौजाः तमेवाहुर्ऋषिमेकंपुराणंसविश्वकृद्विदधात्यात्मभावान् २९ वेदांश्चयोवेदयतेऽधिदे
वोविधींश्चयश्चाश्रयतेपुराणान् कामेवेदेलौकिकेयत्फलंचविष्वक्सेनःसर्वमेतत्प्रतीहि ३० ज्योतींषिशुक्लानिहिसर्वलोकेत्रयोलो
कालोकपालास्त्रयश्च त्रयोग्नयोव्याहृतयश्चतिस्रःसर्वेदेवादेवकीपुत्रएव ३१ संवत्सरःसऋतुःसार्धमासःसाहोरात्रःसकलावै
सकाष्ठा मात्रामुहूर्त्ताश्चलवाःक्षणाश्चविष्वक्सेनःसर्वमेतत्प्रतीहि ३२ चंद्रादित्यौग्रहनक्षत्रताराःसर्वाणिपर्वाण्यथपौर्णमासम्
नक्षत्रयोगाऋतवश्चपार्थविष्वक्सेनात्सर्वमेतत्प्रसूतम् ३३ रुद्रादित्यावसवोयाश्विनौचसाध्याश्चविश्वेमरुतांगणाश्च प्रजापति
र्देवमातादितिश्चसर्वेकृष्णादृषयश्चैवसप्त ३४ वायुर्भूत्वाविक्षिपतेचविश्वमग्निर्भूत्वादहतेविश्वरूपः आपोभूत्वामज्जयतेच
सर्वंब्रह्माभूत्वासृजतेसर्वसंघान् ३५

ससंकल्पाश्चत्वारोऽश्वायस्यत्रिनाभिःशुक्लकृष्णशुक्लकृष्णात्रिविधकर्मगर्भः २६ पंचनाभिःपांचभौति
कःपंचभूतानांनाभिराश्रयइत्यर्थः २७ निरासपराभूतवान् २८ २९ विधीनअग्निहोत्रादीन ३० ३१ ३२ ३३ ३४ ३५ ६५

वेद्यंवेदप्रतिपाद्यंज्ञेयं ३६ ३७ ३८ अनिरुद्धंअहंकारं पंचधापचप्रकारंदेवासुरमनुष्यश्वापदतिर्यग्रूपेणपंचजनाःपंचभूतानितैरुपपन्नंविश्वंसिसृक्षुरा
ज्ञापयतीतिपूर्वेणान्वयः ३९ चतुर्विधंजरायुजादि ४० पंचबीजांचतुर्विधभूतग्रामःकर्मचतेषांबीजभूतं ४१ ४२ ४३ ४४ ४५ अतः



वेद्यंचयद्वेदयतेचवेद्यंविधिश्चयश्चाश्रयतेविधेयम् धर्मेचवेदेचबलेचसर्वंचराचरंकेशवंत्वंप्रतीहि ३६ ज्योतिर्भूतःपरमोसौपुरस्ता
त्प्रकाशतेयत्प्रभयाविश्वरूपः अपःसृष्ट्वासर्वभूतात्मयोनिःपुराकरोत्सर्वमेवाथविश्वम् ३७ ऋतूनुत्पातान्विविधान्यद्भुतानिमेघा
न्विद्युत्सर्वमैरावतंच सर्वंकृष्णात्स्थावरंजंगमंच विश्वात्मानंविश्वमेनंप्रतीहि विश्वावासंनिर्गुणंवासुदेवंसंकर्षणंजीवभूतंवदंति
३८ ततःप्रद्युम्नमनिरुद्धंचतुर्थमाज्ञापयत्यात्मयोनिर्महात्मा सपंचधापंचजनोपपन्नंसंचोदयन्विश्वमिदंसिसृक्षुः ३९ ततश्च
कारावनिमारुतौचखंज्योतिरंभश्चतथैवपार्थ सस्थावरंजंगमंचैवमेतच्चतुर्विधंलोकमिमंचकृत्वा ४० ततोभूमिंव्यदधात्पंचबीजांद्यौः
पृथिव्यांधास्यतिभूरिवारि तेनविश्वंकृतमेतद्धिराजन्सजीवयत्यात्मनैवात्मयोनिः ४१ ततोदेवानसुरान्मानवांश्चलोकानृषींश्चापि
पितॄन्प्रजाश्च समासेनविधिवत्प्राणिलोकान्सर्वान्सदाभूतपतिःसिसृक्षुः ४२ शुभाशुभंस्थावरंजंगमंचविष्वक्सेनात्सर्वमेतत्-
प्रतीहि यद्वर्ततेयच्चभविष्यतीहसर्वंह्येतत्केशवंत्वंप्रतीहि ४३ मृत्युश्चैवप्राणिनामंतकालेसाक्षात्कृष्णःशाश्वतोधर्मवाहः भू-
तंचयच्चेहनविद्मकिंचिद्विष्वक्सेनात्सर्वमेतत्प्रतीहि ४४ यत्प्रशस्तंचलोकेषुपुण्यंयच्चशुभाशुभम् तत्सर्वंकेशवोचिंत्योविपरी
तमतःपरम् ४५ एतादृशःकेशवोऽतश्चभूयोनारायणःपरमश्चाव्ययश्च मध्यादंतोस्यजगतस्तस्थुषश्चबुभूषतांप्रभवश्चाव्य
यश्च ४६ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेमहापुरुषमाहात्म्यनामशतोपरिएकोनषष्टितमोऽध्यायः १५९
युधिष्ठिरउवाच ब्रूहिब्राह्मणपूजायांव्युष्टिंत्वंमधुसूदन वेत्तात्वमस्यचार्थस्यवेदत्वांहिपितामहः १ वासुदेवउवाच
शृणुष्वावहितोराजन्द्विजानांभरतर्षभ यथातत्त्वेनवदतोगुणान्वैकुरुसत्तम २ द्वारवत्यांसमासीनंपुरामांकुरुनंदन प्रद्युम्नःपरि
पप्रच्छब्राह्मणैःपरिकोपितः ३ किंफलंब्राह्मणेष्वस्तिपूजायांमधुसूदन ईश्वरत्वंकुतस्तेषामिहैवचपरत्रच ४ सदाद्विजाती-
न्संपूज्यकिंफलंतत्रमानद एतद्ब्रूहिस्फुटंसर्वंसुमहान्संशयोत्रमे ५

केशवात्यत्परंकल्प्यतेतद्विपरीतम् असन्मार्गइत्यर्थः ४६
इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेटीकायांशतोपरिएकोनषष्टितमोऽध्यायः १५९ १ २ ३ ४ ५ ६ ७

इत्युक्तेवचनेतस्मिन्प्रद्युम्नेनतथात्वहम् प्रत्यब्रुवंमहाराजयत्तच्छृणुसमाहितः ६ व्युष्टिंब्राह्मणपूजायांरौक्मिणेयनिबोधमे एतेहि
सोमराजानईश्वराःसुखदुःखयोः ७ अस्मिन्लोकेरौक्मिणेयतथामुष्मिंश्चपुत्रक ब्राह्मणप्रमुखंसौम्यनमेत्रास्तिविचारणा ८ ब्रा
ह्मणप्रतिपूजायामायुःकीर्त्तिर्यशोबलम् लोकालोकेश्वराश्चैवसर्वेब्रह्मणपूजकाः ९ त्रिवर्गेचापवर्गेचयशःश्रीरोगशांतिषु देव
तापितृपूजासुसंतोष्याश्चैवनोद्विजाः १० तत्कथंवैनाद्रियेयमीश्वरोस्मीतिपुत्रक मातेमन्युर्महाबाहोभवत्वत्रद्विजान्प्रति ११ ब्रा
ह्मणाहिमहद्भूतमस्मिन्लोकेपरत्रच भस्मकुर्युर्जगदिदंक्रुद्धाःप्रत्यक्षदर्शिनः १२ अन्यानपिसृजेयुश्चलोकान्लोकेश्वरांस्तथा
कथंतेषुनवर्त्तेरन्सम्यग्ज्ञानात्सुतेजसः १३ अवसन्मद्गृहेतातब्राह्मणोहरिपिंगलः चीरवासाबिल्वदंडीदीर्घश्मश्रुःकृशोमहान्
१४ दीर्घेभ्यश्चमनुष्येभ्यःप्रमाणादधिकोभुवि सस्वैरंचरतेलोकान्येदिव्यायेचमानुषाः इमांगाथांगायमानश्चत्वरेषुसभासुच १५
दुर्वाससंवासयेत्कोब्राह्मणंसत्कृतंगृहे रोषणःसर्वभूतानांसूक्ष्मेप्यपकृतेकृते परिभाषांचमेश्रुत्वाकोनुदद्यात्प्रतिश्रयम् १६ यो
मांकश्चिद्वासयीतंनसमांकोपयेदिति यस्मान्नाद्रियतेकश्चित्ततोहंसमवासयम् ससंभुंक्तेसहस्राणांबहूनामन्नमेकदा १७ ए
कदासोल्पकंभुंक्तेनचैवैतिपुनर्गृहान् अकस्माच्चप्रहसतितथाकस्मात्प्ररोदिति १८ नचास्यवयसातुल्यःपृथिव्यामभवत्तदा
अथस्वावसथंगत्वासशय्यास्तरणानिच १९ कन्याश्चालंकृतादग्ध्याततोव्यपगतःपुनः अथमामब्रवीद्भूयःसमुनिःसंशितव्र-
तः २० कृष्णापायसमिच्छामिभोक्तुमित्येवसत्वरः तंदेवतुमयातस्यचित्तज्ञेनगृहेजनः २१ सर्वाण्यन्नानिपानानिभक्ष्याश्चोच्चा
वचास्तथा भवंतुसत्कृतानीहपूर्वमेवप्रचोदितः २२ ततोहंज्वलमानंवैपायसंप्रत्यवेदयम् तंभुक्त्वैवसतुक्षिप्रंततोवचनमब्रवीत्
२३ क्षिप्रमंगानिलिंपस्वपायसेनेतिसस्मह अविमृष्येवचततःकृतवानस्मितत्तथा २४ तेनोच्छिष्टेनगात्राणिशिरश्चैवाभ्यमृक्षय
म् सददर्शतदाभ्याशेमातरंतेशुभाननाम् २५ तामपिस्मयमानांसपायसेनाभ्यलेपयत् मुनिःपायसदिग्धांगीरथेतूर्णमयोजय
त् २६ तमारुह्यरथंचैवनिर्ययौसगृहान्मम अग्निवर्णोज्वलन्धीमान्सद्विजोरथधुर्यवत् २७ प्रतोदेनातुदद्बालांरुक्मिणींममप
श्यतः नचमेस्तोकमप्यासीद्दुःखमीर्ष्याकृतंतथा २८

तथासराजमार्गेणमहतानिर्ययौबहिः तदृष्ट्वामहदाश्चर्यंदाशार्हाजातमन्यवः २९ तत्राजल्पन्मिथःकेचित्समाभाष्यपरस्परम् ब्रा
ह्मणाएवजायेरन्नान्योवर्णःकथंचन ३० कोह्येनंरथमास्थायजीवेदन्यःपुमानिह आशीविषविषंतीक्ष्णंततस्तीक्ष्णतरोद्विजः ३१
ब्रह्माशीविषदग्धस्यनास्तिकश्चिच्चिकित्सकः तस्मिन्व्रजतिदुर्धर्षेप्रास्खलद्रुक्मिणीपथि ३२ तन्नामर्षयतश्रीमांस्ततस्तूर्णमचोद
यत् ततःपरमसंक्रुद्धोरथात्प्रस्कंद्यसद्विजः ३३ पदातिरुत्पथेनैवप्राद्रवद्दक्षिणामुखः तमुत्पथेनधावंतमन्वधावंद्विजोत्तमम्
३४ तथैवपायसादिग्धःप्रसीदभगवन्निति ततोविलोक्यतेजस्वीब्राह्मणोमामुवाचह ३५ जितक्रोधस्त्वयाकृष्णप्रकृत्यैवमहा-
भुज नतेपराधमिहवैदृष्टवानस्मिसुव्रत ३६ प्रीतोस्मितवगोविंदवृणुकामान्यथेप्सितान् प्रसन्नस्यचमेतातपश्यव्युष्टिंयथाविधि
३७ यावद्देवमनुष्याणामन्नेभावोभविष्यति तथैवान्नेतथातेषांत्वयिभावोभविष्यति ३८ यावच्चपुण्यलोकेषुत्वयिकीर्तिर्भविष्य-
त्रिषुलोकेषुतावच्चवैशिष्ट्यंप्रतिपत्स्यसे ३९ सुप्रियःसर्वलोकस्यभविष्यसिजनार्दन यत्तेभिन्नंचदग्धंचयच्चकिंचिद्विनाशितम्
४० सर्वंतथैवद्रष्टासिविशिष्टंवाजनार्दन यावदेतत्प्रलिप्तंतेगात्रेषुमधुसूदन ४१ अतोमृत्युभयंनास्तियावदिच्छसिचाच्युत
नतुपादतलेलिप्तेकस्मात्तेपुत्रकाद्यवै ४२ नैतन्मेप्रियमित्येवंसमांप्रीतोब्रवीत्तदा इत्युक्तोहंशरीरंस्वंददर्शश्रीसमायुतम् ४३ रु
क्मिणींचाब्रवीत्प्रीतःसर्वस्त्रीणांवरंयशः कीर्तिंचानुत्तमांलोकेसमवाप्स्यसिशोभने ४४ नत्वांजरावारोगोवावैवर्ण्यंचापिभावि
नि स्वक्ष्यंतिपुण्यगंधाश्चकृष्णमाराधयिष्यसि ४५ षोडशानांसहस्राणांवधूनांकेशवस्यह वरिष्ठाचसलोक्याचकेशवस्यभवि
ष्यसि ४६ तवमातरमित्युक्त्वाततोमांपुनरब्रवीत् प्रस्थितःसुमहातेजादुर्वासाग्निरिवज्वलन् ४७ एषैवतेबुद्धिरस्तुब्राह्मणा
न्प्रतिकेशव इत्युक्त्वासतदापुत्रतत्रैवांतरधीयत ४८ तस्मिन्नंतर्हितेचाहमुपांशुव्रतमाचरम् यत्किंचिद्ब्राह्मणोब्रूयात्सर्वंकुर्यामि
तिप्रभो ४९ एतद्व्रतमहंकृत्वामात्रातेसहपुत्रक ततःपरमहृष्टात्माप्राविशंगृहमेवच ५० प्रविष्टमात्रश्चगृहेसर्वंपश्यामितन्नवं
यद्भिन्नंयच्चवैदग्धंतेनविप्रेणपुत्रक ५१ ततोहंविस्मयंप्राप्तःसर्वंदृष्ट्वानवंदृढम् अपूजयंचमनसारौक्मिणेयसदाद्विजान् ५२

इत्यहंरौक्मिणेयस्यपृच्छतोभरतर्षभ माहात्म्यंद्विजमुख्यस्यसर्वमाख्यातवांस्तदा ५३ तथात्वमपिकौंतेयब्राह्मणान्सततंप्रभो पूज
यस्वमहाभागान्वाग्भिर्दानैश्चनित्यदा ५४ एवंव्युष्टिमहंप्राप्तोब्राह्मणस्यप्रसादजां यच्चमामाहभीष्मोयंतत्सत्यंभरतर्षभ ५५
इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेदुर्वासोभिक्षानामशतोपरिषष्टितमोऽध्यायः १६० युधिष्ठिरउवाच दुर्वास-
सःप्रसादात्तेयत्तदामधुसूदन अवाप्तमिहविज्ञानंतन्मेव्याख्यातुमर्हसि १ महाभाग्यंचयत्तस्यनामानिचमहात्मनः तत्त्वतोज्ञा
तुमिच्छामिसर्वंमतिमतांवर २ वासुदेवउवाच हंततेकीर्तयिष्यामिनमस्कृत्यकपर्दिने यदवाप्तंमयाराजन्श्रेयोयच्चार्जि-
तंयशः ३ प्रयतःप्रातरुत्थाययदधीयेविशांपते प्रांजलिःशतरुद्रीयंतन्मेनिगदितःशृणु ४ प्रजापतिस्तत्ससृजेतपसोंतेमहातपाः
शंकरस्त्वसृजत्तातप्रजाःस्थावरजंगमाः ५ नास्तिकिंचित्परंभूतंमहादेवाद्विशांपते इहत्रिष्वपिलोकेषुभूतानांप्रभवोहिसः ६ नचै-
वोत्सहतेस्थातुंकश्चिदग्रेमहात्मनः नहिभूतंसमंतेनत्रिषुलोकेषुविद्यते ७ गंधेनापिहिसंग्रामेतस्यक्रुद्धस्यशत्रवः विसंज्ञाहतभू
यिष्ठावेपंतेचपतंतिच ८ घोरंचनिनदंतस्यपर्जन्यनिनदोपमम् श्रुत्वाविशीर्येद्धृदयंदेवानामपिसंयुगे ९ यांश्चघोरेणरूपेणप
श्येत्क्रुद्धःपिनाकधृक् नसुरानासुरालोकेनगंधर्वानपन्नगाः १० कुपितेसुखमेधंतेतस्मिन्नपिगुहागताः प्रजापतेश्चदक्षस्ययजतो
विततेक्रतौ ११ विव्याधकुपितोयज्ञंनिर्भयस्तुभवस्तदा धनुषाबाणमुत्सृज्यसघोषंविननादच १२ तेनशर्मकुतःशांतिंविषादंले
भिरेसुराः विद्धेचसहसायज्ञेकुपितेचमहेश्वरे १३ तेनज्यातलघोषेणसर्वेलोकाःसमाकुलाः बभूवुरवशाःपार्थविषेदुश्चसुरासुराः
१४ आपश्चुक्षुभिरेचैवचकंपेचवसुंधरा व्यद्रवन्गिरयश्चापिद्यौःपफालचसर्वशः १५ अंधेनतमसालोकाःप्रावृतानचकाशिरे
प्रनष्टाज्योतिषांभाश्चसहसूर्येणभारत १६ भृशंभीतास्ततःशांतिंचक्रुःस्वस्त्ययनानिच ऋषयःसर्वभूतानामात्मनश्चहितैषिणः
१७ ततःसोभ्यद्रवद्देवान्क्रुद्धोरुद्रपराक्रमः भगस्यनयनेक्रुद्धःप्रहारेणव्यशातयत् १८ पूषणंचाभिदुद्रावपादेनचरुषान्वितः पु-
रोडाशंभक्षयतोदशनान्वैव्यशातयत् १९ ततःप्रणेमुर्देवास्तेवेपमानाःस्मशंकरम् पुनश्चसंदधेरुद्रोदीप्तंसुनिशितंशरम् २०

२८ २९ ३० ३१ तंचैवेति एवमध्यात्मंत्रिपुरदाहेपि संसारात्मकः सूक्ष्म [illegible] यावद्देहपातं-
स्थ्यं स्वरूपंपुरदग्धुं दकृगतंजीवन्मुक्तमतीतिगोचरंजिज्ञासमानाउमाब्रह्म विद्यामयाकृत्स्नबाधेकृतेपिअ

२१ २२ २३ र्तते एवंतंबालंहिरण्यगर्भा
बाधितानुवृत्त्यान

भेः ःप्रसादयामासुः शर्वंतेविबुधोत्तमाः २१ जेपुष्पशतरुद्रीयंदेवाः कृत्वांजलिंतदा संस्तु
रु स्यभागयज्ञेचविशिष्टंतेनुकल्पयन् भयेनत्रिदशाराजन्छरणंचप्रपेदिरे २३ तेनचै
ध्याचापद्धततत्रतत्त्वैवानुजीवयत २४ असुराणांपुराण्यासंस्त्रीणिवीर्यवतांदिवि आयसराज
शिकृत्तानिमघवाजेतुंसर्वायुधैरपि अथसर्वेऽमरारुद्रंजग्मुःशरणमर्दिताः २६ ततऊचुर्महात्मानो
ष्यतिपशवःसर्वकर्मसु २७ जहिदैत्यान्सहसुरैर्लोकांस्त्रायस्वमानद सतथोक्तस्तथेत्युक्त्वाकृ
नग्निंतथाकृत्वापुंखंवैवस्वतंयमम् वेदान्कृत्वाधनुःसर्वान्ज्यांचसावित्रिमुत्तमाम् २९ ब्रह्माणंसा
पर्वणात्रिशल्येनतेनतानिबिभेदसः ३० शरेणादित्यवर्णेनकालाग्निसमतेजसा तेसुराःसपुरास्त
कगतंदृष्ट्वाबालंपंचशिखंपुनः उमाजिज्ञासमानावैकोयमित्यब्रवीत्तदा ३२ असूयतश्चशक्रस्य
यामासतंबाहुंपरिघोपमम् ३३ नसंबुबुधिरेचैवदेवास्तंभुवनेश्वरम् सप्रजापतयःसर्वेतस्मिन्मुमु
गवान्ब्रह्मातमेमितौजसम् अयंश्रेष्ठइतिज्ञात्वाववंदेतमुमापतिम् ३५ ह्रारवत्यामममगृहेचिरकालं
सुरुमारुद्रंचतेसुराः ३६ बभूवसतदाबाहुर्बलहंतुर्यथापुरा सचापिब्राह्मणोभूत्वादुर्वासानामवीर्य
कस्मसुबहून्ममवेश्मनि तानुदारतयाचाहंचक्षमेचातिदुःसहान् ३८ सवैरुद्रःसचशिवःसोग्निःसर्वः
युश्चसोश्विनौसचविद्युतः ३९ सचंद्रमाःसचेशानःससूर्योवरुणश्चसः सकालःसोंतकोमृत्युःसयमो-
र्धमासाऋतवःसंध्येसंवत्सरश्चसः सधातासविधाताचविश्वकर्मासंसर्ववित् ४१ नक्षत्राणिग्रहाश्चैवदि
श्वमूर्त्तिरमेयात्माभगवान्परमद्युतिः ४२ एकधाचद्विधाचैवबहुधाचसएवहि शतधासहस्रधाचतथाश

कोः वशिष्टइत्यब्र वीत्पृष्टवती तत्रमहादेवस्यप्रत्यगनन्यत्वादनुत्तरमेवोत्तरत्वेनोदितत्वाद्वेदएवमुख्यंप्रमाणंप्रत्यक्षानुमानयो-
र्व्यभिचरितत्रियरूपाणांतिसृणां नात् ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ एकधाब्रह्मरूपेणद्विधाब्रह्मभेदेनबहुधेत्यादिप्रपंचरूपेण ४३

क्रमंदृष्ट्वाभीतादेवाःसहर्षि
रुद्रस्त्रिदशैःप्रसादमहेश्वरः २२
गहतुष्टेनसयज्ञःसंधितोभवत य
तंचैवसौवर्णमपिचापरम् २५ न
देवाःसर्वेसमागताः रुद्ररौद्राभवि
त्वाविष्णुंशरंतंकृत्वा २८ शल्यं
रथिंकृत्वाविनियुज्यचसर्वशः त्रि
त्रदग्धारुद्रेणभारत ३१ तंचैवां
वज्रेणप्रहरिष्यतः सवज्रंस्तंभ
हरीश्वरे ३४ ततोध्यात्वाचभ
मुपावसत् ततःप्रसादयाम
वान् ३७ विप्रकारान्प्रयुंक्ते
सस्सर्वजित् सचैवेंद्रश्चवस
रात्र्यहानिच ४० मासास्त
शोथप्रदिशस्तथा त्रिन
तसहस्रधा ३ः

इहशश्चमहादेवोभूयश्चभगवान्सतः नहिशक्यागुणावक्तुमपिवर्षशतैरपि ४४ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदान-
धर्मेईश्वरप्रशंसानामशतोपरिएकषष्टितमोऽध्यायः १६१ वासुदेवउवाच युधिष्ठिरमहाबाहोमहाभाग्यंमहात्मनः रु-
द्रायबहुरूपायबहुनाम्नेनिबोधमे १ वदंत्यग्निंमहादेवंतथास्थाणुंमहेश्वरम् एकाक्षंत्र्यंबकंचैवविश्वरूपंशिवंतथा द्वेतनूतस्य
देवस्यवेदज्ञाब्राह्मणाविदुः २ घोरामन्यांशिवामन्यांतेतनूबहुधापुनः उग्राघोरातनुर्यस्यसोग्निर्विद्युत्सभास्करः ३ शिवासौ
म्याचयात्वस्यधर्मस्त्वापोथचंद्रमाः आत्मनोर्धंतुतस्याग्निःसोमोर्धंपुनरुच्यते ४ ब्रह्मचर्यंचरत्येकाशिवाचास्यतनुस्तथा या
स्यघोरतमामूर्तिर्जगत्संहरतेतथा ५ ईश्वरत्वान्महत्वाच्चमहेश्वरइतिस्मृतः यन्निर्दहतियत्तीक्ष्णोयदुग्रोयत्प्रतापवान् ६ मां
सशोणितमज्जादोयत्ततोरुद्रउच्यते देवानांसुमहान्यच्चयच्चास्यविषयोमहान् ७ यच्चविश्वंमहत्पातिमहादेवस्ततःस्मृतः धू
म्ररूपंचयत्तस्यधूर्जटीत्यतउच्यते ८ समेधयतियन्नित्यंसर्वान्वैसर्वकर्मभिः मनुष्याञ्छिवमन्विच्छंस्तस्मादेषशिवःस्मृतः ९ दह
त्यूर्ध्वंस्थितोयच्चप्राणान्नृणांस्थिरश्चयत् स्थिरलिंगश्चयन्नित्यंतस्मात्स्थाणुरितिस्मृतः १० यदस्यबहुधारूपंभूतंभव्यंभवत्तदा स्था
वरंजंगमंचैवबहुरूपस्ततःस्मृतः विश्वेदेवाश्चयत्तस्मिन्विश्वरूपस्ततःस्मृतः ११ सहस्राक्षोयुताक्षोवासर्वतोक्षिमयोपिवा चक्षुषः
प्रभवत्तेजोनास्त्यंतोथास्यचक्षुषी १२ सर्वथायत्पशून्पातितैश्चयद्रमतेसह तेषामधिपतिर्यच्चतस्मात्पशुपतिःस्मृतः १३ नित्येनब्र
ह्मचर्येणलिंगमस्ययदास्थितम् महयन्त्यस्यलोकश्चप्रियंह्येतन्महात्मनः १४ विग्रहंपूजयेद्योवैलिंगंवापिमहात्मनः लिंगंपूजयिता
नित्यंमहतींश्रियमश्नुते १५ ऋषयश्चापिदेवाश्चगंधर्वाप्सरसस्तथा लिंगमेवार्चयंतिस्मयत्तदूर्ध्वंसमास्थितम् १६ पूज्यमानेततस्त
स्मिन्मोदतेसमहेश्वरः सुखंददातिप्रीतात्माभक्तानांभक्तवत्सलः १७ एषएवश्मशानेषुदेवोवसतिनिर्दहन् यजंतेयेजनास्तत्रवीर-
स्थाननिषेविणः १८ विषयस्थःशरीरेषुसमृत्युःप्राणिनामिह सचवायुःशरीरेषुप्राणापानशरीरिणाम् १९ तस्यघोराणिरूपाणिदी
प्तानिचबहूनिच लोकेयान्यस्यपूज्यंतेविप्रास्तानिविदुर्बुधाः २० नामधेयानिदेवेषुबहून्यस्ययथार्थवत् निरुच्यंतेमहत्वाच्चवि
भुत्वात्कर्मभिस्तथा २१ वेदेचास्यविदुर्विप्राःशतरुद्रीयमुत्तमम् व्यासेनोक्तंचयच्चापिउपस्थानंमहात्मनः २२

२३ २४ २५ २६ २७ २८ २९ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिटीकायांशतोपरिद्विषष्टितमोऽध्यायः १६२ १ २



प्रदातासर्वलोकानांविश्वंचाप्युच्यतेमहत् ज्येष्ठभूतंवदंत्येनंब्राह्मणाऋषयोपरे २३ प्रथमोह्येषदेवानांमुखादग्निमजीजनत् ग्रहैर्ब
हुविधैःप्राणान्संरुद्धानुत्सृजत्यपि २४ विमुंचतिनपुण्यात्माशरण्यःशरणागतान् आयुरारोग्यमैश्वर्यंवित्तंकामांश्चपुष्कलान् २५
सददातिमनुष्येभ्यःसएवाक्षिपतेपुनः शक्रादिषुचदेवेषुतस्यैश्वर्यमिहोच्यते २६ सएवव्यापृतोनित्यंत्रैलोक्यस्यशुभाशुभे ऐश्व
र्याच्चैवकामानामीश्वरःपुनरुच्यते २७ महेश्वरश्चलोकानांमहतामीश्वरश्चसः बहुभिर्विविधैरूपैर्विश्वंव्याप्तमिदंजगत् २८
तस्यदेवस्ययद्वक्त्रंसमुद्रेवडवामुखम् २९ इतिश्रीमहाभारतेआनुशासनिकेपर्वणिदानधर्मेमहेश्वरमाहात्म्यंनामशतोपरि
द्विषष्टितमोऽध्यायः १६२ वैशंपायनउवाच इत्युक्तवतिवाक्यंतुकृष्णेदेवकिनंदने भीष्मंशांतनवंभूयःपर्यपृच्छद्युधि-
ष्ठिरः १ निर्णयोवामहाबुद्धेसर्वधर्मविदांवर प्रत्यक्षमागमोवेतिकिंतयोःकारणंभवेत् २ भीष्मउवाच नास्त्यत्रसंश-
यःकश्चिदितिमेवर्त्ततेमतिः शृणुवक्ष्यामितेप्राज्ञसम्यक्त्वमनुपृच्छसि ३ संशयःसुगमस्तत्रदुर्गमस्तस्यनिर्णयः दृष्टंश्रुतम
नंतंहियत्रसंशयदर्शनम् ४ प्रत्यक्षकारणंदृष्ट्वाहैतुकाःप्राज्ञमानिनः नास्तीत्येवंव्यवस्यंतिसत्यंसंशयमेवच ५ तदयुक्तंव्य
वस्यंतिबालाःपंडितमानिनः अथचेन्मन्यसेचैकंकारणंकिंभवेदिति ६ शक्यंदीर्घेणकालेनयुक्तेनातंद्रितेनच प्राणयात्रामने
कांचकल्पमानेनभारत ७ तत्परेणैवनान्येनशक्यंह्येतस्यदर्शनम् हेतूनामंतमासाद्यविपुलंज्ञानमुत्तमम् ८ ज्योतिःसर्वस्य
लोकस्यविपुलंप्रतिपद्यते नत्वेनगमनंराजन्हेतुतोगमनंतथा अग्राह्यमनिबद्धंचवाचासंपरिवर्जयेत् ९ युधिष्ठिरउवा
च प्रत्यक्षंलोकसंसिद्धिर्लोकश्चागमपूर्वकः शिष्टाचारोबहुविधस्तन्मेब्रूहिपितामह १० भीष्मउवाच धर्मस्याक्रि
यमाणस्यबलवद्भिर्दुरात्मभिः संस्थायत्नैरपिकृताकालेनप्रतिभिद्यते ११ अधर्मोधर्मरूपेणतृणैःकूपइवावृतः ततस्तैर्भिद्यतेवृत्तं
शृणुचैवयुधिष्ठिर १२ अवृत्तायेतुभिंदंतिश्रुतित्यागपरायणाः धर्मविद्वेषिणोमंदाइत्युक्तस्तेषुसंशयः १३ अतृप्यंतस्तुसाधूनाय
एवागमबुद्धयः परमित्येवसंतुष्टास्तानुपास्वचपृच्छच १४ कामार्थौपृष्ठतःकृत्वालोभमोहानुसारिणौ धर्मइत्येवसंबु
द्धस्तानुपास्वचपृच्छच १५

३ ४ ५ ६ ७ ८ ९ १० ११ वृत्तंशिष्टाचारः १२ भिंदंतिवृत्तंतेषुप्रत्यक्षानुगमनाचा



रेषु १३ अतृप्यंतःनित्यंसोत्कंठाःआगमजन्याःबुद्धयोयेषांतेएवपरंश्रेष्ठंप्रमाणमित्यन्वयः १४ १५ ७ ७ ७ ७ ७ ७ ७

नेतिरुक्तंप्रत्यक्षदृश्यंशीलम् आचारः शौचादिः कारणंवेदः त्रयंमिलित्वाएकोधर्मः सधर्मःसाधनीयइत्यर्थः स्वाध्यायकर्मवेदरक्षार्थमाचारांतर्गतमेवज्ञेयम् १६
१७ वेदइतिप्रमाणभेदात्प्रमेयैर्धर्मैरपित्रिभिर्भवितव्यं १८ कथमेकोधर्मस्त्रितयप्रतिपाद्यइत्याशंक्याह धर्मस्येति हेराजन्यद्येवंधर्मत्रयंमन्यसे तन्नेतिशेषः
किंतुक्रियमाणस्यैकस्यैवधर्मस्यत्रिधात्रिप्रकाराविचारणा एकएवप्रमाणत्रयसंवादेनपरीक्षणीयइत्यर्थः १९ त्रिधेत्यस्यव्याख्यानंएकएवेतित्रयाणांप्रमाणा

नतेषांभिद्यतेवृत्तंयज्ञाःस्वाध्यायकर्मच आचारःकारणंचैवधर्मश्चैकस्त्रयंपुनः १६ युधिष्ठिरउवा० पुनरेवहिमेबुद्धिःसंशयेपरिमुह्यति अपारेमार्गमाणस्यपरंतीरमपश्यतः १७ वेदःप्रत्यक्षमाचारःप्रमाणंतत्त्रयंयदि पृथक्त्वंलभ्यतेचैषांधर्मश्चैकस्त्रयंकथम् १८ भीष्मउवाच धर्मस्यक्रियमाणस्यबलवद्भिर्दुरात्मभिः यद्येवंमन्यसेराजंस्त्रिधाधर्मविचारणा १९ एकएवेतिजानीहित्रिधाधर्मस्यधारणम् पृथक्त्वेचनमेबुद्धिस्त्रयाणामपिवैतथा २० उक्तोमार्गस्त्रयाणांचतत्तथैवसमाचर जिज्ञासातुनकर्तव्याधर्मस्यतुनतर्कणात् २१ सदैवभरतश्रेष्ठमातेभूदत्रसंशयः अंधोजडइवाशंकोयद्ब्रवीमितदाचर २२ अहिंसासत्यमक्रोधोदानमेतच्चतुष्टयम् अजातशत्रोसेवस्वधर्मएषसनातनः २३ ब्राह्मणेषुचवृत्तिर्यापितृपैतामहोचिता तामन्वेहिमहाबाहोधर्मस्यैतेहिदेशिकाः २४ प्रमाणमप्रमाणंवैयः कुर्यादबुधोजनः नसप्रमाणतामर्होविवादजननोहिसः २५ ब्राह्मणानेवसेवस्वसत्कृत्यबहुमन्यच एतेष्वेवत्विमेलोकाःकृत्स्नाइतिनिबोधतान् २६ युधिष्ठिरउवाच येचधर्ममसूयंतयेचैनंपर्युपासते ब्रवीतुमेभवानेतंक्वतेगच्छंतितादृशाः २७ भीष्मउवाच रजसातमसाचैवसमवस्तीर्णचेतसः नरकंप्रतिपद्यंतेधर्मविद्वेषिणोजनाः २८ येतुधर्मंमहाराजसततंपर्युपासते सत्यार्जवपराःसंतस्तेवैस्वर्गभुजोनराः २९ धर्मएवगतिस्तेषामाचार्योपासनाद्भवेत् देवलोकंप्रपद्यंतेयेधर्मंपर्युपासते ३० मनुष्यायदिवादेवाःशरीरमुपताप्यवै धर्मिणःसुखमेधंतेलोभद्वेषविवर्जिताः ३१ प्रथमंब्राह्मणाःपुत्रधर्ममाहुर्मनीषिणः धर्मेणपर्युपासंतेफलंपक्वमिवाशयः ३२ युधिष्ठिरउवाच असतांकीदृशंरूपंसाधवःकिंचकुर्वते ब्रवीतुमेभवानेतत्संतोऽसंतश्चकीदृशाः ३३ भीष्मउवाच दुराचाराश्चदुर्धर्षादुर्मुखाश्चाप्यसाधवः साधवःशीलसंपन्नाःशिष्टाचारस्यलक्षणम् ३४

नांपृथक्त्वेप्रत्येकंस्वातंत्र्येणधर्मप्रतिपादकत्वेममबुद्धिर्नच २०
यदुक्तइतिप्रत्यक्षस्यातींद्रियेधर्मेप्रमाणाभावात् आचारस्यचप्रध्वंसितत्वात् त्रयाणांप्रमाणानांमध्येपरिशेषात् यदुक्तःवेदेसएवमार्गः नतुपरितर्कणात् धर्मस्यविचारः कर्तव्यइत्यर्थः २१ अत्रवेदेअशंकोशंकाशून्यः २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ आशयोभोक्तुर्मनः ३२ कीदृशाःकिंलक्षणाःकिंकर्माणश्च
३३ ३४

धर्मार्थस्यधर्मफलस्य दर्शनात् यदाधर्मएवश्रेयस्करइतिबुद्धिर्भवेत्तदायंधर्मात्माधर्मचित्तः धर्मे आश्वसीत विश्वासंकुर्वीत अदृढबुद्धिस्तुनविश्वसेत् धर्मफले ३ एतावद्धर्मेविश्वासवत्त्वंउभयवित्कर्त्तव्याकर्त्तव्यवित् ४ राजसामलिनाः ५ धर्मःकदाप्यधर्मोभवेदित्याह नहीति अधर्मतयादुःखहेतुतया ६ ७ एतौविद्धि-इनाऽधर्मास्पर्शौ ८ नयेत्तुधर्ममितिशेषः धर्मेणधर्मानुष्ठानार्थंइतरैरुच्यमानः प्रेर्यमाणःसन्सर्वलोकभयच्छलेनेषांप्रतारणेप्रवर्त्तते यदास्वंनिस्तारंस्वयमे-वाचरेदित्याह नत्विति नयेत्ऊर्ध्वमितिशेषः किंतुधर्मभयलोकभययोच्छलनेनिवृत्तिनिमित्तधर्मेणहेतुना अर्थात्प्राज्ञेनउच्यते मानवएवनरःऊर्ध्वंगच्छतीति शेषः ९ शूद्रोहमित्यादिवदन्नितियोज्यं अपरेसाधवः नउपदधति नछलंकुर्वंति यथाधिकारंधर्मंकुर्वंति नछलमित्यर्थः तस्मात्सवर्त्तनासर्वाप्यथैवेतिभा-

यदात्वस्यभवेद्बुद्धिर्धर्मार्थस्यप्रदर्शनात् तदाश्वसीतधर्मात्माहृदबुद्धिर्नविश्वसेत् ३ एतावन्मात्रमेतद्धिभूतानांप्राज्ञलक्षणम् कालयुक्तोप्युभयविच्छेषंयुक्तंसमाचरेत् ४ तथाह्युपस्थितैश्वर्याःप्रजायंतेनराजसाः एवमेवात्मनात्मानपूजयंतीहधार्मिकाः ५ नत्यधर्मभयाद्धर्मंदद्यात्कालःकथंचन तस्माद्धिसुन्दमात्मानंजानीयाद्धर्मचारिणम् ६ स्प्रष्टुमप्यसमर्थोहिज्वलंतमिवपावकम् अधर्मःसंततोधर्मःकालेनपरिरक्षति ७ कार्यावेतौहिधर्मेणधर्मोहिविजयावहः त्रयाणामपिलोकानामालोकःकरणंभवेत् ८ नतुकश्चिन्नयेत्प्राज्ञोगृहीत्वेदकरेनरम् उच्यमानस्तुधर्मेणधर्मलोकभयच्छले ९ शूद्रोहंनाधिकारोमेचतुराश्रम्यसेवने इतिविज्ञानमपरेनात्मन्युपदधत्यत १० विशेषणंचवक्ष्यामिचातुर्वर्ण्यस्यलिंगतः पंचभूतशरीराणांसर्वेषांसदृशात्मनाम् ११ लोकधर्मेचधर्मेचविशेषकरणंकृतम् यथैकत्वंपुनर्यांतिप्राणिनस्तत्रविस्तरः १२ अध्रुवोहिकथंलोकःस्मृतोधर्मःकथंध्रुवः यत्रकालोध्रुवस्तातत्तत्रधर्मःसनातनः १३

वः १० विशेषेणेतियुग्मंसर्वेषांप्राणिनांपुरुषाणांवा पांचभौतिकत्वेप्रत्यक्षेपिविशेषकरणंइदंपवित्रमिदमपवित्रमिति व्यवस्थापनंलोकधर्मेशास्त्रीयधर्मेचनिमित्तेसतिकृतं पशुपामर पंडितानांयथापुनर्विहितेनैतेएकत्वंप्राकृतंगच्छेयुरिति शास्त्रेणधर्मनियमः कृतइत्यर्थः ११ १२ अत्रशंकते अध्रुवइति लोकस्यधर्मस्यकार्यकारणाभावात् कार्यस्याध्रुवत्वंकारणस्यध्रुवत्वंचनयुक्तंनतुनाशमंतरेणपटनाशायोगादित्यर्थः उत्तरमाह कालःसंकल्पः निष्कामएवतत्फलंनतुसकामइत्यर्थः १३ ७ ७ ७ ७ ७ ७ ७

सर्वेषामिति धर्मसंयुक्तः संकल्पान्नशेषः शिष्यतेनान्यः सचकथमुद्देष्यतीत्यत आह स्वयंगुरुरिति धर्मबलात्स्वयमेवचसउद्देतिनिशिक्षयेत्यर्थः १४ एवमितियदाभूता-
नांप्राक्कर्मैवतत्रतत्रसुखदुःखसाधनेप्रवर्तकं अतोधर्मसेवनेकर्मफलभोगे असमंजसेपिभूतानांदोषोनास्ति यतःतिर्यग्योनावपिसतांविद्यमानानांभूतानांसदसत्स्वत्र

सर्वेषांतुल्यदेहानांसर्वेषांसदृशात्मनाम् कालोधर्मेणसंयुक्तःशेषएवस्वयंगुरुः १४ एवंसतिनदोषोस्तिभूतानांधर्मसेवने तिर्यग्योनावपि
सतांलोकएवमतोगुरुः १५ इतिश्रीम० आनुशास० दानधर्मे शतोपरि पंचषष्टितमोऽध्यायः १६५ वैशंपायनउवाच शरतल्प
गतंभीष्मंपांडवोथकुरूद्वहः युधिष्ठिरोहितप्रेप्सुरपृच्छत्कल्मषापहम् १ युधिष्ठिरउवाच किंश्रेयःपुरुषस्येहकिंकुर्वन्सुखमेधते वि
पाप्मासभवेत्केनकिंवाकल्मषनाशनम् २ वैशंपायनउवाच तस्मैशुश्रूषमाणायभूयःशांतनवस्तदा दैवंवंशंयथान्यायमाचष्टपुरुष
र्षभ ३ भीष्मउवाच अयंदैवतवंशोवैऋषिवंशसमन्वितः त्रिसंध्यंपठितःपुत्रकल्मषापहरःपरः ४ यदन्हाकुरुतेपापमिंद्रियैःपु
रुषश्चरन् बुद्धिपूर्वमबुद्धिर्वारात्रौयच्चापिसंध्ययोः ५ मुच्यतेसर्वपापेभ्यःकीर्तयन्वैशुचिःसदा नांधोनबधिरःकालेकुरुतेस्वस्तिमा
न्सदा ६ तिर्यग्योनिंनगच्छेच्चनरकंसंकराणिच नचदुःखभयंतस्यमरणेसनमुह्यति ७ देवासुरगुरुर्देवःसर्वभूतनमस्कृतः अचिंत्यो
थाप्यनिर्देश्यःसर्वप्राणोह्ययोनिजः ८ पितामहोजगन्नाथःसावित्रीब्रह्मणःसती वेदभूरथकर्ताचविष्णुर्नारायणःप्रभुः ९ उमापतिर्वि
रूपाक्षःस्कंदःसेनापतिस्तथा विशाखोहुतभुग्वायुश्चंद्रसूर्यौप्रभाकरौ १० शक्रःशचीपतिर्देवोयमोधूमोर्णयासह वरुणःसहगौर्याच
सहऋध्याधनेश्वरः ११ सौम्यागौःसुरभिर्देवीविश्रवाश्चमहानृषिः संकल्पःसागरोगंगास्रवन्त्योथमरुद्गणाः १२ वालखिल्यास्तपःसि
द्धाःकृष्णद्वैपायनस्तथा नारदःपर्वतश्चैवविश्वावसुर्हाहाहूहूः १३ तुंबरुश्चित्रसेनश्चदेवदूतश्चविश्रुतः देवकन्यामहाभागादिव्याश्चा
प्सरसांगणाः १४ उर्वशीमेनकारंभामिश्रकेशीह्यलंबुषा विश्वाचीचघृताचीचपंचचूडातिलोत्तमा १५ आदित्यावसवोरुद्राःसाश्विनःपि
तरोपिच धर्मःश्रुतंतपोदीक्षाव्यवसायःपितामहः १६ शर्वर्योदिवसाश्चैवमारीचःकश्यपस्तथा शुक्रोबृहस्पतिर्भौमोबुधोराहुःशनैश्च
रः १७ नक्षत्राण्यृतवश्चैवमासाःपक्षाःसवत्सराः वैनतेयाःसमुद्राश्चकद्रुजाःपन्नगास्तथा १८ शतद्रुश्चविपाशाचचंद्रभागासरस्वती
सिंधुश्चदेविकाचैवप्रभासंपुष्कराणिच १९ गंगामहानदीवेणाकावेरीनर्मदातथा कुल्पुनाविशल्याचकरतोयांबुवाहिनी २० सर
यूर्गंडकीचैवलोहितश्चमहानदः ताम्रारुणावेत्रवतीपर्णाशागौतमीतथा २१

तोपूर्वकर्मानुसाराल्लोकएवगुरुर्दृष्टः विधिनियंत्रितोल्लोकदृष्टांतेनेवसा
धुन्यसाधुनिवाकर्मणिप्रवर्ततेइत्यर्थः १५ इतिआ० टीकायांशतोपरिपंचषष्टितमोऽध्यायः १६५ शरतल्पगतमित्यध्यायद्वयंस्पष्टार्थं १ २ ३ ४ ५ ६ ७ ८ ९ १०
११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१

गोदावरीचवेणाचकृष्णावेणातथाद्विजा दृषद्वतीचकावेरीवंक्षुर्मंदाकिनीतथा २२ प्रयागंचप्रभासंचपुण्यंनैमिषमेवच तच्चविश्वेश्वरस्था
नंयत्रतद्विमलंसरः २३ पुण्यतीर्थेषुकलिलंकुरुक्षेत्रंप्रकीर्त्तितम् सिंधूत्तमंतपोदानंजंबूमार्गमथापिच हिरण्वतीवितस्ताचतथाप्लक्षवती
नदी वेदस्मृतिर्वेदवतीमालवाथाश्ववत्यपि २५ भूमिभागास्तथापुण्यागंगाद्वारमथापिच ऋषिकुल्यास्तथामेध्यानद्यःसिंधुवहास्तथा
२६ चर्मण्वतीनदीपुण्याकौशिकीयमुनातथा नदीभीमरथीचैवबाहुदाचमहानदी २७ माहेंद्रवाणीत्रिदिवानीलिकाचसरस्वती नंदाचा
परनंदाचतथातीर्थमहान्हृदः २८ गयाथफल्गुतीर्थंचधर्मारण्यंसुरैर्वृतं तथादेवनदीपुण्यासरश्चब्रह्मनिर्मितम् २९ पुण्यंत्रिलो
कविख्यातंसर्वपापहरंशिवम् हिमवान्पर्वतश्चैवदिव्यौषधिसमन्वितः ३० विंध्योधातुविचित्रांगस्तीर्थवानौषधान्वितः मेरुर्महेंद्रोमल
यःश्वेतश्चरजतावृतः ३१ शृंगवान्मंदरोनीलोनिषधोदर्दुरस्तथा चित्रकूटोंजनाभश्चपर्वतोगंधमादनः ३२ पुण्यःसोमगिरिश्चैवतथैवा
न्येमहीधराः दिशश्चविदिशश्चैवक्षितिःसर्वेमहीधराः ३३ विश्वेदेवानभश्चैवनक्षत्राणिग्रहास्तथा पांतुनःसततंदेवाःकीर्त्तिताऽकी
र्त्तितामया ३४ कीर्त्तयानोनरोह्येतान्मुच्यतेसर्वकिल्बिषैः स्तुवंश्चप्रतिनंदंश्चमुच्यतेसर्वतोभयात् ३५ सर्वसंकरपापेभ्योदेवतास्त
वनंदकः देवतानंतरंविप्रास्तपःसिद्धांस्तपोधिकान् ३६ कीर्त्तितान्कीर्त्तयिष्यामिसर्वपापप्रमोचनान् यवक्रीतोथरैभ्यश्चकक्षीवानौषि
जस्तथा ३७ भृग्वंगिरास्तथाकण्वोमेधातिथिरथप्रभुः बर्हीचगुणसंपन्नःप्राचींदिशमपाश्रिताः ३८ भद्रांदिशमहाभागाउल्मुचुः
प्रमुचुस्तथा मुमुचुश्चमहाभागःस्वस्त्यात्रेयश्चवीर्यवान् ३९ मित्रावरुणयोःपुत्रस्तथागस्त्यःप्रतापवान् दृढायुश्चोर्ध्वबाहुश्च-
विश्रुतावृषिसत्तमौ ४० पश्चिमांदिशमाश्रित्ययएधंतेनिबोधतान् उषंगुःसहसोदर्यैःपरिव्याधश्चवीर्यवान् ४१ ऋषिर्दीर्घतमा
श्चैवगौतमःकाश्यपस्तथा एकतश्चद्वितश्चैवत्रितश्चैवमहानृषिः ४२ अत्रेःपुत्रश्चधर्मात्मातथासारस्वतःप्रभुः उत्तरांदिशमाश्रि
त्ययएधंतेनिबोधतान् ४३ अत्रिर्वसिष्ठःशक्तिश्चपाराशर्यश्चवीर्यवान् विश्वामित्रोभरद्वाजोजमदग्निस्तथैवच ४४ ऋचीकपुत्रो
रामश्चऋषिरौद्दालकिस्तथा श्वेतकेतुःकोहलश्चविपुलोदेवलस्तथा ४५ देवशर्माचधौम्यश्चहस्तिकाश्यपएवच लोमशोनाचि
केतश्चलोमहर्षणएवच ४६ ऋषिरुग्रश्रवाश्चैवभार्गवश्च्यवनस्तथा एषवैसमवायश्चऋषिदेवसमन्वितः ४७ आद्यःप्रकीर्त्तितोरा
जन्सर्वपापप्रमोचनः नृगोययातिर्नहुषोयदुःपूरुश्चवीर्यवान् ४८.

४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ इतिआनुशासनिकेपर्वणिटीकायांशतोपरिषट्षष्टितमोऽध्या

धुंधुमारोदिलीपश्चसगरश्चप्रतापवान् कृशाश्वोयौवनाश्वश्चचित्राश्वःसत्यवांस्तथा ४९ दुःषंतोभरतश्चैवचक्रवर्तीमहायशाः पवनोजनक
श्चैवतथादृष्टरथोनृपः ५० रघुर्नरवरश्चैवतथादशरथोनृपः रामोराक्षसहावीरःशशबिंदुर्भगीरथः ५१ हरिश्चंद्रोमरुत्तश्चतथादृढ
रथोनृपः महोदर्योह्यलर्कश्चऐलश्चैवनराधिपः ५२ करंधमोनरश्रेष्ठःकध्मोरश्चनराधिपः दक्षोंबरीषःकुकुरोरैवतश्चमहायशाः ५३
कुरुःसंवरणश्चैवमांधातासत्यविक्रमः मुचुकुंदश्चराजर्षिर्जन्हुर्जान्हविसेवितः ५४ आदिराजःपृथुर्वैन्योमित्रभानुःप्रियंकरः त्रसदस्यु
स्तथाराजाश्वेतोराजर्षिसत्तमः ५५ महाभिषश्चविख्यातोनिमीराजातथाष्टकः आयुःक्षुपश्चराजर्षिःकक्षेयुश्चनराधिपः ५६ प्रतर्द
नोदिवोदासःसुदासःकोसलेश्वरः ऐलोनलश्चराजर्षिर्मनुश्चैवप्रजापतिः ५७ हविध्रश्चपृषध्रश्चप्रतीपःशांतनुस्तथा अजःप्राचीनब
र्हिश्चतथेक्ष्वाकुर्महायशाः ५८ अनरण्योनरपतिर्जानुजंघस्तथैवच कक्षसेनश्चराजर्षिर्येचान्येचानुकीर्तिताः ५९ कल्यमुत्थाययो
नित्यंसंध्येद्वेस्तमयोदये पठेच्छुचिरनावृत्तःसधर्मफलभाग्भवेत् ६० देवादेवर्षयश्चैवस्तुताराजर्षयस्तथा पुष्टिमायुर्यशःस्वर्गंवि-
धास्यंतिममेश्वराः ६१ माविघ्नंमाचमेपापंमाचमेपरिपंथिनः ध्रुवोजयोमेनित्यःस्यात्परत्रचशुभागतिः ६२ इतिश्रीम०आनु०दानधर्मेवं-
शानुकीर्तनंनामशतोपरिषट्षष्टितमोऽध्यायः १६६ जनमेजयउवाच शरतल्पगतेभीष्मेकौरवाणांधुरंधरे शयानेवीरशयनेपांड
वैःसमुपस्थिते १ युधिष्ठिरोमहाप्राज्ञोममपूर्वपितामहः धर्माणामागमंश्रुत्वाविदित्वासर्वसंशयान् २ दानानांचविधिंश्रुत्वाछिन्नधर्मा
र्थसंशयः यदन्यदकरोद्विप्रतन्मेशंसितुमर्हसि ३ वैशंपायनउवाच अभून्मुहूर्त्तंस्तिमितंसर्वंतद्राजमंडलम् तूष्णींभूतेततस्तस्मिन्पटेचि
त्रमिवार्पितम् ४ मुहूर्त्तमिवचध्यात्वाव्यासःसत्यवतीसुतः नृपशयानंगांगेयमिदमाहवचस्तदा ५ राजन्प्रकृतिमापन्नःकुरुराजोयुधिष्ठि
रः सहितोभ्रातृभिःसर्वैःपार्थिवैश्चानुयायिभिः ६ उपास्तेत्वांनरव्याघ्रसहकृष्णेनधीमता तमिमंपुरयानायसमनुज्ञातुमर्हसि ७ एवमु
क्तोभगवताव्यासेनपृथिवीपतिः युधिष्ठिरंसहामात्यमनुजज्ञेनदीसुतः ८ उवाचचैनंमधुरंनृपशांतनवोनृपः प्रविशस्वपुरींराजन्व्येतु
तेमानसोज्वरः ९ यजस्वविविधैर्यज्ञैर्बह्वन्नैःश्चाप्तदक्षिणैः ययातिरिवराजेंद्रश्रद्धादमपुरःसरः १० क्षत्रधर्मरतःपार्थपितॄन्देवांश्च
तर्पय श्रेयसायोक्ष्यसेचैवव्येतुतेमानसोज्वरः ११ रंजयस्वप्रजाःसर्वाःप्रकृतीःपरिसांत्वय सुहृदःफलसत्कारैरर्चयस्वयथार्हतः १२
अनुत्वांतात जीवंतुमित्राणिसुहृदस्तथा चैत्यस्थानेस्थितंवृक्षंफलवंतमिवद्विजाः १३ यः १६६ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
१३ ७

१४ १५ १६ १७ इति आनुशासनिके पर्वणि टीकायां शततोपरि सप्तषष्टितमोऽध्यायः १६७ १ २ ३ ४ ५ ६ ७ ८ ९ १० भीष्मस्याग्नीनिति-



आगंतव्यंचभवतासमयेममपार्थिव विनिवृत्तेदिनकरेप्रवृत्तेचोत्तरायणे १४ तथेत्युक्त्वाचकौंतयःसोभिवाद्यपितामहम् प्रययौसपरीवारोनगरं
नागसाह्वयम् १५ धृतराष्ट्रंपुरस्कृत्यगांधारींचपतिव्रताम् सहितैर्ऋषिभिःसर्वैर्भ्रातृभिःकेशवेनच १६ पौरजानपदैश्चैवमंत्रिवृद्धैश्चपार्थि
व प्रविवेशकुरुश्रेष्ठःपुरंवाराणसाह्वयम् १७ इतिश्रीम॰आनु॰ दानधर्मे भीष्मानुज्ञायांसप्तषष्ट्यधिकशततमोऽध्यायः १६७ वैशंपा
यनउवाच ततःकुंतीसुतोराजापौरजानपदंजनम् पूजयित्वायथान्यायमनुजज्ञेगृहान्प्रति १ सांत्वयामासनारीश्चहतवीराहतेश्वराः वि
पुलैरर्थदानैःसतदापांडुसुतोनृपः २ सोभिषिक्तोमहाप्राज्ञःप्राप्यराज्यंयुधिष्ठिरः अवस्थाप्यनरश्रेष्ठःसर्वासुप्रकृतीस्तदा ३ द्विजेभ्यो
गुणमुख्येभ्योनैगमेभ्यश्चसर्वशः प्रतिगृह्याशिषोमुख्यास्तथाधर्मभृतांवरः ४ उषित्वाशर्वरीःश्रीमान्पंचाशन्नगरोत्तमे समयंकौरवाग्र्य
स्यसंस्मारपुरुषर्षभः ५ सनिर्ययौगजपुरायाजकैःपरिवारितः दृष्ट्वानिवृत्तमादित्यंप्रवृत्तंचोत्तरायणम् ६ घृतंमाल्यंचगंधांश्चक्षौमा
णिचयुधिष्ठिरः चंदनागुरुमुख्यानितथाकालीयकान्यपि ७ प्रस्थाप्यपूर्वंकौंतेयोभीष्मसंस्करणायवै माल्यानिचवरार्हाणिरत्नानिविवि
धानिच ८ धृतराष्ट्रंपुरस्कृत्यगांधारींचयशस्विनीम् मातरंचपृथांधीमान्भ्रातृंश्चपुरुषर्षभान् ९ जनार्दनेनानुगतोविदुरेणचधीमता यु
युत्सुनाचकौरव्योयुयुधानेनवाविभो १० महताराजभोगेनपरिबर्हेणसंवृतः स्तूयमानोमहातेजाभीष्मस्याग्नीननुव्रजन् ११ निश्चक्रामपुरा
त्तस्माद्यथादेवपतिस्तथा आससादकुरुक्षेत्रेततःशांतनवंनृपम् १२ उपास्यमानंव्यासेनपाराशर्येणधीमता नारदेनचराजर्षेदेवलेनासि
तेनच १३ हतशिष्टैर्नृपैश्चान्यैर्नानादेशसमागतैः रक्षिभिश्चमहात्मानरक्ष्यमाणंसमंततः १४ शयानंवीरशयनेददर्शनृपतिस्ततः ततोर
थादवातीर्यभ्रातृभिःसहधर्मराट् १५ अभिवाद्याथकौंतेयःपितामहमरिंदमम् द्वैपायनादीन्विप्रांश्चतैश्चप्रत्यभिनंदितः १६ ऋत्विग्भिर्ब्रह्म
कल्पैश्चभ्रातृभिश्चसहाच्युतः आसाद्यशरतल्पस्थमृषिभिःपरिवारितम् १७ अब्रवीद्भरतश्रेष्ठंधर्मराजोयुधिष्ठिरः १८ भ्रातृभिःसह-
कौरव्यशयानंनिम्नगासुतम् युधिष्ठिरोहंनृपतेनमस्तेजान्हवीसुत १९ शृणोषिचेन्महाबाहोब्रूहिकिंकरवाणिते प्राप्तोस्मिसमयेराजन्न
ग्नीनादायतेविभो २० आचार्यान्ब्राह्मणांश्चैवऋत्विजोभ्रातरश्चमे पुत्रश्चतेमहातेजाधृतराष्ट्रोजनेश्वरः २१ उपस्थितःसहामात्योवासु
देवश्चवीर्यवान् हतशिष्टाश्चराजानःसर्वेचकुरुजांगलाः २२ तान्पश्यनरशार्दूलसमुन्मीलयलोचने यच्चेहकिंचित्कर्तव्यंतत्सर्वंप्रापित 
मया २३

नेनतस्थापियन्नासीत यद्वासंस्कारकानग्नीन् ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ २३ ७

२४ २५ २६ २७ माघोयमिति सौम्यश्चांद्रःमासस्य चतुर्भागःभागंसार्द्धमयातिथेर्भागत्वात अष्टम्यर्धस्यानतीतत्वेन प्रथमभागस्याविद्यमानत्वात त्रिभागशेषोभवितुमर्हतीत्य

यथोक्तंभवताकालेसर्वमेवचतत्कृतम् वैशंपायनउवाच एवमुक्त्वातुगांगेयःकुंतीपुत्रेणधीमता २४ ददर्शभरतान्सर्वान्स्थितान्संपरिवार्यह ततः
श्चतबलीभीष्मःप्रगृह्यविपुलंभुजम् २५ उद्यन्मेघस्वरोवाग्मीकालेवचनमब्रवीत् दिष्ट्याप्राप्तोसिकौंतेयसहामात्योयुधिष्ठिर २६ परिवृत्तोहिभगवा
न्सहस्रांशुर्दिवाकरः अष्टपंचाशतंरात्र्यःशयानस्याद्यमेगताः शरेषुनिशितायेषुयथावर्षशतंतथा २७ माघोयंसमनुप्राप्तोमासःसौम्योयुधिष्ठिर त्रि
भागशेषःपक्षोयंशुक्लोभवितुमर्हति २८ एवमुक्त्वातुगांगेयोधर्मपुत्रंयुधिष्ठिरम् धृतराष्ट्रमथामंत्र्यकालेवचनमब्रवीत् २९ भीष्मउवाच राज
न्विदितधर्मोसिसुनिर्णीतार्थसंशयः बहुश्रुताहितेविप्राबहवःपर्युपासिताः ३० वेदशास्त्राणिसर्वाणिधर्मांश्चमनुजेश्वर वेदांश्चचतुरःसर्वान्नि
खिलेनानुबुध्यसे ३१ नशोचितव्यंकौरव्यभवितव्यंहितत्तथा श्रुतंदेवरहस्यंतेकृष्णद्वैपायनादपि ३२ यथापांडोःसुताराजस्तथैवतवधर्मतः
तान्पालयस्थितोधर्मेगुरुशुश्रूषणेरतान् ३३ धर्मराजोहिशुद्धात्मानिदेशंस्थास्यतेतव आनृशंस्यपरंह्येनंजानामिगुरुवत्सलम् ३४ तवपुत्रादु
रात्मानःक्रोधलोभपरायणाः ईर्ष्याभिभूतादुर्वृत्तास्तान्नशोचितुमर्हसि ३५ वैशंपायनउवाच एतावदुक्त्वावचनंधृतराष्ट्रंमनीषिणम् वा
सुदेवंमहाबाहुमभ्यभाषतकौरवः ३६ भीष्मउवाच भगवन्देवदेवेशसुरासुरनमस्कृत त्रिविक्रमनमस्तुभ्यंशंखचक्रगदाधर ३७ वासुदे
वोहिरण्यात्मापुरुषःसविताविराट् जीवभूतोनुरूपस्त्वंपरमात्मासनातनः ३८ त्वद्भक्तस्त्वद्गतमनाःसदारश्चापरिग्रहः त्रायस्वपुंडरीकाक्षपुरु
षोत्तमनित्यशः ३९ अनुजानीहिमांकृष्णवैकुंठपुरुषोत्तम रक्ष्याश्चतेपांडवेयाभवान्येषांपरायणम् उक्तवानस्मिदुर्बुद्धिंमंदंदुर्योधनंतदा ४०
यतःकृष्णस्ततोधर्मोयतोधर्मस्ततोजयः वासुदेवेनतीर्थेनपुत्रसंशाम्यपांडवैः संधानस्यपरःकालस्तवेतिचपुनःपुनः ४१ नचमेतद्व
चोमूढःकृतवान्सुसुमंदधीः घातयित्वेहपृथिवींततःसनिधनंगतः ४२ त्वांतुजानाम्यहंवीरपुराणमृषिसत्तमम् नरेणसहितंवीर
बदर्यांसुचिरोषितम् ४३ तथामेनारदःप्राहव्यासश्चसुमहातपाः नरनारायणावेतौसंभूतौमनुजेष्विति ४४ समात्वमनुजानीहि
कृष्णमोक्ष्येकलेवरम् त्वयाहंसमनुज्ञातोगच्छेयंपरमांगतिम् ४५ वासुदेवउवाच अनुजानामिभीष्मत्वांवसून्प्रा
प्नुहिपार्थिव नतेस्तिवृजिनंकिंचिदिहलोकेमहाद्युते ४६ पितृभक्तोसिराजर्षेमार्कंडेयइवापरः तेनमृत्युस्तववशेस्थितोभृत्यइवा
नतः ४७ वैशंपायनउवाच एवमुक्तस्तुगांगेयःपांडवानिदमब्रवीत् धृतराष्ट्रमुखांश्चापिसर्वांश्चसुहृदस्तथा ४८
प्राणानुत्स्रष्टुमिच्छामितत्रानुज्ञातुमर्हथ सत्येषुयतितव्यंवःसत्यंहिपरमंबलम् ४९ र्थः तेनाद्याष्टमीत्यर्थः २८ २९ ३०
३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९

५० ५१ ५२ इतिदानधर्मेटीकायांशतोपरि अष्टषष्टितमोऽध्यायः १६८ एवमुक्त्वेति १ धारणास्व आधारादिषुस्थानेषुयथाक्रमंमूलाधारात्स्वाधिष्ठानं ततोमणिपूरंततोनाहतंततोविशुद्धितोआज्ञमेवंक्रमेणमनःसहितंवायुंनिरुंधन् उपर्युपर्यानीतवानित्यर्थः २ ३ यद्यदितिमाणेनमुक्तंगात्रंप्रशिथिलावयवं

आनृशंस्यपरैर्भाव्यंसदैवनियतात्मभिः ब्राह्मणैर्धर्मशीलैश्चतपोनित्यैश्चभारताः ५० इत्युक्त्वासुहृदःसर्वान्संपरिष्वज्यचैवह पुनरेवा ब्रवीद्धीमान्युधिष्ठिरमिदंवचः ५१ ब्राह्मणाश्चैवतेनित्यंप्राज्ञाश्चैवविशेषतः आचार्याऋत्विजश्चैवपूजनीयाजनाधिप ५२ इतिश्रीमः आनुशासनिकेप॰दानधर्मेशतोपरि अष्टषष्टितमोऽध्यायः १६८ वैशंपायनउवाच एवमुक्त्वाकुरून्सर्वान्भीष्मःशांतनवस्तदा तूष्णीं बभूवकौरव्यःसमुहूर्तमरिंदम १ धारयामासचात्मानंधारणासुयथाक्रमम् तस्योर्ध्वमगमन्प्राणाःसन्निरुद्धामहात्मनः २ इदमाश्चर्य मासीच्चमध्येतेषांमहात्मनाम् सहितैर्ऋषिभिःसर्वैस्तदाव्यासादिभिःप्रभो ३ यद्यन्मुंचतिगात्रंहिसशांतनुसुतस्तदा तत्तद्विशल्यंभवति योगयुक्तस्यतस्यवै ४ क्षणेनप्रेक्षतांतेषांविशल्यःसोभवत्तदा ५ तंदृष्ट्वाविस्मिताःसर्वेवासुदेवपुरोगमाः सहतैर्मुनिभिःसर्वैस्तदाव्यासा दिभिर्नृप ६ सन्निरुद्धस्तुतेनात्मासर्वेष्वायतनेषुच जगामभित्वामूर्धानंदिव्यमभ्युत्सपातच ७ देवदुंदुभिनादश्चपुष्पवर्षैःसहाभवत् सिद्धाब्र ह्मर्षयश्चैवसाधुसाध्वितिहर्षिताः ८ महोल्केवचभीष्मस्यमूर्धदेशाज्जनाधिप निःसृत्याकाशमाविश्यक्षणेनांतरधीयत ९ एवंसराजशार्दूल नृपःशांतनवस्तदा समयुज्यतकालेनभरतानांकुलोद्वहः १० ततस्त्वादायदारूणिगंधांश्चविविधान्बहून् चितांचक्रुर्महात्मानःपांडवाविदुरस्त था ११ युयुत्सुश्चापिकौरव्यंप्रेक्षकास्त्वितरेभवन् युधिष्ठिरश्चगांगेयंविदुरश्चमहामतिः १२ छादयामासतुरुभौक्षौमैर्माल्यैश्चकौरवम् धार यामासतस्याथयुयुत्सुश्छत्रमुत्तमम् १३ चामरव्यजनेशुभ्रेभीमसेनार्जुनावुभौ उष्णीषेपरिगृह्णीतांमाद्रीपुत्रावुभौतथा १४ स्त्रियःकौरव नाथस्यभीष्मंकुरुकुलोद्वह तालवृंतान्युपादायपर्यवीजंतसर्वशः ततोस्यविधिवच्चक्रुःपितृमेधंमहात्मनः १५ याजनंबहुशश्चाग्नौजगुःसा मानिसामगाः ततश्चंदनकाष्ठैश्चतथाकालीयकैरपि कालागुरुप्रभृतिभिर्गंधैश्चोच्चावचैस्तथा १६ समवच्छाद्यगांगेयंसंप्रज्वाल्यहुताशनं अपसव्यमकुर्वंतधृतराष्ट्रमुखाश्चिताम् १७ संस्कृत्यचकुरुश्रेष्ठंगांगेयंकुरुसत्तमाः जग्मुर्भागीरथींपुण्यामृषिजुष्टांकुरूद्वहाः १८ अनुग म्यमानाव्यासेननारदेनासितेनच कृष्णेनभरतस्त्रीभिर्येचपौराःसमततः १९ उदकंचक्रिरेचैवगांगेयस्यमहात्मनः विधिवत्क्षत्रियश्रेष्ठाः सचसर्वोजनस्तथा २० ततोभागीरथीदेवीतनयस्योदकेकृते उत्थायसलिलात्तस्माद्रुदतीशोकविह्वला २१

संयोगसत्वमममपिशरंधारयितुमक्षममभूत् अन- स्तत्तदंगंविशल्यमभूदित्यर्थः ४ ५ ६ आत्माप्राणसंयुक्तंमनः ७ ८ ९ १० ११ १२ १३ उष्णीषेकिरीटशिरोवस्त्रे उष्णीषंतुशिरोवेष्टेकिरीटेलक्षणांतरे इतिमेदिनी १४ १५ १६

२२ २३ २४ २५ २६ २७ २८ २९ ३० मरणजंशोकमपनयति वसुरेषइति देवस्यमानुषत्वंनरकतुल्यंअतोयंहीनस्थानादुत्तमंलोकंगतोनशो
च्यइत्यर्थः ३१ नीचहस्तेनमरणंजातंशोकंदूरीकरोति सएषइति ३२ अर्जुनमपिनशाप्य नीतिशोकयानस्यमृत्युभयमेवनास्तीत्याहभीष्मंहीति. ३३ ३४ ३५
३६ ३७ ३८ गोपालंभूम्निदेवेशिवसुपनिषदिब्रह्मविद्युक्षणार्यं तर्केधीरेसमिश्रानफणिपति भणितौपोलगंगाधरार्यं भट्टंनारायणंयोगुरुमकृतनं दक्षिणामूर्त्यु-

परिदेवयतीतत्रकौरवानभ्यभाषत निबोधतयथावृत्तमुच्यमानंमयानघाः २२ राजवृत्तेनसंपन्नःप्रज्ञयाभिजनेनच सत्कर्त्ताकुरुवृ-
द्धानांपितृभक्तोमहाव्रतः २३ जामदग्न्येनरामेणयःपुरानपराजितः दिव्यैरस्त्रैर्महावीर्यःसहतोद्यशिखंडिना २४ अश्मसारमयंनू
नंहृदयंममपार्थिवाः अपश्यंत्याःप्रियंपुत्रंयन्नदीर्यतिमेद्यवै २५ समेतंपार्थिवंक्षत्रंकाशिपुर्यांस्वयंवरे विजित्यैकरथेनैवकन्याश्चा-
यंजहारह २६ यस्यनास्तिबलेतुल्यःपृथिव्यामपिकश्चन हतंशिखंडिनाश्रुत्वानविदीर्येतयन्मनः २७ जामदग्न्यःकुरुक्षेत्रेयुधियो
नमहात्मना पीडितोनातियत्नेनसहतोद्यशिखंडिना २८ एवंविधंबहुनदीविलपतींमहानदीम् आश्वासयामासतदागंगांदामो-
दरोविभुः २९ समाश्वसिहिभद्रेत्वमाशुचःशुभदर्शने गतःसपरमंलोकंतवपुत्रोनसंशयः ३० वसुरेषमहातेजाःशापदोषेणशो
भने मानुषत्वमनुप्राप्तोनैनंशोचितुमर्हसि ३१ सएषक्षत्रधर्मेणअयुध्यत्रणाजिरे धनंजयेननिहतोनैषदेविशिखंडिना ३२
भीष्मंहिकुरुशार्दूलमुद्यतेषुमहारणे नशक्तःसंयुगेहंतुंसाक्षादपिशतक्रतुः ३३ स्वच्छंदतस्तुवसवोगतःस्वर्गंशुभानने नशक्ता
विनिहंतुंहिरणेतंसर्वदेवताः ३४ तस्मान्मात्वंसरिच्छ्रेष्ठेशोचस्वकुरुनंदनम् वसुरेषगतोदेविपुत्रस्तेविज्वराभव ३५ वैशंपा
यनउवाच. इत्युक्तासातुकृष्णेनव्यासेनतुसरिद्वरा त्यक्त्वाशोकंमहाराजस्ववार्यवततारह ३६ सत्कृत्यतेतांसरितंततःकृष्णा-
मुखान्नृप अनुज्ञातास्तयासर्वेन्यवर्त्तंतजनाधिपाः ३७ आनुशासनिकंपर्वश्रुत्वाभक्तिसमन्वितः आयुरारोग्यमैश्वर्यंपुत्रांश्चसमवाप्नुया
त् ३८ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यांआनुशासनिकेपर्वणिदानधर्मेभीष्मयुधिष्ठिरसंवादेभीष्ममुक्तिर्नामशतो
परिएकोनषष्टितमोऽध्यायः १६९ इतिआनुशासनिकंपर्वसमाप्तम् अतःपरमाश्वमेधिकंपर्वभविष्यति तस्यायमाद्यःश्लो
कः वैशंपायनउवाच कृतोदकंतुराजानंधृतराष्ट्रंयुधिष्ठिरः पुरस्कृत्यमहाबाहुरुत्ततारकुलेंद्रियः १ ७ ७

पार्श्वो श्रौतंचिंतामणिंचव्यभजतसमहाभारतेदानधर्मान् १ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोर्नीलकंठस्यकृतौभा
रतभावदीपेआनुशासनिकेपर्वणिदानधर्मेटीकायांशतोपरिएकोनषष्टितमोऽध्यायःसमाप्तम् १६९ श्रीकृष्णार्पणमस्तु श्रीमज्जगदीश्वरार्पणमस्तु ७

इतिश्रीमन्महाभारत आनुशासनिकंपर्वसमाप्तम्.


अथश्रीमन्महाभारतेआश्वमेधिकपर्वप्रारंभः
व्यासादिऋषिसमूहः
श्रीकृष्णः
होमकुंडम
पांडवादिराजसमूहः
अश्वः

श्रीगणेशायनमः श्रीमद्गोपालमानम्यप्राचीनाचार्यवर्त्मना आश्वमेधिकभावार्थःश्रीकृष्णेनप्रकाश्यते १ अश्विस्तत्पूर्वयायातानष्टावत्रीयेषुसू-
चितम् सनत्सुजातेविवृतंगीतायांविपुलीकृतम् २ मोक्षधर्मेषुचपुनर्नानाख्यानोपबृंहणैः अतीवव्याकृतंप्रत्यगात्मतत्वमनाकुलम् ३ याज्जिज्ञासो
र्द्वयायैकजपदानादयःस्मृताः अनुशासनिकेसम्यकृचित्तदोषविनाशकाः ४ यत्रप्राबल्यलाभायवैराग्योदयसिद्धये कुरुक्षयादिकोल्लोकवृत्तांतउपव
र्णितः ५ तदेवस्पष्टमत्रोपसंहारव्यपदेशतः आत्मनत्वंविवृणुतेमुनिराख्यानकैस्त्रिभिः ६ आख्यायनत्रयंच संवर्तमरुत्तीयम् कृष्णधर्मसंवा
दः कृष्णार्जुनसंवादश्च तत्राद्येकाश्यांमृतस्यमुक्तिलिंगेनैवसूचयित्वाईश्वराराधनादिनाधर्मेणैवधनंलब्ध्वात्मशुद्धयेयष्टव्यमित्युक्तम् द्वितीयेशास्त्रा
र्थसूत्रणं तृतीयेतद्विवरणंचेति तदूर्ध्वउत्तंकोछवृत्त्याद्याख्यानेर्ज्ञानोपयोगिगुरुशुश्रूषामाहात्म्याहिंसात्मकंयज्ञनिंदादिचयथायथंतात्पर्यविषयतया

नारायणंनमस्कृत्यनरंचैवनरोत्तमम् देवींसरस्वतींचैवततोजयमुदीरयेत् १ वैशंपायनउवाच कृतोदकं-
तुराजानंधृतराष्ट्रंयुधिष्ठिरः पुरस्कृत्यमहाबाहुरुत्ततारा कुलेंद्रियः २ उत्तीर्यतुमहाबाहुर्बाष्पव्याकुललोचनः पपात
तीरेगंगायाव्याधविद्धइवद्विपः ३ तंसीदमानंजग्राहभीमः कृष्णेनचोदितः मैवमित्यब्रवीच्चैनंकृष्णःपरबलार्दनः ४
तमार्तंपतितंभूमौनिश्वसंतंपुनःपुनः ददृशुःपार्थिवाराजन्धर्मपुत्रंयुधिष्ठिरम् ५

ज्ञेयम् तत्रायमाद्यश्लोकः नारायणमिति
आपोनाराइतिप्रोक्ताआपोवैनरसूनवः अयनंतस्यताःपूर्वंतेननारायणःस्मृतइति स्मृतेःआपःपुरुषवचसइतिश्रुतेश्चांभःप्रधानंभूतपंचकंनरे
णांतर्यामिणासृष्टंनारंतत्सृष्ट्वातदेवानुप्राविशादितिश्रुतेः स्रष्टाप्रवेष्टाचनारायणईश्वरः सएवप्रविश्योपाधिधर्मानभिमन्यमानोनरोजीवः ता
भ्यामुत्तमोनरोत्तमः कार्यकारणोपाधिद्वयनिर्मुक्तःपरमात्मा एतत्त्रयंतत्स्वरूपप्रकाशिकांसरस्वतींदेवींचप्रणम्यजयंमहाभारताख्यमिति-
हासंसर्वश्रुतिस्मृतिसारभूतमुदीरयेदितितस्यार्थः एतेनतत्त्वमस्यादिवाक्यार्थोजीवब्रह्माभेदोग्रंथप्रतिपाद्योदर्शितः १ कृतोदकंतु राजानमि
तिउत्ततारगंगांतइतिशेषः २ ३ ४ ५ ५ ५ ५ ५ ५ ५ ५

राजानुधृतराष्ट्रश्चपुत्रशोकाभिपीडितः वाक्यमाहमहाबुद्धिःप्रज्ञाचक्षुर्युधिष्ठिरम् ७ उत्तिष्ठकुरुशार्दूलकुरुकार्यमनं
तरम् क्षात्रधर्मेणकौंतेयजितेयमवनीत्वया ८ तांभुंक्ष्वभ्रातृभिःसार्द्धंसुहृद्भिश्चनरेश्वर शोचितव्यंनपश्यामित्वया
धर्मभृतांवर ९ शोचितव्यंमयाचैवगांधार्याचमहीपते नयोःपुत्रशतंनष्टंस्वप्नलब्धंयथाधनम् १० अश्रुत्वाहितकाम
स्यविदुरस्यमहात्मनः वाक्यानिसुमहार्थानिपरितप्यामिदुर्मतिः ११ उक्तवान्विदुरोयन्मांधर्मात्मादिव्यदर्शनः दुर्योध
नापराधेनकुलंतेविनशिष्यति १२ स्वस्तिचेदिच्छसेराजन्कुलस्यकुरुमेवचः त्यज्यतामेषदुष्टात्मामंदोराजासुयोधनः
१३ कर्णश्चशकुनिश्चैवनैनंपश्यतुकर्हिचित् द्यूतसंघातमप्येषामप्रवादेनवारय १४ अभिषेचयराजानंधर्मात्मानंयु-
धिष्ठिरम् सपालयिष्यतिवशीधर्मेणपृथिवीमिमाम् १५ अथनेच्छसिराजानंकुंतीपुत्रंयुधिष्ठिरम् मेधीभूतःस्वयंराज्यंप्र
तिगृह्णीष्वपार्थिव १६ समंसर्वेषुभूतेषुवर्तमानंनराधिप अनुजीवंतुसर्वेत्वांज्ञातयोभ्रातृभिःसह १७ एवंब्रुवतिकौंतेयविं-
दुरेदीर्घदर्शिनि दुर्योधनमहंपापमन्ववर्तंवृथामतिः १८ अश्रुत्वास्यधीरस्यवाक्यानिमधुराण्यहम् फलंप्राप्यमहद्दुःखं
निमग्नःशोकसागरे १९ वृद्धौहितेद्यपितरौपश्यनौदुःखितौनृप नशोचितव्यंभवतापश्यामीहजनाधिप २० इतिश्री
मन्महाभारते आश्वमेधिकेपर्वणिप्रथमोऽध्यायः १ वैशंपायनउवाच एवमुक्तस्तुराज्ञासधृतराष्ट्रेणधीम-
ता तूष्णींबभूवमेधावीतमुवाचाथकेशवः १ अतीवमनसाशोकःक्रियमाणोजनाधिप संतापयतिवैतस्यपूर्वप्रेतान्पि
तामहान् २ यजस्वविविधैर्यज्ञैर्बहुभिःस्वाप्तदक्षिणैः देवांस्तर्पयसोमेनस्वधयाचपितॄनपि ३ अतिथीनन्नपानेनका
मैरन्यैरकिंचनान् विदितंवेदितव्यंतेकर्तव्यमपितेकृतम् ४ श्रुताश्चराजधर्मास्तेभीष्माद्भागीरथीसुतात् कृष्णद्वैपाय
नाच्चैवनारदाद्विदुरात्तथा ५ नेमामर्हसिमूढानांवृत्तिंत्वमनुवर्तितुम् पितृपैतामहंवृत्तमास्थायधुरमुद्वह ६ युक्तंहिय
शस्वक्षत्रंस्वर्गंप्राप्तुमसंशयम् नहिकश्चिद्धिशूराणांनिहतोत्रपराङ्मुखः ७ त्यज शोकंमहाराजभावितव्यंहितत्तथा न
शक्यास्तेपुनर्द्रष्टुंत्वयायेस्मिन्रणेहताः ८ एतावदुक्त्वागोविंदोधर्मराजंयुधिष्ठिरम् विररामहातेजास्तमुवाचयुधिष्ठिरः ९

१० ११ १२ १३ १४ १५ १६ १७ १८ १९ मोढ्यप्रयुक्ताद्वैराग्याच्छास्त्रीयकर्माचरणमेवश्रेयइत्यक्तम् २० इत्याश्वमेधिकेपर्व



युधिष्ठिरउवाच गोविंदमयियाप्रीतिस्तवसाविदिताभम सौहृदेनतथाप्रेम्णासदामय्यनुकंपसे १० प्रियंतुमेस्या
त्सुमहत्कृतंचक्रगदाधर श्रीमन्प्रीतेनमनसासर्वयादवनंदन ११ यदिमामनुजानीयाद्भवान्गंतुंतपोवनम्
नाहिशांतिंप्रपश्यामिपातयित्वापितामहम् १२ कर्णंचपुरुषव्याघ्रंसंग्रामेष्वपलायिनम् कर्मणायेनमुच्येयमस्मात्क्रू
राज्जनार्दन १३ कर्मणातद्विधत्स्वेहयेनशुध्यतिमेमनः तमेवंवादिनंपार्थंव्यासःप्रोवाचधर्मवित् १४ सांत्वयन्सुमहा
तेजाःशुभंवचनमर्थवत् अकृतातेमतिस्तातपुनर्बाल्येनमुह्यसे १५ किमाकाशवयंतातप्रलपामोमुहुर्मुहुः विदिताःक्ष
त्रधर्मास्तेयेषांयुद्धेनजीविका १६ तथाप्रवृत्तोनृपतिर्नाधिबंधेनयुज्यते मोक्षधर्माश्चनिखिलायाथातथ्येनतेश्रुताः १७
असंकृच्चापिसंदेहाश्छिन्नास्तेकामजामया अश्रद्दधानोदुर्मेधालुप्तस्मृतिरसिध्रुवम् १८ मैवंभवनतेयुक्तमिदमज्ञानमीदृ
शम् प्रायश्चित्तानिसर्वाणिविदितानिचतेनघ १९ राजधर्माश्चतेसर्वेदानधर्माश्चतेश्रुताः सकथंसर्वधर्मज्ञःसर्वागमवि
शारदः परिमुह्यसिभूयस्त्वमज्ञानादिवभारत २० इतिश्रीमन्महाभारते आश्वमेधिकेपर्वणिद्वितीयोऽध्यायः
२ व्यासउवाच युधिष्ठिरतवप्रज्ञानसम्यगितिमेमतिः नहिकश्चित्स्वयंमर्त्यःस्ववशःकुरुतेक्रियाम् १ ईश्व
रेणचयुक्तोयंसाध्वसाधुचमानवः करोतिपुरुषःकर्मतत्रकापरिदेवना २ आत्मानंमन्यसेचाथपापकर्माणमंततः शृणु
तत्रयथापापमपकृष्यतभारत ३ तपोभिःक्रतुभिश्चैवदानेनचयुधिष्ठिर तरंतिनित्यंपुरुषायेस्मपापानिकुर्वते ४ यज्ञे
नतपसाचैवदानेनचनराधिप पूयंतेनरशार्दूलनरादुष्कृतकारिणः ५ असुराश्चसुराश्चैवपुण्यहेतोर्मखक्रियाम् प्रय
तंतेमहात्मानस्तस्माद्यज्ञःपरायणम् ६ यज्ञैरेवमहात्मानोबभूवुरधिकाःसुराः ततोदेवाःक्रियावंतोदानवानभ्यधर्षय
न् ७ राजसूयाश्वमेधौचसर्वमेधंचभारत नरमेधंचनृपतेत्वमाहरयुधिष्ठिर ८ यजस्ववाजिमेधेनविधिवद्दक्षिणाव
ता बहुकामान्नवित्तेनरामोदाशरथिर्यथा ९ यथाचभरतोराजादौष्यंतिःपृथिवीपतिः शाकुंतलोमहावीर्यस्तवपूर्वपितामहः
१०



णिटीकायांद्वितीयोऽध्यायः २ युधिष्ठिरतवप्रज्ञेत्यादिना १ २ ३ ४ ५ ६ ७ ८ ९ १० ६॰ ६२

११ १२ १३ १४ १५ १६ १७ प्रतिविधिमनुकल्पम् १८ १९ २० २१ २२ २३ इत्याश्वमेधिकेपर्वणिटीकायांद्वि

युधिष्ठिरउवाच अंसंशयंवाजिमेधःपावयेत्पृथिवीपतिम् अभिप्रायस्तुमेकश्चित्तंत्वंश्रोतुमिहार्हसि ११ इमंज्ञाति
वधंकृत्वासुमहांतंद्विजोत्तम दानमल्पंनशक्नोमिदातुंवित्तंचनास्तिमे १२ नतुबालानिमान्दीनानुत्सहेवसुयाचितुम् नचै
वार्द्रव्रणान्कृच्छ्रेवर्तमानान्नृपात्मजान् १३ स्वयंविनाश्यपृथिवींयज्ञार्थेद्विजसत्तम करमाहारयिष्यामिकथंशोकपरायणः
१४ दुर्योधनापराधेनवसुधावसुधाधिपाः प्रनष्टायोजयित्वास्मानकीर्त्यामुनिसत्तम १५ दुर्योधनेनपृथिवीक्षयितावित्त
कारणात् कोशश्चापिविशीर्णोसौधार्तराष्ट्रस्यदुर्मतेः १६ पृथिवीदक्षिणाचात्रविधिःप्रथमकल्पितः विद्वद्भिःपरिदृष्टो
यंशिष्टोविधिविपर्ययः १७ नचप्रतिविधिंकर्तुंचिकीर्षामितपोधन अत्रमेभगवन्सम्यक्साचिव्यंकर्तुमर्हसि १८ एवमु
क्तस्तुपार्थेनकृष्णद्वैपायनस्तदा मुहूर्तमनुसंचिंत्यधर्मराजानमब्रवीत् १९ व्यासउवाच कोशश्चापिविशीर्णो
यंपरिपूर्णोभविष्यति विद्यतेद्रविणंपार्थगिरौहिमवतिस्थितम् २० उत्सृष्टंब्राह्मणैर्यज्ञेमरुत्तस्यमहात्मनः तदानयस्वकौं
तेयपर्याप्तंतद्भविष्यति २१ युधिष्ठिरउवाच कथंयज्ञेमरुत्तस्यद्रविणंतत्समाचितम् कस्मिंश्चकालेसनृपो
बभूववदतांवर २२ व्यासउवाच यदिशुश्रूषसेपार्थशृणुकारंधमंनृपम् यस्मिन्कालेमहावीर्यःसराजासी
न्महाधनः २३ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिसंवर्तमरुत्तीयेतृतीयोऽध्यायः ३ युधिष्ठिरउवा
च शुश्रूषेतस्यधर्मज्ञराजर्षेःपरिकीर्तनम् द्वैपायनमरुत्तस्यकथांप्रब्रूहिमेनघ १ व्यासउवाच आसी
त्कृतयुगेतातमनुर्दंडधरःप्रभुः तस्यपुत्रोमहाबाहुःप्रसंधिरितिविश्रुतः २ प्रसंधेरभवत्पुत्रःक्षुपइत्यभिसंज्ञितः क्षुप
स्यपुत्रइक्ष्वाकुर्महीपालोभवत्प्रभुः ३ तस्यपुत्रशतंराजन्नासीत्परमधार्मिकम् तांस्तुसर्वान्महीपालानिक्ष्वाकुरकरोत्
प्रभुः ४ तेषांज्येष्ठस्तुविंशोभूत्प्रतिमानंधनुष्मताम् विंशस्यपुत्रःकल्याणोविविंशोनामभारत ५ विविंशस्यसुताराज
न्बभूवुर्दशपंचच सर्वेधनुषिविक्रांताब्रह्मण्याःसत्यवादिनः ६

तीयोऽध्यायः ३ शुश्रूषेइति १ मरुत्तयज्ञप्रशंसाप्रसंगात्तद्द
श्यानस्तौति आसीत्कृतयुगइत्यादिना अध्यायद्वयेन अत्यंतंमहांतोपिकर्मैवानुतिष्ठंतीतिकर्ममाहात्म्यख्यापनार्थम् २ ३ ४ ५ ६

दानधर्मरताः शांताः सततंप्रियवादिनः तेषांज्येष्ठःखनीनेत्रःसतान्सर्वानपीडयत् ७ खनीनेत्रस्तुविक्रांतोजित्वाराज्य
मकंटकम् नाशकद्रक्षितुंराज्यंनानुरज्यंनतंप्रजाः ८ तमपास्यचतद्राज्येतस्यपुत्रंसुवर्चसम् अभ्यषिंचंतराजेंद्रमुदिता
श्चाभवंस्तदा ९ सपितुर्विक्रियांदृष्ट्वाराज्यान्निरसनंतथा नियतोवर्तयामासप्रजाहितचिकीर्षया १० ब्रह्मण्यःसत्यवा
दीचशुचिःशमदमान्वितः प्रजास्तंचान्वरज्यंतधर्मनित्यंमनीषिणम् ११ तस्यधर्मप्रवृत्तस्यव्यशीर्यत्कोशवाहनम् तंक्षीण
कोशंसामंताःसमंतात्पर्यपीडयन् १२ सपीड्यमानोबहुभिःक्षीणकोशाश्ववाहनः आर्तिमार्च्छत्परांराजासहभृत्यैःपुरेण
च १३ नचैनमभिहंतुंतेशक्नुवंतिबलक्षये सम्यग्वृत्तोहिराजासधर्मनित्योयुधिष्ठिर १४ यदातुपरमामार्तिंगतोसौसपुरो
नृपः ततःप्रदध्मौसकरंप्रादुरासीत्ततोबलम् १५ ततस्तानजयत्सर्वान्प्रत्यमित्रान्नराधिपान् एतस्मात्कारणाद्राजन्वि
श्रुतःसकरंधमः १६ तस्यकारंधमःपुत्रस्त्रेतायुगमुखेभवत् इंद्रादनवरःश्रीमान्देवैरपिसुदुर्जयः १७ तस्यसर्वेमहीपाला
वर्तंतेस्मवशेतदा सहिसम्राडभूत्तेषांवृत्तेनचबलेनच अविक्षिन्नामधर्मात्माशौर्येणेंद्रसमोभवत् यज्ञशीलोधर्मरतिर्धृ
तिमान्संयतेंद्रियः १९ तेजसादित्यसदृशःक्षमयापृथिवीसमः बृहस्पतिसमोबुद्ध्याहिमवानिवसुस्थिरः २० कर्मणामन
सावाचादमेनप्रशमेनच मनांस्याल्हादयामासप्रजानांसमहीपतिः २१ यईजेहयमेधानांशतेनविधिवत्प्रभुः याजयामा
सयंविद्वान्स्वयमेवांगिराःप्रभुः २२ तस्यपुत्रोतिचक्रामपितरंगुणवत्तया मरुत्तोनामधर्मज्ञश्चक्रवर्तीमहायशाः २३ ना
गायुतसमप्राणःसाक्षाद्विष्णुरिवापरः सयक्ष्यमाणोधर्मात्माशातकुंभमयान्युत २४ कारयामासशुभ्राणिभाजनानिस
हस्रशः मेरुंपर्वतमासाद्यहिमवत्पार्श्वउत्तरे २५ कांचनःसुमहान्पादस्तत्रकर्मचकारसः ततःकुंडानिपात्रीश्चपिठराण्या
सनानिच २६ चक्रुःसुवर्णकर्तारोयेषांसंख्यानविद्यते तस्यैवचसमीपेतुयज्ञवाटोबभूवह २७ ईजेतत्रसधर्मात्मावि
धिवत्पृथिवीपतिः मरुत्तःसहितैःसर्वैःप्रजापालैर्नराधिपः २८ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिचतुर्थोऽध्या
यः ४

कथंवीर्यःसमभवत्सराजांवदतांवर कथंचजातरूपेणसमयुज्यतसद्द्विज १ क्वचतत्सांप्रतंद्रव्यंभगवन्नवतिष्ठते कथं-
चशक्यमस्माभिस्तदवाप्तुंतपोधन २ व्यासउवाच असुराश्चसुराश्चैवदक्षस्यासन्प्रजापतेः अपत्यंबहुलं
तातसंस्पर्द्धंतपरस्परम् ३ तथैवांगिरसःपुत्रौव्रततुल्यौबभूवतुः बृहस्पतिर्बृहत्तेजाःसंवर्तश्चतपोधनः ४ तावतिस्पर्धि
नौराजन्पृथगास्तांपरस्परम् बृहस्पतिःससंवर्तंबाधतेस्मपुनःपुनः सबाध्यमानःसततंभ्रात्राज्येष्ठेनभारत अर्थानुत्सृ
ज्यदिग्वासावनवासमरोचयत् ६ वासवोप्यसुरान्सर्वान्विजित्यचनिपात्यच इंद्रत्वंप्राप्यलोकेषुततोवव्रेपुरोहितम् ७ पु
त्रमंगिरसोज्येष्ठंविप्रश्रेष्ठंबृहस्पतिम् याज्यस्त्वंगिरसःपूर्वमासीद्राजाकरंधमः ८ वीर्येणाप्रतिमोलोकेवृत्तेनचबलेनच
शतक्रतुरिवौजस्वीधर्मात्मासंशितव्रतः ९ वाहनंयस्ययोधाश्चमित्राणिविविधानिच शयनानिचमुख्यानिमहार्हाणिच-
सर्वशः १० ध्यानादेवाभवद्राजन्मुखवातेनसर्वशः सगुणैःपार्थिवान्सर्वान्वशेचक्रेनराधिपः १२ संजीव्यकालमिष्टंच-
सशरीरोदिवंगतः बभूवतस्यपुत्रस्तुययातिरिवधर्मवित् १३ अविक्षिन्नामशत्रुजित्सवशेकृतवान्महीम् विक्रमेणगुणै
श्चैवपितेवासीत्सपार्थिवः १३ तस्यवासवतुल्योभून्मरुत्तोनामवीर्यवान् पुत्रस्तमनुरक्ताभूत्पृथिवीसागरांबरा १४ स्पर्द्ध
तेसस्मसततंदेवराजेननित्यदा वासवोपिमरुत्तेनस्पर्द्धतेपांडुनंदन १५ शुचिःसगुणवानासीन्मरुत्तःपृथिवीपतिः यतमा
नोपियंशक्रोनविशेषयतिस्मह १६ सोऽशक्नुवन्विशेषायसमाहूयबृहस्पतिम् उवाचेदंवचोदेवैःसहितोहरिवाहनः १७
बृहस्पतेमरुत्तस्यमाकार्षीस्त्वंकथंचन दैवंकर्माथपित्र्यंवाकर्तासिममचेत्प्रियम् १८ अहंहित्रिषुलोकेषुसुराणांचबृह
स्पते इंद्रत्वंप्राप्तवानेकोमरुत्तस्तुमहीपतिः १९ कथंह्यमर्त्यंब्रह्मंस्त्वंयाजयित्वासुराधिपम् याजयेर्मृत्युसंयुक्तंमरुत्तमवि
शंकया २० मांवावृणीष्वभद्रंतेमरुत्तंवामहीपतिम् परित्यज्यमरुत्तंवायथाजोषंभजस्वमाम् २१ एवमुक्तःसकौरव्य
देवराज्ञाबृहस्पतिः मुहूर्तमिवसंचिंत्यदेवराजानमब्रवीत् २२ त्वंभूतानामधिपतिस्त्वयिलोकाःप्रतिष्ठिताः नमुचेर्वि-
श्वरूपस्यनिहंतात्वंबलस्यच २३

त्वमाजहर्थदैत्यानामेकोवीरश्श्रियंपराम् त्वंबिभर्षिभुवंद्यांचसदैवबलसूदन २४ पौरोहित्यंकथंकृत्वात्वदेवगणेश्वर या
जयेयमहं मर्त्यंमरुत्तंपाकशासन २५ समाश्वसिहिदेवेंद्रनाहंमर्त्यस्यकर्हिचित् ग्रहीष्यामिस्त्रुवंयज्ञेश्रृणुचेदंवचोमम
२६ हिरण्यरेतानोष्णःस्यात्परिवर्तेतमेदिनी भासंतुनरविःकुर्यान्नतुसत्यंचलेन्मयि २७ वैशंपायनउवाच
बृहस्पतिवचःश्रुत्वाशक्रोविगतमत्सरः प्रशस्यैनंविवेशाथस्वमेवभवनंतदा २८ इतिश्रीमन्महाभारतेआश्वमेधि
कपर्वणिसंवर्तमरुत्तीयेपंचमोऽध्यायः ५ व्यासउवाच अत्राप्युदाहरंतीममितिहासंपुरातनम् बृहस्पतेश्च
संवादंमरुत्तस्यचधीमतः १ देवराजस्यसमयंकृतमांगिरसेनह श्रुत्वामरुत्तोनृपतिर्यज्ञमाहारयत्परम् २ संकल्प्यम-
नसायज्ञंकरंधमसुतात्मजः बृहस्पतिमुपागम्यवाग्मीवचनमब्रवीत् ३ भगवन्यन्मयापूर्वमभिगम्यतपोधन कृतोभि
संधिर्यज्ञस्यभवतोवचनाद्गुरो ४ तमहंयष्टुमिच्छामिसंभाराःसंभृताश्चमे याज्योस्मिभवतःसाधोतत्प्राप्नुहिविधत्स्वच
५ बृहस्पतिरुवाच नकामयेयाजयितुंत्वामहंपृथिवीपते वृतोस्मिदेवराजेनप्रतिज्ञातंचतस्यमे ६ मरुत्त
उवाच पित्र्यमस्मितवक्षेत्रंबहुमन्येचतेभृशम् नचास्मियाज्यतांप्राप्तोभजमानंभजस्वमाम् ७ बृहस्पतिरुवाच
अमर्त्यंयाजयित्वाहंयाजयिष्येकथंनरम् मरुत्तगच्छवामावानिवृत्तोस्म्यद्ययाजनात् ८ नत्वांयाजयितास्म्यद्य वृणुयंत्वमि
हेच्छसि उपाध्यायंमहाबाहोयस्तेयज्ञंकरिष्यति ९ व्यासउवाच एवमुक्तस्तुनृपतिर्मरुत्तोव्रीडितोभवत् प्र
त्यागच्छन्सुसंविग्नोददर्शपथिनारदम् १० देवर्षिणासमागम्यनारदेनसपार्थिवः विधिवत्प्रांजलिस्तस्थावथैनंनारदो
ब्रवीत् ११ राजर्षेनातिहृष्टोसिकच्चित्क्षेमंतवानघ क्वगतोसिकुतश्चेदमप्रीतिस्थानमागतम् १२ श्रोतव्यंचेन्मयाराज
न्ब्रूहिमेपार्थिवर्षभ व्यपनेष्यामितेमन्युंसर्वयत्नैर्नराधिप १३ एवमुक्तोमरुत्तस्तुनारदेनमहर्षिणा विप्रलंभमुपाध्या
यात्सर्वमेवन्यवेदयत् १४ मरुत्तउ॰ गतोस्म्यंगिरसःपुत्रंदेवाचार्यंबृहस्पतिं यज्ञार्थमृत्विजंद्रष्टुंसचमांनाभ्यनंदत १५

१६ १७ १८ १९ २० २१ उन्मत्तवेषमिति अत्रकुणपदर्शनेनमहेश्वरदर्शनसिद्धिंदर्शयताकुणपस्यमहेश्वरप्रतिमात्वंसूचितम् तथाचाविमु
क्तंप्रकृत्योक्तं अत्रहिजंतोः प्राणषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवतीतिसिद्धं कुणपाभिमानिनोजीवस्यब्रह्मभा-

प्रत्याख्यातश्चतेनाहंजीवितुंनाद्यकामये परित्यक्तश्चगुरुणादूषितश्चास्मिनारद १६ व्यासउवाच एवमुक्तस्तु
राज्ञासनारदःप्रत्युवाचह आविक्षितंमहाराजवाचासंजीवयन्निव १७ नारदउवाच राजन्नंगिरसःपुत्रःसंव
र्तोनामधार्मिकः चंक्रमीतिदिशःसर्वादिग्वासामोहयन्प्रजाः १८ तंगच्छयदियाज्यंत्वांनवांछतिबृहस्पतिः प्रसन्न-
स्त्वांमहातेजाःसंवर्तोयाजयिष्यति १९ मरुत्तउवाच संजीवितोहंभवतावाक्येनानेननारद पश्येयंक्वनुसंवर्तं
शंसमेवदतांवर २० कथंचतस्मैवर्तेयंकथंमांनपरित्यजेत् प्रत्याख्यातश्चतेनापिनाहंजीवितुमुत्सहे २१ नारदउवा
च उन्मत्तवेषंबिभ्रत्सचंक्रमीतियथासुखम् वाराणस्यांमहाराजदर्शनेप्सुर्महेश्वरम् २२ तस्याद्वारंसमासाद्यन्य
सेथाःकुणपंक्वचित् तंदृष्ट्वायोनिवर्तेतससंवर्तोमहीपते २३ तंपृष्ठतोनुगच्छेथायत्रगच्छेत्सवीर्यवान् तमेकांतेसमा
साद्यप्रांजलिःशरणंव्रज २४ पृच्छेत्त्वांयदिकेनाहंतवाख्यातइतिस्मह ब्रूयास्त्वंनारदेनेतिसंवर्तंकथितोसिमे २५ सचे
त्त्वामनुयुंजीतममानुगमनेप्सया शंसेथावन्हिमारूढंमामपित्वमशंकया २६ व्यासउवाच सतथेतिप्रति-
श्रुत्यपूजयित्वाचनारदम् अभ्यनुज्ञायराजर्षिर्ययौवाराणसींपुरीम् २७ तत्रगत्वायथोक्तंसपुर्याद्वारेमहायशाः कु
णपंस्थापयामासनारदस्यवचःस्मरन् २८ यौगपद्येनविप्रश्चपुरीद्वारमथाविशत् ततःसकुणपंदृष्ट्वासहसासंन्यवर्तत
२९ सतंनिवृत्तमालक्ष्यप्रांजलिःपृष्ठतोन्वगात् आविक्षितोमहीपालःसंवर्तमुपशिक्षितुम् ३० सचतंविजनेदृष्ट्वापांसु
भिःकर्दमेनच श्लेष्मणाचैवराजानंष्ठीवनेश्चसमाकिरत् ३१ सतथाबाध्यमानोवैसंवर्तेनमहीपतिः अन्वगादेवतमृषिं
प्रांजलिःसंप्रसादयन् ३२ ततोनिवर्त्यसंवर्तःपरिश्रांतउपाविशत् शीतलच्छायमासाद्यन्यग्रोधंबहुशाखिनम् ३३ इ-
तिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिमरुत्तीयेषष्ठोऽध्यायः ६

वोपूर्वोज्ञापितः एवंचोपरिधारणोविधिवाद्विधिरेवायमित्युपपादि
तं २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ इत्याश्वमेधिकेपर्वणिटीकायांषष्ठोऽध्यायः ६

दृष्टांतं दार्ष्टांतिके योजयति मुंजमिति आत्मनिश्रितां मायां जगदाकारेण भासमानामिति शेषः २३ यतोऽयं सबाह्याभ्यंतरं प्रत्यगनन्यत्वेन वीक्षते अत एव चा
नन्याधिपतिरयमित्याह यदाहीति २४ स एकधा भवति त्रिधा भवतीत्यादिकायव्यूहकरणम् न तस्य रोगो न जरा न मृत्युः सर्वस्य वशी सर्वस्येशान इ
त्यादिश्रुतिप्रसिद्धं योगफलमाह अन्यान्याइति अन्यान्या देवगंधर्वमनुष्याद्याः कामरूपी भवतीत्यर्थः २५ विदेहे कैवल्यावधिकमेवैश्वर्यमित्याह ब्रह्मचेति २६
२७ विनश्यत्स्विति विदेहमुक्तस्य न क्लेशाः संतीत्युक्तम् तत्कैमुतिकन्यायेन द्रढयितुं संदेहमुक्तस्यापि ते न संतीत्याह दुःखशोकेत्यादिना २८ २९ ३० अन्या

मुंजं शरीरमित्याहुरिषीकामात्मनिश्रिताम् एतन्निदर्शनं प्रोक्तं योगविद्भिरनुत्तमम् २३ यदा हि युक्तमात्मानं सम्यक्पश्यति देह
भृत् न तस्येहेश्वरः कश्चित्त्रैलोक्यस्यापि यः प्रभुः २४ अन्यान्याश्चैव तनवो यथेष्टं प्रतिपद्यते विनिवृत्य जरामृत्यू न शोचति न हृष्यति
२५ देवानामपि देवत्वं युक्तः कारयते वशी ब्रह्म चाव्ययमाप्नोति हित्वा देहमशाश्वतम् २६ विनश्यत्स्वपि भूतेषु न भयं तस्य जायते
क्लिश्यमानेषु भूतेषु न स क्लिश्यति केनचित् २७ दुःखशोकमयैर्घोरैः संगस्नेहसमुद्भवैः न विचाल्यति युक्तात्मा निःस्पृहः शांत-
मानसः २८ नैनं शस्त्राणि बध्यंते न मृत्युश्चास्य विद्यते नातः सुखतरं किंचिल्लोके क्वचन दृश्यते २९ सम्यग्युक्त्वा स आत्मानमा
त्मन्येव प्रतिष्ठिते विनिवृत्तजरादुःखः सुखं स्वपिति चापि सः ३० देहान्यथेष्टमभ्येति हित्वेमां मानुषीं तनुम् निर्वेदस्तु न कर्तव्यो
भुंजानेन कथंचन ३१ सम्यक् युक्त्वा यदात्मानमात्मन्येव प्रपश्यति तदैव न स्पृहयते साक्षादपि शतक्रतोः ३२ योगमेकांतशी
लस्तु यथा विंदति तच्छृणु दृष्टपूर्वां दिशं चिंत्य यस्मिन्सन्निवसेत्पुरे ३३ पुरस्याभ्यंतरे तस्य मनः स्थाप्यं न बाह्यतः पुरस्याभ्यंत
रे तिष्ठन्यस्मिन्नावसथे वसेत् तस्मिन्नावसथे धार्यं सबाह्याभ्यंतरं मनः ३४ प्रचिंत्यावसथे कृत्स्नं यस्मिन्काले स तिष्ठति तस्मि
न्काले मनश्चास्य न कथंचन बाह्यतः ३५

न्याश्चेति पूर्वोक्तस्यैव विचारणं देहानिति भुंजानेन योगैश्वर्यमिति शेषः निर्वेदो योगात् वैराग्यं न कर्तव्यमित्य
र्थः ३१ वस्तुतस्तु योगजसंस्कारप्राबल्याद्योगिनो भोगेच्छैव न भवतीत्याह सम्यगिति असम्यग्योगिविषयैव भोगेच्छोक्तेति भावः ३२ एकांतशीलः एकं ब्रह्म अं
त्यते प्राप्यते अनेनेति एकांतो ध्यानं तच्छीलं यस्य सः ततस्तु तं पश्यति निष्कलं ध्यायमान इति श्रुतेः दृष्टपूर्वां दिशं दृष्टं श्रुतिप्रामाण्यं प्रत्यनपेक्षत्वात् वेदांतश्रवणपूर्वकां दिशं
उपदेशं चिंत्य युक्त्यापि पर्यालोच्य श्रोतव्यो मंतव्यो निदिध्यासितव्य इति श्रुतेः यस्मिन्पुरे देहे ३३ आवसथे मूलाधाराद्यन्यतमस्मिन्चक्रे ३४ तदैव कृत्स्नं सर्वात्मकं य
दा पश्यति तदास्य बाह्यतः प्रत्यग्रूपादन्यत्किंचन अस्तीति यत्रास्य मनः सज्जेत् अतो निर्विषयं न तोऽमुष्यन इत्यर्थः ३५

उपसंहरतिसन्नियम्येति कायमभिदेहस्याभितः बहिःअंतरंमध्येचकृत्स्नंपरिपूर्णब्रह्मैवचिंतयेदित्यर्थः ३६ अस्ययोगस्यसाधनान्याह दंतांस्तालुंचजि ह्वांचगलंग्रीवांतथैवचहृदयंचिंतयेच्चापितथाहृदयबंधनमिति दंतैरवखंड्यावखंड्यगृह्यमाणानाहारान्नचिंतयेत् आहारशब्दोसत्वशब्दः सत्वशब्दोध्रुवास्मृतिः स्मृतिलंभेसर्वग्रंथीनांविप्रमोक्षइति आहारशब्दोमोक्षहेतुत्वश्रुतेः तथातालुआधारजिह्वांतत्राधेयां यथोक्तमीश्वरप्रोक्ते. लंबिकोर्ध्वेस्थितेगर्तेरसनांविपरीतगाम् संयोजयेत्प्रयत्नेनमुद्रासाखेचरीमतेति दत्तात्रेयः अतःकपालविवरेजिह्वांव्यावृत्यचार्ययेत् भ्रूमध्यदृष्टिरप्येषामुद्राभवतिखेचरीति भ्रुवोर्मध्येप्राणमावेश्यप्राणापानौसमौकृत्वानासाभ्यंतरचारिणाविति चैनदेवोक्तंगलंजिह्वामूलादधोभागःग्रीवानदधः कंठनालंताभ्यांकंठकूपस्ततोप्यधःस्थितोलक्ष्यते तत्र-

सन्नियम्येंद्रियग्रामंनिर्घोषेनिर्जनेवने कायमभ्यंतरंकृत्स्नमेकाग्रःपरिचिंतयेत् ३६ दंतांस्तालुंचजिह्वांचगलंग्रीवांतथैवच हृदयंचिंतयेच्चापितथाहृदयबंधनम् ३७ इत्युक्तःसमयाशिष्योमेधावीमधुसूदन पप्रच्छपुनरेवेमंमोक्षधर्मंसुदुर्वचम् ३८ भुक्तंभुक्तमिदंकोष्ठेकथमन्नंविपच्यते कथंरसत्वंव्रजतिशोणितत्वंकथंपुनः ३९ तथामांसंचमेदश्चस्नाय्वस्थीनिचपोषिति कथमेतानिसर्वाणिशरीराणिशरीरिणाम् ४० वर्द्धंतेवर्द्धमानस्यवर्द्धतेचकथंबलम् निरोधानांनिर्गमनंमलानांचपृथक्पृथक् ४१ कुतोवायंप्रश्वसितिउच्छ्वसित्यपिवापुनः कंचदेशमधिष्ठायतिष्ठत्यात्मायमात्मनि ४२ जीवःकायंवहतिचेत्चेष्टमानःकलेवरम् किंवर्णंकीदृशंचैवनिवेशयतिवैपुनः ४३ याथातथ्येनभगवन्वक्तुमर्हसिमेनघ इतिसंपरिपृष्टोहंतेनविप्रेणमाधव ४४ प्रत्यब्रुवंमहाबाहोयथाश्रुतमरिंदम यथास्वकोष्ठेप्रक्षिप्यभांडंभांडमनाभवेत् ४५

धारणासद्यःफलायत्नादभ्यसनीया योगेविश्वासोत्पत्त्यर्थंतथाचसूत्रम् कंठकूपेक्षुत्पिपासानिवृत्तिरिति भाष्यमपिआसामेकस्याःफलंयावन्नभवतितावद्योगधर्मेनश्रद्धत्तेइति हृदयंहृदयायतनंब्रह्महृदयबंधनंशतंचैकाचहृदयस्यनाड्यइतिश्रूयमाणंनाडीमार्गंतत्तल्लोकगत्युपयोगि. ३७ मेधावीदंतादिशब्दैःपारोक्ष्येणोक्तमर्थंज्ञातवान् ३८ पंचस्वर्थेषुआद्यंविवृत्यपृच्छतित्रिभिः भुक्तंभुक्तमिति ३९ ४० ४१ द्वितीयमर्द्धेनकुतोवेति तृतीयंयोगानुपकारित्वादपृष्ट्वाचतुर्थमेवपृच्छतिकंचेति ४२ पंचमंपृच्छतिजीवइति कथंजीवोनाडीमार्गैःसूक्ष्मंकलेवरंवहति किंवर्णावातेनाडीमार्गाःतेश्चकीदृशंपुनर्वपुःप्राप्यमितिप्रश्नार्थः एतेषांमध्येआद्ययोर्विवरणार्थाब्राह्मणगीता इतरयोर्गुरुशिष्यसंवादःप्राधान्येन अन्यत्तुतत्रतत्रोपसर्जनत्वेनप्रतिपाद्यतइतिविभागः ४३ ४४ कोष्ठेधनगृहेभांडंगृहोपस्करंनिक्षिप्तंयथागृहंप्रविष्टोविविच्यजानाति ४५ 

एवंस्वकाये देहांतर्मनः प्रक्षिप्य आनिश्चलैः अनिश्चरद्भिः द्वारैरिंद्रियैः सर्वद्वाराणिसंयम्यमनोहृदिनिरुध्यचेतिस्मृतेः त्वयातत्पृष्टंनद्रष्टुंयोगबलेनज्ञेयमित्य
र्थः ४६ एतदेवोपपादयति एवमिति प्रधानवित्प्रकृतिवित्सर्वविकारविद्भवतिविकाराणांप्रकृतेरनन्यत्वादिति ४७ चक्षुराद्यग्राह्यस्यामूर्तस्यरूपंसर्वतः
पाणिपादांतइत्यादिलक्षणम् ४८ तंदेवजीवस्यस्वात्मभूतदेहात्निष्क्रांतंपृथक्भूतंमुंजेषीकावत् पश्यतिसंप्रज्ञाते ४९ तंसर्वतइत्युक्तलक्षणंउत्सृज्यप्र
विलाप्यदेहंस्वंस्वरूपंधारयन्मनोनिगृण्हन् केवलंनिर्गुणंब्रह्मपश्यति सएवंविद्वानस्माच्छरीरभेदादूर्ध्वंउत्क्रम्यामुष्मिन्स्वर्गेलोकेसर्वान्कामानाप्त्वा

तथास्वकीयेप्रक्षिप्यमनोद्वारैरनिश्चलैः आत्मानंतत्रमार्गेतप्रमादंपरिवर्जयेत् ४६ एवंसततमुद्युक्तःप्रीतात्मानचिरादिव
आसादयतितद्ब्रह्मयद्दृष्ट्वास्यात्प्रधानवित् ४७ नत्वसौचक्षुषाग्राह्योनचसर्वैरपींद्रियैः मनसैवप्रदीपेनमहानात्माप्रदृश्यते
सर्वतःपाणिपादांतःसर्वतोक्षिशिरोमुखः ४८ सर्वतःश्रुतिमाँल्लोकेसर्वमावृत्यतिष्ठति जीवोनिष्क्रांतमात्मानंशरीरात्संप्रप
श्यति ४९ सतमुत्सृज्यदेहंस्वंधारयन्ब्रह्मकेवलम् आत्मानमालोकयतिमनसाप्रहसन्निव तदेवमाश्रयंकृत्वामोक्षंयातितत्त
तोमयि ५० इदंसर्वंरहस्यंतेमयाप्रोक्तंद्विजोत्तम आपृच्छेधारयिष्यामिगच्छविप्रयथासुखम् ५१ इत्युक्तःसतदाकृष्णमया
शिष्योमहातपाः आगच्छतयथाकामंब्राह्मणःशंसितव्रतः ५२ वासुदेवउवाच इत्युक्त्वासतदावाक्यंमांपार्थद्विजस
त्तमः मोक्षधर्माश्रितःसम्यक्तत्रैवांतरधीयत ५३ कच्चिदेतत्त्वयापार्थश्रुतमेकाग्रचेतसा तदापिहिरथस्थस्त्वंश्रुतवानेतदेव
हि ५४ नैतत्पार्थसुविज्ञेयंव्यामिश्रेणेतिमेमतिः नरेणाकृतसंज्ञेनविशुद्धेनांतरात्मना ५५ सुरहस्यमिदंप्रोक्तंदेवानांभरत
र्षभ कच्चिन्नेदंश्रुतंपार्थमनुष्येणहकर्हिचित् ५६ नह्येतच्छ्रोतुमर्होन्योमनुष्यस्त्वामृतेनघ नैतदद्यसुविज्ञेयंव्यामिश्रेणांत
रात्मना ५७ क्रियावद्भिर्हिकौंतेयदेवलोकःसमावृतः नचैतदिष्टंदेवानांमर्त्यरूपनिवर्तनम् ५८ पराहिसागतिःपार्थयत्तद्ब्र-
सनातनम् यत्रामृतत्वंप्राप्नोतित्यक्त्वादेहंसदासुखी ५९ इमंधर्मंसमास्थाययेपिस्युःपापयोनयः स्त्रियोवैश्यास्तथाशूद्रा
स्तेपियांतिपरांगतिम् ६०

मृतःसमभवदिति देहाभिमानकृतंभेदंत्यक्त्वाऊर्ध्वःकारणंब्रह्मभावंप्राप्तंतत्रैवसर्वकाममाप्भूत्वा अमृतास्त्वंकेवल्य
मस्तुतइतिश्रवणात् प्रहसन्निव अहोवृथैवमरीचिकोदकतुल्येनसंसारेणाहंभ्रामितइतिविस्मयेनेतिभावः तदेवंततब्रह्म एवंउक्तरीत्या ५० ५१ ५२
५३ ५४ व्यामिश्रेणव्यग्रेणअकृतसंज्ञेन अज्ञातविद्यासंप्रदायेन ५५ ५६ ५७ ५८ ५९ इमंधर्मंआत्मदर्शनाख्यम् ६० ७ ६९

६१ ६२ ६३ लोकसारधनादि असारवत् तृणादिवत् यः परित्यज्यते विवेकादिना परित्यागवान् क्रियते उपायैः शमादिभिः ६४ षण्मासानिति षड्भिर्मासैस्त्व
युक्तस्य युक्तस्य युक्तस्य देहिनः आनंदः परमो गुह्यः सम्यग्योगः प्रवर्तत इति मैत्रायणीयश्रुतेः स एव साध्यत्वादादरणीयो योग इत्यर्थः ६५ इति श्रीमहाभा
रते आश्वमेधिके पर्वणि भावदीपे एकोनविंशोऽध्यायः १९ भुक्तं भुक्तमिदं कोष्ठे इत्यादिना कृतस्य प्रश्नस्य उत्तरं अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रि
तः प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधमिति गीतोक्तमेव विवृणोति अत्रापीत्यादिना अत्र प्रश्नविषये इतिहासमपीति संबंधः १ २ कर्म अग्निहोत्रा

किंपुनर्ब्राह्मणाः पार्थ क्षत्रिया वा बहुश्रुताः स्वधर्मरतयो नित्यं ब्रह्मलोकपरायणाः ६१ हेतुमच्चैतदुद्दिष्टमुपायाश्चास्य साधने
सिद्धिः फलं च मोक्षश्च दुःखस्य च विनिर्णयः ६२ नातः परं सुखं त्वन्यत् किंचित्स्याद्भरतर्षभ बुद्धिमान् श्रद्दधानश्च पराक्रांतश्च पांड
व ६३ यः परित्यज्यते मर्त्यो लोकसारमसारवत् एतैरुपायैः स क्षिप्रं परां गतिमवाप्नुते ६४ एतावदेव वक्तव्यं नातो भूयोऽस्ति किंचन
षण्मासान्नित्ययुक्तस्य योगः पार्थ प्रवर्तते ६५ इति श्रीमहाभारते आश्वमेधिके पर्वणि अनुगीतायां एकोनविंशोऽध्यायः
१९ वासुदेव उवाच अत्राप्युदाहरंतीममितिहासं पुरातनम् दंपत्योः पार्थ संवादो योऽभवद्भरतर्षभ १ ब्राह्मणी ब्राह्मणं
कंचित् ज्ञानविज्ञानपारगम् दृष्ट्वा विविक्त आसीनं भार्या भर्तारमब्रवीत् २ कं नु लोकं गमिष्यामि त्वामहं पतिमाश्रिता न्यस्त
कर्माणमासीनं कीनाशमविचक्षणम् ३ भार्याः पतिकृतांल्लोकानाप्नुवंतीति नः श्रुतम् त्वामहं पतिमासाद्य कां गमिष्यामि वै गति
म् ४ एवमुक्तः स शांतात्मा तामुवाच हसन्निव सुभगे नाभ्यसूयामि वाक्यस्यास्य तवानघे ५ ग्राह्यं दृश्यं च सत्यं वा यदिदं कर्म वि
द्यते एतदेव व्यवस्यंति कर्म कर्मेति कर्मिणः ६ मोहमेव नियच्छंति कर्मणा ज्ञानवर्जिताः नैष्कर्म्यं न च लोकेऽस्मिन्मुहूर्तमपि ल
भ्यते ७ कर्मणा मनसा वाचा शुभं वा यदि वाऽशुभम् जन्मादिमूर्तिभेदानां कर्म भूतेषु वर्तते ८ रक्षोभिर्वध्यमानेषु दृश्यद्रव्ये
षु वर्त्मसु आत्मस्थमात्मना तेन दृष्टमायतनं मया ९

दि कं न्यस्तं येन तं कीनाशं कर्कशमपि निरनुक्रोशम् अविचक्षणं मम अनन्य
गतित्वमजानंतम् ३ ४ ५ ग्राह्यं दीक्षाव्रतादिकम् अत एव दृश्यं लोकैः स्थूलत्वाद्दृष्टियोग्यम् ६ ७ कर्मणा शरीरायासेन जन्मादि जन्मास्थि
तिभंगम् मूर्तिभेदो योनिनानात्वं ८ दृश्यानि सोमाज्यादीनि द्रव्याणि येषु वर्त्मसु कर्ममार्गेषु रक्षोभिर्दुर्जनैर्वध्यमानेषु वश्यमानेषु सत्सु तेभ्यो विरक्ते
न मयेति शेषः आयतनं भ्रूघ्राणमध्यस्थमविमुक्ताख्यम् ९ ७ ७ ७ ७ ७ ७

सोमः इडा अग्निः पिंगला वरणानासासंज्ञेसोविमुक्तेप्रतिष्ठितः सोविमुक्तः कस्मिन्प्रतिष्ठितइति वरणायांचनास्यांमध्येप्रतिष्ठितइत्यादि भ्रुवोर्घ्राणस्य चयः संधिरितिजाबालश्रुतिप्रसिद्धेः व्यवायंसंचारम् धीरोबुद्धिप्रेरकोभूतानिधारयन्वायुः १० ११ नतदाघ्रेयम् तत् अक्षरम् १२ १३ तंत्रंसंसृष्ट्या दिव्यापारः एतदेवाह प्राणोपानइत्यादिना १४ प्राणापानयोः प्रवृत्तिरेवसृष्टिः प्रवेशएवप्रलयश्चेतिभावः समानेति नाभिमंडलस्थः समानः कृत्स्न देहव्यापीव्यानः १५ तस्मिन् अपानसहिते प्राणेलीने भ्रूघ्राणमध्येनिरुद्धेसति उदानःसर्वसंधिस्थइति वचनात् शंकुभिश्चर्मेव उदानेन प्राणापानावा यतोयस्मात् कृतोतस्मात् अनुक्रांतेउदानेशयानंपुरुषंप्राणापानौनमुंचतः विमुंचतइतिपाठेशयानइत्यस्मृतमित्यर्थः १६ प्राणानामिति यतःप्रा

यत्रतद्ब्रह्मनिर्द्वंद्वंयत्रसोमःसहाग्निना व्यवायंकुरुतेनित्यंधीरोभूतानिधारयन् १० यत्रब्रह्मादयोयुक्तास्तदक्षरमुपासते विद्वांसःसुव्रतायत्रशांतात्मानोजितेंद्रियाः ११ घ्राणेननतदाघ्रेयंनास्वाद्यंचैवजिह्वया स्पर्शेननतदस्पृश्यंमनसात्ववगम्यते १२ चक्षुषामविषह्यंचयत्किंचित्श्रवणात्परम् अगंधमरसस्पर्शमरूपंशब्दलक्षणम् १३ यतःप्रवर्ततेतंत्रंयत्रचप्रतितिष्ठति प्राणोपानःसमानश्चव्यानश्चोदानएवच १४ ततएवप्रवर्तंतेतदेवप्रविशंतिच समानव्यानयोर्मध्येप्राणापानौविचेरतुः १५ तस्मिन्सुप्तेप्रलीयेतसमानोव्यानएवच अपानप्राणयोर्मध्येउदानोव्याप्यतिष्ठति तस्माच्छयानंपुरुषंप्राणापानौनमुंचतः १६ प्राणानामायतत्वेनतमुदानंप्रचक्षते तस्मात्तपोव्यवस्यंतिमद्गतंब्रह्मवादिनः १७ तेषामन्योन्यभक्षाणांसर्वेषांदेहचारिणाम् अग्निर्वैश्वानरोमध्येसप्तधादीप्यतेंतरा १८ घ्राणंजिह्वाचचक्षुश्चत्वक्चश्रोत्रंचपंचमम् मनोबुद्धिश्चसप्तैताजिह्वावैश्वानरार्चिषः १९ घ्रेयंदृश्यंचपेयंचस्पृश्यंश्राव्यंतथैवच मंतव्यमथबोद्धव्यंताःसप्तसमिधोमम २० घ्राताभक्षयिताद्रष्टास्प्रष्टाश्रोताचपंचमः मंताबोद्धाचसप्तैतेभवंतिपरमर्त्विजः २१ घ्रेयेपेयेचदृश्येचस्पृश्येश्राव्येतथैवच मंतव्येप्यथबोद्धव्येसुभगेपश्यसर्वदा २२

णानामायतत्वं उदानाधीनं अतस्तं उदानं उत्कर्षेण आनयति चेष्टयते प्राणानितिनिर्वचनात् प्रचक्षते यस्मात् प्राणानांजीवोपाधीनां एकस्मिन् उदानेंतर्भावः तस्मात् तपः प्राणजयाख्यं भ्रुवोर्मध्येप्राणमावेश्यंत्यवंरूपम् आलोचनंवा आत्मनस्तत्तद्देहादिव्यतिरिक्तत्वस्य ब्रह्मवादिनोमद्गतंमयिमनश्चालकेभ्यस्तंनिष्ठाप्राप्तं परात्मप्रापकंव्यवस्यंति निश्चिन्वंतीत्यर्थः १७ मद्गतमित्यत्रमच्छब्दार्थंवैश्वानरंदर्शयति तेषामितिमध्येसमानस्थानेनाभिमंडले अंतरातस्यापिमध्ये १८ घ्राणघ्रेयघ्रात्रादयः सप्तसप्तकरणविषयकर्तृरूपाः १९ २० २१ २२ ७

तेषांमध्ये अग्निषु घ्राणाद्यभिमानिदेवतास्र हवींषिघ्रेयादीनि होतारोविषयाणामाव्हातारः तत्कल्पकाइत्यर्थः अमुमावहामुमावहेत्यावाहय तितदे
वहोतुर्होतृत्वमितिश्रौतनिर्वचनात् घ्रातहमित्यादयोभिमानाः तान्सर्वान्प्रक्षिप्यगुणागुणेषु वर्ततइतिमत्वायेनसज्जंतेतेविद्वांसोब्रह्मीभूता जनयं
तिपृथिव्यादीनूवक्ष्यमाणान् स्वयोनिषुस्वंब्रह्मतदेवयोनिर्येषांतेषु अग्निषु २३ पृथिव्यादयोपिसंघातापन्नाः योनिश्चैतन्याभिव्यक्तिस्थानम् २४ ह
विर्भूतागुणाः घ्रेयादयोविषयाः अग्निजंगुणं गंधादिज्ञानरूपांधीवृत्तिं प्रविशंति अंतर्वासमितिणमुलंतम् साचृत्तिश्चसंस्कारात्मनाचेतसिउषित्वा
स्वासुयोनिषुघ्राणादिषुजायंते दृष्टंरूपादिकंसुप्तादौवासनारूपेणचित्तेस्थितंपुनर्जागरे उत्पद्यतइत्यर्थः २५ एतदेवाहतत्रैव अंतरेव ततः अंतरएव
२६ संशयः संशयात्मकंमनः २७ निष्ठानिश्चयात्मिकाबुद्धिः २८ अनेनेति अनेनरूपादिग्रहणतत्संस्कार परंपरयाप्रगृहीतंघ्राणादीनांरूपंपुरातनैर्ऋ-

हवींष्यग्निषुहोतारःसप्तधासप्तसप्तसु सम्यक्प्रक्षिप्यविद्वांसोजनयंतिस्वयोनिषु २३ पृथिवीवायुराकाशमापो-
ज्योतिश्चपंचमम् मनोबुद्धिश्चसप्तैतायोनिरित्येवशब्दिताः २४ हविर्भूतागुणाःसर्वे प्रविशंत्यग्निजंगुणम् अंतर्वास
मुषित्वाचजायंतेस्वासुयोनिषु २५ तत्रैवचनिरुध्यंते प्रलयेभूतभावने ततःसंजायतेगंधस्ततःसंजायतेरसः २६ त
तःसंजायतेरूपंततःस्पर्शोभिजायते ततःसंजायतेशब्दःसंशयस्तत्रजायते २७ अतःसंजायतेनिष्ठाजन्मैतत्सप्तधा-
विदुः २८ अनेनैवप्रकारेणप्रगृहीतंपुरातनैः पूर्णाहुतिभिरापूर्णास्त्रिभिःपूरयंतितेजसा २९ इतिश्रीमहाभारते
आश्वमेधिकेपर्वणिब्राह्मणगीतायांविंशतितमोऽध्यायः २० ब्राह्मणउवाच अत्राप्युदाहरंतीममितिहा
संपुरातनम् निबोधदशहोतृणांविधानमथयादृशम् १

षिभिः वेदादितिशेषः त्रिभिर्मानमेयमातृभिः पूर्णब्रह्मतस्य आहुतिराव्हानं आहू
तयोवैनामैतायदाहुतयएताभिर्वैदेवान्यजमानोव्हयतीतिश्रुतेः ततयेस्तैः उपाधिभूतैर्दर्पणैरिवब्रह्मप्रज्ञापकैरित्यर्थः आपूर्णाः सर्वेलोकाइतिशेषः ने
त्रत्रयः तेजसास्वात्मज्योतिषा पूरयंतितेनैवसत्तावंतोभवंतीत्यर्थः एवंदृष्टिसृष्टिरनेनश्लोकेनसूचिता २९ इतिश्रीमहाभारतेआश्वमेधिकेपर्वणि
टीकायांविंशोऽध्यायः २० पूर्वत्रघ्राणाद्युपाधिभूतात्माघ्रातहमित्याद्यभिमानवान्घ्रेयादीन्प्रकल्प्यघ्राणादींस्तर्पयतीत्युक्तम् इदानींप्राणेभ्योदेवादेवे
भ्योलोकाइति श्रुत्यनुसारादिंद्रियाण्येवस्वकल्पितेषुदेवेषुदेवद्वारास्वकल्पितान्लोकान्तर्पयंतीत्युक्त्याभूतात्मनिकल्पकत्वंनास्तिअपितुजडस्यैव
तादितिविविनक्ति अत्रापीति अत्रदृष्टिसृष्टिप्रकारेविवेचनीयं १

श्रोत्रमिति अथातोविभूतयोस्यपुरुषस्यवाचासृष्टेपृथिवीचाग्निश्चेत्याद्येतरेयके श्रोत्रेणसृष्टादिशश्चचंद्रमाश्चेतिवचनात् श्रोत्रंसर्वैः शब्दैः सहोपैतीतिकौषीतकिवचनाच्चदिग्गाद्यात्मकेसूत्रात्मनिसविषयाणिश्रोत्रादीनि प्रविलापयेदित्यर्थः २ ३ ४ ५ चित्तमिति एतत्प्रविलापनंस्रुवस्थानीयेनाचित्तेनेवकर्तव्यंन वायुनिरोधादिनाहठेन मनसैवेंद्रियग्रामंविनियम्येतिगीताषष्ठोक्तेः वित्तंसंस्काराः पुण्यपापेवा यथास्रुवेणआज्यमग्नौहुत्वास्रुवमग्निदक्षिणार्थंवित्तंच त्यजंति एवंमनसासविषयाणींद्रियाणिकारणेप्रविलाप्यमनः कर्मणंस्रुकृतदुष्कृतेचत्यजेदितिरूपकद्वाराप्रपंचितं एवंकृतेयदवशिष्यतेतेनदाह पवित्रं ज्ञानमुत्तममितिपवित्रंअसंगं उत्तमंचरमम् नातःपरतरंकिंचिदस्तिपुरुषान्नपरंकिंचिदितिश्रुतेः स्रुविभक्तंज्ञानात्पृथक्भूतम् इदंचित्तादिशब्दाद्यंतम् ६ सर्वमिति अथेतिपक्षांतरे विज्ञेयंसर्वंचित्तमेवेतिसंबंधः ज्ञानंतुतत्प्रकाशकं अवेक्षतएवकेवलंनसज्जतइत्यर्थः नन्वेवंकथंस्रुविभक्तानामपिज्ञान-

श्रोत्रंत्वक्चक्षुषीजिव्हानासिकाचरणौकरौ उपस्थंपायुरितिवाहोतॄणिदशमामिनि २ शब्दस्पर्शौरूपरसौगंधौवाक्यंक्रियागतिः रेतोमूत्रपुरीषाणांत्यागोदशहवींषिच ३ दिशोवायूरविश्चंद्रः पृथ्व्यग्नीविष्णुरेवच इंद्रः प्रजापतिर्मित्रमग्नयोदशमामिनि ४ दशेंद्रियाणिहोतॄणिहवींषिदशमामिनि विषयानामसमिधोहूयंतेनुदशाग्निषु ५ चित्तस्रुवश्चवित्तंच-पवित्रंज्ञानमुत्तमम् स्रुविभक्तमिदंसर्वंजगदासीदितिश्रुतम् ६ सर्वमेवाथविज्ञेयंचित्तंज्ञानमवेक्षते रेतःशरीरभृत्कायेविज्ञातानुशरीरभृत् ७ शरीरभृत्गार्हपत्यस्तस्मादन्यःप्रणीयते मनश्चाहवनीयस्तुतस्मिन्प्रक्षिप्यतेहविः ८

ज्ञेयानां अविभागप्रत्यय इत्याशंक्यतन्नायःपिंडवत्सान्निध्यमात्रादित्याह रेतइत्यादिना रेतोजन्यंशरीरेभिमानवान् तस्यकायेषाट्कौशिकेविज्ञाताजीवः सूक्ष्मशरीरभृत् लिंगाभिमानीअस्ति ७ सोपिशरीरभृत्गार्हपत्यः हृदयंगार्हपत्यइति गृहपतेः क्षेत्रज्ञस्यायंदेशइतिव्युत्पन्नगार्हपत्यशब्देनहृदयशब्दस्यसामानाधिकरण्यश्रुतेः तस्मात्हृदयादन्योमनआख्यःहृदयंनिरभिद्यत हृदयान्मनोमनसश्चंद्रमाइतिश्रुतेः आहवनीयांमनःआयतनंतच्चक्षुरेवमेव आस्यंमाहवनीयइतिश्रुतेः हविः तेजोबन्नात्मकंअदनीयम् अन्नमयंहिसोम्यमन आपोमयः प्राणस्तेजोमयीवागितिश्रुतेर्हविषस्तेजोंशोजाठरंतेजः प्राप्यसद्योवाग्रूपेणपरिणमते ८

अतोवाचस्पतिः वेदः प्रथमंजज्ञे मनः पार्थिवंतदनंतरंजज्ञे अतोमनोमयः स्वात्मावाचमवेक्षतेसिसृक्षुः सन् योब्रह्माणंविधातिपूर्वंयोवैवेदांश्च प्रहिणोतितस्मैतं हदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्ये मनसावाचंमिथुनंसमभवदितिश्रुतेः ततइत्यनुषज्यतेमनोनंतरंभवति रूप्यते-स्पर्शेनैवप्रथतेइतिरूपंप्राणवायुद्रव्यंउत्पद्यते अन्नापेक्षया अपांजाड्यप्राधान्येनाचिरपाकित्वात् तच्चरूपंवैवर्णंवर्णोनीलपीतादिस्तद्रहितंस्वार्थेतद्धितः तद्रूपंकर्तृमनः प्रतिसमनुद्रवति विपरीतंवा रुद्धेचित्तेनिलोरुद्धोरुद्धेरुद्धेनिलेमनइत्यक्तं: ९ अत्रमनएवपूर्वरूपंवागुत्तररूपंमनसावाइतिना वाग्वदंतीतिश्रुतिंलौकिकमनुभवंचानुरुध्यशंकतेकस्मादिति १० विज्ञानयोगेनप्रमाणेन मतिः प्राणः समुन्नीतासुषुप्तोऽउद्रिक्तासनीविषयान्कुतोनाध्यगच्छन् कोवैतांप्रतिबाधतेसुषुप्तोकोवा स्यज्ञानशक्तिमपहरतीत्यर्थः ११ स्वल्पत्वात्केनेत्यस्योत्तरमादावाह तामपानइति अपानवशगःप्रा

ततोवाचस्पतिर्जज्ञेतंमनः पर्यवेक्षते रूपंभवतिवैवर्णंसमनुद्रवतेमनः ९ ब्राह्मण्युवाच कस्माद्वागभवत्पूर्वंकस्मात्पश्चान्मनोभवत् मनसाचिंतितंवाक्यंयदासमभिपद्यते १० केनविज्ञानयोगेनमतिश्चित्तंसमास्थिता समुन्नीतानाध्यगच्छत्कोवैतांप्रतिबाधते ११ ब्राह्मणउवाच तामपानःपतिर्भूत्वातस्मात्प्रेष्यत्यपानताम् तांगतिंमनसः प्राहुर्मनस्तस्मादपेक्षते १२ प्रश्नंतुवाङ्मनसोर्मांयस्मात्त्वमनुपृच्छसि तस्मात्तेवर्तयिष्यामितयोरेवसमाह्वयम् १३ उभेवाङ्मनसीगत्वाभूतात्मानमपृच्छताम् आवयोःश्रेष्ठमाचक्ष्वच्छिंधिनोसंशयंविभो १४ मनइत्येवभगवांस्तदाप्राहसरस्वती अहंवैकामधुक्तुभ्यमितितंप्राहवागथ १५ ब्राह्मणउवाच स्थावरंजंगमंचैवविद्ध्युभेमनसीमम स्थावरंमत्सकाशेवैजंगमंविषयेतव १६ यस्तुतेविषयंगच्छेन्मंत्रोवर्णःस्वरोपिवा तन्मनोजंगमंनामतस्मादसिगरीयसी १७

णोनसुषुप्तोमनोलयाल्लीयते अपानंतुस्ववशेकृत्वासमाधौमनोलयेसातिलीयतएवेत्यर्थः तस्मात्पतिभावाद्धेतोः प्रेषतिनयति तांगतिमितितांप्राणाख्यांगतिंमनसोगतिंबहिर्गमनसाधनंप्राहुः नहिवायुबलेनानुन्मीलितनयनेमनोवृत्तिर्भ्रूमंडलपर्यंतंगंतुंसमर्था तामतिमित्यपपाठः १२ कस्मादित्यस्योत्तरमाख्यायिकामुखेनाह प्रश्नमित्यादिना समाह्वयंसख्यंआह्वयंतेविजिगीषवोस्मिन्नितिसंवादः १३ भूतात्मानंजीवं १४ तन्मतेमनःश्रेष्ठंअनुभवसिद्धम् वाचोमतेदृष्टादृष्टेफलोपायोमयैवबोद्धुंशक्यंइतिस्वस्यैवश्रेष्ठ्यम् १५ द्वयोर्विषयविभागेनसाम्यमापादयन्मनआख्योब्राह्मणउवाच स्थावरंबाह्येंद्रियग्राह्यम् जंगमंअतींद्रियंस्वर्गादि १६ यद्यपिस्वर्गादिकमपिमनसोविषयः तथापिवाचैवद्वारीकृत्यतस्यतथात्वमस्तिअतोवागेवगरीयसीत्याह यस्त्विति मंत्रादिप्रकाशितंविषयंगच्छन्मनोपिजंगमंभवतीत्यर्थः १७ ५ ५ ५ ५ ५ ५ ५

समाधिः कामधुगस्मीति स्वपक्षपुष्टिः तेनाहं मूर्च्छित इवास्मि यस्मात् उच्छ्वाससमासाद्येति योजना १८ तथापि मनोरन्तिविशेषयोः प्राणापानयोरंतरे एव वा
गस्ति स्वपिति वा प्राणेन तदा वाक् भवति प्राणस्तदा वाचं रेल्हीति श्रुतेरित्याह प्राणापानेति रेल्हि लेटि अपानतीति प्राणेन अनाप्यायिता सती तारमंद्रत्वा-
दिभावं व्युत्सृज्य अत्यंतं नीरस्तरा भवतीत्यर्थः १९ व्यतिरेकमुक्त्वान्वयमाह तत इति तस्मात् प्राणवन्नपानन्वाच मभिव्याहरतीति श्रुतेर्यस्मादेवं तस्मादुच्छ्वासं
प्राणव्यापारमासाद्य न वाग्वदति २० घोषिणी जातः निर्घोषः घोषाभावो यस्याः सा अघोषेति यावत् तयोर्घोषिणी प्राणाप्यायनमपेक्षते तद्विना विच्छिद्य
ते निर्घोषा तु हंसमंत्ररूपा सर्वास्वप्यवस्थासु प्रवर्तत इति गरीयसी २१ घोषिण्यपि गुर्वीत्याह गौरिवेति वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाका
रः स्वधाकारो हंतकारो वषट्कार इति श्रुतेः स्तनैः तत्तत्कर्मफलरूपं रसं अर्थान् रसमिति समानाधिकरणे द्वितीया रस्यंदते प्रस्रवति ब्रह्मवादिनी उपनिष-
द्वाक् तु शाश्वतं मोक्षं स्यंदते प्रस्रवति सततं नित्यसिद्धम् २२ दिव्यं देवताद्याकर्षणादि अदिव्यं व्यहारादिसामर्थ्यम् तदुभयरूपोयः प्रभावस्तेन एत

यस्मादपि समाधिस्ते स्वयमभ्येत्य शोभने तस्मादुच्छ्वासमासाद्य प्रवक्ष्यामि सरस्वतीम् १८ प्राणापानांतरे देवी वाग्वै नित्यं
स्म तिष्ठति प्रेर्यमाणा महाभागे विना प्राणानपानती प्रजापतिमुपाधावत् प्रसीद भगवन्निति १९ ततः प्राणः प्रादुरभूद्वाचमा
-प्याययत् पुनः तस्मादुच्छ्वासमासाद्य न वाग्वदति कर्हिचित् २० घोषिणी जातनिर्घोषा नित्यमेव प्रवर्तते तयोरपि च घोषेण
निर्घोषैव गरीयसी २१ गौरिव प्रस्रवत्यर्थान् रसमुत्तमशालिनी सततं स्यंदते ह्येषा शाश्वतं ब्रह्मवादिनी २२ दिव्यादिव्यप्र
भावेन भारती गौः शुचिस्मिते एतयोरंतरं पश्य सूक्ष्मयोः स्यंदमानयोः २३ ब्राह्मण्युवाच अनुत्पन्नेषु वाक्येषु चोद्य
माना विवक्षया किन्नु पूर्वं तदा देवी व्याजहार सरस्वती २४ ब्राह्मण उवाच प्राणेन या संभवते शरीरे प्राणादपानं प्र
तिपद्यते च उदानभूता च विसृज्य देहं व्यानेन सर्वं दिवमावृणोति २५

योः वाङ्मनसयोः २३ व्याजहार स्वस्य वृत्तिलाभार्थं किंनु तत्त्वं सवि
शेषेण आजहार आहृतवती २४ आत्मा बुद्ध्या समेत्यार्थान्मनो युंक्ते विवक्षया मनः कायाग्निमाहंति स प्रेरयति मारुतं इति शिक्षोक्तक्रमेण प्रवर्तिताः प्रा
णाद्या एव वाचं निर्वर्तयंतीत्याह प्राणेनेति श्रांतो हि विविक्षुर्बाह्यं वायुमाचालयति स पुनर्नाभिस्थाने प्राणापानग्रंथ्याधारे अपानेन सहैक्यं प्राप्य मनोनियम
नाभिहतकायाग्नि प्रेरितं ऊर्ध्वं मुत्प्लुत्य उरः कंठशिरः स्थानेष्वभिघातं प्राप्य मंद्रमध्यमतारभेदेन ध्वनिमुत्पाद्याधस्तान्मुखबिलमत्यंतात्वादिस्थानानु
रोधी मंद्रादिध्वनिधर्मवतो वर्णानभिव्यज्य वेगवत्त्वस्वाभाव्याद्बहिः प्रस्थितः श्रोत्रस्थानानि संस्कृत्य वर्णाननुभाव्य वेगक्षये पुनः समानस्थानमेव पूर्ववत्प्र
तिपद्यते सोयमर्थः श्रीभागवतेप्युक्तः स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः मनोमयं सूक्ष्ममुपेत्य रूपं मात्रास्वरो वर्ण इति स्थविष्ठ इति २५

इत्येव इत्थंमेव पूर्ववाणीस्वोत्पत्तिप्रकारं प्रजजल्प वाचः प्राणाधीनत्वमपि वाचः प्रभावादेव विदितामित्यर्थः यत्र सोमः सहाग्निनेत्युक्तो सोमाग्नीइडापिंगलाधिपती मनोवाक्शब्दाभ्यामुपसंहरति तस्मादिति किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे वाचि हि प्राणं जुहुमः प्राणे वाचं यो ह्येव प्रभवः स एवाप्ययइतिश्रुतेः यथा स्थंडिलस्थो वन्हिर्वायुना स्थालीस्थो वायुश्च वन्हिना समिध्यते अन्यतरनाशे च द्वयोरपि नाशः एवं स्वर्गाद्यर्थवादैर्मनः संक्षुब्धं तेन ततो वागादीन् व्यापारयति तत्र वाचः प्रवर्तकस्य वायोर्निरोधे मनो निरुध्यते मनोनिरोधे वन्हिर्निरुध्यते तावतैव संसारादर्शनरूपेष्टार्थसिद्धौ किं यज्ञादि

ततः समाने प्रातितिष्ठती ह इत्येव पूर्वं प्रजजल्प वाणी तस्मान्मनः स्थावरत्वाद्विशिष्टं तथा देवी जंगमत्वाद्विशिष्टा २६ इ
ति श्री॰ आश्वमेधिके पर्वणि गीतासु एकविंशोऽध्यायः २१ ब्राह्मण उवाच अत्राप्युदाहरंतीममितिहासं पुरातनम्
सुभगे सप्तहोतॄणां विधानमिह यादृशम् १ घ्राणश्चक्षुश्च जिह्वा च त्वक् श्रोत्रं चैव पंचमम् मनो बुद्धिश्च सप्तैते होतारः पृथगा
श्रिताः २ सूक्ष्मेवकाशे तिष्ठंतो न पश्यंतीतरेतरम् एतान्वै सप्त होतॄंस्त्वं स्वभावाद्विद्धि शोभने ३ ब्राह्मण्युवाच सू
क्ष्मेवकाशे संतस्ते कथं नान्योन्यदर्शिनः कथं स्वभावा भगवन्नेतदाचक्ष्व मे प्रभो ४ ब्राह्मण उवाच गुणाज्ञानमवि
ज्ञानं गुणज्ञानमभिज्ञता परस्परं गुणानेते नाभिजानंति कर्हिचित् ५ जिह्वा चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च न गंधा
नधिगच्छंति घ्राणस्तानधिगच्छति ६ घ्राणं चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च न रसानधिगच्छंति जिह्वा तानधिगच्छति ७
घ्राणं जिह्वा तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च न रूपाण्यधिगच्छंति चक्षुस्तान्यधिगच्छति ८ घ्राणं जिह्वा ततश्चक्षुः श्रोत्रं बुद्धिर्मन
स्तथा न स्पर्शानधिगच्छंति त्वक् च तानधिगच्छति ९ घ्राणं जिह्वा च चक्षुश्च त्वङ्मनो बुद्धिरेव च न शब्दानधिगच्छंति श्रोत्रं ता
नधिगच्छति १० घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं बुद्धिरेव च संशयं नाधिगच्छंति मनस्तमधिगच्छति ११

ना श्रुतो तु वाक्शब्देन तत्कारणं मनो ज्ञेयम् एवं च वाङ्मनसयोः प्रत्येकं पुरुषार्थहेतुत्वाद्विशिष्टत्वमविशिष्टत्वम् २६ इत्याश्वमेधिके पर्वणि टीकायां द्वितीयोऽध्यायः २ इदानीं पूर्वोक्तघ्राणादिसप्तकस्य अन्वयव्यतिरेकाभ्यामितरेतरकार्यकारित्वं नास्तीत्युक्त्वा बुद्धिर्मनस्यंतर्भाव्या इतरेषां पंचानां मनोधीनत्वं मनसोपि व्यावहारिकार्यप्रकाशकत्वमितराधीनमितींद्रियमनःसंवादेन तेषामन्योन्यव्यतिरेकमुक्त्वा पूर्वोक्तमेवान्यतरजयेनोभयजफलं सिध्यतीति प्रतिपादनार्थोऽयं सप्तहोत्रध्याय आरभ्यते अत्रापीति अत्र वाङ्मनसयोः समप्राधान्ये विवेचनीयम् १ २ ३ ४ ५ ६ ७ ८ ९ १० ११

१२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ २४ २५ २६ २७ अगारंहार्दाकाशंस्कुप्तौमोक्षेचप्रविश्य यएषांतर्हृदयआकाशस्तस्मिन्शेते श्रि
पादस्यामृतंदिवीतिश्रुतिप्रसिद्धं अद्वारमिवबाह्येंद्रियवर्जितमिवस्वप्नप्रज्ञातयोरिवव्युत्थानोपइंद्रियाणांवासनामात्ररूपलेपिष्क्रांतिसिद्धंस्थौल्यंअपस्य
इवशब्दः संकल्पजान् भोगान्विषयेनिबद्धान्विषयवासनानुविद्धान् भुक्त्वाप्राणक्षयेमनः प्रक्षयेसुषुप्तावसंप्रज्ञातेवाशांतिंउपैति २८ एवंदंतानि

घ्राणंजिह्वाचचक्षुश्चत्वक्श्रोत्रंमनएवच ननिष्ठामधिगच्छंतिबुद्धिस्तामधिगच्छति १२ अत्राप्युदाहरंतीममितिहासंपुरा
तनम् इंद्रियाणांचसंवादंमनसश्चैवभामिनि १३ मनउवाच नघ्रातिमामृतेघ्राणंरसंजिह्वानवत्तिच रूपंचक्षुर्नगृण्हा
तित्वक्स्पर्शंनावबुध्यते १४ नश्रोत्रंबुध्यतेशब्दंमयाहीनंकथंचन प्रवरंसर्वभूतानामहमस्मिसनातनम् १५ अगाराणिवशून्
न्यानिशांतार्चिषइवाग्नयः इंद्रियाणिनभासंतेमयाहीनानिनित्यशः १६ काष्ठानीवार्द्रशुष्काणियतमानैरपींद्रियैः गुणार्था-
न्नाधिगच्छंतिमामृतेसर्वजंतवः १७ इंद्रियाण्यूचुः एवमेतद्भवेत्सत्यंयथैतन्मन्यतेभवान् ऋतेस्मानस्मदर्थास्तुभो
गान्भुंक्तेभवान्यदि १८ यद्यस्मासुप्रलीनेषुतर्पणंप्राणधारणम् भोगान्भुंक्ष्वभवान्सत्यंयथैतन्मन्यतेतथा १९ अथवास्मा-
सुलीनेषुतिष्ठत्सुविषयेषुच यदिसंकल्पमात्रेणभुंक्तेभोगानयथार्थवत् २० अथचेन्मन्यसेसिद्धिमस्मदर्थेषुनित्यदा घ्राणे
नरूपमादत्स्वरसानादत्स्वचक्षुषा २१ श्रोत्रेणगंधानादत्स्वस्पर्शानादत्स्वजिह्वया त्वचाचशब्दानादत्स्वबुध्यास्पर्शमथा
पिच २२ बलवंतोह्यनियमानियमादुर्बलीयसाम् भोगानपूर्वानादत्स्वनोच्छिष्टंभोक्तुमर्हसि २३ यथाहिशिष्यःशास्तारंश्रु-
त्यर्थमभिधावति ततःश्रुतिमुपादायश्रुत्यर्थमुपतिष्ठति २४ विषयानेवमस्माभिर्दर्शितानभिमन्यसे अनागतानतीतांश्च
स्वप्नेजागरणेतथा २५ वैमनस्यंगतानांचजंतूनामल्पचेतसाम् अस्मदर्थेकृतेकार्येदृश्यतेप्राणधारणम् २६ बहूनपिहिसं
कल्पान्मत्वास्वप्नानुपास्यच बुभुक्षयापीड्यमानोविषयानेवधावति २७ अगारमद्वारमिवप्रविश्यसंकल्पभोगान्विषयेनिबद्धा
न् प्राणक्षयेशांतिमुपैतिनित्यंदारुक्षयेग्निर्ज्वलितोयथैव २८ कामंतुनःस्वेषुगुणेषुसंगःकामंचनान्यान्यगुणोपलब्धिः अस्मान्विना
नास्तिनवोपलब्धिस्तावदृतेत्वांनभजेत्प्रहर्षः २९ इतिश्रीम० आश्वमेधिकपर्वणिब्राह्मणगीतायांद्वाविंशोऽध्यायः २२

स्यादिश्लोकंसूचितंअ
हारशब्दैःसत्वशुद्धिर्हेतुत्वंतत् आदितःएवंस्वस्याकर्तृत्वभावनयान्नमश्नतःसिध्यतिशुद्धचित्तस्यत्वयमेवबोधप्रकारइत्युक्तम् २९ इत्याश्वमेधिकटी
कायांद्वाविंशोऽध्यायः २२

२१. तालुजिह्वांचेत्यत्रस्मृतिनमर्थंव्याकरोत्यध्यायद्वयेन अत्रापीति अत्रप्राणक्षयेवक्तव्ये तत्रच्छांदोग्येप्राणाग्निहोत्रविद्यायांप्राणापानव्यानोदानसमानाः
क्रमेणाधिलोकंद्यभूमिदिगाकाशविद्युद्रूपाः समाम्नाताः तेषांप्राणापानौअन्योन्याधीनौपूरकेरेचकेवाक्रियमाणेपानक्रियानिरोधात् अपानेचविरेच्य
मानेप्राणगतिनिरोधात् पार्ष्णिभागेनसंपीड्ययोनिमाकुंचयेदृढमित्यादिप्रकारेणमूलबंधनेनतयोरेकीकृतयोरूर्ध्वगतिर्भवति तदेतत्प्राणापानयोरुदा
नाधीनंप्रागेवोक्तं अपानंप्राणयोर्मध्येउदानोव्याप्यतिष्ठतीति एवंद्युभुवोः पर्जन्ययज्ञद्वारापरस्पराश्रितयोरपि आकाशाश्रितत्वम् तथानाभिदेशमात्र
वर्तीसमानःसर्वांगव्यापिनोव्यानस्यवशेऽस्ति व्यानोपिसर्वसंधिव्यापिनोदानेनसमुच्चलतितद्व्याप्यत्वात्समानोप्युच्चलति एवंविद्युद्दिगाश्रितादिकंच

ब्राह्मणउवाच अत्राप्युदाहरंतीममितिहासंपुरातनम् सुभगेपंचहोतॄणांविधानमिहयादृशम् १ प्राणापानावुदानश्च
समानोव्यानएवच पंचहोतॄंस्तथैतान्वैपरंभावंविदुर्बुधाः २ ब्राह्मण्युवाच स्वभावात्सप्तहोतारइतिमेपूर्विकामतिः
यथावैपंचहोतारःपरोभावस्तदुच्यताम् ३ ब्राह्मणउवाच प्राणेनसंभृतोवायुरपानोजायतेततः अपानेसंभृतोवा
युस्ततोव्यानःप्रवर्तते ४ व्यानेनसंभृतोवायुस्ततोदानःप्रवर्तते उदानेसंभृतोवायुःसमानोनामजायते ५ तेपृच्छंतपुरा
संतःपूर्वजातंपितामहम् योनोज्येष्ठस्तमाचक्ष्वसनःश्रेष्ठोभविष्यति ६ ब्रह्मोवाच यस्मिन्प्रलीनेप्रलयंव्रजंति
सर्वेप्राणाप्राणभृतांशरीरे यस्मिन्प्रचीर्णेचपुनश्चरंतिसवैश्रेष्ठोगच्छतयत्रकामः ७ प्राणउवाच मयिप्रली
नेप्रलयंव्रजंतिसर्वेप्राणाःप्राणभृतांशरीरे मयिप्रचीर्णेचपुनश्चरंतिश्रेष्ठोह्यहंपश्यतमांप्रलीनम् ८ ब्राह्मणउवाच
प्राणःप्रलीयततततःपुनश्चप्रचचारह समानश्चाप्युदानश्चवचोब्रूतांपुनःशुभे ९

आकाशाश्रिता इदमेवसर्वेषामुदानाधीनत्वंश्रुत्या तद्यथासुहृदयपड्वीशशंकून्संवृहेदितिदृष्टांतेनोपपादितम् उदानोपिमूर्ध्नि ब्रह्मरंध्रेनिरुध्यते
यदातदातत्स्थोब्रह्मणिद्युभूम्यादिसहितआकाशोनिरुध्यते एवंचतस्यामवस्थायांसर्वप्रपंचप्रविलयाद्योगीकृतकृत्योभवतीतिपद्यकृतात्पर्यंत
त्रेवंसतित्रेधाभावनाप्रवर्तते प्राणायस्वाहेत्यादिभिर्मंत्रैः प्राणाग्निहोत्रंकुर्वन्नेवावदानेनसर्वंद्युप्रभृतितृप्यतीतिभावनयाशब्दचिंताभवत्यन्नदोषै
श्चनलिप्यते इत्येकःप्रकारः चपलंमनःपूर्वोक्तस्वेचरीमुद्रयाहठयोगेननिरुंध्यामितिद्वितीयः अनुपदोक्तःकृत्स्नप्रपंचविलयस्तृतीयः एषामधिकारि
भेदाद्व्यवस्था एवंसर्वापिविद्याधिदेवाधिभूताध्यात्मभेदेनत्रिविधाधिकारभेदाज्ज्ञेया १ २ ३ ४ ५ ६ ७ ८ ९ ५ ७

अक्षरार्थः स्पष्टएव पंचानामप्येषामेकस्यापिनिरन्वयोच्छेदे सर्वेषामुच्छेदोभवतीति १० सर्वेषांप्रत्येकंमयिप्रलीनेप्रलयंव्रजंतीत्युक्तिः संगच्छते ११
१२ १३ १४ १५ १६ १७ १८ १९ २० एवमेषांसत्यपिप्रत्येकंश्रैष्ठ्ये स्वातंत्र्याभावादश्रैष्ठ्यमप्यस्तीत्याशयेनाह सर्वेश्रेष्ठानवाश्रेष्ठाइति २१ २२ वस्तु
वृत्तंतुमनोमात्रत्वमेव प्राणानामित्याह एकएवममैवात्मेति २३ आख्यायिकातात्पर्यंतुयथाएकएवप्राणोऽध्यात्मंउपाधिभेदात्पंचधाभूतोन्योन्यस्मा

नत्वंसर्वमिदंव्याप्यतिष्ठसीहयथावयम् नत्वंश्रेष्ठोहिनःप्राण अपानोहिवशेतव प्रचचारपुनःप्राणस्तमपानोऽभ्यभाषत १०
अपानउवाच मयिप्रलीनेप्रलयंव्रजंतिसर्वेप्राणाः प्राणभृतांशरीरे मयिप्रचीर्णेचपुनश्चरंतिश्रेष्ठोह्यहंपश्यतमांप्रलीन
म् ११ ब्राह्मणउवाच व्यानश्चतमुदानश्चभाषमाणमथोचतुः अपाननत्वंश्रेष्ठोसिप्राणोहिवशगस्तव १२ अ
पानःप्रचचाराथव्यानस्तंपुनरब्रवीत् श्रेष्ठोहमस्मिसर्वेषांश्रूयतांयेनहेतुना १३ मयिप्रलीनेप्रलयंव्रजंतिसर्वेप्राणाःप्राणभृ
तांशरीरे मयिप्रचीर्णेचपुनश्चरंतिश्रेष्ठोह्यहंपश्यतमांप्रलीनम् १४ ब्राह्मणउवाच प्रालीयततत्तोव्यानःपुनश्चप्रचचा
रह प्राणापानावुदानश्चसमानश्चतमब्रुवन् १५ नत्वंश्रेष्ठोसिनोव्यानसमानस्तुवशेतव प्रचचारपुनर्व्यानःसमानःपुनरब्र
वीत् श्रेष्ठोहमस्मिसर्वेषांश्रूयतांयेनहेतुना १६ मयिप्रलीनेप्रलयंव्रजंतिसर्वेप्राणाःप्राणभृतांशरीरे मयिप्रचीर्णेचपुनश्चर
तिश्रेष्ठोह्यहंपश्यतमांप्रलीनम् १७ समानःप्रचचाराथउदानस्तमुवाचह श्रेष्ठोहमस्मिसर्वेषांश्रूयतांयेनहेतुना १८ मयि
प्रलीनेप्रलयंव्रजंतिसर्वेप्राणाःप्राणभृतांशरीरे मयिप्रचीर्णेचपुनश्चरंतिश्रेष्ठोह्यहंपश्यतमांप्रलीनम् १९ ततःप्रालीय-
तोदानःपुनश्चप्रचचारह प्राणापानौसमानश्चव्यानश्चैवतमब्रुवन् उदाननत्वंश्रेष्ठोसिव्यानएववशेतव २० ब्राह्मण
उवाच ततस्तानब्रवीद्ब्रह्मासमवेतान्प्रजापतिः सर्वेश्रेष्ठानवाश्रेष्ठाः सर्वेचान्योन्यधर्मिणः २१ सर्वेस्वविषयेश्रेष्ठाः
सर्वेचान्योन्यधर्मिणः इतितानब्रवीत्सर्वान्समवेतान्प्रजापतिः २२ एकःस्थिरश्चास्थिरश्चविशेषात्पंचवायवः एकए
वममैवात्माबहुधाप्युपचीयते २३ परस्परस्यसुहृदोभावयंतःपरस्परम् स्वस्तिव्रजतभद्रंवोधारयध्वंपरस्परम् २४
इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिब्राह्मणगीतासुत्रयोविंशोऽध्यायः २३

ह्यावर्ततेएवंपरमात्मापिऔपाधिकमनेकधाभा
वंप्राप्यमिथोहर्षविषादभोक्तृभोग्यभावंभजतइति तस्मादेकात्म्यबुध्यासर्वैःसर्वत्रानुकंपाकार्येत्युपसंहरतिधारयध्वंपरस्परमिति २४ इत्याश्वमेधि
कटीकायांत्रयोविंशोऽध्यायः २३ 

उक्तमेकात्म्यं अध्यारोपापवादाभ्यां प्रपंचयति अत्रेति १ जंतोः समष्टिव्यष्टिशरीरिणः २ येनानिमित्तेन कारणेन ततोनिमित्तादन्योपिनंततत्प्रति पूर्वं-
भाक्निमित्तत्वेनएति ३ किंतद्द्वयं प्राणद्वंद्वंचविं तिर्यक्मनुष्यादि ऊर्ध्वंदेवादि अधः पश्वादि एतेषांरूपंचयत्तद्विज्ञेयम् यद्वा तिर्यगित्यादिनाविभु
त्वमेवोच्यते ४ उत्तरंसंकल्पाज्जायते हर्ष इति आनंदः सएवसंकल्पात् जंतुरित्यनुकृष्यते जंतुरूपेणाविर्भवतीत्यर्थः आनंदाद्ध्येव खल्विमानि भूतानि
जायंते सोकामयतबहुस्यां प्रजायेयेति सच्चत्यच्चाभवदित्यादिश्रुतिभ्यः आनंदमात्रंब्रह्मैवमायया ईक्षणपूर्वकंब्रह्मांडपिंडाकारत्वंप्राप्नोति रविरिव
सूर्यकांतद्वारावन्हिप्रदीपाकारत्वमितिभावः शब्दादपिचजायते वैदिकशब्दपूर्विकापिप्रलयाग्निदग्धभौतिकसृष्टिः प्रजापतिद्वाराजायते एतइतिवैप्र
जापतिर्देवानसृजतेत्यादिश्रुतेस्तक्षकदग्धोवटइवकाश्यपमंत्रादित्यर्थः रसात्रूपात् तत्तद्विषयवासनातः इदंच पर्जन्यवदीश्वरस्यसाधारणेपिका

ब्राह्मणउवाच अत्राप्युदाहरंतीममितिहासंपुरातनम् नारदस्यचसंवादमृषेर्देवमतस्यच १ देवमतउवाच
जंतोःसंजायमानस्यकिंनुपूर्वंप्रवर्तते प्राणोपानःसमानोवाव्यानोवोदानएवच २ नारदउवाच येनायंसृ
ज्यतेजंतुस्ततोन्यःपूर्वमेतितम् प्राणद्वंद्वंहिविज्ञेयंतिर्यगूर्ध्वमधश्चयत् ३ देवमतउवाच केनायंसृज्यते
जंतुःकश्चान्यःपूर्वमेतितम् प्राणद्वंद्वंचमेब्रूहितिर्यगूर्ध्वमधश्चयत् ४ नारदउवाच संकल्पाज्जायतेहर्षःश
ब्दादपिचजायते रसात्संजायतेचापिरूपादपिचजायते ५ शुक्रात्शोणितसंसृष्टात्पूर्वंप्राणःप्रवर्तते प्राणेनवि
कृतेशुक्रेततोपानःप्रवर्तते ६ शुक्रात्संजायतेचापिरूपादपिचजायते एतद्रूपमुदानस्यहर्षोमिथुनमंतरा ७ कामा
त्संजायतेशुक्रंकामात्संजायतेरजः समानव्यानजनितेसामान्यशुक्रशोणिते ८

रणत्वेबीजवदसाधारणंज्ञेयं ५ शुक्रंअदृष्टं शोणितंरागा
दिवासनामिश्रमदृष्टमवष्टभ्यप्राणोलिंगात्माप्रवर्ततेस्थूलम् तेनप्राणेनविकृतेजन्माद्यपेक्षयातान्विकारान्प्रापितेशुक्रेसवासनकर्मजेदेहे अपानेमृत्युरूप्र
स्मभावविकारोनाशाख्यःप्रवर्तते ६ एवंसतिपुनस्तस्मिन्जन्मन्युपचितात् शुक्रात्रसाच्च यथोक्ताज्जायते एतद्रूपंउदानस्यब्रह्मणः आरोपितंरूपमित्यर्थः किं
तदत आह हर्षोमिथुनमंतरेति मिथुनंशुक्ररूपंकारणंकार्यंच अंतरातयोर्मध्येहर्षोव्याप्यतिष्ठतीत्यर्थः नेयदंतरातद्ब्रह्मेति श्रुतेः तेनामरूपेप्रवृत्तिमूलात्कामा
त् शुक्रंअदृष्टं अदृष्टाच्चरजः प्रवृत्तिरितिकामकर्मणीप्रवाहेणवर्तेतेइत्यर्थः ७ एतयोर्मूलंसमानव्यानौताभ्यांतदात्मकोविद्युच्छोत्रेलक्ष्यते ततश्चदृष्टा-
नुश्रविकविषयंविज्ञानंकामप्रवृत्त्योर्बीजमित्यर्थः तथाचाहुः जानातीच्छतिप्रयतनइति ८ ५ ५ ५ ५

प्राणापनाविति इदमेव कामप्रवृत्त्याख्यं द्वंद्वं प्राप्य प्राणापानावेव जीवोपाधिभूतौ ऊर्ध्वाधोगतिं गच्छतः ननु जीवः घटोनीयेन नाकाशं तद्वज्जीवो न भोपम-
इति श्रुतेः विभोश्चिद्रूपस्य जीवस्याकाशवद्गत्ययोगात् समानव्यानौ उच्चरीत्यादृष्टं श्रुतं च तौ उभौ तिर्यक् अनूर्द्ध्वं अब्रह्म अतत्प्रापकत्वात् अत एव द्वं
द्वत्वं द्वैतभावः इति उच्यते वेद ९ ननु सर्वं दृष्टं श्रुतं च तिर्यग्द्वंद्वं नेत्याह अग्निर्वै इति अग्निः परमात्मा तस्यैव देवस्य शासनं आज्ञा निश्वसितमेतद्यदृ
ग्वेद इति श्रुतेः श्रुतिस्मृती ममैवाज्ञे इति स्मृतेश्च तदाज्ञारूपो वेदः इदं सर्वं यदयमात्मा सर्वं खल्विदं ब्रह्मेत्यादिरैकात्म्यं प्रतिपादयतीत्यर्थः तस्य च देवस्य ज्ञानं
बुद्धिसमन्वितं परमर्थावृत्तियुक्तं तत एव वेदाज्ज्जायत इत्यर्थः १० तदेवाह तस्येति यथा धूमभस्मनी अग्निरूपे बहिर्भूते एवं तमोरजसी लयविक्षेपहेतुत
याचिद्रूपाद्बहिर्भूते इत्यर्थः सर्वमिति तस्य तस्मात् यत्र अग्नौ मुख्यभोग्यं तस्मात्सर्वं संजायते इदं सर्वमित्याद्यदाह्दत श्रुतेरित्यर्थः ११ सत्वादिति यज्ञो
जीवब्रह्मणोः संगतिकरणरूपो योगः समानं व्यानाख्यं सर्वं दृष्टं श्रुतं च बुद्धिसत्वादेव भवतीति योगिनामनुभवसिद्धमित्यर्थः अयं भावः वेदे श्येनज्योतिष्टोमदह

प्राणापानाविदं द्वंद्वमवाक्चोर्ध्वं च गच्छतः व्यानः समानश्चैवोभौ तिर्यक् द्वंद्वत्वमुच्यते ९ अग्निर्वै देवताः सर्वा इति वेदस्य
शासनम् संजायते ब्राह्मणस्य ज्ञानं बुद्धिसमन्वितम् १० तस्य धूमस्तमोरूपं रजो भस्म सुतेजसः सर्वं संजायते तस्य यत्र प्र
क्षिप्यते हविः ११ सत्वात्समानो व्यानश्च इति यज्ञविदो विदुः प्राणापानावाज्यभागौ तयोर्मध्ये हुताशनः १२ एतद्रूपमुदा-
नस्य परमं ब्राह्मणा विदुः निर्द्वंद्वमिति यत्त्वेतत्तन्मे निगदतः शृणु १३ अहोरात्रमिदं द्वंद्वं तयोर्मध्ये हुताशनः एतद्रूप
मुदानस्य परमं ब्राह्मणा विदुः १४ सच्चासच्चैव तद्द्वंद्वं तयोर्मध्ये हुताशनः एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः १५

रोपासनादीनि तमोरजः सत्वप्रधानपुरुषयोग्यानि वर्तन्ते तेषु तेषु यज्ञविदां सात्विकमेव साधनं बहुमतं नेतरदिति प्राणापानाविति यथाग्निराज्यभागा
भ्यां उद्दीप्यते एवं पूर्वोपाधिप्रविलापनरूपप्राणापानजयेन उदानाख्यं परं ब्रह्म भ्रूमध्ये दृष्टा प्रकाशत इत्यर्थः एवं च केनायं सृज्यत इत्यस्योत्तरं संकल्पा
दिति कश्चान्य इत्यस्य तन्मूलभूते कामकर्मणी प्राणद्वंद्वं च सात्विकं न तद्द्वयं समानव्यानाख्यं तिर्यगित्यादेरुत्तरं हर्षो मिथुनमंतरा तिचव्यक्तम् १२ १३
अहोरात्रं विद्याविद्ये स्वप्नजागरौ उत्पत्तिप्रलयौ वा १४ सत्कार्यं असत्कारणं हुताशनः हुते प्रविलापिते कार्यकारणे अश्नाति निरन्वयं नाशयति न तु राहु
वत्पुनरुद्गिलतीति हुताशनः शब्दं ब्रह्म उदानस्य उत् उत्कर्षेण आनयति चेष्टयतीत्युदानः परम आनंदः कोह्येवान्यात्कः प्राण्यात् यदेष आकाश-
आनंदो न स्यादिति श्रुतेः १५

ऊर्ध्वमिति ततऊर्ध्वंब्रह्मयेनहेतुनासंकल्पाख्येनसमानोव्यानश्चभवति व्यानेनसर्वादिवमावृणोति ततःसमानेप्रतिनिष्ठतीत्यक्तेः कारणंकार्यंचभवति तेनैवहेतुनाकर्मव्यस्यते।विस्तार्यते तस्मात्संकल्पोनिरोद्धव्यः निःसंकल्प स्तटस्थस्तिष्ठेदेतन्मोक्षलक्षणमिति श्रुतेरितिभावः ननुसुषुप्तावपि संकल्पोनास्तीत्यतआह तृतीयमिति तृतीयंऊर्ध्वं तुशब्दःसमान वैलक्षण्यार्थः समानेनउपलक्षणंनव्यवस्यते निश्चीयतेशाखायामेवचंद्रः सोषुप्ता कारण भावात्मद्वैतलक्षणमित्यर्थः तथाचश्रुतिः द्वैतस्याग्रहणंतुल्यमुभयोः वीतनिद्रायुतः प्राज्ञःसातुतुर्येनविद्यतइति १६ निश्चयफलमाह शांतीति व्यानं चकारात् समानंसनातनंब्रह्मचएतत्त्रयंएकंशांतिशब्दार्थः कार्यकारण शक्तीनांसैंधवघनन्यायेनैक्यंमुक्तिर्नत्वाद्ययोर्निरोधमात्रंसांख्याभिमतमित्यर्थः १७ इत्याश्वमेधिकेटीकायांचतुर्विंशोऽध्यायः २४ एवमुपदेशप्राधान्येनब्रह्माद्वैतमुक्त्वाउपपत्तिप्राधान्येनतत्प्रसाधयितुमध्यायांतरमारभते

ऊर्ध्वंसमानोव्यानश्चव्यस्यतेकर्मतेनतत् तृतीयंतुसमानेनपुनरेवव्यवस्यते १६ शांत्यर्थंव्यानमेकंच शांतिर्ब्रह्मसनातनम् एतद्रूपमुदानस्यपरमंब्राह्मणाविदुः १७ इतिश्रीमन्महाभारते आश्वमेधिकेपर्वणि ब्राह्मणगीतायांचतुर्विंशोऽध्यायः २४ ब्राह्मणउवाच अत्राप्युदाहरंतीममितिहासंपुरातनम् चातुर्होत्रविधानस्यविधानमिहयादृशम् १ तस्यसर्वस्यविधिवद्विधानमुपदिश्यते शृणुमेगदतोभद्रेरहस्यमिदमद्भुतम् २ करणंकर्मकर्ताचमोक्षइत्येवभाविनि चत्वारएतेहोतारोयैरिदंजगदावृतम् हेतूनांसाधनंचैवशृणुसर्वमशेषतः ३ घ्राणंजिह्वाचचक्षुश्चत्वक्चश्रोत्रंचपंचमम् मनोबुद्धिश्चसप्तैतेविज्ञेयागुणहेतवः ४ गंधोरसश्चरूपंचशब्दःस्पर्शश्चपंचमः मंतव्यमथबोद्धव्यंसप्तैतेकर्महेतवः ५

अत्रापीति अत्रउदानस्वरूपेविवक्तव्ये चातुर्होत्रविधानंइतिहासनाम तस्यविधानं अपूर्वतयाज्ञापनम् १ शब्दतोज्ञातस्यपुनर्विधानंअनुष्ठानप्रकारं२ भाविनिविशद्भावप्रवतिहेबुद्धे हेतूनामिति घ्राणादयोयद्यपिदशसप्तहोतारःउक्तास्तथाप्येतेषांकःकस्यहेतुरितितत्रनोक्तं अत्रतुयुक्तिबलेनतत्साधनंअधिकमुच्यतइतिविशेषइतिभावः ३ तत्रगंधाद्यनुभवेप्रत्यप्रीतिविषादाःसत्वरजस्तमोगुणकार्यभूताउत्पद्यंते तेयद्यात्मधर्माःस्युर्नतर्हितत्स्वरूपोच्छेदंविनातस्यतद्वियोगआत्यंतिकोयुज्यते घटस्येवरूपसामान्येन यदिप्रकृतेस्तर्हिसापिआत्मसमसत्ताचेत्तर्हिविभुनोर्द्वयोर्योगात्पुरुषस्यचालुप्तदृग्रूपत्वादवश्यंभोगस्यप्राप्तेरनिर्मोक्षएव तस्माद्रज्जूरगतुल्याप्रकृतिस्तत्कार्यंचसर्वंतादृशमेवदृष्टिसमयोत्पत्तिकमित्याशयेनाह घ्राणमिति गुणाःअविद्यासंबद्धेतुर्येषांतेगुणहेतवः घ्राणादिकंसप्तदशकस्यलिंगस्योपलक्षणं ४ गंधादयोपिगुणहेतुत्वमत्सर्जं तएवकर्महेतवः कर्मजाअपिभवंति स्थूलंसर्वंकर्मणएवफलमित्यर्थः ५

कम्मकृतंवतत्फलभाक्तृरूपेणघ्रात्रादिरूपोभवतीतिघ्रात्रादयः कर्तृहेतवः एतेनाकर्तृत्वंभोक्तृत्वंवांच्छन्सांख्योनिरस्तः भोक्तृत्वस्यापिभोगकर्तृत्वरूपत्वात् ६ एतेषांभेदमाह स्वगुणमिति एतेघ्रात्रादयः गुणा औपाधिकरूपं घ्राणादितद्वंतः तत्साधनाःसंतः स्वगुणंगंधादिकंभुंजते अयंभावः यथाआकाशः कर्णशष्कुलीरूपमुपाधिंप्राप्यश्रोत्रभावं गतःसन् तेनैवस्वगुणंशब्दंप्रकाशयति एवंघ्रात्रादयोपि अथयोवेदेदंजिघ्राणानिसआत्मागंधायघ्राणमितिश्रुतेः स्वोपादानकघ्राणादिमंतःस्वोपादानकमेवशब्दादिकंभुंजते तथा च प्रयोगः मेयमानरो एकोपादानकोभास्यभासकत्वात् शब्दश्रोत्रवदित्यात्माद्वैतसाधकःसूचितोभवति किंतन्मेयमात्रोर्गुणरूपयोरुपादानंतत्राह अहंचनिर्गुणोनंत इति अस्मदर्थएवघ्राणादिगुणरहितोगंधघ्रातृत्वादिपरिच्छेदरहितस्तयोरुपादानमित्यर्थः एवंपृथिवीहोताद्यौरध्वर्युः रुद्राग्नीबृहस्पतिरुपवक्तेति चातुर्होतृमंत्रोव्याख्यातः तथापृथिवीशब्दोक्तंघ्राणादिकंअतींद्रियत्वसामान्यात् होतृप्रकाश्यदेवतातुल्यंहोतृशब्देनोक्तम् स्रुवसाधनतयाद्युशब्दोक्तंगंधादिकंदृश्यत्वसामान्यादध्वर्युकर्तृकनिर्वापावघा

घ्राताभक्षयितादृष्टावक्ताश्रोताचपंचमः मंताबोद्धाचसप्तैतेविज्ञेयाःकर्तृहेतवः ६ स्वगुणंभक्षयंत्येतेगुणवंतःशुभाशुभम् अहंचनिर्गुणोनंतःसप्तैतेमोक्षहेतवः ७

तादितुल्यम् अध्वर्युशब्देनोक्तम् लब्धैरलब्धैश्चगंधादिभीरोध्यमानोरोध्यमानोवारुद्रशब्दोक्तोघ्रात्रादिः कामाग्नींधकत्वसामान्यादग्निशब्देनोक्तः कारणब्रह्मणोप्यधिष्ठानत्वेनपालकत्वाद्बृहस्पतिशब्दोक्तोनिर्गुणःसाक्षिमात्ररूपत्वादुपवक्तानमुख्योवक्ता एतदुपद्रष्टृत्वादेरप्युपलक्षणं तेन सर्गादोईक्षणस्याप्ययंकर्तानभवति एवंचित्तिःस्रुगित्यादयोदशहोत्रादिमंत्रा अपिव्याख्येयाः विस्तरभयात्तुनेहव्याख्यायते चित्तंचित्तादिःसर्वोप्यात्मनएवव्यूढ़ादशहोत्रादिशब्दानामात्ममात्रवाचकत्वस्यआत्मन्नात्मन्नित्यामंत्रयततस्मैदशमःहूतःप्रत्यशृणोत्सदशहूतोहवैनामैषः तंवाएतंदशहूतंसंतंदशहोतेत्याचक्षते इतिश्रवणात् आमंत्रणमुपसधानम् प्रतिश्रवणमुपवक्तुःसाक्षात्कार इतिदिक् कथंतर्हिनिर्गुणस्यानंतस्यप्रतिपत्तिरितितत्राह सप्तैतेमोक्षहेतवइति इंद्रियाणांविषयाणांचग्रहातिग्रहसंज्ञकबंधरूपत्वात् तेषांवियोगेशब्दशष्कुल्यभावेनभसः स्वतन्मात्रत्ववदात्मनः निरूपाधिभेदकाभावाच्चिन्मात्ररूपेणावस्थिताएतंअव्यवहिताघ्रात्रादयएवमोक्षहेतवःस्युः घ्रातृत्वाद्यभिमानत्याग एवमोक्षइत्यर्थः ७ ७ ७ ७ ७ ७

तत्वविदांतुनभक्षणमस्तीत्याह विदुषामिति स्वंस्वंस्थानं घ्राणादीनामधिष्ठानं अविद्यादि गुणागुणेषुवर्तंतइति मत्वानसज्जत इत्युक्तेः घ्राणादयएव-
ग्रेयादिषुवर्तंतेनत्वात्मेति जानतांनघ्रातृत्वाद्यभिमानकृतोबंधोस्तीत्यर्थः ८ अदन्निति अविद्वानितिच्छेदः अन्नानिग्रंयादीनि अदन् भोक्तृत्वाभिमा
नंकुर्वन् भोग्येममतयायुज्यतेततनश्चनश्यतीत्यर्थः अन्नकेवलाघोभवतिकेवलादीतिश्रौतंदृष्टांतमाह आत्मार्थेइति ९ एकाकीमिष्टभुक्केवलपापरूप
एवभवति यस्मादतः सचान्नंहंतिनाशयतितंचान्नंहंति मृत्युपरंपरया संहत्वान्नंहन्यते १० यइदंविद्वान् अन्नहंता अत्रभोक्ता अन्नोपलक्षितस्य कृत्स्नप्रपंचस्यात्म
निप्रविलापनेत्यर्थः सईश्वरःसन्‌एवंपुनरन्नादेर्जनकोभवति यस्यानुवित्तः प्रतिबुद्ध आत्मायस्मिन्संदेहे गहनेप्रविष्टः सविश्वकृत्सहि विश्वस्यकर्तातस्य
लोकः सउलोकएवेतिश्रुतेः नचेति नकर्मणालिप्यतेपापकेनेतिश्रुतेः सर्वभोगभुजोपिविदुषोनभोगकृतोलेपोस्तीत्यर्थः ११ अन्नशब्दार्थमाह मन

विदुषांबुध्यमानानांस्वंस्वंस्थानंयथाविधि गुणास्तेदेवताभूताः सततंभुंजतेहविः ८ अदन्विद्वानथान्नानिममत्वेनोपपद्यते
आत्मार्थेपाचयन्नन्नंममत्वेनोपपद्यते ९ अभक्ष्यभक्षणंचैवमद्यपानंचहंतितम् सचान्नंहंतितंचान्नंसहत्वाहन्यतेपुनः १०
हंताह्यन्नमिदंविद्वान्पुनर्जनयतीश्वरः नचान्नाज्जायतेतस्मिन्सूक्ष्मोनामव्यतिक्रमः ११ मनसागम्यतेयच्चयच्चवाचानिग
द्यते श्रोत्रेणश्रूयतेयच्चचक्षुषायच्चदृश्यते १२ स्पर्शेनस्पृश्यतेयच्चघ्राणेनघ्रायतेचयत् मनःषष्ठानिसंयम्यहवींष्येतानिस
र्वशः १३ स्पर्शेनस्पृश्यतेयच्चघ्राणेनघ्रायतेचयत् गुणवत्पावकोमह्यंदीप्यतेंतःशरीरिणः १४ योगयज्ञःप्रवृत्तोमेज्ञानवन्हिप्रदोभवः
प्राणस्तोत्रोपानशस्त्रः सर्वत्यागसुदक्षिणः १५ कर्तानुमंताब्रह्मात्माहोताध्वर्युकृतस्तुतिः ऋतंप्रशास्तातच्छस्त्रमपवर्गोस्यदक्षिणा
१६ ऋचश्चाप्यत्रशंसंतिनारायणविदोजनाः नारायणायदेवाययदविंदन्पशून्पुरा १७

सेत्यादिना १२ मंतव्यादीनांहोमः मनआदिनिग्रहेणेवे
त्यर्थः १३ होमाधिष्ठानं गुणवत्पावकः कारणंब्रह्ममह्यंमम १४ योगंयज्ञत्वेनस्तौति ज्ञानमेववन्हिः सर्वकर्मदाहकत्वात्तत्प्रदउद्भवोयस्ययोगयज्ञस्यस
तथा प्राणःस्तोत्रं अपानःशस्त्रम् अपानसत्रइत्यपपाठः सर्वत्यागसुदक्षिणः सर्वत्यागएवसुतरांदक्षिणः फलजननसमर्थः १५ कर्ताहंकारः अनुमंतामन
नः आत्माबुद्धिः एतत्त्रयंब्रह्मेवसत्क्रमेणहोत्रध्वर्यूद्गातृरूपयोगिनइत्यर्थः प्रशास्तातच्छस्त्रं प्रशास्तुः शंसनं ऋतंसत्यवचनमेवेत्यर्थः अपवर्गःकैवल्यं १६ ऋ
चःतपआसीद्गृहपतिरित्याद्याः चकारात्तस्यैवंविदुषोयज्ञस्यात्मायजमानःश्रद्धापत्नीशरीरमिध्ममुरोवेदिरित्यादिब्राह्मणंचशंसंतियोगयज्ञेप्रमाणत्वेन
कथयंतितेतैत्तिरीयादयः नारायणविदः वेदविदआत्मविदोवा नारायणाय आत्मप्राप्त्यर्थेयत् यदापशून् इंद्रियाणि अविंदन् वश्यत्वेनप्रापसर्वतः १७

तन्न नदा सामानि गायंति आत्मलाभेनहृष्टाः संतः तत्र चाहुः निदर्शनं तैत्तिरीयः एतत्सामगायन्नास्ते हा ३ वु हा ३ वु हा ३ वु अहमन्नमहमन्नमहमन्न मित्यादि यज्ज्ञानायपशूजपः यस्मिन् ज्ञाते सामानानिगायंति तं नारायणं देवं निबोधजानीहि १८ इति श्रीमन्महाभारते आश्वमेधिके पर्वणि टीकायां पंचविंशोऽध्यायः २५ नारायणस्वरूपमेव कथयति एक इत्यादिना श्रवणादिवनीचादिव प्रणवादित्यपपाठः १ अंतर्यामिरूपेण तस्य शास्तृत्व-मुक्त्वा गुरुबंधुरूपेणापि तदाह एको गुरुरिति द्वाभ्यां २ स एव शास्योपीत्याह एकः श्रोतेति ३ द्विष्टाः द्वेषवंतः ४ अत्र एकस्मिन्नपि शास्तरि शास्यानां बुद्धिभेदम् ५ देवाश्च ऋषयश्चेति द्वंद्वः ६ प्राद्रवन् प्रतिपेदिरे दिशो बहून्मार्गान् ७ आत्मनः स्वस्य उपदेश ओमित्येकाक्षरं ब्रह्मेति वाक्यं तस्य अ

तत्र सामानि गायंति तत्र चाहुर्निदर्शनम् देवं नारायणं भीरु सर्वात्मानं निबोधतम् १८ इति श्रीमन्महाभारते आश्वमेधिके पर्वणि ब्राह्मणगीतायां पंचविंशोऽध्यायः २५ ब्राह्मण उवाच एकः शास्ता न द्वितीयोस्ति शास्ता योहृच्छयस्तमहमनुब्रवीमि तेनैवमुक्तः प्रवणादिवोदकं यथानियुक्तोस्मि तथा वहामि १ एको गुरुर्नास्ति ततो द्वितीयो योहृच्छयस्तमहमनुब्रवीमि तेनानुशिष्टा बांधवा बंधुमंतः सप्तर्षयः पार्थ दिवि भ्रभांति २ एकः श्रोता नास्ति ततो द्वितीयो योहृच्छयस्तमहमनुब्रवीमि तस्मिन्गुरौ गुरुवासं निरुष्य शक्रो गतः सर्वलोकामरत्वम् ३ एको द्वेष्टा नास्ति ततो द्वितीयो योहृच्छयस्तमहमनुब्रवीमि तेनानुशिष्टा गुरुणा सदैव लोकद्विष्टाः पन्नगाः सर्व एव ४ अत्राप्युदाहरंतीममितिहासं पुरातनम् प्रजापतौ पन्नगानां देवर्षीणां च संविदम् ५ देवर्षयश्च नागाश्चाप्यसुराश्च प्रजापतिम् पर्यपृच्छन्नुपासीनाः श्रेयो नः प्रोच्यतामिति ६ तेषां प्रोवाच भगवान् श्रेयः समनुपृच्छताम् ॐमित्येकाक्षरं ब्रह्म ते श्रुत्वा प्राद्रवन्दिशः ७ तेषां प्रद्रवमाणानामुपदेशार्थमात्मनः सर्पाणां दंशने भावः प्रवृत्तः पूर्वमेव तु ८ असुराणां प्रवृत्तस्तु दंभभावः स्वभावजः दानं देवा व्यवसिता दममेव महर्षयः ९ एकं शास्तारमासाद्य शब्देनैकेन संस्कृताः नानाव्यवसिताः सर्वे सर्पदेवर्षिदानवाः १०

र्थं प्रद्रवमाणानाम् तात्पर्येणानुसरतां तेषां मध्ये सर्पाणां प्रणवोच्चारणे मुखस्य उन्मीलननिमीलनयोरेव दृष्टिं कृत्वा स्वीयस्वभावानुकूलं मुखोन्मीलननिमीलनसाध्यं दंशनमेव श्रेय इति मन्वानानाम् ८ एवमसुराणामोष्ठचालनमात्रे दत्तदृष्टीनां दंभे जणाद्यभिनयप्रदर्शनरूपो भावो निश्चयः प्रवृत्तः देवानां लोके प्रार्थितं ओमित्यनुजानंतीति बुध्या दानं श्रेय इति निश्चिताः महर्षयस्तु ओमित्यस्योच्चारणे ओष्ठप्रसृत्युपसंहारं दृष्ट्वा सर्वप्रवृत्त्युपसंहाररूपं दमं श्रेयो मेनिरे ९।१०

तस्मात्स्वयमेवस्वस्य गुरुरित्याह श्रृणोतीति पृच्छतः शिष्यान् प्रतितत् श्रुतं गृहीतंच भूयः श्रावयति ग्राहयतीति च परिणामेणानुषज्ययोज्यम् यए वंविधः अतोन्योगुरुर्नविद्यतेइति संबंधः ११ अयमेवस्वसंस्कारवशात्पापचर्यादिरूपोभवतीत्याह गुरुरित्यादिना १२ १३ १४ १५ तत्रमुख्यब्रह्मचारिणः आश्रमधर्मलोपेपिनदोषइत्याह ब्रह्मैवसमिधइति १६ क्षेत्रज्ञेनतत्वदर्शिना अनुदर्शनं कारिताः अनुशिष्टाइत्यर्थः १७ इतिश्रीमन्महाभारते आश्वमेधिकेपर्वणि टीकायां षड्विंशोऽध्यायः २६ ननुपापचर्यादिस्वभाव एवात्मा तर्हि किं ब्रह्मचर्येणेत्याशंक्य आत्मनो असंगत्वं प्रतिपादयितुंवनाध्यायमारभते अध्वानंअतीत्यतत्महादुर्गवनंप्रविष्टोस्मीत्यन्वयः १ विशेषणबंधकः एकेनैवात्मेत व्योनपुत्रधनादिसहायवनेस्थेनेति

श्रृणोत्ययंप्रोच्यमानंगृण्हातिचयथातथम् पृच्छतस्तदतोभूयोगुरुरन्योनविद्यते ११ तस्यचानुमतेकर्मततः पश्चात्प्रवर्तते गुरुर्बोद्धाचश्रोताचद्वेष्टाचहृदिनिःसृतः १२ पापेनविचरन्लोकेपापचारीभवत्ययम् १३ कामचारीतुकामेनयदिंद्रियसुखेरतः ब्रह्मचारीसदैवेषयइंद्रियजयेरतः १४ अपेतव्रतकर्मातुकेवलंब्रह्मणिस्थितः ब्रह्मभूतश्चरंल्लोकेब्रह्मचारीभवत्ययम् १५ ब्रह्मैवसमिधस्तस्यब्रह्माग्निर्ब्रह्मसंभवः आपोब्रह्मगुरुर्ब्रह्मसब्रह्मणिसमाहितः १६ एतदेवेदृशंसूक्ष्मंब्रह्मचर्यंविदुर्बुधाः विदित्वाचान्वपद्यंतक्षेत्रज्ञेनानुदर्शिताः १७ इतिश्रीमन्महाभारते आश्वमेधिकेपर्वणि ब्राह्मणगीतायांषड्विंशोऽध्यायः २६ ब्राह्मणउवाच संकल्पदंशमशकंशोकहर्षहिमातपम् मोहांधकारतिमिरंलोभव्याधिसरीसृपम् १ विषयैकात्ययाध्वानंकामक्रोधविरोधकम् तदतीत्यमहादुर्गंप्रविष्टोस्मिमहद्वनम् २ ब्राह्मण्युवाच क्वतद्वनंमहाप्राज्ञकेवृक्षाःसरितश्चकाः गिरयःपर्वताश्चैवकियत्यध्वनितद्वनम् ३ ब्राह्मणउवाच नैतदस्तिपृथक्भावःकिंचिदन्यत्ततःसुखं नैतदस्त्यपृथग्भावःकिंचिद्दुःखतरंततः ४

अध्वासंसारमार्गः तंविषयैकात्ययाध्वानं द्वतंब्रह्म किंस्विद्वनंकउतवृक्षआसेतिश्रुतोवनवृक्षशब्दयोर्ब्रह्मदेहमदिवाचित्वदर्शनात् २ वनोक्त्यैवाक्षिप्तान्वृक्षादयोपिपृच्छ्यंतेक्वेति ३ षट्सुप्रश्नेषुआद्यस्योत्तरं नैतदिति ततः पृथग्भावोस्तीतियत् एतन्न ततोन्यत्किंचित्सुखमस्तीतियत् एतन्नेतियोजना सत्तासुखंचसर्वंब्राह्ममेवकार्येषुदृश्यतेनतत्रतद्रूपंपृथगस्तीत्यर्थः ननुब्रह्मैवकार्याकारमभून्नेत्याह नैतदिति ततः अपृथक् अभेदेनभावः वियदादिपदार्थोस्तीतियत् एतन्न ब्रह्मजगतोर्नमृद्घटवद्धेतुहेतुमद्भावोपितुशुक्तिरजतवदित्यतस्तयोर्भेदएवनिषिध्यतेनत्वभेदोविधीयते नहिरजतंशुक्तेरतिरिक्तमस्ति नापितयासमानसत्ताकंयेनतदभिन्नंस्यादितिभावः तथाततोवनादन्यत्स्वर्गादिदुःखतरंदुःखकारकंकर्मास्तीतियत् एतन्न आत्यंतिकदुःखनिवृत्तीच्छुनाश्रमेणापिसंसारमार्गमतीत्यतद्वनंप्रवेष्टव्यमितिभावः ४ २७

५ केषांचित्पंचम्यर्थेषष्ठी ६ ब्रह्मवनंब्रह्मसवृक्ष आसीदिति वनवृक्षयोर्मुख्यामुख्यब्रह्मभावदृष्टेस्तयोरधिष्ठानाध्यस्तभावंविवक्षन्नाह तस्मि न्वनेइति एतदरण्यरूपमितिच अत्रमहदहंकारपंचतन्मात्राणिसप्तद्रुमास्तै स्तत्संघातरूपोदेहोलक्ष्यते तस्यकारणंफलशब्दोदितंयागाद्यपूर्वम् तस्यापिकारणंदेवतातिथिप्रीतिसाधनत्वादतिथिशब्दोक्तायागक्रिया तस्याःकारणमाश्रमशब्दोदितःक्रियाश्रयःकर्ता अस्यापिकारणंसमाधयः सम्यगाधीयंतेकर्मस्वभिनिवेश्यंतेजनायैस्तेतथाभूताःरागादयः तेषांमूलंधर्मांतरपरिग्रहलक्षणादीक्षादेहादिधर्मस्वीकाररूपोध्यासः एवंदेहपूर्व- कोध्यासस्तत्पूर्वकाश्चरागादिदेहांता एवमिदंचक्रमनिशमावर्तमानमात्मसत्तयास्फूर्जदपिनात्मातद्धर्मैरनुरज्यतेइत्यर्थः ७ पंचवर्णानीति पंच

तस्माद्ध्रस्वतरंनास्तिनततोस्तिमहत्तरम् नास्तितस्मात्सूक्ष्मतरंनास्त्यन्यत्तत्समंसुखम् ५ नतत्राविश्यशोचंतिन प्रहृष्यंतिचद्विजाः नचबिभ्यतिकेषांचित्तेभ्योबिभ्यतिकेचन ६ तस्मिन्वनेसप्तमहाद्रुमाश्चफलानिसप्तातिथयश्चसप्त सप्ताश्रमाःसप्तसमाधयश्चदीक्षाश्चसप्तैतदरण्यरूपम् ७ पंचवर्णानिदिव्यानिपुष्पाणिचफलानिच सृजंतःपादपास्त त्रव्याप्यातिष्ठंतितद्वनम् ८ सुवर्णानिद्विवर्णानिपुष्पाणिचफलानिच सृजंतःपादपास्तत्रव्याप्यातिष्ठंतितद्वनम् ९ सुरभीणिद्विवर्णानिपुष्पाणिचफलानिच सृजंतःपादपास्तत्रव्याप्यातिष्ठंतितद्वनम् १० सुरभीण्येकवर्णानिपुष्पा णिचफलानिच सृजंतःपादपास्तत्रव्याप्यातिष्ठंतितद्वनम् ११ बहून्यव्यक्तवर्णानिपुष्पाणिचफलानिच विसृजंतोम हावृक्षौतद्वनंव्याप्यातिष्ठतः १२

वर्णानि शब्दादिभेदात्पंचरूपाणि पुष्पाणिशब्दाद्यनुभवाः फलानितज्जाः प्रीत्यादयः पादपाः भक्तां स्ति जीवभेदावृत्तिभेदाद्वाबहुवचनम् ८ सुवर्णानिश्वेतपीतादिशोभनवर्णवंति द्विवर्णानिसुखदुःखोभयहेतुत्वाद्विरूपाणिपादपाश्चसंभि इंद्रियांतरेष्वप्येततुल्यम् ९ सुरभीणिस्वर्गादीनि द्विवर्णत्वंतत्राप्यविशिष्टम् पादपाःयज्ञादयः १० सुरभीण्येकवर्णानि सुखैकरूपाणि पादपाःध्यानादयः ११ बहूनि अतीतानागतवर्तमानानि अव्यक्तवर्णानि अव्यक्तःवर्णःस्वरूपंयेषांतानि मूढानांमनोरथमात्राणि योगिनां तुसंकल्पात्प्रागव्यक्तवर्णानि महावृक्षौबुद्धिमनसी १२

वन्हिरात्मास्कमनाइत्यत्रमनः शब्देनबुद्धिमनसीकरूकरूवस्थानीये इंद्रियाणिसमिधश्चहोम्यम् यदापंचावतिष्ठंते ज्ञानानिमनसासह बुद्धिश्चनविचेष्टे
तितामाहुः परमांगतिमितिश्रुतेः सर्वेषांप्रविलापनंहोमः तेभ्योमन आदिभ्योहुतेभ्यः सप्तमोक्षाःमुक्तिः अपादानबहुत्वस्यमोक्षेष्वुपचारात् मोक्षाइतिब
हुत्वम् ननुमुक्तस्यदीक्षास्थ्योध्यासोस्तिनवा नांत्यः ज्ञानसमकालमेवदेहपातापत्तेः आद्ये अध्यासवत उत्क्रमेणदेहांतरोत्पत्तिरनिवार्येत्याशंक्याह फलानि
दीक्षादति मुक्तानांदीक्षाः फलंत्वेवनतु देहांतरमारभंते कुतएततृयमोगुणाः फलानिविदुषः सत्यपिदेहादि प्रतिभासेकर्तृत्वाभिनिवेशाभावात् दानादिना-
उत्पन्नमप्यपूर्वनदेहांतरारंभकम् अतएवगुणभूतान्येव अपूर्वाणि कर्नाहितेषामुपयोगः आतिथयः फलाशाः आतिथयोदेवताएवफलाशाः ईश्वरस्यैवते
षांपरार्थेवक्रियानस्वार्थेत्यर्थः तथाचश्रुतिः तस्यपुत्रादायमुपयंतिसुहृदः साधुकृत्यांद्विषंतः पापकृत्यामिति तदाविद्वान्पुण्यपापेविधूयेत्यादिः १३

एकोवन्हिःस्कमनाब्राह्मणोत्रपंचेंद्रियाणिसमिधश्चात्रसंति तेभ्योमोक्षाःसप्तफलंतिदीक्षागुणाः फलान्यतिथयःफलाशाः
१३ आतिथ्यंप्रतिगृण्हंतितत्रतत्रमहर्षयः आर्चितेषुप्रलीनेषुतेष्वन्यद्रोचतेवनम् १४ प्रज्ञावृक्षंमोक्षफलंशांतिच्छायास
मन्वितम् ज्ञानाश्रयंतृप्तितोयमंतःक्षेत्रज्ञभास्करम् १५ येधिगच्छंतितसंतस्तेषांनास्तिभयंपुनः ऊर्ध्वंचाधश्चातिर्यक्चतस्यनां
तोधिगम्यते १६ सप्तस्त्रियस्तत्रवसंतिसद्यस्त्ववाङ्मुखाभानुमत्योजनित्र्यः ऊर्ध्वंरसानाददतेप्रजाभ्यः सर्वान्यथासत्यम
नित्यताच १७ तत्रैवप्रतितिष्ठंतिपुनस्तत्रोपयांतिच सप्तसप्तर्षयःसिद्धावसिष्ठप्रमुखैःसह १८ यशोवर्चोभगश्चैवविजयः
सिद्धितेजसी एवमेवानुवर्ततेसप्तज्योतींषिभास्करम् १९

महर्षयइंद्रियाधिष्ठातारोदेवाः अन्यत्तेभ्योविलक्षणंद्वैतदर्शनाभावात् रो
चतेदीप्यते १४ प्रज्ञासाक्षात्कारः ज्ञानंआगमाचार्योपदेशम् १५भयाभावेहेतुमाह ऊर्ध्वमिति तस्यप्रज्ञावृक्षस्य सर्वस्यचिन्मात्रत्वंपश्यन्भेददर्शनाभावा
न्नबिभेतीत्यर्थः द्वितीयाद्वैभयंभवतीतिश्रुतेः १६ जीवन्मुक्तस्यैश्वर्यमाह सप्तस्त्रियइति तत्रवृक्षाधिगंतरि स्त्रियोघ्राणादिवृत्तयः सद्योजनित्र्यइत्यस्यसंक-
ल्पासिद्धाइत्यर्थः संकल्पादेवास्यपितरः समुत्तिष्ठंतीतिश्रुतेः अवाङ्मुखाः पुरुषंवशंकर्तुमशक्तत्वेनलज्जिताः भानुमत्यश्चिज्ज्योतिर्मयाः प्रजाभ्यः प्रजाभ्यउ
र्ध्वंउत्कृष्टंयथास्यात्तथा सर्वान्रसान्विषयजाल्हादान् आददतेभुंजते ऊर्ध्वत्वमेवाह दृष्टांतेन यथासत्यमनित्यताचेति नित्यानित्ययोर्यथावदंतरंतावद्दृष्टम्
टसूत्ववयोरित्यर्थः १७ प्राणावाऋषयइतिश्रुतेः सप्तर्षीणामिंद्रियाणांलयोदयस्थानंविद्वानेवेत्याह तत्रैवेति तत्रोपयंतितत्रउद्यंति यः कश्चिद्भूतोभावीवर्त
मानोवावसिष्ठोतिशयेनवसुमान् १८ यशोयशस्वीवर्चोदीप्तिमत्तद्वानित्यादि तेसर्वेएतंभास्करंक्षेत्रज्ञभास्करंअनुवर्ततइत्यर्थः १९ ७ ७

यस्तुसर्वाणिभूतान्यात्मन्येवानुपश्यतीत्यस्याः श्रुतेरर्थंसंक्षिपतिगिरयइत्यादिना २० वितानोयोगयज्ञविस्तारः तस्येदंस्थानंवैतानंहार्दाकाशः समुपह्वरे अत्यंतमूढे २१ केयंतीत्यतआह कृशाशाइति २२ अरण्यंप्राप्यमभिप्रेत्यशमंशंसंतीतियोजना शममपिशममेव विद्यारण्यविदःविद्यैकप्राप्यब्रह्मविदः यथाधीरंबुद्धिगतिमनतिक्रम्येत्यर्थः २३ विदित्वाशास्त्रतोज्ञात्वाअनुतिष्ठंतिशमादिपराभवंति तमेवधीरोविज्ञायप्रज्ञांकुर्वीतब्राह्मणः एवंवित् शांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वात्मन्येवात्मानंपश्येदित्यादिश्रुतिभ्योनशब्दज्ञानात्कृतकृत्यतेत्यर्थः २४ इत्याश्वमेधिकेटीकायांसप्तविंशोऽध्यायः २७ एकोवन्हिरितिश्लोकाविदुषांकर्तृत्वाभिमानाभावात्कृतेनापिकर्मणाबंधोनास्तीत्युक्तंतद्विवृणोति गंधानित्यादिना भिद्य तक्षेत्रस्या

गिरयःपर्वताश्चैवसंतितत्रसमासतः नद्यश्चसरितोवारिवहंत्योब्रह्मसंभवम् २० नदीनांसंगमश्चैववैतानंसमुपह्वरे स्वात्मतृप्तायतोयांतिसाक्षादेवपितामहम् २१ कृशाशाःसुव्रताशाश्वतपसादग्धकिल्बिषाः आत्मन्यात्मानमाविश्य ब्रह्माणंसमुपासते २२ शममप्यत्रशंसंतिविद्यारण्यविदोजनाः तदारण्यमभिप्रेत्ययथाधीरमजायत २३ एतदेवहृशंपुण्यमरण्यंब्राह्मणाविदुः विदित्वाचानुतिष्ठंतिक्षेत्रज्ञेनानुदर्शिना २४ इतिश्रीमन्महाभारते आश्वमेधिकेपर्वणिब्राह्मणगीतायांसप्तविंशोऽध्यायः २७ ब्राह्मणउवाच गंधान्नजिघ्रामिरसान्नवेद्मिरूपंनपश्यामिनचस्पृशामि नचापिशब्दान्विविधान्शृणोमिनचापिसंकल्पमुपैमि कंचित् १ अर्थानिष्टान्कामयतेस्वभावःसर्वान्द्वेष्यान्प्रद्विषतेस्वभावः कामद्वेषावुद्भवतःस्वभावात्प्राणापानौजंतुदेहान्निवेश्य २

भ्यस्यक्षेत्रिकस्यक्षेत्रवृद्धिन्हासाभ्यांदृश्यमानाभ्यामपिनहर्षविषादौभवतएवंविविक्तात्मदर्शिनोगुणकृतैःकर्मभिर्नसंगोस्तीत्यर्थः १ अर्थानिति स्वभावोबुद्ध्यादीनाम् तत्रदृष्टांतःकामेति यथाकामद्वेषयोरुद्भवाभावेपिजंतूनांदेहान् प्राणापानौप्रवेश्यप्रवेशयितर्यनुसंधानेपिसुषुप्त्यादौस्वभावादेवप्राणापानौस्वकार्यंअन्नपाकादिकुरुतः एवंबुद्ध्यादिरपिजाग्रत्स्वप्नयोःस्वभावादेव अर्थेषुकामादिमान्भवतिनत्वहमित्यर्थः २

तेभ्यश्चेति बाह्यघ्राणघ्रेयादिभ्योन्यान्स्वाप्नान् वासनामयान् घ्राणघ्रेयादीन् स्वरूपसाम्येप्येतेषामन्यत्वं एकत्रानुभूतस्यस्मरणादेरन्यत्रप्रसंगा ज्ज्ञेयं तेषुस्वाप्नेषुनित्याननुगतान् अधिष्ठानगतान्भावान्तइमेसत्याःकामाइत्यादिश्रुतिप्रसिद्धान् तेभ्योन्यान् तेभ्योप्यन्यंभूतात्मानंशरीरे- योगिनोलक्षयेरन् घ्राणादिदेवताभ्योप्यांतरमात्मानंजानंतः कथंबाह्यैर्घ्राणादिधर्मैर्लिप्येरन्नित्यर्थः एतदेवस्पष्टयति तस्मिन्भूतात्मनितिष्ठन्शक्तःसक्तोनास्मि असंगोह्ययंपुरुषइतिश्रुतेः ३ ४ एतस्यप्रीताचित्तस्य सत्याःकामाइतिशेषःसत्यकामःसत्यसंकल्पइतिश्रुतेः निरीक्ष्यमाण स्यदृश्यरूपस्यभोगजालंबहूनांप्राप्त्रादीनांस्वभावभूतंसत्विदुषिनसज्जतेसक्तंनभवति कर्मसुक्रियमाणेष्वपिसत्स्वितिशेषः ५ अत्रात्मनोसं

तेभ्यश्चान्यांस्तेषुनित्यांश्चभावान्भूतात्मानंलक्षयेरन्शरीरे तस्मिंस्तिष्ठन्नास्मिशक्तःकथंचित्कामक्रोधाभ्यांजरया मृत्युनाच ३ अकामयानस्यचसर्वकामानविद्विषाणस्यचसर्वदोषान् नमेस्वभावेषुभवंतिलेपास्तोयस्यबिंदोरिवपुष्करेषु ४ नित्यस्यचैतस्यभवंतिनित्यानिरीक्ष्यमाणस्यबहुस्वभावः नसज्जतेकर्मसुभोगजालंदिवीवसूर्यस्यमयूखजालम् ५ अत्राप्युदाहरंतीममितिहासंपुरातनम् अध्वर्युयतिसंवादंतंनिबोधयशस्विनि ६ प्रोक्ष्यमाणंपशुंदृष्ट्वायज्ञकर्मण्यथाब्रवीत् यतिरध्वर्युमासीनोहिंसेयमितिकुत्सयन् ७ तमध्वर्युःप्रत्युवाचनायंछागोविनश्यति श्रेयसायोक्ष्यतेजंतुर्यदिश्रुतिरियंतथा ८ योह्यस्यपार्थिवोभागःपृथिवींसगमिष्यति यदस्यवारिजंकिंचिदपस्तत्संप्रवेक्ष्यति ९ सूर्यंचक्षुर्दिशःश्रोत्रंप्राणोस्यदिवमेवच आगमेवर्तमानस्यनमेदोषोस्तिकश्चन १० यतिरुवाच प्राणैर्वियोगे छागस्ययदिश्रेयःप्रपश्यसि छागार्थेवर्ततेयज्ञोभवतःकिंप्रयोजनम् ११ अत्रत्वांमन्यतांभ्रातापितामातासखेतिच मंत्रयस्वैनमुन्नीयपरवंतंविशेषतः १२ एवमेवानुमन्येरंस्तान्भवान्द्रष्टुमर्हति तेषामनुमतंश्रुत्वाशक्याकर्तुंविचारणा १३

गत्वे ६ ७ श्रुतिःपशुर्वैनीयमानःसमृत्युंप्रापश्यत्सदेवान्नान्वकामयतैतुंतंदेवा अब्रुवन्नेहिस्वर्गंवैत्वालोकंगम यिष्यामइतिसतथेत्यब्रवीदित्यादिः ८ योहीतिशब्देन सूर्यंतेचक्षुः वातंप्राणः द्यांपृष्ठं अंतरिक्षमात्मा अंगैर्यज्ञं पृथिवीं शरीरैरिति श्रौतिंप्रसि द्धिंद्योतयति आगमे अग्नीषोमीयपशुमालभेतेत्यादौ विधिस्पृष्टेनिषेधानवकाशान्नहिंस्यात्सर्वाभूतानीतिशास्त्रंकामकृतहिंसाविषयमित्यर्थः १० ११ १२ अन्ये नंमातामन्यतामनुपितानुभ्रातासगर्भ्योनुसखासयूथ्यइतिमंत्रलिंगात्पशोर्मात्राद्यनुमतिनिरपेक्षितान्नचसासंभवति तदभावेच हिंसादोषःस्यादेवेत्यर्थः १३

स्वयोनिषु सूर्यं चक्षुर्गमयतात् वातं प्राणमन्ववसृजतादिति लिंगात् १४ १५ अहिंसाप्यशक्यप्रतिज्ञा सूक्ष्महिंसाया अपरिहार्यत्वात्तथापि दृष्ट
बीभत्सां हिंसां त्यजेदेवेत्याह द्वाभ्याम् अहिंसेति १६ १७ १८ उपपातकमभ्यस्तं महापातकतां व्रजेदिति स्मृतेः सूक्ष्मापि हिंसाभ्यासाद्बहुली भूय
बाधते ततस्त्याज्येत्याशयेनाध्वर्युराह भूमेरिति नानुपहत्य भूतानि भोगः संभवतीति न्यायाज्जीवतो परिहार्येव हिंसेत्यर्थः १९ २० किं कथं त्वं मन्यसे

प्राणा अप्यस्य छागस्य प्रापितास्ते स्वयोनिषु शरीरं केवलं शिष्टं निश्चेष्टमिति मे मतिः १४ इंधनस्य तु तुल्येन शरीरेणावि
चेतसा हिंसा निर्वेष्टुकामानामिंधनं पशुसंज्ञितम् १५ अहिंसा सर्वधर्माणामिति वृद्धानुशासनम् यदहिंस्रं भवे
त्कर्म तत्कार्यमिति विद्महे १६ अहिंसेति प्रतिज्ञेयं यदि वक्ष्याम्यतः परम् शक्यं बहुविधं कर्तुं भवता कार्यदूषणम् १७ अहिं
सा सर्वभूतानां नित्यमस्मासु रोचते प्रत्यक्षतः साधयामो न परोक्षमुपास्महे १८ अध्वर्युरुवाच भूमेर्गंधगुणा
न्भुंक्षे पिबस्यापोमयान्रसान् ज्योतिषां पश्यसे रूपं स्पृशस्यनिलजान्गुणान् १९ शृणोष्याकाशजान्शब्दान्मनसा म
न्यसे मतिम् सर्वाण्येतानि भूतानि प्राणा इति च मन्यसे २० प्राणादाने निवृत्तोसि हिंसायां वर्तते भवान् नास्ति चेष्टा वि
ना हिंसां किं वा त्वं मन्यसे द्विज २१ यतिरुवाच अक्षरं च क्षरं चैव द्वैधीभावोयमात्मनः अक्षरं तत्र सद्भावः स्वभा
वः क्षर उच्यते २२ प्राणो जिह्वा मनः सत्त्वं सद्भावो रजसा सह भावैरेतैर्विमुक्तस्य निर्द्वंद्वस्य निराशिषः २३ समस्य स
र्वभूतेषु निर्ममस्य जितात्मनः समंतात्परिमुक्तस्य न भयं विद्यते क्वचित् २४ अध्वर्युरुवाच सद्भिरेवेह संवासः
कार्यो मतिमतां वर भवतो हि मतं श्रुत्वा प्रतिभाति मतिर्मम २५ भगवन्भगवद्बुद्ध्या प्रतिपन्नो ब्रवीम्यहम् अध्वर्युः
व्रतं मंत्रकृतं कर्तुं नापराधोस्ति मे द्विज २६ ब्राह्मण उवाच उपपत्त्या यतिस्तूष्णीं वर्तमानस्ततः परम् अध्व
र्युरपि निर्मोहः प्रचचार महामखे २७

हिंसामिति शेषः २१ यतिराहिंसाप्रकारमसंगिनामाह सद्भावः सद्रूपम् स्वभावः क्षरतरा-
मभावः कालत्रयेप्यसत्त्वम् २२ प्राणादिव्यवहारस्तु रजसा मायया सह स्थितः सद्भाव एव भ्रांतिविशिष्टः सदेव व्यवहाररूपमित्यर्थः एतैः
प्राणादिभिर्मुक्तस्य अतएव निर्द्वंद्वस्य ज्ञानेन द्वैतकल्पकभ्रांतिबाधात् २३ भयं प्रेत्य स्वादांतिके चतानि निःशास्त्रोक्तं २४ त्वदुपदेशादहमपि
मंत्रकृतं व्रतं कुर्वन्न दुष्येइत्याह सद्भिरित्यादिना २५ २६ २७ ५ ५ ५ ५ ६

२८ इत्याश्वमेधिकेटीकायां अष्टाविंशोऽध्यायः २८ इंद्रियजयएवमहच्छौर्यमित्युपोद्घातयत्यध्यायेन अत्रापीति १ २ ३ ४ ५ ६
७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ एकविंशतिमेधांते मेधोयुद्धयज्ञः यज्ञोवैमेधइतिश्रुतेः यान्येवसंग्रामनामानितानियज्ञनाम



एवमेतादृशंमोक्षंसुसूक्ष्मंब्राह्मणाविदुः विदित्वाचानुतिष्ठंतिक्षेत्रज्ञेनार्थदर्शिना २८ इतिश्रीमन्महाभारतेआश्वमे
धिकेपर्वणिब्राह्मणगीतायां अष्टाविंशोऽध्यायः २८ ब्राह्मणउवाच अत्राप्युदाहरंतीममितिहासंपुरातनम्
कार्तवीर्यस्यसंवादंसमुद्रस्यचभाविनि १ कार्तवीर्यार्जुनोनामराजाबाहुसहस्रवान् येनसागरपर्यंताधनुषानिर्जितामही
२ सकदाचित्समुद्रांतेविचरन्बलदर्पितः अवाकिरच्छरशतैःसमुद्रमितिनःश्रुतम् ३ तंसमुद्रोनमस्कृत्यकृतांजलिरुवा
च ह मामुंचवीरनाराचान्ब्रूहिकिंकरवाणिते ४ मदाश्रयाणिभूतानित्वद्विसृष्टैर्महेषुभिः वध्यंतेराजशार्दूलतेभ्योदेह्य
भयंविभो ५ अर्जुनउवाच मत्समोयदिसंग्रामेशरासनधरःक्वचित् विद्यतेतंसमाचक्ष्वयःसमासीतमांमृधे
६ समुद्रउवाच महर्षिर्जमदग्निस्तेयदिराजन्परिश्रुतः तस्यपुत्रस्तवातिथ्यंयथावत्कर्तुमर्हति ७ ततःसरा
जाप्रययौक्रोधेनमहतावृतः सतमाश्रममागम्यराममेवान्वपद्यत ८ सरामप्रतिकूलानिचकारसहबंधुभिः आयासं
जनयामासरामस्यचमहात्मनः ९ ततस्तेजःप्रजज्वालरामस्यामिततेजसः प्रदहन्रिपुसैन्यानितदाकमललोचन १०
ततःपरशुमादायसतंबाहुसहस्रिणम् चिच्छेदसहसारामोबहुशाखमिवद्रुमम् ११ तंहतंपतितंदृष्ट्वासमेताःसर्व
बांधवाः असीनादायशक्तीश्चभार्गवंपर्यधावयन् १२ रामोपिधनुरादायरथमारुह्यसत्वरः विसृजन्शरवर्षाणि
व्यधमत्पार्थिवंबलम् १३ ततस्तुक्षत्रियाःकेचिज्जामदग्न्यभयार्दिताः विविशुर्गिरिदुर्गाणिमृगाःसिंहार्दिताइव
१४ तेषांस्वविहितंकर्मतद्भयान्नानुतिष्ठताम् प्रजावृषलतांप्राप्ताब्राह्मणानामदर्शनात् १५ एवंतेद्रविडाभीराःपुंड्राश्च
शबरैःसह वृषलत्वंपरिगताव्युत्थानात्क्षत्रधर्मिणः १६ ततश्चहतवीरासुक्षत्रियासुपुनःपुनः द्विजैरुत्पादितंक्ष
त्रंजामदग्न्योन्यकृंतत १७ एकविंशतिमेधांतेरामंवागशरीरिणी दिव्याप्रोवाचमधुरासर्वलोकपरिश्रुता १८ रा

मरामनिवर्तस्वकंगुणंतातपश्यसि क्षत्रबंधूनिमान्प्राणैर्विप्रयोज्यपुनःपुनः १९
नीतिनैरुक्तवचनात्युद्धस्यैवनाममेधइति १८ १९

२० २१ २२ इत्याश्वमेधिकेटीकायांऊनत्रिंशोऽध्यायः २९ अन्नहिंसाया अकार्यत्वे १ २ सूक्ष्मेविचारे ३ कर्मशत्रुजयादि उत्सृज्यसूक्ष्मब्रह्मप्र

तथैवतंमहात्मानमृचीकप्रमुखास्तथा पितामहामहाभागोनिवर्तस्वेत्यथाब्रुवन् २० पितुर्वधममृष्यंस्तुरामःप्रोवाचतानृषीन्
नार्हतीहभवंतोमांनिवारयितुमित्युत २१ पितरऊचुः नार्हसेक्षत्रबंधूंस्त्वंनिहंतुंजयतांवर नेहयुक्तंत्वयाहंतुंब्राह्मणे
नसतान्नृपान् २२ इतिश्रीमन्महाभारते आश्वमेधिकेपर्वणिब्राह्मणगीतायांऊनत्रिंशोऽध्यायः २९ पितरऊचुः
अत्राप्युदाहरंतीममितिहासंपुरातनम् श्रुत्वाचतत्तथाकार्यंभवताद्विजसत्तम १ अलर्कोनामराजर्षिरभवत्सुमहातपाः
धर्मज्ञः सत्यवादीचमहात्मासुदृढव्रतः २ ससागरांतांधनुषाविनिर्जित्यमहीमिमाम् कृत्वासुदुष्करंकर्ममनःसूक्ष्मेसमादधे
३ स्थितस्यवृक्षमूलेषुतस्यचिंताबभूवह उत्सृज्यसुमहत्कर्मसूक्ष्मंप्रतिमहामते ४ अलर्कउवाच मनसोमेबलं
जातंमनोजित्वाध्रुवोजयः अन्यत्रबाणानस्यामिशत्रुभिःपरिवारितः ५ यदिदंचापलात्कर्मसर्वान्मर्त्यान्चिकीर्षति मनः
प्रतिसुतीक्ष्णाग्रानहंमोक्ष्यामिसायकान् ६ मनउवाच नेमेबाणास्तरिष्यंतिमामलर्ककथंचन तवैवमर्मभेत्स्यंति
भिन्नमर्मामरिष्यसि ७ अन्यान्बाणान्समीक्षस्वयैस्त्वंमांसूदयिष्यसि तच्छ्रुत्वाथविचिंत्याथततोवचनमब्रवीत् ८ अल
र्कउवाच आघ्रायसुबहून्गंधांस्तानेवप्रतिगृध्यति तस्मात्घ्राणंप्रतिशरान्प्रतिमोक्ष्याम्यहंशितान् ९ घ्राणउवाच
नेमेबाणास्तरिष्यंतिमामलर्ककथंचन तवैवमर्मभेत्स्यंतिभिन्नमर्मामरिष्यसि १० अन्यान्बाणान्समीक्षस्वयैस्त्वंमांसूदयिष्य
सि तच्छ्रुत्वासविचिंत्याथततोवचनमब्रवीत् ११ अलर्कउवाच स्वयंस्वादून्रसान्भुक्त्वातानेवप्रतिगृध्यति त
स्माज्जिह्वांप्रतिशरान्प्रतिमोक्ष्याम्यहंशितान् १२ जिह्वोवाच नेमेबाणास्तरिष्यंतिमामलर्ककथंचन तवैवमर्मभे
त्स्यंतिभिन्नमर्मामरिष्यसि १३ अन्यान्बाणान्समीक्षस्वयैस्त्वंमांसूदयिष्यसि तच्छ्रुत्वासविचिंत्याथततोवचनमब्रवीत् १४
अलर्कउवाच स्पृष्ट्वात्वग्विविधान्स्पर्शांस्तानेवप्रतिगृध्यति तस्मात्त्वचंपाटयिष्येविविधैःकंकपत्रिभिः १५

तियत्तुंचिंताबभूवेतिसंबंधः ४ अन्यत्रबाह्यशत्रुभ्यइतिशेषः शत्रुभिरिंद्रियवैरिभिः ५ चिकीर्षतिविक्षेप्तुमिच्छतीत्यर्थः मनःप्रतिहठयोगेन
वायुनिरोधादिनाजेष्यामीत्यर्थः ६ नेमेइतिहठयोगेमृत्युरवश्यंसंभवतीभावः ७ ८ ९ १० ११ १२ १३ १४ १५ ६२ ६२

१६ १७ १८ १९ २० २१ २२ २३ २४ एवंघ्राणादीनांहठेननिग्रहेतत्तदिंद्रियविकलोवासीदित्येवमतुकृतकृत्योभवतीत्यर्थः २५ तपआ



त्वगुवाच नेमेबाणास्तरिष्यंतिमामलर्ककथंचन तवैवमर्मभेत्स्यंतिभिन्नमर्मामरिष्यसि १६ अन्यान्बाणान्समीक्षस्व
येस्त्वंमांसूदयिष्यसि तच्छ्रुत्वासविचिंत्याथततोवचनमब्रवीत् १७ अलर्कउवाच श्रुत्वातुविविधान्शब्दांस्तान्
वमातिगृध्यति तस्माच्छ्रोत्रंप्रतिशरान्प्रतिमुंचाम्यहंशितान् १८ श्रोत्रंउवाच नेमेबाणास्तरिष्यंतिमामलर्ककथं-
चन तवैवमर्मभेत्स्यंतिततोहास्यसिजीवितम् १९ अन्यान्बाणान्समीक्षस्वयेस्त्वंमांसूदयिष्यसि तच्छ्रुत्वासविचिंत्याथत
तोवचनमब्रवीत् २० अलर्कउवाच दृष्ट्वारूपाणिबहुशस्तान्येवप्रतिगृध्यति तस्माच्चक्षुर्हनिष्यामिनिशितैःसा
यकैरहम् २१ चक्षुरुवाच नेमेबाणास्तरिष्यंतिमामलर्ककथंचन तवैवमर्मभेत्स्यंतिभिन्नमर्मामरिष्यसि २२ अ
न्यान्बाणान्समीक्षस्वयेस्त्वंमांसूदयिष्यसि तच्छ्रुत्वासविचिंत्याथततोवचनमब्रवीत् २३ अलर्कउवाच इयंनिष्ठा
बहुविधाप्रज्ञयात्वध्यवस्यति तस्माद्बुद्धिंप्रतिशरान्प्रतिमोक्ष्याम्यहंशितान् २४ बुद्धिरुवाच नेमेबाणास्तरिष्यंति
मामलर्ककथंचन तवैवमर्मभेत्स्यंतिभिन्नमर्मामरिष्यसि अन्यान्बाणान्समीक्षस्वयेस्त्वंमांसूदयिष्यसि २५ ब्राह्म
णउवाच ततोलर्कस्तपोघोरंतत्रैवास्थायदुष्करम् नाध्यगच्छत्परंशक्त्याबाणमेतेषुसप्तसु २६ सुसमाहितचेतास्तुसत-
तोचिंतयत्प्रभुः सविचिंत्यचिरंकालमलर्कोद्विजसत्तमः २७ नाध्यगच्छत्परंश्रेयोयोगान्मतिमतांवरः सएकाग्रंमनःकृत्वानि
श्चलोयोगमास्थितः २८ इंद्रियाणिजघानाशुबाणेनैकेनवीर्यवान् योगेनात्मानमाविश्यसिद्धिंपरमिकांगतः २९ विस्मित
श्चापिराजर्षिरिमांगाथांजगादह अहोकष्टंयथास्माभिःसर्वंबाह्यमनुष्ठितम् ३० भोगतृष्णासमायुक्तैःपूर्वंराज्यमुपासितम्
इतिपश्चान्मयाज्ञातंयोगान्नास्तिपरंसुखम् ३१ इतित्वमनुजानीहिराममाक्षात्रियान्जहि तपोघोरमुपातिष्ठततःश्रेयो
भिपत्स्यसे ३२ इत्युक्तःसतपोघोरंजामदग्न्यःपितामहैः आस्थितःसुमहाभागोययौसिद्धिंचदुर्गमाम् ३३ इ
तिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिब्राह्मणगीतायांत्रिंशोऽध्यायः ३०

लोचनं २६ २७ योगात्राजयोगात्चित्तमात्रनिग्रहरूपात् एकाग्रम् द्रष्टृदृश्योपरक्तंचित्तंसर्वार्थं तदभावेस्वरूपमात्रनिष्ठंत्वेकाग्रं २८ आ
त्मानंपरंब्रह्म २९ ३० ३१ अनुजानीहि अस्मदुपदेशमनुसाक्षात्कुरुयोगबलेन ३२ ३३ इत्याश्वमेधिकेटीकायांत्रिंशोऽध्यायः ३०

दंतास्तालुचेतिश्लोकोक्तं हृदयाख्यं ब्रह्म प्रतिपाद्य हृदयबंधनाख्यं गुणत्रयं मुमुक्षूणां हेयमाह त्रय इत्यादिना गुणा इति शेषः गुणतः वृत्तिभेदात् इष्टप्रा
प्तिनिश्चयेयत्सुखं सप्रहर्षः इष्टप्राप्तौयत् सुखं साप्रीतिः इष्टभोगेयत् सुखं स आनंदः १ अभिसंरंभो द्वेषाभिनिवेशः २ निकृत्यच्छित्वा बाणसंघैः
शमादिभिः ३ ४ दोषेषु रागादिषु साधुषु शमादिषु ५ ६ ७ निम्नानि नीचकर्माणि ८ ९ १० ११ राज्यं आप्नोति इति शेषः आप्नोति स्वाराज्यमि

ब्राह्मण उवाच त्रयोवैरिपवोलोके नवधागुणतः स्मृताः प्रहर्षः प्रीतिरानंदस्त्रयस्तेसात्विकागुणाः १ तृष्णाक्रोधो-
भिसंरंभोराजसास्तेगुणाः स्मृताः श्रमस्तंद्राचमोहश्चत्रयस्तेतामसागुणाः २ एतान्निकृत्यधृतिमान् बाणसंघैरतंद्रितः जेतुं
परानुत्सहतेप्रशांतात्माजितेंद्रियः ३ अत्रगाथाः कीर्तयंतिपुराकल्पविदोजनाः अंबरीषेणयागीताराज्ञापूर्वंप्रशाम्यता ४ समु
दीर्णेषुदोषेषुबुध्यमानेषुसाधुषु जग्राहतरसाराज्यमंबरीषोमहायशाः ५ सन्निगृह्यात्मनोदोषान्साधून्समभिपूज्यच ज
गाममहतींसिद्धिंगाथाश्चेमाजगादह ६ भूयिष्ठंविजितादोषानिहताः सर्वशत्रवः एकोदोषोवरिष्ठश्चवध्यः सन्नहतोमया ७
यत्प्रयुक्तोजंतुरयंवैतृष्ण्यंनाधिगच्छति तृष्णार्तइहनिम्नानिधावमानोनबुध्यते ८ अकार्यमपियेनेहप्रयुक्तः सेवतेनरः तं
लोभमसिभिस्तीक्ष्णैर्निकृंतंतंनिकृंतत ९ लोभाद्धिजायतेतृष्णाततश्चिंताप्रवर्तते सलिप्समानोलभतेभूयिष्ठंराजसान्गु
णान् तदवाप्तौतुलभतेभूयिष्ठंतामसान्गुणान् १० सतैर्गुणैः संहतदेहबंधनः पुनः पुनर्जायतिकर्मचेहते जन्मक्षये
भिन्नविकीर्णदेहोमृत्युंपुनर्गच्छतिजन्मनेव ११ तस्मादेतंसम्यगवेक्ष्यलोभंनिगृह्यधृत्यात्मनिराज्यमिच्छेत् एतद्राज्यंनान्य
दस्तीहराज्यमात्मैवराजाविदितोयथावत् १२ इतिराज्ञांबरीषेणगाथागीतायशस्विना आधिराज्यंपुरस्कृत्यलोभमेकंनिकृंत
ता १३ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिब्राह्मणगीतासुएकत्रिंशोऽध्यायः ३१ ब्राह्मणउवाच अ
त्राप्युदाहरंतीममितिहासंपुरातनम् ब्राह्मणस्यचसंवादंजनकस्यचभामिनि १ ब्राह्मणंजनकोराजासन्नंकस्मिंश्चिदागसि
विषयेमेनवस्तव्यमितिशिष्ट्यर्थमब्रवीत् २ इत्युक्तः प्रत्युवाचाथब्राह्मणोराजसत्तमम् आचक्ष्वविषयंराजन्यावांस्तववशे
स्थितः ३

निश्रुतेः स्वराज्याख्यं परमानंदम् १२ १३ इतिश्रीमन्महाभारते आश्वमेधिके पर्वणि टीकायां एकत्रिंशोऽध्यायः ३१ ममे
तिद्व्यक्षरोमृत्युरित्युक्तं तत्र ममतायाविषय एव नास्तीति जनकब्राह्मणसंवादेनाहात्रापीत्यादिना अत्रलोभेनिकृंतनीये १ २ ३

४ ५ ६ ७ षिञ्बंधने विषयं विशेषेण सिनोति बध्नाति तं बंधकं ममतास्पदं नाभिगच्छामि विचिन्वन् अन्वेषमाणोपि अयंभावः पृथिवी मिथिला प्र-
जोपलक्षितं राज्यं शरीरस्कंधादिकं अवस्थांतरेषु व्यभिचरन् सन् नात्मसंबंधितामश्नुते यथा नीलपीतलोहितोपाधिषु संचरन् स्फटिकः नीलादिवर्जि-
नः तद्वत् तस्माद्विचारतो दृश्यत्वादिना स्वप्नवन्मिथ्यात्वाद्व्यभिचारित्वाच्च नात्मा तैः संबध्यत इत्यर्थः ८ ९ १० आत्मापि देहोपीति प्रांचः वस्तुतस्तु
अयमपि मम आत्मा न भवतीति संबंधः अयमिति साभासो हंकारः सर्वेषामात्मत्वेन प्रसिद्धो मम आत्मा स्वरूपं न भवति मुकुरमुखवत् आभासत्वात् स



सोन्यस्य विषये राज्ञो वस्तुमिच्छाम्यहं विभो वचस्ते कर्तुमिच्छामि यथाशास्त्रं महीपते ४ इत्युक्तस्तु तदा राज्ञा ब्राह्मणेनयशस्विना मुहुरुष्णं विनिःश्वस्य नाकिंचित्प्रत्यभाषत ५ तमासीनं ध्यायमानं राजानममितौजसम् कश्मलं सहसागच्छद्भानुमंतमिव ग्रहः ६ समाश्वास्य ततो राजा विगते कश्मले तदा ततो मुहूर्तादिव तं ब्राह्मणं वाक्यमब्रवीत् ७ जनक उवाच पितृपैतामहे राज्ये वश्ये जनपदे सति विषयं नाधिगच्छामि विचिन्वन् पृथिवीमहम् ८ नाध्यगच्छं यथा पृथ्व्यां मिथिला मार्गिता मया नाध्यगच्छं यदा तस्यां स्वप्रजा मार्गिता मया ९ नाध्यगच्छं यदा तस्यां तदा मे कश्मलो भवत् ततो मे कश्मलस्यांते मतिः पुनरुपस्थिता १० तदा न विषयं मन्ये सर्वो वा विषयो मम आत्मापि चायं न मम सर्वा वा पृथिवी मम ११ यथा मम तथान्येषामिति मन्ये द्विजोत्तम उष्यतां यावदुत्साहो भुज्यतां यावदिष्यते १२ ब्राह्मण उवाच पितृपैतामहे राज्ये वश्ये जनपदे सति ब्रूहि कां मतिमास्थाय ममत्वं वर्जितं त्वया १३ कां वै बुद्धिं समाश्रित्य सर्वो वै विषयस्तव नावैषि विषयं येन सर्वो वा विषयस्तव १४ जनक उवाच अंतवंत इहावस्था विदिताः सर्वकर्मसु नाध्यगच्छमहं तस्मान्ममेदमिति यद्भवेत् १५ कस्येदमिति कस्य स्वमिति वेदवचस्तथा नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्भवेत् १६ एतां बुद्धिं समाश्रित्य ममत्वं वर्जितं मया शृणु बुद्धिं च यां ज्ञात्वा सर्वत्र विषयो मम १७

र्वा वा पृथिवी सर्वं दृश्यं मम आत्मा मदनन्यत्वात् मुकुरमुखवदेव अयमेव न्यायो ब्रह्मादिषु त्रिकांतेष्वित्याह यथेति
मायामनइंद्रियदर्पणेषु हि प्रतिबिंबितोह्य दृश्य आत्मा ईशसूत्रविराडात्मना दृश्यो नात्मा च भवति न वस्तुत इत्यर्थः ११ १२ १३ १४ आढ्यत्वदरिद्रत्वादयोव-
स्थाः १५ कस्येदमिति न कस्यचिदित्यर्थः अत्र मा गृधः कस्यस्विद्धनमिति श्रुतिं प्रमाणयति १६ आद्यत्वादेरंतवत्त्वाद्धनादिषु ममता मया त्यक्तेत्याह एता-
मिति देवाद्यर्थमेव विधिगृहीतस्य च मम गंधादीनामिच्छा नात्मभोगार्थं अतो भूम्यादय एव मम वशो तिष्ठंति न त्वहं तेषामित्याह शृणु इत्यादिना १७ ७

१८ १९ २० २१ २२ २३ २४ २५ त्वमस्येति अस्यचक्रस्य आत्मापि नायंनममसर्वावापृथिवीममेत्येवंरूपस्य धीसा धनकलापस्यब्रह्मलाभहेतोः दु
र्वारस्यअनेकांतिकस्यअनिवर्तिनः आत्यंतिकस्यसत्वनेमिनासत्वगुणरूपेणावरणेनचक्रधारास्थानीयेननिरुद्धस्यप्रवर्तकोमुख्यानुष्ठानं। २६ इ
त्याश्वमेधिकेपर्वणिटीकायांद्वात्रिंशोऽध्यायः ३२ समासाब्रह्मविद्यासस्साधनांजीवन्मुक्तस्यवस्थामाह नाहमित्यादिना तथेतियथादेहात्मवादिनः

नाहमात्मार्थमिच्छामिगंधान्घ्राणगतानपि तस्मान्मेनिर्जिताभूमिर्वशेतिष्ठतिनित्यदा १८ नाहमात्मार्थमिच्छामिरसाना
स्येपि वर्ततः आपोमेनिर्जितास्तस्माद्वशेतिष्ठंतिनित्यदा १९ नाहमात्मार्थमिच्छामिरूपंज्योतिश्चचक्षुषः तस्मान्मेनिर्जितं
ज्योतिर्वशेतिष्ठतिनित्यदा २० नाहमात्मार्थमिच्छामिस्पर्शान्त्वचिगताश्चये तस्मान्मेनिर्जितोवायुर्वशेतिष्ठतिनित्यदा २१ ना
हमात्मार्थमिच्छामिशब्दान्श्रोत्रगतानपि तस्मान्मेनिर्जिताःशब्दावशेतिष्ठंतिनित्यदा २२ नाहमात्मार्थमिच्छामिमनोनित्यं
मनोंतरं मनोमेनिर्जितंतस्माद्वशेतिष्ठतिसर्वदा २३ देवेभ्यश्चपितृभ्यश्चभूतेभ्योऽतिथिभिःसह इत्यर्थंसर्वएवेतिसमारंभाभ
वंतिवै २४ ततःप्रहस्यजनकंब्राह्मणःपुनरब्रवीत् त्वांजिज्ञासार्थमद्याहंविद्धिमांधर्ममागतम् २५ त्वमस्यब्रह्मलाभस्यदुर्वा
रस्यानिवर्तिनः सत्वनेमिनिरुद्धस्यचक्रस्यैकःप्रवर्तकः २६ इतिश्रीमन्महाभारते आश्वमेधिकेपर्वणिब्राह्मणगीतासु
द्वात्रिंशोऽध्यायः ३२ ब्राह्मणउवाच नाहंतथाभीरुचरामिलोकेयथात्वंमांतर्जयसेस्वबुध्या विप्रोस्मिमुक्तोस्मिव
नेचरोस्मिगृहस्थधर्माव्रतवांस्तथास्मि १ नाहमस्मियथामांत्वंपश्यसेचक्षुषाशुभम् मयाव्याप्तमिदंसर्वंयत्किंचिज्जगतीगतिम्
२ येकेचिज्जंतवोलोकेजंगमास्थावराश्चह तेषामामंतकंविद्धिदारूणामिवपावकम् ३ राज्यंपृथिव्यांसर्वस्यामथवापित्रिविष्ट
पे तथाबुद्धिरियंवेत्तिबुद्धिरेवधनंमम ४ एकःपंथाब्राह्मणानांयेनगच्छंतितद्विदः गृहेषुवनवासेषुगुरुवासेषुभिक्षुषु ५
लिंगैर्बहुभिरव्यग्रैरेकाबुद्धिरुपास्यते नानालिंगाश्रमस्थानांयेषांबुद्धिःशमात्मिका ६ तेभावमेकमायांतिसरितःसाग
रंयथा बुध्यायंगम्यतेमार्गःशरीरेणनगम्यते ७ आद्यंतवंतिकर्माणिशरीरंकर्मबंधनम् ८

पश्यसेकर्मव्यतिहारेतङ् त्वद्दृष्टा
रंमांत्वंस्ववृत्त्यायथासंगिनंपश्यसितथानाहमस्मीत्यर्थः १ आत्मनःसर्वात्मत्वंसर्वस्यचात्ममात्रत्वंज्ञानफलंप्रतिपादयतिसार्द्धेनमयेति २ ३
आप्नोति स्वाराज्यमित्यादिश्रुत्यर्थंसंगृण्हातिराज्यमिति ४ एकःपंथाःज्ञानरूपोनान्यः ब्राह्मणानांब्रह्मविदाम ५ ६ ७ ८ ५ ६

स्मभगेईश्वरि शरीरबंधनिर्मुक्तत्वात् परलोकः अनात्मलोकः तद्भावोमदात्मभावः तस्यभावोभावना ९ इत्याश्वमेधिकेटीकायांत्रयस्त्रिंशोऽध्यायः ३३.
उक्तमर्थंसंक्षिपतिनेदमिति १ मन्येजानीयाम् २ ब्राह्मणींबुद्धिंतपः मनननिदिध्यासनात्मकमालोचनम् श्रुतंवेदांतश्रवणम् आत्मावा अरेद्रष्टव्यः श्रोतव्योमंतव्योनिदिध्यासितव्यइति आत्मदर्शनानुवादेनश्रवणादिविधानात् ३ आक्षेपपूर्वकंज्ञेयस्वरूपमाह यदिदमित्यादिना यदिदमपरोक्षंक्षेत्रज्ञइतिसंज्ञितंजीवाख्यंससंगंरूपंतत् ब्रह्मणोऽसंगस्य लिंगंस्वरूपमितियत्तत्क्व नुनकथंचनजीवस्यब्रह्मभावःसंभवतीत्यर्थः अत्रोपपत्तिमाह ग्रहीतुमितियत् येननियंतुंशक्यंतत् नियाम्यंतस्यानिग्रहीतुर्लक्षणंस्वरूपंइतिक्वनुदृष्टंनक्वापीत्यर्थः य आत्मानमंतरोयमयतीतिजीवेशयोर्नियम्यनियामकत्वश्रवणात् भृत्यभर्त्रोरिवनतयोरभेदसंभावनापीतिभावः ४ उत्तरमाह अलिंगइति योयंक्षेत्रज्ञउक्तः

तस्मात्तेस्मभगेनास्तिपरलोककृतंभयम् तद्भावभावनिरतामममेवात्मानमेष्यसि ९ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिब्राह्मणगीतायांत्रयस्त्रिंशोऽध्यायः ३३ ब्राह्मण्युवाच नेदमल्पात्मनाशक्यंवेदितुंनाकृतात्मना बहु चाल्पंचसंक्षिप्तंविप्लुतंचमतंमम १ उपायंतंममब्रूहियेनैषालभ्यतेमतिः तन्मन्येकारणंत्वत्तो यतएषाप्रवर्तते २ ब्राह्मणउवाच अरणींब्राह्मणींविद्धिगुरुरस्योत्तरारणिः तपःश्रुतेभिमथ्नीतोज्ञानाग्निर्जायतेततः ३ ब्राह्मण्युवाच यदिदंब्रह्मणोलिंगंक्षेत्रज्ञइतिसंज्ञितम् ग्रहीतुंयेनयच्छक्यंलक्षणंतस्यतत्क्वनु ४ ब्राह्मणउवाच अलिंगोनिर्गुणश्चैवकारणंनास्यलक्ष्यते उपायमेववक्ष्यामियेनगृह्येतवानवा ५ सम्यगुपायोदृष्टश्चभ्रमरैरिवलक्ष्यते कर्मबुद्धिरबुद्धित्वाज्ज्ञानलिंगैरिवाश्रितम् ६

सः लिंगः एवंरूपइतिनिर्देशयोग्यंस्वरूपंतद्रहितः अन्यतोनिर्गुणः अस्यसगुणत्वंसालिंगत्वंचविनैवकारणंभ्रांत्यैवभातिनसत्यंविद्यतइत्यर्थः भ्रांत्यपगमेनतदधिगमेउपायमेववक्ष्यामि नवेतिचित्तशल्यभावे ५ सम्यगुपायोदृष्टश्चपूर्वोक्ताः श्रवणादयः तैः भ्रमरैरुपरिभ्रमद्भिरधःस्थंअगृहीतमपिसुरभिद्रव्यंलक्ष्यते एवंश्रवणादिभिरात्मालक्षणद्वारेणलक्ष्यतइत्यर्थः कोसावुपायः कर्मबुद्धिः कर्मशोधिताबुद्धिः कर्मभिरशोधितायांबुद्धौश्रवणाद्यभ्याससहस्रेणापिनगम्यतइतिभावः अबुद्धित्वादुक्तविधबुद्धिराहित्यात् मूढाअसंगमपिक्षेत्रज्ञंज्ञानलिंगैर्बुद्ध्यादिभिराश्रितंसंगिनमिवमन्यंते तद्दृक्तउपायेनश्रवणादिजन्ययाबुद्ध्यालक्ष्यतइतिसंबंधः ६ ७ ७

नेदंब्रह्मज्ञानंविधिनिषेधप्रधानं अहेयानुपादेयप्रत्यगात्मविषयत्वात् तथात्वेवास्वरूपनाशानित्यत्वेदुरपन्हवेस्यातां अपितुरज्जुदर्शनमशमत्वश्रव
णाभ्यांसर्पादर्शनत्वयोरिवबुध्यावाक्येनवाविद्याध्यारोपितकार्यकारणप्रपंचस्यनिराकरणसापेक्षमित्याह इदंकार्यमितिमोक्षेष्विति बहुवचनंमुक्त्य
पादानंभूतबुध्यादितत्वभेदात् ७ तेच यावंतः पंचसप्तएकादशत्रयोदशवातेषांप्रत्येकंव्यक्तिभेदात् शतशः सहस्रशोवाकल्पनीयाइत्याह यावंतइति अ
व्यक्तान्मायाविद्यादिरूपान् व्यक्तरूपान् शब्दादीन् उपेयप्रतिपत्यर्थाउपाया अव्यवस्थिताइतिन्यायेनशिष्यबोधार्थमं दमध्यमोत्तमाधिकारिभेदेनव्य
ष्टिमात्रकल्पनयावासमष्टिमात्रकल्पनयावातत्वमर्थयोरभेदंप्रत्यापयेन्नात्रवस्तुमंतोनात्मपदार्थाः संति येनमोक्षापादानानितार्किकादिवत्संख्यया

इदंकार्यमिदंनेतिनमोक्षेषूपदिश्यते पश्यतःशृण्वतोबुद्धिरात्मनोयेषुजायते ७ यावंतइहशक्येरंस्तावतोंशा
न्प्रकल्पयेत् अव्यक्तान्व्यक्तरूपांश्चशतशोथसहस्रशः ८ सर्वान्नानार्थयुक्तांश्चसर्वान्प्रत्यक्षहेतुकान् यतःपरंन
विद्येततत्तोभ्यासेभविष्यति ९ श्रीभगवानुवाच ततस्तुतस्याब्राह्मण्यामतिःक्षेत्रज्ञसंक्षये क्षेत्रज्ञानेनपरतः
क्षेत्रज्ञेभ्यःप्रवर्तते १० अर्जुनउवाच क्वनुसाब्राह्मणीकृष्णक्वचासौब्राह्मणर्षभः याभ्यांसिद्धिरियंप्राप्तातां
वुभौवदमेच्युत ११ श्रीभगवानुवाच मनोमेब्राह्मणंविद्धिबुद्धिंमेविद्धिब्राह्मणीं क्षेत्रज्ञइतियश्चोक्तःसो
हमेवधनंजय १२ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिब्राह्मणगीतायांचतुस्त्रिंशोऽध्यायः ३४ ॐ

परिच्छिद्येरन्नित्यर्थः ८ ९ ततइतिप्रथमार्थेतसिः यतःपरंअन्यन्नास्तितद्वस्तुभविष्यत्याधिकारी अभ्यासेशमाद्यभ्यासेपुष्कलेसति अत्रकं
ठगतविस्मृतचामीकरवद्ब्रह्मप्राप्तिः भवनंनोत्पाद्यत्वेनानित्यत्वापत्तेः ब्रह्मैवसत्ब्रह्माप्येतितत्त्वमसीत्यादिवाक्यंपथ्यः सिद्धवद्ब्रह्मभावश्रव
णादित्यर्थः क्षेत्रज्ञसंक्षयेजीवस्यपरमात्मनि प्रविलापनेक्षेत्रज्ञानेनैवक्षेत्रज्ञात्परं ज्ञायतइत्याह क्षेत्रेति क्षेत्रज्ञएवोपाधिविलयाद्ब्रह्मैवा
स्तीत्यर्थः १० ११ मनोमेचित्प्रतिबिंबगर्भंमनोजीव इत्यर्थः मनोमुक्तः क्षेत्रज्ञोहमेवब्रह्मैवेत्यर्थः १२ इतिश्रीमन्महाभारतेआश्व
मेधिकेपर्वणिनीलकंठकृतौभावार्थप्रकाशटीकायांचतुस्त्रिंशोऽध्यायः ३४ ॐ ॐ ॐ ॐ ॐ

पूर्वाध्यायांतेमनोमेब्राह्मणंविद्धिबुद्धिंमेविद्धिब्राह्मणीं क्षेत्रज्ञइतियश्चोक्तः सोहमेवधनंजयेतिमनोबुद्ध्योर्ब्रह्मवित्त्वेनतदुपलक्षितसकल
करणप्रकाश्यमर्थजातंब्रह्मेत्युक्तंयश्चतयोः साक्षीसच्चिदात्माहमितिचदर्शितम् तत्रप्रपंचः साक्षिचित्स्वरूपमयमपिपरंब्रह्मउततयोरन्यतरंयत्परं
ब्रह्मतन्मेवदेत्यर्जुनउवाच ब्रह्मयदिति आद्येपक्षेसप्रपंचंब्रह्मज्ञेयंद्वितीयेनिष्प्रपंचमितितत्रसूक्ष्मेनिष्प्रपंचेएवमेमनोरमतइतिस्वतुष्टिं
कथयति तेनसतांहि संदेहपदेषुवस्तुषुप्रमाणमंतःकरणस्यप्रवृत्तयइति न्यायेननिष्प्रपंचमेवशास्त्रार्थइतिज्ञापयति १ मोक्षसंयुक्तंयस्मि

अर्जुनउवाच ब्रह्मयत्परमंज्ञेयंतन्मेव्याख्यातुमर्हसि भवतोहिप्रसादेनसूक्ष्मेमेरमतेमतिः १ वासुदेवउवाच
अत्राप्युदाहरंतीममितिहासंपुरातनम् संवादंमोक्षसंयुक्तंशिष्यस्यगुरुणासह २ कश्चिद्ब्राह्मणमासीनमाचार्यंसंशि
तव्रतम् शिष्यःपप्रच्छमेधावीकिंस्विच्छ्रेयःपरंतप ३ भगवंतंप्रपन्नोहंनिःश्रेयसपरायणः याचेत्वांशिरसाविप्रयद्ब्रूयां
ब्रूहितन्मम ४ तमेवंवादिनंपार्थशिष्यंगुरुरुवाचह सर्वंतुतेप्रवक्ष्यामियत्रवैसंशयोद्विज ५ इत्युक्तःसकुरुश्रेष्ठगुरुणा
गुरुवत्सलः प्रांजलिःपरिपप्रच्छयत्तच्छृणुमहामते ६ शिष्यउवाच कुतश्चाहंकुतश्चत्वंतत्सत्यंब्रूहियत्परम्
कुतोजातानिभूतानिस्थावराणिचराणिच ७ केनजीवंतिभूतानितेषामायुश्चकिंपरम् किंसत्यंकिंतपोविप्रकेगुणाः
सद्भिरीरिताः ८ केपंथानःशिवाश्चस्युःकिंसुखंकिंचदुष्कृतम् एतान्मेभगवन्प्रश्नान्याथातथ्येनसुव्रत ९ वक्तुमर्ह
सिविप्रर्षेयथावदिहतत्त्वतः त्वदन्यःकश्चनप्रश्नानेतान्वक्तुमिहार्हति १० ब्रूहिधर्मविदांश्रेष्ठपरंकौतूहलंमम मोक्ष
धर्मार्थकुशलोभवाँल्लोकेषुगीयते ११ सर्वसंशयसंछेत्तात्वदन्योनचविद्यते संसारभीरवश्चैवमोक्षकामास्तथावयम् १२
वासुदेवउवाच तस्मैसंप्रतिपन्नाययथावत्परिपृच्छते शिष्यायगुणयुक्तायशांतायप्रियवर्तिने १३ छायाभूताय
दांतायतयतेब्रह्मचारिणे तान्प्रश्नानब्रवीत्पार्थमेधावीसधृतव्रतः गुरुःकुरुकुलश्रेष्ठसम्यक्सर्वानरिंदम १४

न्श्रुतेसद्योमुक्तिरे
वलभ्यतइत्यर्थः २ ३ ब्रूयांपृच्छामि ४ ५ ६ अहंत्वंइतिशास्यशासनकर्त्रोर्जीवेश्वरयोःप्रश्नः यच्चताभ्यांपरंअन्यत्सत्यंअबाधितंवस्तुतदपिब्रूहि
भूतानिवियदादीनिस्थावरादीनिभौतिकानि ७ भूतानिउभयविधानि किंपरमवसानंयस्यतत्किंतेषांलयस्थानमित्यर्थः किंसत्यंअबाधितंफ
लंकर्म तपःक्रियारूपंकायिकादिभेदेनात्रिविधं गुणाःसत्वादयःकिंस्वरूपाइत्यर्थः ८ सुखंसुख्यं प्रश्नान्वक्तुमर्हसीतिसंबंधः ९ कश्चकोपि १० ११
१२ १३ १४

स्ववाक्ये श्रद्धोत्पादनार्थमाख्यायिकामुखेन उत्तरयति ब्रह्मणेति इदं त्वया पृष्टं वेदविद्यां समाश्रित्य नतु स्वकल्पितं तत्वभूतस्य अबाधितस्यार्थस्य भावनं विचारो यस्मिन् तत् १५ ज्ञानं परं ब्रह्मविषयं उत्तमं तथा तपः संन्यासाख्यं उत्तमं ज्ञानतत्वं ज्ञानस्य तत्त्वं याथार्थ्यं घटादितत्वज्ञानव्यावृत्तये निराबाध्यमिति निर्गतः आसमंतात् बाधो यस्मात् तद्धि ब्रह्मज्ञानं बाध्यं न तथैतदित्यर्थः यश्च एनत् सर्वं सर्वभूतस्थं च आत्मानं संप्रज्ञातावस्थायां वेद स सर्वगतिः सर्वकामभाक् भवति तेषां सर्वेषु लोकेषु कामचारो भवतीति श्रुतेः सार्द्धश्लोकं वाक्यं १६ सहसंवासं निज्जडयोरेकलोलीभावं संप्रज्ञातं विवासं तयोः पृथक्त्वं शब्दत्वंपदार्थदर्शने एकत्वं ईश्वरादभेदं तस्यैव नानात्वं तयोर्भिन्नत्वव्यवहारे १७ न कामयते इति ममकाराभावः नाभिमन्यत इत्यभिमानाहंकारस्तदभावः तयोः सतोः जीवन्नेव मुच्यत इत्यर्थः १८ प्रधानं माया गुणाः सत्वादयः तेषां तत्वं कल्पितत्वस्वरूपयाथात्म्यं सर्वभूतानां

गुरुरुवाच ब्रह्मणोक्तमिदं सर्वमृषिप्रवरसेवितम् वेदविद्यां समाधाय तत्वभूतार्थभावनम् १५ ज्ञानं त्वेव परं ब्रह्म संन्यासं तप उत्तमम् यस्तु वेद निराबाधं ज्ञानतत्वं विनिश्चयात् सर्वभूतस्थमात्मानं स सर्वगतिरिष्यते १६ यो विद्वान् सहसंवासं विवासं चैव पश्यति तथैवैकत्वनानात्वे स दुःखात्परिमुच्यते १७ यो न कामयते किंचिन्न किंचिदभिमन्यते इहलोकस्थ एवैष ब्रह्मभूयाय कल्पते १८ प्रधानगुणतत्वज्ञः सर्वभूतविधानवित् निर्ममो निरहंकारो मुच्यते नात्र संशयः १९ अव्यक्तबीजप्रभवो बुद्धिस्कंधमयो महान् महाहंकारविटप इंद्रियांकुरकोटरः २० महाभूतविशेषश्च विशेषप्रतिशाखवान् सदापर्णः सदापुष्पः सदा शुभफलोदयः २१ आजीवः सर्वभूतानां ब्रह्मबीजः सनातनः एतज्ज्ञात्वा च तत्वेन ज्ञानेन परमासिना छित्वा चामरतां प्राप्य जहाति मृत्युजन्मनी २२

विधानं विधीयते उत्पाद्यते नेनेति विधानं कारणम् तदुभयतो मुच्यते १९ अव्यक्तं अज्ञानं तदेव बीजं प्रभवो मूलं अंकुरश्च यस्य बुद्धिर्महत्तत्वं तदेव स्कंधो यस्य अहंकारो विटपाः पल्लवा यस्य इंद्रियाण्येव अंकुरा अनर्थवल्ली पूर्वरूपभूताः कोटराणि छिद्राणि यस्य २० महाभूतानि वियदादीनि विशेषाः तिलकपुष्पकोरकस्थानीयो यस्येत्यर्थः विशेषाः स्थूलकार्याणि तान्येव प्रतिशाखाः उपशाखाः तद्वान् पर्णं उत्पद्यपतनशीलः संकल्पः पुष्पं कर्म फलं सुखादि २१ एतत् बीजभूतं ब्रह्म ज्ञात्वा तत्वानि अव्यक्तादीनि ज्ञानेन छित्वेति तेषामज्ञानकार्यत्वं रज्जूरगवदुक्तं जहातीत्यजाति सार्द्धश्लोकः एतेन ऊर्ध्वमूलार्थः स्मारितः २२

छ छ छ छ छ छ छ छ छ

भूतेति भूरादय आदिपदार्थाः तेषामर्थतत्त्वानां निश्चयः स्वरूपावधारणं यस्मिन् तं पुराकल्पं बहुकर्तृकमन्वाख्यानं २३ पदं पदनीयं अधिगंतव्यं सिद्धाः मुक्ताः २४ पुराकल्पमेवाह उपगम्येति २५ मार्गान् कर्मगतीः परिक्रम्य पुनः पुनर्गत्वा २६ २७ २८ क्रियात्कुर्वीत केनोऽस्माकं २९ प्रलयो देहनंदिनादि भूतलयः अपवर्गः आत्यंतिको भूतोच्छेदः मोक्षाख्यः प्रभवाप्ययो जन्ममृत्यू ३० यथागमं वेदानुसारि ३१ सत्यात् त्रैकालिकबाधरहितात् ब्रह्मणः भूतानि अव्यक्तादीनि स्थावराणि वियदादीनि चराणि जरायुजादीनि एतेन कुतश्चाहमिति श्लोकोक्तप्रश्नानामुत्तरमुक्तम् तपसा कर्मणा जीवंति इति हेतोः हि



भूतभव्यभविष्याद्धि धर्मकामार्थनिश्चयम् सिद्धसंघपरिज्ञातं पुराकल्पं सनातनम् २३ प्रवक्ष्येहं महाप्राज्ञ पदमुत्तममद्य ते बुद्ध्वा यदिह संसिद्धा भवंतीह मनीषिणः २४ उपगम्यर्षयः पूर्वं जिज्ञासंतः परस्परम् प्रजापतिर्भरद्वाजो गौतमो भार्गवस्तथा २५ वसिष्ठः कश्यपश्चैव विश्वामित्रोऽत्रिरेव च मार्गान्सर्वान्परिक्रम्य परिश्रांताः स्वकर्मभिः २६ ऋषिमांगिरसं वृद्धं पुरस्कृत्य तु ते द्विजाः ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषं २७ तं प्रणम्य महात्मानं सुखासीनं महर्षयः पप्रच्छुर्विनयोपेता नैःश्रेयसमिदं परम् २८ कथं कर्म क्रियात्साधुः कथं मुच्येत किल्बिषात् के नो मार्गाः शिवाश्च स्युः किं सत्यं किं च दुष्कृतम् २९ कौ चोभौ कर्मणां मार्गौ प्राप्नुयु दक्षिणोत्तरौ प्रलयं चापवर्गं च भूतानां प्रभवाप्ययौ ३० इत्युक्तः स मुनिश्रेष्ठैर्यदाह प्रपितामहः तत्तेहं संप्रवक्ष्यामि शृणु शिष्य यथागमं ३१ ब्रह्मोवाच सत्याद्भूतानि जातानि स्थावराणि चराणि च तपसा तानि जीवंति इति तद्विद्धि सुव्रताः स्वां योनिं संमतिक्रम्य वर्तंते स्वेन कर्मणा ३२ सत्यं हि गुणसंयुक्तं नियतं पंचलक्षणम् ३३ ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः सत्याद्भूतानि जातानि सत्यं भूतमिदं जगत् ३४ तस्मात्सत्यमया विप्रा नित्यं योगपरायणाः अतीतक्रोधसंतापा नियता धर्मसेतवः ३५ अन्योन्यनियतान्वैद्यान् धर्मसेतुप्रवर्तकान् तानहं संप्रवक्ष्यामि शाश्वतान् लोकभावनान् ३६

जाः स्वां योनिं ब्रह्म समतिक्रम्य ध्यान्याच्युताः विक्षेपावस्थां प्राप्य स्वकर्मणा वर्तंत इति सार्द्धः ३२ किं सत्यमित्यस्योत्तरमाह गुणसंयुक्तमित्यनेन निर्गुणं सत्यं एकमेव तत्र भेदहेतोर्गुणस्यैवाभावादिति दर्शितम् ३३ ब्रह्म ईश्वरः तपो धर्मः प्रजापतिर्जीवः भूतानि खादीनि जगत् जरायुजादि एतत् व्यावहारिकं गुणमयं सत्यपंचकम् ३४ यस्मात्तस्मात् सत्यमयाः सत्यप्रधानाः धर्मसेविनो भवंति ३५ अन्योन्यानियतान् परस्परभयेन धर्मातिक्रमशून्यान् वैद्यान् विद्यवतः तान् विप्रान् प्रतीति शेषः ३६ ५ ५ ५ ५ ५

चतस्रो धर्मार्थकाममोक्षप्रदा विद्याश्चतुर्विधास्ता एव चातुर्विध्यं तत्र प्रतिवर्णं प्रत्याश्रमं च पृथक् प्रवक्ष्यामीत्यनुषज्यते ३७ ३८ गदतः प्रोच्यमानाः
मया वक्ष्यमाणं पन्थानं निबोधत तेन च पथा परं पदं निबोधत ३९ आत्मानमधिकृत्य प्रवृत्तमाश्रमं अध्यात्मं संन्यासं परं पदं प्राहुरिति पूर्वेणान्वयः ४०
ज्योतिरादिकं विश्वं तावत् पश्यति यावत् अध्यात्मं संन्यासपूर्वकं नोपैति न लभते ४१ ४२ ४३ श्रद्धा आस्तिक्यबुद्धिः सैव धर्मस्य मुख्यं लक्षणं ज्ञाप-

चातुर्विध्यं तथा वर्णं चातुराश्रमिकान्पृथक् धर्ममेकं चतुष्पादं नित्यमाहुर्मनीषिणः ३७ पंथानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्वि
जाः नियतं ब्रह्मभावाय गतं पूर्वं मनीषिभिः ३८ गदतं तं मया द्येह पंथानं दुर्विदं परम् निबोधत महाभागा निखिलेन परं पदम् ३९
ब्रह्मचारिकमेवाहुराश्रमं प्रथमं पदम् गार्हस्थ्यं तु द्वितीयं स्यात् वानप्रस्थमतः परम् ४० ततः परं तु विज्ञेयमध्यात्मं परमं पदम्
ज्योतिराकाशमादित्यो वायुरिंद्रः प्रजापतिः नोपैति यावदध्यात्मं तावदेतान्न पश्यति ४१ तस्योपायं प्रवक्ष्यामि पुरस्तात्तं निबोधत
फलमूलानिलभुजां मुनीनां वसतां वने ४२ वानप्रस्थं द्विजातीनां त्रयाणामुपदिश्यते सर्वेषामेव वर्णानां गार्हस्थ्यं तद्विधीयते ४३
श्रद्धालक्षणमित्येवं धर्मं धीराः प्रचक्षते इत्येवं देवयाना वः पंथानः परिकीर्तिताः सद्भिरध्यासिता धीरैः कर्मभिर्धर्मसेतवः ४४ ए
तेषां पृथगध्यास्ते यो धर्मं संशितव्रतः कालात्पश्यति भूतानां सदैव प्रभवाप्ययौ ४५ अतस्तत्त्वानि वक्ष्यामि याथातथ्येन हेतुना वि
षयस्थानि सर्वाणि वर्तमानानि भागशः ४६ महानात्मा तथाव्यक्तमहंकारस्तथैव च इंद्रियाणि दशैकं च महाभूतानि पंच च ४७ विशे
षाः पंचभूतानामिति सर्गः सनातनः चतुर्विंशतिरेका च तत्त्वसंख्या प्रकीर्तिता ४८ तत्त्वानामथ यो वेद सर्वेषां प्रभवाप्ययौ स धी
रः सर्वभूतेषु न मोहमधिगच्छति ४९ तत्त्वानि यो वेदयते यथातथं गुणांश्च सर्वानखिलाश्च देवताः विधूतपाप्मा प्रविमुच्य बंधनं
स सर्वलोकानमलान्समश्नुते ५० इति श्रीमन्महाभारते आश्वमेधिके पर्वणि गुरुशिष्यसंवादे पंचत्रिंशोऽध्यायः ३५

कं श्रद्धाहीनं सर्वं व्यर्थमित्यर्थः देवयानाः देवयानमार्गप्राप्त्युपायः ४४ एतेषां अन्यतमं धर्मं यः पृथक् भिन्नं एकमेव अध्यास्ते दृढमाश्रयति सः कालात् क्रमे
ण चित्तशुद्धिपरिपाके सति भूतानां प्रभवाप्ययौ स्वनिष्ठाविति सदैव निमेषोन्मेषणमात्रे काले निरंतरं पश्यति एतेन दृष्टिरेव सृष्टिरित्युक्तं भवति ४५
हेतुना युक्त्या विषयस्थानि बुद्धिगोचराणि बुद्धिस्थानीत्यर्थः ४६ ४७ विशेषाः शब्दादयो विशेषगुणाः एका चेति पुरुषग्रहणं ४८ ४९ सर्वलोकान्समश्
नुते सार्वात्म्यं लभते य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीति श्रुतेः ५० इत्याश्वमेधिके टीकायां पंचत्रिंशोऽध्यायः ३५ ६ ७

उक्तान्येवतत्वानिविवरीतुमुत्तरोग्रंथआरभ्यतेतदितितत् तत्रतेषुतत्वेषुव्याख्यातेषुमध्ये अनुद्रिक्तांत्रिगुणं अव्यक्तंविंद्यात् साम्योपेतंगुणत्रयंअव्य
क्तंपदार्थः तच्चसर्वकार्यव्यापि ध्रुवंअविनाशि स्थिरंअचंचलंनिरारंभमितियावत् तदेवाव्यक्तंउद्रिक्तंसत् पंचधातुकंभूतपंचकंनवद्वारपुरंचविंद्यात्
तेषांतत्कार्यत्वात्पंचत्वादीनि नवतुभोक्तारंप्रतिविषयप्रवेशद्वाराणिपंचश्रोत्रादीनिमनोबुद्धिःप्राणोभिमानाख्योहंकारश्चपुरंशरीरम् १ परितःक्षि
प्यतेविषयभोगवासनयाजीवात्मायैस्तेपरिक्षेपाइंद्रियाणि मनसेवव्याकरणंव्यक्तीभावोयेषांतेसंकल्पयोनयोविषयाः तदात्मकंपुरंबुद्धिस्वामिकंचपुरं
म् एतदेवपुरंपरंब्रह्म तत्राध्यस्तत्वात् एकादशंइंद्रियंमनःतन्मात्रंच नकेवलंभोग्यमेवमनः काल्पितंअपितुभोक्ताभोग्यंभोगोपकरणंचसर्वंमनोमात्र
मित्यर्थः तद्वाइदंमनस्येवपरमंप्रतिष्ठितंयदिदंकिंचेतिश्रुतेः २ स्रोतांसिचित्तनद्याःप्रवाहाःत्रीणिशुक्लंहिंसाशून्यंधर्मप्रावण्यं कृष्णांहिंसाप्रावण्यम्

ब्रह्मोवाच तदव्यक्तमनुद्रिक्तंसर्वव्यापिध्रुवंस्थिरम् नवद्वारंपुरंविंद्यात्त्रिगुणंपंचधातुकम् १ एकादशपरिक्षेपंमनो-
व्याकरणात्मकम् बुद्धिस्वामिकमित्येतत्परमेकादशंभवेत् २ त्रीणिस्रोतांसियान्यस्मिन्नाप्यायंतेपुनःपुनः प्रनाड्यस्ति
स्र एवैताःप्रवर्तंतेगुणात्मिकाः ३ तमोरजस्तथासत्वंगुणानेतान्प्रचक्षते अन्योन्यमिथुनाःसर्वेतथान्योन्यानुजीविनः ४
अन्योन्यापाश्रयाश्चापितथान्योन्यानुवर्तिनः अन्योन्यव्यतिषक्ताश्चत्रिगुणाःपंचधातवः ५ तमसोमिथुनंसत्वंसत्वस्यमि
थुनंरजः रजसश्चापिसत्वंस्यात्सत्वस्यमिथुनंतमः ६ नियम्यतेतमोयत्ररजस्तत्रप्रवर्तते नियम्यतेरजोयत्रसत्वंतत्रप्रवर्त
ते ७ नैशात्मकंतमोविद्यात्त्रिगुणंमोहसंज्ञितम् अधर्मलक्षणंचैवनियतंपापकर्मसु ८

शुक्लंकृष्णांहिंसायुक्तप्रवृत्तिधर्मप्रावण्यंचेति ए
तानियस्मिन्चित्तेविद्यमानानितिसृभिःप्रनाडीभिःसंस्काररूपाभिःत्रिगुणात्मिकाभिराप्यायंतेपूर्यंतेताश्चतथैवपुनःपुनर्वर्ध्यंते ३ तत्रत्रीन्गुणान् अव्यक्ता
वयवभूतान्व्याख्यातितमइत्यादिना अन्योन्यमिथुनत्वंदंपतीवदेककार्योत्पादनं अन्योन्योपजीवित्वंबीजांकुरवत् ४अन्योन्यापाश्रयत्वंत्रिदंडविष्टंभवत् अन्यो
न्यानुवर्तित्वंप्रधानगुणभावेनराजभृत्यवत् अन्योन्यव्यतिषिक्तत्वंतेजोन्नवत् त्रिगुणाःगुणत्रयमयाःपंचधातवःपंचमहाभूतानिभौतिकानिवेत्यर्थः ५ मिथुनं
मथ्नतीतियोगात् अभिभावकंतमसउद्रेकेसत्वंनश्यतिसत्वस्योद्रेकेतमः एवंरजसउद्रेकेसत्वंनिवर्ततेसत्वस्योद्रेकेरजइतिज्ञेयं रजस्तमसोरूपरस्परोद्दीपक
त्वान्नान्योन्यमभिभावकत्वंभवतीतितत्मिथुनद्वयंप्रोक्तं ६ नियम्यतेकर्मकर्तरिप्रयोगःतिरोधीयतेइत्यर्थः रजसितिरोधानेतुतमोनवर्ततेअपितुसत्वमेव अ
प्रवृत्तिर्हितमसःकार्यंनतुप्रवृत्तिनिरोधइत्यर्थः ७ नैशात्मकमिति त्रिगुणमितीतरयोरविशेषणंत्रयाणामन्योन्यव्यतिषिक्तत्वस्योक्तत्वात् ८ ७

पर्यायोवैपरीत्यम् ९ लाघवंधर्मज्ञानादिरूपंसौष्टवम् १० गुणतत्त्वंकार्यस्वरूपं ११ स्वप्नोनिद्रास्तंभोगर्वः १२ निर्विशेषत्वंयुक्तायुक्तपरीक्षयाअभावः अंधत्वंसर्वेषांकरणानामयथावत्प्रतिपत्तिः जघन्यगुणः चांडालादिधर्मोहिंस्रत्वाशक्तावित्यादिः भिन्नवृत्तिताशीलभंगः १३ विकृताभावः विकृतस्यविविधक्रियारूपस्याभावः अप्रवृत्तिः १४ अचेतनाअबोधः गुरुत्वंआलस्यादिनागात्राणांजडत्वं सन्नभावत्वंनष्टभाक्तित्वंदेवादिषु अवाशित्वंआजितेंद्रि-

प्रकृत्यात्मकमेवाहूरजःपर्यायकारकम् प्रवृत्तंसर्वभूतेषुदृश्यमुत्पत्तिलक्षणम् ९ प्रकाशंसर्वभूतेषुलाघवंश्रद्दधानता सात्विकरूपमेवंतुलाघवंश्रद्दधानता सात्विकरूपमेवंतुलाघवंसाधुसंमितम् १० एतेषांगुणतत्त्वानिवक्ष्यंतेतत्वहेतुभिः समासव्यासयुक्तानितत्वतस्तान्निबोधत ११ संमोहोज्ञानमत्यागःकर्मणामविनिर्णयः स्वप्नःस्तंभोभयंलोभःस्वप्नःस्वकृतदूषणम् १२ अस्मृतिश्चाविपाकश्चनास्तिक्यंभिन्नवृत्तिता निर्विशेषत्वमंधत्वंजघन्यगुणवृत्तिता १३ अकृतेकृतमानित्वमज्ञानेज्ञानमानिता अमैत्रीविकृताभावोह्यश्रद्धामूढभावना १४ अनार्जवमसंज्ञत्वंकर्मपापमचेतना गुरुत्वंसन्नभावत्वमवाशित्वमवाग्गतिः १५ सर्वएतेगुणावृत्तास्तामसाःसंप्रकीर्तिताः येचान्येविहिताभावालोकेस्मिन्भावसंज्ञिताः तत्रतत्रनियम्यंतेसर्वेतेतामसागुणाः १६ परिवादकथानित्यंदेवब्राह्मणनिंदकाः अत्यागश्चाभिमानश्चमोहोमन्युस्तथाक्षमा १७ मत्सरश्चैवभूतेषुतामसंवृत्तमिष्यते वृथारंभाहियेकेचिद्वृथादानानियानिच १८ वृथाभक्षणमित्येतत्तामसंवृत्तमिष्यते अतिवादोतितिक्षान्वमात्सर्यमभिमानिता १९ अश्रद्दधानताचैवतामसंवृत्तमिष्यते एवंविधाश्चयेकेचिल्लोकेस्मिन्पापकर्मिणः २० मनुष्याभिन्नमर्यादास्तेसर्वेतामसाःस्मृताः तेषांयोनीःप्रवक्ष्यामिनियताःपापकर्मिणाम् २१ अवाङ्निरयभावायातिर्यङ्निरयगामिनः स्थावराणिचभूतानिपशवोवाहनानिच २२ क्रव्यादादंदशूकाश्चकृमिकीटविहंगमाः अंडजाजंतवश्चैवसर्वेचापिचतुष्पदाः २३ उन्मत्ताबधिरामूकायेचान्येपापरोगिणः मग्नास्तमसिदुर्वृत्ताःस्वकर्मकृतलक्षणाः २४ अवाक्स्रोतसइत्येतेमग्नास्तमसितामसाः २५ तेषामुत्कर्षमुद्रेकंवक्ष्याम्यहमतःपरम् यथातेसुकृतांल्लोकांल्लभंतेपुण्यकर्मिणः २६

यत्वं अवाग्गतिः

नीचकर्मानुरागः१६नियम्यंतेहिनियमेनउपतिष्ठंते १६ देवब्राह्मणवेदिका देवादिविषयिणी पाठांतरेस्पष्टोर्थः अक्षमेतिच्छेदः १७ १८ १९ २० २१ २२ अंडजाःअंडंअपांस्वभावःतज्जाः २३ २४अवाक्स्रोतसः अधोगमनार्हःचित्तप्रवाहोयेषांतेनथा २५ उत्कर्षंआरोहक्रमंउद्रेकंपुण्याविर्भावम् २६

अन्यथांप्रतिपन्नाः तिर्यक्स्थावरादियोनिंप्राप्ताः ब्राह्मणानांब्राह्मणैः कर्मिणः आग्निहोत्राद्यर्थंविद्विद्वाः हिंसिताः संतः २७ वैदिकेनसंस्कारेण ऊर्ध्वमायांति ततश्च्युताश्च ब्राह्मणादिजातिंलब्ध्वायतमानाइत्यादिद्वयोःसंबंधः २८ एतदेवस्पष्टयति अन्यथेति २९ चूचुकाःस्खलद्गिरः ३० शूद्रेति वैश्यादियोनिप्राप्तौ क्रोधदयस्तामसगुणास्तमोगुणस्त्रोतसि आयांतितेभ्य आत्मानंरक्षेदित्यर्थः ३१ कामेषुस्त्र्याद्यर्थेषु अभिषंगआसक्तिः ३२ अविद्यास्मितारागद्वेषाभिनिवेशाः पंचक्लेशा अत्रतमआदिशब्देनेभिधीयंते तेषुतामिस्रश्चतुर्थः क्रोधसंज्ञितो नतुद्वेषइत्यर्थः एवंअंधतामिस्रोपिनाभिनिवेशः किंतुमरणमेव तामिस्रः क्रोधउच्यतइतिपुनर्वचनंपरिभाषितार्थनिराकरणार्थम् तामिस्रांधतामिस्रपदाभ्यांक्रोधमरणेएवग्राह्येनतुरागजसौद्वेषाभिनिवेशा

अन्यथाप्रतिपन्नास्तुविद्वद्भिर्येचकर्मिणः स्वकर्मनिरतानांचब्राह्मणानांशुभैषिणाम् २७ संस्कारेणोर्ध्वमायांतियतमानाःसलोकताम् स्वर्गंगच्छंतिदेवानामित्येषावैदिकीश्रुतिः २८ अन्यथाप्रतिपन्नास्तेविबुधाःस्वेषुकर्मसु पुनरावृत्तिधर्माणस्तेभवंतीहमानुषाः २९ पापयोनिंसमापन्नाश्चांडालामूकचूचुकाः वर्णान्पर्यायशश्चापिप्राप्नुवंत्युत्तरोत्तरम् ३० शूद्रयोनिमतिक्रम्ययेचान्येतामसागुणाः स्रोतोमध्येसमागम्यवर्तंतेतामसेगुणे ३१ अभिषंगस्तुकामेषुमहामोहइतिस्मृतः ऋषयोमुनयोदेवामुह्यंत्यत्रसुखेप्सवः ३२ तमोमोहोमहामोहस्तामिस्रः क्रोधसंज्ञितः मरणंत्वंधतामिस्रस्तामिस्रःक्रोधउच्यते ३३ वर्णतोगुणतश्चैवयोनितश्चैवतत्वतः सर्वमेतत्तमोविप्राः कीर्तितंवोयथाविधि ३४ कोन्वेतद्बुध्यतेसाधुकोन्वेतत्साधुपश्यति अतत्वेतत्वदर्शीयस्तमसस्तत्वलक्षणम् ३५ तमोगुणाबहुविधाःप्रकीर्तितायथावदुक्तंचतमःपरावरम् नरोहियोवेदगुणानिमान्सदासतामसैः सर्वगुणैःप्रमुच्यते ३६ इतिश्रीमन्महाभारते आश्व॰ णिगुरुशिष्यसंवादेषट्त्रिंशोऽध्यायः ३६ ब्रह्मोवाच रजोहिवःप्रवक्ष्यामियाथातथ्येनसत्तमाः निबोधतमहाभागागुणवृत्तंचराजसम् १

वित्यर्थः ३३

तदेवाह वर्णइति एतत्तमआदिशब्दितमविद्यादिकंसर्वंतमएवज्ञेयंनतुतत्ररजोंशोस्ति तत्रयथा अविद्या एतस्मिंस्तद्बुद्धिरूपएवविपर्ययात्मत्वंतमः एवंतत्प्रभवा अस्मितादयोपितमएव तत्रापिअनात्मनिमहत्तत्वेस्मीत्यात्मबुद्धेःसत्वात् एवंरागोपि अप्रियेप्रियत्वाध्यासः क्रोधःशांतेप्रतीतिः अभिज्वलनाध्यासः एवंअमृतेनित्येमरिष्यामीति बुद्धिरित्येतेवर्णनःस्वरूपतः पाकतइतिपाठे फलतः गुणतः विपर्ययत्वतः योनितस्तामसत्वतश्चतमएव ३४ एतत्दुर्बोधमित्युक्तिपूर्वकंसामान्यतस्तमसोलक्षणमाह कइति ३५ तमोविकारागुणास्तमोगुणाः ३६ इत्याश्वमेधिकेटी॰ षट्त्रिंशोऽध्यायः ३६ रजोहीति

२ ३ ४ उग्रंनिष्ठुरं दारुणंहिंस्रत्वपरिभाषणंधिक्कृत्यभाषणम् ५ ६ व्यूहः व्यवहाररचनाकौशलम् ७ शरणेषुरक्षितृषु ८ अप्रत्ययः अविश्वासः ९ १०

संतापोरूपमायासः कस्वंदुःखंहिमातपौ ऐश्वर्यंविग्रहः संधिर्हेतुवादोरतिःक्षमा २ बलंशौर्यंमदोरोषोव्यायामकलहावपि
ईर्ष्येप्सापिशुनंयुद्धंममत्वंपरिपालनम् ३ वधबंधपरिक्लेशाः क्रयोविक्रयएवच निकृंतछिंधिभिंधीतिपरमर्मावकर्तनम् ४
उग्रंदारुणमाक्रोशः परचित्तानुशासनम् लोकचिंतानुचिंताचमत्सरः परिपालनम् ५ मृषावादोमृषादानंविकल्पः परिभाषण
म् निंदास्तुतिः प्रशंसाचप्रतापः परिधर्षणम् ६ परिचर्यानुशुश्रूषासेवातृष्णाव्यपाश्रयः व्यूहोनयः प्रमादश्चपरिवादः परिग्रहः
७ संस्कारायेचलोकेषुप्रवर्तंतेपृथक्पृथक् नृषुनारीषुभूतेषुद्रव्येषुशरणेषुच ८ संतापोव्यत्ययश्चैवव्रतानिनियमाश्चये
आशीर्युक्तानिकर्माणिपौर्तानिविविधानिच ९ स्वाहाकारोनमस्कारः स्वधाकारोवषट्क्रिया याजनाध्यापनेचोभेयजनाध्ययने
अपि १० दानंप्रतिग्रहश्चैवप्रायश्चित्तानिमंगलम् इदंमेस्यादिदंमेस्यात्स्नेहोगुणसमुद्भवः ११ अभिद्रोहस्तथामायानिकृतिर्मा
नएवच स्तैन्यंहिंसाजुगुप्साचपरितापः प्रजागरः १२ दंभोदर्पोथरागश्चभक्तिः प्रीतिः प्रमोदनम् द्यूतंचजनवादश्चसंबंधाः स्त्रीकृता
श्चये १३ नृत्यवादित्रगीतानांप्रसंगायेचकेचन सर्वएतेगुणाविप्राराजसाः संप्रकीर्तिताः १४ भूतभव्यभविष्याणांभावानांभुवि
भावनाः त्रिवर्गनिरतानित्यंधर्मोर्थःकामइत्यपि १५ कामवृत्ताः प्रमोदंतेसर्वकामसमृद्धिभिः अर्वाक्स्रोतसइत्येतेमनुष्यारज
सावृताः १६ अस्मिँल्लोकेप्रमोदंतेजायमानाः पुनः पुनः प्रेत्यभाविकमीहंतऐहलौकिकमेवच १७ ददतिप्रतिगृण्हंतिजपंत्यथ-
त्यथजुव्हति १८ रजोगुणावोबहुधानुकीर्तितायथावदुक्तंगुणवृत्तमेवच नरोपियोवेद गुणानिमान्सदासराजसैः सर्वगुणैर्वि
मुच्यते १९ इतिश्रीमन्महाभारते आश्वमेधिकेपर्वणिगुरुशिष्यसंवादेसप्तत्रिंशोध्यायः ३७ ब्रह्मोवाच
अतः परंप्रवक्ष्यामितृतीयंगुणमुत्तमम् सर्वभूतहितंलोकेसतांधर्ममनिंदितम् १ आनंदः प्रीतिरुद्रेकः प्राकाश्यंसुखमेवच
अकार्पण्यमसंरंभः संतोषः श्रद्दधानता २ क्षमाधृतिरहिंसाचसमतासत्यमार्जवम् अक्रोधश्चानसूयाचशौचंदाक्ष्यंपरा
क्रमः ३

११ परिनाम्यकस्वजनवेकल्यानिभिमोदाहः पाठांतरेपरिवादः सर्वनिंदा १२ १३ १४ १५ अर्वाक्स्वर्गादधः भूमेरुपरिप्रवाहोयेषांतेनथा
१६ प्रेत्यभाविकंजन्मांतरीयंकुशलम् १६ १७ १८ १९ इत्याश्वमेधिकेटीकायांसप्तत्रिंशोध्यायः ३७ अतइति १ उद्रेकउन्नतिः असंरंभः निर्भ
यत्वम् २ ३

मुधेतिशास्त्रीयज्ञानादेर्वैयर्थ्यंज्ञात्वायुक्तधर्मोयोगिधर्मोयोभवतिसोमुत्रात्मनि अत्यंतंअविनाशीपदमश्नुते ४ ५ ६ हर्षःपुत्रजन्मादिजंसुखम् तुष्टिः अलंबुद्धिः शांतिकर्मणिमुक्त्युपविशक्तिः आर्जवेनप्रवृत्तिः ७ उपेक्षा औदासीन्यम् ८ ९ दानादीनांवैयर्थ्यंजानंतः येब्रह्मयोनिस्थाः वेदकारणब्रह्मणिनिष्ठावंतः तएवसाधुदर्शिनोनान्ये १० पापानिकर्माणिराजसतामसानि तनूःशरीराणिकुर्वतेयोगबलेनानेकशरीरस्रष्टारोभवंति ११ ईशित्वादिकं अणिमादीनामप्युपलक्षणम् मनःविकुर्वते अनेकाकारंकुर्वंतिनतुनिगृण्हंतीत्यर्थः १२ ऊर्ध्वस्रोतसऊर्ध्वगमनपराः प्रकृत्याभो-

मुधाज्ञानंमुधावृत्तंमधासेवामुधाश्रमः एवंयोयुक्तधर्मःस्यात्सोमुत्रात्यंतमश्नुते ४ निर्ममोनिरहंकारोनिराशीःसर्वतःसमः अकामभूतइत्येवसतांधर्मःसनातनः ५ विश्रंभोन्हीस्तितिक्षाचत्यागःशौचमतंद्रिता आनृशंस्यमसंमोहोदयाभूतेष्वपैशुनम् ६ हर्षस्तुष्टिर्विस्मयश्चविनयःसाधुवृत्तिता शांतिकर्मणिशुद्धिश्चशुभाबुद्धिर्विमोचनं ७ उपेक्षाब्रह्मचर्यंचपरित्यागश्चसर्वशः निर्ममत्वमनाशीस्त्वमपरिरक्षतधर्मता ८ मुधादानंमुधायज्ञोमुधाधीतंमुधाव्रतम् मुधाप्रतिग्रहश्चैवमुधाधर्मोमुधातपः ९ एवंवृत्तास्तुयेकेचिल्लोकेस्मिन्सत्वसंश्रयाः ब्राह्मणाब्रह्मयोनिस्थास्तेधीराःसाधुदर्शिनः १० हित्वासर्वाणिपापानिनिःशोकाह्यथमानवाः दिवंप्राप्यतुतेधीराःकुर्वतेवैततस्तनूः ११ ईशित्वंचवशित्वंचलघुत्वंमनसश्चते येकुर्वंतिमहात्मानोदेवास्त्रिदिवगाइव १२ ऊर्ध्वस्रोतसइत्येतेदेवावैकारिकाःस्मृताः विकुर्वंतःप्रकृत्यावैदिवंप्राप्तास्ततस्ततः १३ यद्यदिच्छंतितत्सर्वंभजंतेविभजंतिच इत्येतत्सात्विकंवृत्तंकथितंवोद्विजर्षभाः १४ प्रकीर्तिताःसत्वगुणाविशेषतोयथावदुक्तंगुणवृत्तमेवच नरस्तुयोवेदगुणानिमान्सदागुणानुसंभुंक्तेनगुणैःसयुज्यते १५ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिगुरुशिष्यसंवादेअष्टत्रिंशोऽध्यायः ३८

ब्रह्मोवाच नैवशक्यागुणावक्तुंपृथक्त्वेनैवसर्वशः अविच्छिन्नानिदृश्यंतेरजःसत्वंतमस्तथा १ अन्योन्यमथरज्यंतेह्यन्योन्यंचार्थजीविनः अन्योन्यमाश्रयाःसर्वेतथान्योन्यानुवर्तिनः २

गजसंस्कारेणपुनर्भोगार्थेचित्तंविकुर्वंतः नानाकारेणपरिणामयंतः भजंतेस्वयंप्राप्नुवंतिविभजंतिसंकल्पितं अन्येभ्योपिप्रयच्छंतीतिसार्धः १३ १४ १५ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिटीकायांअष्टत्रिंशोऽध्यायः ३८. नैवतिअविच्छिन्नानि अपृथक्भूतानि इदंसात्विकमिदंराजसमिदंतामसंकार्यमितिव्यपदेशस्तुतत्तद्गुणप्राधान्यमात्रादित्यर्थः १ २

यावदिति कियदपि विवृद्धं सत्त्वं तमसे नानियम्यते अतो नियम्यनियामकयोस्तयोः साम्यं भवतीत्यर्थः एवं प्रवर्तनात्मकं रजो मोहप्रकाशात्मकाभ्यां तमःसत्त्वाभ्यां उद्रिक्ते सति ते उभे रुणद्धि ३ संहत्य मिश्रीभूय यात्रां व्यवहारं कुर्वते यतः संघचारिणः संहतस्वभावाश्चरंति एवंविधा अपि हेत्वहेतुभिर्वर्तंते वैषम्येणेति शेषः ४ एतदेवाह उद्रेकेति उद्रेक उद्बोधकसामग्रीसत्त्वे यदाधिक्यं तदभावे अन्यूनं व्यतिरिक्तं अनधिकं च सर्वशः सर्वेषां रूपं समानं भवतीत्यर्थः ५ व्यतिरिक्तं अधिकं यत्र श्वसूकरादौ तिर्यग्भावं च आधिक्यम् ६ ७ ८ सत्त्वं इंद्रियाणां योनिः सा च वैकारिकी वैकारिकाहंकारसंबंधिनी प्रका

यावत्सत्त्वं रजस्तावद्वर्तते नात्र संशयः यावत्तमश्च सत्त्वं च रजस्तावदिहोच्यते ३ संहत्य कुर्वते यात्रां सहिताः संघचारिणः संघातवृत्तयो ह्येते वर्तंते हेत्वहेतुभिः ४ उद्रेकव्यतिरिक्तानां तेषामन्योन्यवर्तिनाम् वक्ष्यते तद्यथान्यूनं व्यतिरिक्तं च सर्वशः ५ व्यतिरिक्तं तमो यत्र तिर्यग्भावगतं भवेत् अल्पं तत्र रजो ज्ञेयं सत्त्वमल्पतरं तथा ६ उद्रिक्तं च रजो यत्र मध्यस्रोतोगतं भवेत् अल्पं तत्र तमो ज्ञेयं सत्त्वमल्पतरं तथा ७ उद्रिक्तं च यदा सत्त्वमूर्ध्वस्रोतोगतं भवेत् अल्पं तत्र तमो ज्ञेयं रजश्चाल्पतरं तथा ८ सत्त्वं वैकारिकी योनिरिंद्रियाणां प्रकाशिका न हि सत्त्वात्परो धर्मः कश्चिदन्यो विधीयते ९ ऊर्ध्वं गच्छंति सत्त्वस्था मध्ये तिष्ठंति राजसाः जघन्यगुणसंयुक्ता यांत्यधस्तामसा जनाः १० तमः शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमम् इत्येवं त्रिषु वर्णेषु विवर्तंते गुणास्त्रयः ११ दूरादपि हि दृश्यंते सहिताः संघचारिणः तमः सत्त्वं रजश्चैव पृथक्त्वेनानुशुश्रुम १२ दृष्ट्वा त्वादित्यमुद्यंतं कुचराणां भयं भवेत् अध्वगाः परितप्येयुरुष्णतो दुःखभागिनः १३ आदित्यः सत्त्वमुद्रिक्तं कुचरास्तु तथा तमः परितापोऽध्वगानां च राजसो गुण उच्यते १४ प्राकाश्यं सत्त्वमादित्यः संतापो राजसो गुणः उपप्लवस्तु विज्ञेयस्तामसस्तस्य पर्वसु १५ एवं ज्योतिःषु सर्वेषु निवर्तंते गुणास्त्रयः पर्यायेण च वर्तंते तत्र तत्र तथा तथा १६ स्थावरेषु तु भावेषु तिर्यग्भावगतं तमः राजसास्तु विवर्तंते स्नेहभावस्तु सात्त्विकः १७

शिका इंद्रियद्वारा शब्दादीनामिति शेषः धर्मो धर्महेतुः विधीयते शास्त्रे प्रकाश्यते ९ १० ११ दूरादिति तामसे शूद्रेऽपि रजःसत्त्वयोर्दर्शनात् गुणाः संघचारिण एव एवमन्यत्र १२ स्वतः प्रकाशकस्याप्यादित्यादेः तमोरजःकार्यभयसंतापहेतुत्वात्तत्रापि त्रिगुणात्त्रीपकत्वं वर्ततं इत्यर्थः कुत्सितं कर्म चरंतीति कुचराश्चौराः १३ १४ तत्स्वरूपमपि त्रिगुणात्मकमित्याह प्राकाश्यमिति १५ न तदस्ति पृथिव्यां चेत्यादि श्लोकस्यायं प्रपंचः एवमित्यादि १६ स्थावराणामतिमूढत्वात्तत्र तमसस्तिर्यग्भावं आधिक्यं गतं दृश्यते राजसाः भरणीयत्वकटुत्वाम्लत्वादयः विवर्तंते कालेन द्रव्यांतरयोगेन पाकादिना वा सात्त्विकस्तु स्नेहः वन्ह्यादेरुद्दीपकत्वेन प्रकाशकत्वात् १७

१८ १९ २० २१ २२ तमआदीनिद्वाविंशतिरव्यक्तस्यनामधेयानि २३ २४ २५ २६ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिटीकायांऊनचत्वारिंशोऽ
ध्यायः ३९ एवंचतुर्भिरध्यायैःव्यस्तसमस्तगुणनिरूपणद्वारातत्साम्यावस्थारूपमव्यक्तंप्रपंचितंइदानींमहत्तत्वंनिरूपयतिअव्यक्तादित्यध्यायेन



अहस्त्रिधातुविज्ञेयंत्रिधारात्रिर्विधीयते मासार्द्धमासवर्षाणिऋतवःसंधयस्तथा १८ त्रिधादानानिदीयंतेत्रिधायज्ञःप्रवर्तते
स्त्रिधालोकास्त्रिधादेवास्त्रिधाविद्यास्त्रिधागतिः १९ भूतंभव्यंभविष्यंचधर्मोर्थःकामएवच प्राणापानावुदानश्चाप्येतएवत्रयोगु
णाः २० पर्यायेणप्रवर्तंते तत्रतत्रतथातथा यत्किंचिदिहलोकेस्मिन्सर्वमेतत्त्रयोगुणाः २१ त्रयोगुणाःप्रवर्तंतेह्यव्यक्तानित्यमेव
तु सत्वंरजस्तमश्चैवगुणसर्गःसनातनः २२ तमोव्यक्तंशिवंधामरजोयोनिःसनातनः प्रकृतिर्विकारःप्रलयःप्रधानंप्रभवाप्ययो २३
अनुद्रिक्तमनूनंवाप्यकंपमचलंध्रुवम् सदसच्चैवतत्सर्वमव्यक्तंत्रिगुणंस्मृतम् २४ ज्ञेयानिनामधेयानिनरैरध्यात्मचिंतकैः २५ अ
व्यक्तनामानिगुणांश्चतत्वतोयोवेदसर्वाणिगतींश्चकेवलाः विमुक्तदेहःप्रविभागतत्ववित्समुच्यतेसर्वगुणैर्निरामयः २६
इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिगुरुशिष्यसंवादेऊनचत्वारिंशोऽध्यायः ३९ ब्रह्मोवाच अव्यक्तात्पूर्वमु
त्पन्नोमहानात्मामहामतिः आदिर्गुणानांसर्वेषांप्रथमःसर्गउच्यते १ महानात्मामतिर्विष्णुर्जिष्णुःशंभुश्चवीर्यवान् बुद्धिःप्र
ज्ञोपलब्धिश्चतथाख्यातिर्धृतिःस्मृतिः २ पर्यायवाचकैःशब्दैर्महानात्माविभाव्यते तंजानन्ब्राह्मणोविद्वान्प्रमोहंनाधिगच्छ-
ति ३ सर्वतःपाणिपादश्चसर्वतोक्षिशिरोमुखः सर्वतःश्रुतिमांल्लोकेसर्वंव्याप्यसतिष्ठति ४ महाप्रभावःपुरुषःसर्वस्यहृदिनि
श्रितः अणिमालघिमाप्राप्तिरीशानोज्योतिरव्ययः ५ तत्रबुद्धिविदोलोकेसद्भावनिरताश्चये ध्यानिनोनित्ययोगाश्चसत्य
संधाजितेंद्रियाः ६ ज्ञानवंतश्चयेकेचिदलुब्धाजितमन्यवः प्रसन्नमनसोधीरानिर्ममानिरहंकृताः ७ विमुक्ताःसर्वएवैतेम
हत्त्वमुपयांत्युत आत्मनोमहतोवेदयःपुण्यांगतिमुत्तमाम् ८ अहंकारात्प्रसूतानिमहाभूतानिपंचवै पृथिवीवायुराकाश
मापोज्योतिश्चपंचमम् ९

गुणानांगुणकार्याणां १ २ ३ सर्वतइतिगीतासुयत्ज्ञेयमुक्तंतन्महानात्मैवेतिव्यनक्ति मुरव्यंतुज्ञेयमव्यक्ता
त्परमेवेतिज्ञापयितुम् ४ ५ अयंमेवदहराद्युपासकानामुपास्यइत्याहतत्रेत्यादिना तत्रमहत्यात्मनिलोकाअतीता आनागतावर्तमानाश्चसंति या
श्चास्येहास्तियच्चनास्तिसर्वंतदत्रगत्वाविंदतइतिश्रुतेः ६ सद्भावनिरताश्चयेतेमहत्त्वमुपयांतीत्यन्वयः ७ ८ ९ ५ ५ ५ ३

१० ११ १२ १३ इत्याश्वमेधिके पर्वणि टीकायां चत्वारिंशोऽध्यायः ४० कार्यस्य कारणादनन्यत्वं वदन् महान्तमेवाहंकारतामापन्नं विवृणोतियइति १ भूतादिरितितस्यैवाहंकारस्य तामसस्यान्वर्थासंज्ञा वैकारिकइतिविकारात् महतोजातइतिव्युत्पत्तेः तस्यैवराजसोनाम सचतैजसःप्रवृत्त्यात्मकस्यविकारः चेतनार्धयितेस्मिन्निति चेतनाधातुश्चेतनापुरुषइत्यर्थः प्रजानांसर्गोयस्मात् अतः प्रजासर्गत्वात्प्रजापतिरप्ययमेव २ देवानांइंद्रियाणांश्रोत्रादीनांमनसश्चप्रभवउत्पत्तिस्थानं स्वयमपिदेवोदीव्यन्क्रीडन्त्रिलोककृत् अहमितियोभिमन्यतेसोहंकारः ३ एषःसमष्टिरूपोऽनिरुद्धाख्यः

तेषुभूतानियुज्यंतेमहाभूतेषुपंचसु तेशब्दस्पर्शरूपेषुरसगंधक्रियासुच १० महाभूतविनाशांतेप्रलयेप्रत्युपस्थिते सर्वेषांप्राणभृतांधीरामहदुत्पद्यतेभयम् ११ सधीरःसर्वलोकेषुनमोहमधिगच्छति विष्णुरेवादिसर्गेषुस्वयंभूर्भवतिप्रभुः १२ एवंहियोवेदगुहाशयंप्रभुंपरंपुराणंपुरुषंविश्वरूपम् हिरण्मयंबुद्धिमतांपरांगतिंसबुद्धिमानबुद्धिमतीत्यतिष्ठति १३ इतिश्रीमन्महाभारते आश्वमेधिकेपर्वणिगुरुशिष्यसंवादेचत्वारिंशोऽध्यायः ४० ब्रह्मोवाच यउत्पन्नोमहान्पूर्वमहंकारःसउच्यते अहमित्येवसंभूतोद्वितीयःसर्गउच्यते १ अहंकारश्चभूतादिर्वैकारिकइतिस्मृतः तैजसश्चेतनाधातुःप्रजासर्गःप्रजायते २ देवानांप्रभवोदेवोमनसश्चत्रिलोककृत् अहमित्येवतत्सर्वमभिमंतासउच्यते ३ अध्यात्मज्ञानतृप्तानांमुनीनांभावितात्मनाम् स्वाध्यायक्रतुसिद्धानामेषलोकःसनातनः ४ अहंकारेणाहरतोगुणानिमान् भूतादिरेवंसृजतेसभूतकृत् वैकारिकःसर्वमिदंविचेष्टते स्वतेजसारंजयतेजगत्तथा ५ इतिश्रीमन्महाभार० आश्व० गुरु० दे एकचत्वारिंशोऽध्यायः ४१ ब्रह्मोवाच अहंकारात्प्रसूतानिमहाभूतानिपंचवै पृथिवीवायुराकाशमापोज्योतिश्चपंचमम् १ तेषुभूतानिमुह्यंतिमहाभूतेषुपंचसु शब्दस्पर्शनरूपेषुरसगंधक्रियासुच २

सर्वेषांसिद्धानांलोकःप्राप्यंस्थानम् ४ अहंकारेणत्रिगुणमयेनगुणान् शब्दादीन् आदरतोभोक्तुमिच्छतः पुरुषस्य भूतादिस्तामसोहंकारःसृजतेभूतानिव्योमादीनि अतएवसभूतकृत् वैकारिकःसर्वाणि इंद्रियाणिसृष्ट्वातैः दर्शनस्पर्शनादिकांक्रियांकरोति तैजसः कर्मेंद्रियाणिपंचप्राणांश्चसृष्ट्वातद्द्वारासर्वंभोक्तृवर्गंरंजयतीति ५ इतिश्रीमन्महाभारते आश्वमेधिकेपर्वणिटीकायांएकचत्वारिंशोऽध्यायः ४१ अहंकारात्तामसात् पृथिव्यादीनांपाठक्रमोनविवक्षितः १ एतेषुयेशब्दादयःसंतितेषुनिमित्तभूतेषुभूतानिमानुषादीनिमुह्यंति तेप्रसिद्धाः योगिनोपिमुह्यंतीत्यध्याहृत्ययोज्यं

महाभूतानां देहाकाराणां विनाशो मरणं तदंते भयं नारकं तथा प्रलये च देवानां दिनादौ प्रत्युपस्थिते दाहशोषादिजं महत् प्राणिनां भयम् ३ तत्र मरणस्य सर्वप्रत्यक्षत्वात्तदुपेक्ष्य प्रलयमाह यदिति उत्तरोत्तरं अनुलोमं आकाशवाय्वग्निसलिलपृथिवीक्रमेण ४ तत इति द्विविधानि भूतानि स्थूलानि सूक्ष्माणि च तत्र यैः योगबलेन सूक्ष्मेषु स्थूलानां प्रविलापनं कृतं ते तन्मात्रशरीराः संतो न स्थूलेषु भूतेषु नश्यत्सु विनश्यंतीत्यर्थः ५ ननु कोशनाशे कोशकार इव स्थूलनाशे सूक्ष्माणि कथं न नश्यंतीत्याशंक्याह शब्द इति शब्दादयो विषयाः क्रियाश्च तद्ग्रहणरूपाः करणनित्याः करणात्मना मनोमात्रेण रूपेण नित्याः अविनाशिन्यः कारणनित्या इति पाठेपि कारणं दहराकाशाख्यं सोपाधिब्रह्म तद्रूपेण नित्याः मोहसंज्ञिताः स्थूला अनित्या अनृतत्वात् त इमे सत्याः कामा अनृतापिधाना इति श्रुतिर्हि सूक्ष्माणां सत्यत्वं तत्पिधायकानां स्थूलानामनृतत्वं चाह तस्मा धर्मयुक्तं धीरा न लीयंते कदाचनेति ६ अनित्यानां लक्षणमाह सार्द्धेन लो

महाभूतविनाशांते प्रलये प्रत्युपस्थिते सर्वप्राणभृतां धीरा महदभ्युद्यते भयम् ३ यद्यस्माज्जायते भूतं तत्र तत्प्रविलीयते लीयंते प्रतिलोमानि जायंते चोत्तरोत्तरम् ४ ततः प्रलीने सर्वस्मिन् भूते स्थावरजंगमे स्मृतिमंतस्तदा धीरा न लीयंते कदाचन ५ शब्दस्पर्शस्तथा रूपं रसो गंधश्च पंचमः क्रियाकरणनित्याः स्यु रनित्या मोहसंज्ञिताः ६ लोभप्रजनसंभूता निर्विशेषा ह्यकिंचनाः मांसशोणितसंघाता अन्योन्यस्योपजीविनः ७ बहिरात्मान इत्येते दीनाः कृपणजीविनः ८ प्राणापानावुदानश्च समानो व्यान एव च अंतरात्मनि चाप्यते नियताः पंच वायवः वाङ्मनोबुद्धिभिः सार्द्धमिदमष्टात्मकं जगत् ९

भेति लोभो लब्धुमिच्छा तस्य प्रजनं प्रजाफललोभपूर्वकं कर्मेत्यर्थः तस्मात्संभूताः स्युक्ता इति पाठे कर्मबद्धाः निर्विशेषाः सर्वेषां पांचभौतिकत्वाविशेषात् अकिंचनाः नास्ति किंचन वस्तु सत् यासु ताः रज्जूरगवत् तुच्छा इत्यर्थः अन्योन्ये तु जीवो जीवस्य जीवनमित्यर्थात् नश्वराः ७ बहिरात्मानः स्थूलशरीराणि दीनाः क्षुद्रा अपटुताः कृपणाजीविनः बाह्यसाधनजीवनाः ८ नित्यानि यावन्मोक्षस्थायीनि भूतान्याह सार्द्धेन प्राणेति अंतरात्मा चितिच्छायायुक्तो हंकाराख्यो जीवः प्राणादिपंचकं वाङ्मनोबुद्धित्रयं चेत्यष्टा उपाधित्वेन नियता नियमेन संबद्धाः एतदष्टकात्मकं जगत् अयं भावः मनसा ह्येव पश्यति मनसा शृणोतीत्यादिश्रुतेः चक्षुः श्रोत्रात्मकं मन एव सर्वकरणरूपम् करणानां च प्राणेभ्यो देवा देवेभ्यो लोका इति च चक्षुरादिभ्यः सूर्यादीनां तेभ्यो रूपादीनां चोत्पत्तिश्रवणेन सर्वहेतुतया सर्वात्मकत्वादेतावन्मात्रं जगदिति युक्तमेवोक्तं अष्टात्मकं जगदिति ९ ७९ ७९

त्वगिति एनंयेनदहंतिसाविद्वान् ब्रह्मयातियस्मादन्यत् भूयोधिःकतरंनास्ति १० ११ एतदेवविस्तरेणप्रपंचयाति एकादशेत्यादिना १२ १३ १४ १५ उभयत्रउभयेष्वपिइंद्रियेषुमनोनुगतमितिशेषः मन्यंतेकृतकृत्याभवंतीत्यर्थः १७ सर्वेसर्वाणींद्रियाणिप्रत्येकंविविधानि भूतं आकाशादिः इंद्रियमध्यात्म

त्वक्घ्राणश्रोत्रचक्षूंषिरसनावाक्चसंयताः विशुद्धंचमनोयस्यबुद्धिश्चाव्यभिचारिणी १० अष्टौयस्याग्नयोह्येतेनदहंतेमनःसदा सतद्ब्रह्मशुभंयातितस्माद्भूयोनविद्यते ११ एकादशचयान्याहुरिंद्रियाणिविशेषतः अहंकारात्प्रसूतानितानिवक्ष्याम्यहंद्विजाः श्रोत्रंत्वक्चक्षुषीजिह्वानासिकाचैवपंचमी पादौपायुरुपस्थश्चहस्तौवाग्दशमीभवेत् १३ इंद्रियग्रामइत्येषमनएकादशंभवेत् एतंग्रामंजयेत्पूर्वंततोब्रह्मप्रकाशते १४ बुद्धींद्रियाणिपंचाहुःपंचकर्मेंद्रियाणिच श्रोत्रादीन्यपिपंचाहुर्बुद्धियुक्तानितत्वतः १५ अविशेषाणिचान्यानिकर्मयुक्तानियानितु उभयत्रमनोज्ञेयंबुद्धिस्तद्द्वादशीभवेत् १६ इत्युक्तानींद्रियाण्या त्मन्येकादशयथाक्रमम् मन्यंतेकृतमित्येवंविदित्वातानिपंडिताः १७ अतःपरंप्रवक्ष्यामिसर्वंविविधमिंद्रियम् आकाशंप्रथमंभूतंश्रोत्रमध्यात्ममुच्यते १८ अधिभूतंतथाशब्दादिशस्तत्राधिदैवतम् द्वितीयंमारुतोभूतंत्वगध्यात्मंचविश्रुता १९ स्प्रष्टव्यमधिभूतंचविद्युत्तत्राधिदैवतम् तृतीयंज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते २० अधिभूतंततोरूपंसूर्यस्तत्राधिदैवतम् चतुर्थमापोविज्ञेयाजिह्वाचाध्यात्ममुच्यते २१ अधिभूतंरसश्चात्रसोमस्तत्राधिदैवतम् पृथिवीपंचमंभूतंघ्राणश्चाध्यात्ममुच्यते २२ अधिभूतंतथागंधोवायुस्तत्राधिदैवतम् एषुपंचसुभूतेषुत्रिषुयश्चविधिःस्मृतः २३ अतःपरंप्रवक्ष्यामिसर्वंविविधमिंद्रियम् पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्वदर्शिनः २४ अधिभूतंतुगंतव्यंविष्णुस्तत्राधिदैवतम् अवाग्गतिरपानश्चपायुरध्यात्ममुच्यते २५ अधिभूतंविसर्गश्चमित्रस्तत्राधिदैवतम् प्रजनःसर्वभूतानामुपस्थोध्यात्ममुच्यते २६ अधिभूतंयथाशक्रंदैवतंचप्रजापतिः हस्तावध्यात्ममित्याहुरध्यात्मविदुषोजनाः २७ अधिभूतंचकर्माणिशक्रस्तत्राधिदैवतम् वैश्वदेवीततःपूर्वावागध्यात्ममिहोच्यते २८ वक्तव्यमधिभूतंचवन्हिस्तत्राधिदैवतम् अध्यात्मंमनइत्याहुःपंचभूतात्मचारकम् २९ अधिभूतंचसंकल्पश्चंद्रमाश्चाधिदैवतम् अहंकारस्तथाध्यात्मंसर्वसंसारकारकम् ३०

मं भूतगुणःशब्दादिरधिभूतम् इंद्रियानुग्राहिकोदेवतादिग्गादिरधिदैवंसर्वत्र ज्ञेयम् १८ १९ २० २१ २२ त्रिषुअध्यात्माधिभूताधिदैवेषु २३ सर्वंकर्मेंद्रियम् २४ २५ २६ २७ २८ २९ ३०

महार्णवंमहार्णवसमंघोरम् एतदेवनिमित्तभूतंसत्सृष्टिसंहारबोधानांहेतुर्भवति ५९ इंद्रियाणांनिरोधेनइदंशरीरंत्यजन्सतः नित्यंविद्यमानानपिका
मादींस्त्यजति ६० एतेस्थूलदेहस्थाः प्रकाशप्रवृत्तिमोहानिमित्तत्वेनत्रिगुणाः निर्जिताःयोगबलेनातिक्रामिताः परंब्राह्मम् ६१ ६२ मनसिहृदयपुंडरीके
आत्मनिशरीरे ६३ एकधात्वंपदार्थसाक्षात्कारेणबहुधावैश्वरूपेण ६४ रूपाणिस्वशरीराणिशतशः पश्यति दीपाद्दीपशतंयथासद्यः वर्ततेएवंयोगिसंक

एतन्महार्णवंघोरमगाधंमोहसंज्ञितम् विक्षिपेत्संक्षिपेच्चैवबोधयेत्सामरंजगत् ५९ कामंक्रोधंभयंलोभमभिद्रोहमथानृ
तम् इंद्रियाणांनिरोधेनसततस्त्यजतिदुस्त्यजान् ६० यस्यैतेनिर्जितालोकेत्रिगुणाःपंचधातवः व्योम्नितस्यपरंस्थानमानंत्य
मथलक्ष्यते ६१ पंचेंद्रियमहाकूलांमनोवेगमहोदकाम् नदींमोहह्रदांतीर्त्वाकामक्रोधावुभौजयेत् ६२ ससर्वदोषनिर्मुक्तस्ततः
पश्यतितत्परम् मनोमनसिसंधायपश्यन्नात्मानमात्मनि ६३ सर्ववित्सर्वभूतेषुविंदत्यात्मानमात्मनि एकधाबहुधाचैवविकु-
र्वाणस्ततस्ततः ६४ ध्रुवंपश्यतिरूपाणिदीपाद्दीपशतंयथा सवैविष्णुश्चमित्रश्चवरुणोग्निःप्रजापतिः ६५ सहिधाताविधाताच
सप्रभुःसर्वतोमुखः हृदयंसर्वभूतानांमहानात्माप्रकाशते ६६ तंविप्रसंघाश्चसुरासुराश्चयक्षाःपिशाचाःपितरोवयांसि रक्षो-
गणाभूतगणाश्चसर्वेमहर्षयश्चैवसदास्तुवंति ६७ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिगुरुशिष्यसंवादेद्विचत्वा
रिंशोऽध्यायः ४२ ब्रह्मोवाच मनुष्याणांतुराजानःक्षत्रियोमध्यमोगुणः कुंजरोवाहनानांचसिंहश्चारण्यवासिना
म् १ अविःपशूनांसर्वेषामहिस्तुबिलवासिनाम् गवांगोवृषभश्चैवस्त्रीणांपुरुषएवच २ न्यग्रोधोजंबुवृक्षश्चपिप्पलःशाल्म
लिस्तथा शिंशपामेषशृंगश्चतथाकीचकवेणवः ३ एतेद्रुमाणांराजानोलोकेस्मिन्नात्रसंशयः हिमवान्पारियात्रश्चसह्योविंध्य
स्त्रिकूटवान् ४ श्वेतोनीलश्चभासश्चकोष्ठवांश्चैवपर्वतः गुरुस्कंधोमहेंद्रश्चमाल्यवान्पर्वतस्तथा ५ एतेपर्वतराजानोगणा
नांमरुतांतथा सूर्योग्रहाणामधिपोनक्षत्राणांचचंद्रमाः ६

ल्पमात्रादनेकानिशरीराणिप्रवर्तंते सएकधाभवतित्रिधाभवतीत्यादिश्रु
तेः प्रदीपवदावेशइतिन्यायाच्च ६५ कथमेकंयोगिनः सामर्थ्यमुदेतीत्याशंक्यतस्यैवेश्वरत्वान्नैवमित्याह सहीति अतएवचानन्याधिपतिरितिन्या
यश्चात्रानुसंधेयः ६६ ६७ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिटीकायांद्विचत्वारिंशोऽध्यायः ४२ अस्यैवानन्याधिपतेर्योगिनःईश्व
रत्वसमर्थनार्थंविभूतीराह मनुष्याणामित्यादिना ब्राह्मणाधर्मसेतवइत्यंतेन मध्यमोगुणः रजोगुणप्रधानः १ २ ३ ४ ५ ६

७ ८ ९ १० ११ १२ ईश्वरत्वंऐश्वर्यंनरादीनांहरिरेवेत्यर्थः १३ १४ भगदेवाःकामुकाः नैरनुस्मृतानांस्त्रीणांसर्वासांमध्येमाहेश्वरीवामलोचनेतिसंबंधः १५ रतीनांप्रीतिसुखानांवसुमत्यः धनवत्यः धनलाभगर्वितंयत्प्रीतिसुखंतदेवंमहदित्यर्थः १६ १७ १८ १९ एवंविद्वान्विश्वैश्वर्यंप्राप्नोतीत्युक्तम् इदानींविद्वत्त्वप्राप्तिसाधनान्याह अहिंसेति २० २१ शब्दलक्षणमित्यादयोदृष्टांताः २२ भारतीपरकीयाविद्यास्वरव्यंजनसंस्कारवतीशब्देनैवलक्ष्यते २३ विधेयमा

यमःपितॄणामधिपःसरितामथसागरः अंभसांवरुणोराजामरुतामिंद्रउच्यते ७ अर्कोधिपतिरुष्णानांज्योतिषामिंदुरुच्यते अग्निर्भूतपतिर्नित्यंब्राह्मणानांबृहस्पतिः ८ ओषधीनांपतिःसोमोविष्णुर्बलवतांवरः त्वष्टाधिराजोरूपाणांपशूनामीश्वरःशिवः ९ दीक्षितानांतथायज्ञोदेवानांमघवातथा दिशामुदीचीविप्राणांसोमोराजाप्रतापवान् १० कुबेरःसर्वरत्नानांदेवतानांपुरंदरः एष भूताधिपःसर्गःप्रजानांचप्रजापतिः ११ सर्वेषामेवभूतानामहंब्रह्ममयोमहान् भूतंपरतरंमत्तोविष्णोर्वापिनविद्यते १२ राजाधिराजःसर्वेषांविष्णुर्ब्रह्ममयोमहान् ईश्वरत्वंविजानीध्वंकर्तारमकृतंहरिम् १३ नरकिंनरयक्षाणांगंधर्वोरगरक्षसाम् देवदानवनागानांसर्वेषामीश्वरोहिसः १४ भगदेवानुयातानांसर्वासांवामलोचना माहेश्वरीमहादेवीप्रोच्यतेपार्वतीहिसा १५ उमादेवींविजानीध्वंनारीणामुत्तमांशुभां रतीनांवसुमत्यस्तुस्त्रीणामप्सरसस्तथा १६ धर्मकामाश्चराजानोब्राह्मणाधर्मसेतवः तस्माद्राजाद्विजातीनांप्रयतेतेहरक्षणे १७ राज्ञांहिविषयेयेषामवसीदंतिसाधवः हीनास्तेस्वगुणैःसर्वैःप्रेत्यचोन्मार्गगामिनः १८ राज्ञांहिविषयेयेषांसाधवःपरिरक्षिताः तेस्मिल्लोकेप्रमोदंतेसुखंप्रेत्यचभुंजते १९ प्राप्नुवंतिमहात्मान इतिवित्तद्विजर्षभाः अतऊर्ध्वंप्रवक्ष्यामिनियतंधर्मलक्षणम् २० अहिंसापरमोधर्मोहिंसाचाधर्मलक्षणा प्रकाशलक्षणादेवामनुष्याःकर्मलक्षणाः २१ शब्दलक्षणमाकाशंवायुस्तुस्पर्शलक्षणः ज्योतिषांलक्षणंरूपमापश्चरसलक्षणाः २२ धारिणीसर्वभूतानांपृथिवीगंधलक्षणा स्वरव्यंजनसंस्काराभारतीशब्दलक्षणा २३ मनसोलक्षणंचिंताचिंतोक्ताबुद्धिलक्षणा मनसाचिंतितानर्थान्बुद्ध्याचेहव्यवस्यति २४ बुद्धिर्हिव्यवसायेनलक्ष्यतेनात्रसंशयः लक्षणंमनसोध्यानमव्यक्तंसाधुलक्षणम् २५ प्रवृत्तिलक्षणोयोगो ज्ञानंसंन्यासलक्षणम् तस्मात्ज्ञानंपुरस्कृत्यसंन्यसेदिहबुद्धिमान् २६

हमनसइति इदंकर्तव्यंनवेत्यादिविचाराश्चिंतातयामनोनामकंतत्त्वंलक्ष्यते चिंतितानपिबुद्ध्या परीक्ष्यतेव्यवस्यतिनिश्चिनोति २४ एतदेवाहबुद्धिर्हीति व्यवसायेनइदमित्थमेवेतिनिश्चयेन मनसाश्चित्तस्य ध्यानंलोकतःशास्त्रतोवानुभूतस्यविषयस्यपुनःपुनःउद्बोधकंस्मातिअसतिवाय त्स्फुरणंतत्चित्तस्यलक्षणं एवंमनोबुद्धिचित्तानांव्यक्तानिलक्षणान्युक्तानि साध्नोतीतिसाधुःपुरुषः तस्यलक्षणंअव्यक्तंनकेनचिदसौव्यज्यतेअपितुस्वयंप्रकाशतेइत्यर्थः २५ एवंमनआदिभ्योविवेचितस्यपुरुषस्याधिगमोपायंकर्मनिंदापूर्वकमाह प्रवृत्तीति योगःकर्माणि २६

द्वंद्वंमानापमानादि अतीतोतिक्रांतः २७ गुणानांभूतेंद्रियादीनां धर्मस्वरूपंलक्षणानिसंयुक्तंसंयोगाश्च तेषांसमाहारः धर्मलक्षणसंयुक्तंउक्तम् धर्मः स्थिरत्वादिकंलक्षणंशब्दादिकंसंयुक्तं अन्योन्यंव्यतिरिक्तत्वं इदानींतेषांग्रहणंकयादेवतयानुगृहीतेनकेनकरणेन कोवागुणोगृह्यतेइतिवक्ष्यते २८ पार्थिवइति विधीयतेअनुग्रहंकार्यते २९ धातुःसारः रसरूपः ३० ३१ ३२ ३३ मनसइति यथातेजोगुणोरूपंस्वाश्रयसहितं सूर्यानुगृहीतेनचक्षुषा गृह्यतेएवंमनोगुणश्चितास्वाश्रयसहिता चेतनाधातुनाजीवेनानुगृहीतयाप्रज्ञयाप्रकृष्टज्ञस्याधीवृत्तिविशेषेणगृह्यतेमनोज्ञाने इतिगुणगुणिनोर्मनश्चिं तयोरभेदाभिप्रायेणोक्तम् ३४ एवंबुद्धिरध्यवसायेनस्वरूपेणगृह्यते एवंमहान् ज्ञानेनशुद्धसत्वरूपेणस्वरूपेणैवगृह्यते नतुकरणांतरेणइंद्रियवत् न न्वहेतुःनिश्चित्यग्रहणादिति यथारूपदर्शनेनकार्येणचक्षुरिंद्रियमस्तीतिज्ञायतेनतुतद्दृश्यतेऽतींद्रियत्वात् एवंबुद्धिमहांतो इदमित्थमेवेति अस्मीति

संन्यासीज्ञानसंयुक्तः प्राप्नोतिपरमांगतिम् अतीतोद्वंद्वमभ्येतितमोमृत्युजरातिगः २७ धर्मलक्षणसंयुक्तमुक्तंवोविधिवन्मया गुणानांग्रहणंसम्यक्वक्ष्याम्यहमतःपरम् २८ पार्थिवोयस्तुगंधोवैघ्राणेनहिसगृह्यते घ्राणस्थश्चतथावायुर्गंधज्ञानेविधीयते २९ अपांधातूरसोनित्यंजिह्वयासतुगृह्यते जिह्वास्थश्चतथासोमोरसज्ञानेविधीयते ३० ज्योतिषश्चगुणोरूपंचक्षुषातच्चगृह्यते च क्षुस्थश्चतदादित्योरूपज्ञानेविधीयते ३१ वायव्यस्तुसदास्पर्शस्त्वचाप्रज्ञायतेचसः त्वक्स्थश्चैवसदावायुःस्पर्शनेसविधीयते ३२ आकाशस्यगुणोघोषःश्रोत्रेणचसगृह्यते श्रोत्रस्थाश्चदिशःसर्वाःशब्दज्ञानेप्रकीर्तिताः ३३ मनसश्चगुणश्चिंताप्रज्ञयासतुगृ ह्यते हृदिस्थश्चेतनाधातुर्मनोज्ञानेविधीयते ३४ बुद्धिरध्यवसायेनज्ञानेनचमहांस्तथा निश्चित्यग्रहणंव्यक्तमव्यक्तेनात्रसंशयः ३५ अलिंगग्रहणोनित्यःक्षेत्रज्ञोनिर्गुणात्मकः तस्मादलिंगःक्षेत्रज्ञःकेवलंज्ञानलक्षणः ३६ अव्यक्तंक्षेत्रलिंगस्थंगुणानांप्रभ वाप्ययम् सदापश्याम्यहंलीनंविजानामिशृणोमिच ३७ पुरुषस्तद्विजानीतेतस्मात्क्षेत्रज्ञउच्यते गुणवृत्तंतथावृत्तंक्षेत्रज्ञःपरिप श्यति ३८

चैवंरूपेणनिश्चयेनालिंगेनैवतयोःस्वरूपंव्यक्तंवस्तुतस्तुव्यक्तमेवइंद्रियत्वेनातींद्रियत्वात् ३५ एवंबुद्धेश्चक्षुर्वदतींद्रियत्वंसूर्यवत्स्वप्र काश्यत्वंचोक्तंयस्तुतांगृण्हातितमाह अलिंगेति लिंगद्वारांग्रहणंबुध्यादेरुक्तंक्षेत्रज्ञस्यतुननतथास्वयंज्योतिष्वादित्यर्थः ज्ञानलक्षणः उपलब्धिमात्रस्वरू पः नतूपलब्धिलिंगःअलिंगत्वात् ३६ क्षेत्रज्ञपदमपिक्षेत्रोपलब्धिमात्रवाचिनतुतदुपलब्धिवाचीत्याह अव्यक्तमिति अव्यक्तांतंक्षेत्रम् तथागुणानां कार्यरूपाणांउत्पत्तिप्रलयंचप्रभवाप्ययमिति समाहारः अहंसाक्षी लीनःस्वाध्यस्तेनकर्ताछादितत्वात् अग्राह्यः क्षेत्रलिंगस्थमिति पाठेक्षेत्रलिंगेस्थू लसूक्ष्मशरीरेस्थितंगुणानांसत्वादीनांउत्पत्त्यादिना...यं अव्यक्तंलीनमप्यहंपश्यामि ३७ गुणवृत्तंप्रकाशप्रवृत्तिमोहादि ३८

तदेवआदिमध्यावसानांतं उत्पत्त्यादिनाबद्धम् अंतशब्दोबद्धत्ववाची अतिअदिबंधनेइत्यस्यरूपं उह्यमानंचगुणवृत्तमेव सृज्यमानाइति परिणामि
नः कूटस्थंनपश्यंत्यपितुकूटस्थएवतान्प्रकाशयतीत्यर्थः ३९ सत्त्वं आत्मानं गुणभूतानांभोग्यानां पचम्यर्थेषष्ठी परंसत्यमितिसंबंधः ४० गुणान्दृश्या
न् सत्त्वंबुद्धिंदर्शनेकरणभूतांपरित्यज्यक्षेत्रज्ञंपरमात्मानंविशति ४१ ४२ इत्याश्वमेधिकेपर्वणिटीकायांत्रिचत्वारिंशोऽध्यायः ४३ क्षेत्रज्ञ
प्रवेशरूपस्यमोक्षस्यनित्यत्वंस्वरूपमात्रत्वंचवक्तुंयज्जन्मादिमत्तदनित्यंकर्मप्राप्यंचेतितत्सर्वमनुक्रामति यदादीति आदिमध्यपर्यंतम् जन्मादिमत्

आदिमध्यावसानांतंसृज्यमानमचेतनम् नगुणाविदुरात्मानंसृज्यमानाःपुनःपुनः ३९ नसत्त्वंविंदतेकश्चित्क्षेत्रज्ञस्त्वेवविंद-
ति गुणानांगुणभूतानांयत्परंपरमंमहत् ४० तस्माद्गुणांश्चतत्त्वज्ञःपरित्यज्यैहधर्मवित् क्षीणदोषोगुणातीतःक्षेत्रज्ञंप्रविशत्यथ ४१
निर्द्वंद्वोनिर्नमस्कारोनिःस्वाहाकारएवच अचलश्चानिकेतश्चक्षेत्रज्ञःसपरोविभुः ४२ इतिश्रीमन्महाभारते आश्वमेधिके
पर्वणिगुरुशिष्यसंवादेत्रिचत्वारिंशोऽध्यायः ४३ ब्रह्मोवाच यदादिमध्यपर्यंतंग्रहणोपायमेवच नामलक्षणसंयुक्तंस
र्वंवक्ष्यामितत्त्वतः १ अहःपूर्वंततोरात्रिर्मासाःशुक्लादयःस्मृताः श्रवणादीनिऋक्षाणिऋतवःशिशिरादयः २ भूमिरादिस्तुगंधानां
रसानामापएवच रूपाणांज्योतिरादित्यस्पर्शानांवायुरुच्यते ३ शब्दस्यादिस्तथाकाशमेषभूतकृतोगुणः अतःपरंप्रवक्ष्यामिभूताना
मादिमुत्तमं ४ आदित्योज्योतिषामादिरग्निर्भूतादिरुच्यते सावित्रीसर्वविद्यानांदेवतानांप्रजापतिः ५ ॐकारःसर्ववेदानांवच
सांप्राणएवच यदस्मिन्नियतंलोकेसर्वंसावित्रिरुच्यते ६ गायत्रीच्छंदसामादिःप्रजानांसर्गउच्यते गावश्चतुष्पदामादिर्मनुष्याणां
द्विजातयः ७ श्येनःपतत्रिणामादिर्यज्ञानांहुतमुत्तमम् सरीसृपाणांसर्वेषांज्येष्ठःसर्पोद्विजोत्तमाः ८ कृतमादिर्युगानांचसर्वेषां-
नात्रसंशयः हिरण्यंसर्वरत्नानामोषधीनांयवास्तथा ९ सर्वेषांभक्ष्यभोज्यानामन्नंपरममुच्यते द्रवाणांचैवसर्वेषांपेयानामाप-
उत्तमाः १० स्थावराणांतुभूतानांसर्वेषामविशेषतः ब्रह्मक्षेत्रंसदापुण्यंप्लक्षःप्रथमतःस्मृतः ११ अहंब्रह्मापतीनांचसर्वेषांनात्रसं
शयः ममविष्णुरचिंत्यात्मास्वयंभूरितिसःस्मृतः १२ पर्वतानांमहामेरुःसर्वेषामग्रजःस्मृतः दिशांचप्रदिशांचोर्ध्वादिक्पूर्वा
प्रथमातथा १३ तथात्रिपथगागंगानदीनामग्रजास्मृता तथासरोदपानानांसर्वेषांसागरोऽग्रजः १४ ग्रहणेउपायोस्त्यस्यतत् ग्रहणो
पायंकर्मसाध्यं तत्सर्ववक्ष्यामि १ २ ३ ४ अग्निर्जाठररूपीभूतानांजरायुजांडजानांयऊष्मारूपीप्रस्वेदवृष्टिहेतुतयास्वेदजोद्भिज्जानां ५ सिंहावलोक-
नेनसावित्रींव्याचष्टे उपासनार्थं नियतंजप्यं ब्राह्मणक्षत्रियादिम्लेच्छांतानांतत्सर्वंसावित्रिपदवाच्यम् ६ सर्गःसृष्ट्यादिकालः ७ हुतं अग्नौब्राह्मणे वा
देवतोद्देशेनदत्तम् सर्पोवासुकिः ८ ९ १० ११ १२ १३ सरोदपानानांसरसांकूपादीनांचसंधिरार्षः १४ ७ ७ ७

ईश्वरः रुद्रः १५ १६ १७ १८ १९ २० २१ २२ इत्याश्वमेधिकेपर्वणिटीकायांचतुश्चत्वारिंशोऽध्यायः ४४ अध्यायद्वयेनज्ञानोपायान् धर्मान्विवृ ण्वज्ञानांकालचक्राधीनत्वंदर्शयति बुद्धीत्यादिना अत्रनूतनत्वपुराणत्वादिवदतीतत्वानागतत्वादिरपिद्रव्यस्यैवधर्मइत्यतीतानागतादिव्यवहारहेतुर्द्रव्यमेवनतुकालोनामषष्ठः पदार्थस्तदर्थमेष्टव्यइतिमन्वानोदेहरूपंद्रव्यमेवकालचक्रत्वेनवर्णयति बुद्धिसारमित्यादिविशेषणयुक्तंकालचक्रंप्रवर्ततइति नवमेनान्वयः बुद्धिरेवसारउपादेयांशोयस्मिन् मनस्तंभमनसास्तंभेनेवधृतम् महाभूतपरिस्कंधंपंचभूतसमूहात्मकम् स्कंधःस्यान्नृपतौवंशेसांपरायसमूहयोरितिमेदिनी निवेशपरिवेशनंरथ्येवयत्रनेमिवदावरणभूता १ संभवउत्पत्तिस्थानम् देशकालाभ्यांविचरतितथाश्रमःखेदःव्यायामस्तद्धेतुः

देवदानवभूतानांपिशाचोरगरक्षसाम् नरकिंनरयक्षाणांसर्वेषामीश्वरः प्रभुः १५ आदिर्विश्वस्यजगतोविष्णुर्ब्रह्ममयोमहान् भूतंपरतरंयस्मात्त्रैलोक्येनेहविद्यते १६ आश्रमाणांचसर्वेषांगार्हस्थ्यंनात्रसंशयः लोकानामादिरव्यक्तंसर्वस्यांतस्तदेवच १७ अहान्यस्तमयांतानिउदयांताचशर्वरी सुखस्यांतंसदादुःखंदुःखस्यांतंसदासुखम् १८ सर्वेक्षयांतानिचयाःपतनांताःसमुच्छ्रयाः संयोगाश्चवियोगांतामरणांतंचजीवितम् १९ सर्वंकृतंविनाशांतंजातस्यमरणंध्रुवम् अशाश्वतंहिलोकेस्मिन्सदास्थावरजंगमम् २० इष्टंदत्तंतपोधीतंव्रतानिनियमाश्चये सर्वमेतद्विनाशांतंज्ञानस्यांतोनविद्यते २१ तस्मात् ज्ञानेनशुद्धेनप्रशांतात्माजितेंद्रियः निर्ममोनिरहंकारोमुच्यतेसर्वपाप्मभिः २२ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिगुरुशिष्यसंवादेचतुश्चत्वारिंशोऽध्यायः ४४ ब्रह्मोवाच बुद्धिसारंमनस्तंभमिंद्रियग्रामबंधनम् महाभूतपरिस्कंधंनिवेशपरिवेशनम् १ जराशोकसमाविष्टंव्याधिव्यसनसंभवम् देशकालविचारीदंश्रमव्यायामनिस्वनम् २ अहोरात्रपरिक्षेपंशीतोष्णपरिमंडलम् सुखदुःखांतसंक्लेशंक्षुत्पिपासावकीलनम् ३ छायातपविलेखंचनिमेषोन्मेषविह्वलम् घोरमोहजनाकीर्णंवर्तमानमचेतनम् ४ मासार्द्धमासगणितंविषमंलोकसंचरम् तमोनियमपंकंचरजोवेगप्रवर्तकम् ५

दुर्गगमनादिः २ परिक्षेपश्चालकःपरिमंडलंपरिवेषः अंतःसंश्लेषःसंधिः अवकीलकाः अंतःप्रविष्टाःशंकवः ३ छायातपोमेघसंतापोविलेखोउत्खातासौयत्रतत् छायातपविलेखम् निमेषमात्रेणउन्मेषमात्रेणचविह्वलंव्याकुलं घोरंबीभत्संमोहजलंअश्रु शोकव्याप्तमित्यर्थः वर्तमानंसदागति अचेतनंजडं ४ मासादिनाकालेनपरिमितम् विषमंकदाचिन्मनुष्याकारम् कदाचित्पश्वाकारंकदाचिदन्याकारमिति लोकेषुऊर्ध्वम धोगतेषुसंचरः संचरणंयस्य तमोनियमपंकंतमोगुणेनयोनियमः कर्मज्ञानयोर्निरोधः सएवपंकवत् मालिन्याख्यपापहेतुर्यस्मिन् रजोवेगप्रवर्तकं तमःसत्वसंमिश्रस्यरजसोवेगःविहितनिषिद्धकर्मसुप्रवर्तकोयत्र ५

"अहंकारोदर्पः सत्वाहंकारेति पाठे बुस्य हंकाराभ्यां चेतितमित्यर्थः गुणैः सत्वादिभिः संजातं वर्तनमवस्थानं यस्य पाठांतरे मंडलं संघातः अरतयः इष्टालाभजाः परितापास्तान्येव ग्रहणानीकानि बंधपाट्टिकाः समूहो यत्र शोकः संहारो मृत्युदुःखं ताभ्यामेव वर्तनं जीवनं यस्य ६ लोभः ईप्सा तृष्णा ते एव परिविक्षोभाः निम्नोन्नत देशस्थानीय श्चक्रस्यास्फालनहेतुर्यत्र विचित्रं त्रिगुणात्मकत्वात्तच्चतदज्ञानं मायातनः संभव उत्पत्तिर्यस्य ७ आनंदप्रीतिचारं बाह्यसुखवासक्तत्वाच्चरतीतितया ८ विशेषाः स्थूलपिंडादयः असक्तं क्वचिदपि क्षणमनिरुद्धं प्रभवाति संसरत्यनेनेति तत् प्रभवं तच्चतदव्ययं चेति अव्ययं संसारकारणमित्यर्थः

महाहंकारदीप्तं च गुणसंजातवर्तनम् अरतिग्रहणानीकं शोकसंहारवर्तनम् ६ क्रियाकारणसंयुक्तं रागविस्तारमायतम् लोभेप्सापरिविक्षोभं विचित्राज्ञानसंभवम् ७ भयमोहपरीवारं भूतसंमोहकारकम् आनंदप्रीतिचारं च कामक्रोधपरिग्रहम् ८ महदादिविशेषांतमसक्तप्रभवाव्ययम् मनोजवं मनःकांतं कालचक्रं प्रवर्तते ९ एतद्द्वंद्वसमायुक्तं कालचक्रमचेतनम् विसृजेत्संक्षिपेच्चापि बोधयेत्सामरं जगत् १० कालचक्रप्रवृत्तिं च निवृत्तिं चैव तत्वतः यस्तु वेद नरो नित्यं न स भूतेषु मुह्यति ११ विमुक्तः सर्वसंस्कारैः सर्वद्वंद्वविवर्जितः विमुक्तः सर्वपापेभ्यः प्राप्नोति परमां गतिम् १२ गृहस्थो ब्रह्मचारी च वानप्रस्थोथ भिक्षुकः चत्वार आश्रमाः प्रोक्ताः सर्वे गार्हस्थ्यमूलकाः १३ यः कश्चिदिह लोके स्मिन्नागमः परिकीर्तितः तस्यांतगमनं श्रेयः कीर्तिरेषा सनातनी १४ संस्कारैः संस्कृतः पूर्वं यथावच्चरितव्रतः जातो गुणविशिष्टायां समावर्तेत तत्ववित् १५ स्वदारनिरतो नित्यं शिष्टाचारो जितेंद्रियः पंचभिश्च महायज्ञैः श्रद्दधानो यजेदिह १६ देवतातिथिशिष्टाशी निरतो वेदकर्मसु इज्याप्रदानयुक्तश्च यथाशक्ति यथासुखम् १७ न पाणिपादचपलो न नेत्रचपलो मुनिः न च वागंगचपल इति शिष्टस्य गोचरः १८ नित्यं यज्ञोपवीती स्यात् शुक्लवासाः शुचिव्रतः नियतो यमदानाभ्यां सदा शिष्टैश्च संविशेत् १९ जितशिश्नोदरो मैत्रः शिष्टाचारसमन्वितः वैणवीं धारयेद्यष्टिं सोदकं च कमंडलुम् २० अधीत्याध्यापनं कुर्यात्तथा यजनयाजने दानं प्रतिग्रहं वापि षड्गुणां वृत्तिमाचरेत् २१

९ द्वंद्वानि मानापमानादीनि तन्मयं देहेंद्रियादिसंघातचक्रं रजस्तमः सत्वप्रधानं सत् सृष्टिसंहारतत्त्वज्ञानानां हेतुर्भवति १० प्रवृत्तिं प्रवृत्तिहेतुं निवृत्तिं निवृत्तिहेतुं वेद विदित्वा हानोपादानकृत् न मुह्यति ११ १२ १३ आगमः विधिनिषेधशास्त्रम् १४ १५ १६ १७ गोचरः विषयो लक्षणमिति यावत् १८ संविशेदिति पाठे कुर्यादिति शेषः १९ २० पाठांतरे आप्लवनं व्रतसमाप्तिस्नानं समावर्तनाख्यं वृत्तिं वर्तनम् २१

त्रीणिकर्माणिजानीतब्राह्मणानांतुजीविका याजनाध्यापनेचोभेशुद्धाच्चापिप्रतिग्रहः २२ अथशेषाणिचान्यानित्रीणिक
र्माणियानितु दानमध्ययनंयज्ञोधर्मयुक्तानितानितु २३ तेष्वप्रमादंकुर्वीतत्रिषुकर्मसुधर्मवित् दांतोमैत्रःक्षमायुक्तःसर्वभूतस
मोमुनिः २४ सर्वमेतद्यथाशक्तिविप्रोनिर्वर्तयन्शुचिः एवंयुक्तोजयेत्स्वर्गंगृहस्थःसंशितव्रतः २५ इतिश्रीमन्महाभारते
आश्वमेधिकेपर्वणिगुरुशिष्यसंवादेपंचचत्वारिंशोऽध्यायः ४५ ब्रह्मोवाच एवमेतेनमार्गेणपूर्वोक्तेनयथाविधि अ
धीतवान्यथाशक्तितथैवब्रह्मचर्यवान् १ स्वधर्मनिरतोविद्वान्सर्वेंद्रिययतोमुनिः गुरोःप्रियहितेयुक्तःसत्यधर्मपरःशुचिः २ गु
रुणासमनुज्ञातोभुंजीतान्नमकुत्सयन् हविष्यभैक्ष्यभुक्चापिस्थानासनविहारवान् ३ द्विकालमग्निंजुह्वानःशुचिर्भूत्वासमाहि
तः धारयीतसदादंडंबैल्वंपालाशमेववा ४ क्षौमंकार्पासिकंचापिमृगाजिनमथापिवा सर्वंकाषायरक्तंवावासोवापिद्विजस्यह
५ मेखलाचभवेन्मौंजीजटानित्योदकस्तथा यज्ञोपवीतीस्वाध्यायीअलुब्धोनियतव्रतः ६ पूताभिश्चतथैवाद्भिःसदादेवततर्पणम्
भावेननियतःकुर्वन्ब्रह्मचारीप्रशस्यते ७ एवंयुक्तोजयेल्लोकान्वानप्रस्थोजितेंद्रियः नसंसरतिजातीषुपरमंस्थानमाश्रितः ८ सं
स्कृतःसर्वसंस्कारैस्तथैवब्रह्मचर्यवान् ग्रामान्निष्क्रम्यचारण्यंमुनिःप्रव्रजितोवसेत् ९ चर्मवल्कलसंवासीसायंप्रातरुपस्पृशेत् अ
रण्यगोचरोनित्यंनग्रामंप्रविशेत्पुनः १० अर्चयन्नतिथीन्कालेदद्याच्चापिप्रतिश्रयम् फलपत्रावरैर्मूलैःश्यामाकेनचवर्तयन् ११
प्रवृत्तमुदकंवायुंसर्वंवानेयमाश्रयेत् प्राश्नीयादानुपूर्व्येणयथादीक्षमतंद्रितः १२ समूलफलभिक्षाभिरर्चेदतिथिमागतम् य
द्भक्ष्यंस्यात्ततोदद्याद्भिक्षांनित्यमतंद्रितः १३ देवतातिथिपूर्वंचसदाभुंजीतवाग्यतः अस्पर्द्धितमनाश्चैवलघ्वाशीदेवताश्रयः
१४ दांतोमैत्रःक्षमायुक्तःकेशान्श्मश्रुचधारयन् जुह्वन्स्वाध्यायशीलश्चसत्यधर्मपरायणः १५ शुचिदेहःसदादक्षोवननित्यः
समाहितः एवंयुक्तोजयेत्स्वर्गंवानप्रस्थोजितेंद्रियः १६ गृहस्थोब्रह्मचारीचवानप्रस्थोथवापुनः यइच्छेन्मोक्षमास्थातुमुत्तमां
वृत्तिमाश्रयेत् १७ अभयंसर्वभूतेभ्योदत्वानैष्कर्म्यमाचरेत् सर्वभूतसुखोमैत्रःसर्वेंद्रिययतोमुनिः १८ अयाचितमसंक्लृप्तमु
पपन्नंयदृच्छया कृत्वाप्राह्णेचरेद्भैक्ष्यंविधूमेभुक्तवज्जने १९ वृत्तेशरावसंपातेभैक्ष्यंलिप्सेतमोक्षवित् लाभेनचनहृष्येत
नालाभेविमनाभवेत् २०

२१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५

यात्रार्थीकालमाकांक्षन्चरेद्भैक्ष्यंसमाहितः लाभंसाधारणंनेच्छेन्नभुंजीताभिपूजितम् २१ अभिपूजितलाभाद्धिविजुगुप्से
तभिक्षुकः भुक्त्वान्यान्नानितिक्तानिकषायकटुकानिच २२ नास्वादयीतभुंजानोरसांश्चमधुरांस्तथा यात्रामात्रंचभुंजीतकवलंप्रा
णधारणम् २३ असंरोधेनभूतानांवृत्तिंलिप्सेतमोक्षवित् नचान्यमन्नंलिप्सेतभिक्षमाणःकथंचन २४ नसन्निकाशयेद्धर्मंविमुक्ते
चारजाश्चरेत् शून्यागारमरण्यंवावृक्षमूलंनदींतथा २५ प्रतिश्रयार्थंसेवेतपार्वतींवापुनर्गुहाम् ग्रामैकरात्रिकंग्रीष्मेवर्षास्वे
कत्रवावसेत् २६ अध्वासूर्येणनिर्दिष्टःकीटवच्चचरेन्महीम् दयार्थंचैवभूतानांसमीक्ष्यपृथिवींचरेत् २७ संचयांश्चनकुर्वीतस्ने
हेवासंचवर्जयेत् पूताभिरद्भिर्नित्यंवैकार्यंकुर्वीतमोक्षवित् २८ उपस्पृशेयुद्धृताभिरद्भिश्चपुरुषःसदा अहिंसाब्रह्मचर्यंच
सत्यमार्जवमेवच २९ अक्रोधश्चानसूयाचदमोनित्यमपैशुनम् अष्टस्वेतेषुयुक्तःस्याद्व्रतेषुनियतेंद्रियः ३० अपापमशठंवृ
त्तमजिह्मंनित्यमाचरेत् जोषयेतसदाभोज्यंग्रासमागतमस्पृहः ३१ यात्रामात्रंचभुंजीतकवलंप्राणयात्रिकम् धर्मलब्धमथा
श्नीयान्नकाममनुवर्तयेत् ३२ ग्रासादाच्छादनादन्यन्नगृण्हीयात्कथंचन यावदाहारयेत्तावत्प्रतिगृण्हीतनाधिकम् ३३ परे
भ्योनप्रतिग्राह्यंनचदेयंकदाचन दैन्यभावाच्चभूतानांसंविभज्यसदाबुधः ३४ नाददीतपरस्वानिनगृण्हीयादयाचितः नकिंचि
द्विषयंभुक्त्वास्पृहयेत्तस्यवैपुनः ३५ मृदमापस्तथान्नानिपत्रपुष्पफलानिच असंवृतानिगृण्हीयात्प्रवृत्तानिचकार्यवान् ३६
नशिल्पजीविकांजीवेद्धिरण्यंनोतकामयेत् नद्वेष्टानापदेष्टाचभवेतनिरुपस्कृतः ३७ श्रद्धापूतानिभुंजीतनिमित्तानिचवर्ज
येत् स्वधावृत्तिरसक्तश्चसर्वभूतैरसंविदम् ३८ आशीर्युक्तानिसर्वाणिहिंसायुक्तानियानिच लोकसंग्रहधर्मंचनैवकुर्यान्नकार
येत् ३९ सर्वभावानतिक्रम्यलघुमात्रःपरिव्रजेत् समःसर्वेषुभूतेषुस्थावरेषुचरेषुच ४० परंनोद्वेजयेत्किंचिन्नचकस्यचिदुद्वि
जेत् विश्वास्यःसर्वभूतानामग्र्योमोक्षविदुच्यते ४१ अनागतंचनध्यायेन्नातीतमनुचिंतयेत् वर्तमानमुपेक्षेतकालाकांक्षीसमा
हितः ४२ नचक्षुषानमनसानवाचादूषयेत्क्वचित् नप्रत्यक्षंपरोक्षंवाकिंचिद्दुष्टंसमाचरेत् ४३ इंद्रियाण्युपसंहृत्यकूर्मोंगा
नीवसर्वशः क्षीणेंद्रियमनोबुद्धिर्निरीहःसर्वतत्त्ववित् ४४ निर्द्वंद्वोनिर्नमस्कारोनिःस्वाहाकारएवच निर्ममोनिरहंकारोनि
र्योगक्षेमआत्मवान् ४५ निराशीर्निर्गुणःशांतोनिरासक्तोनिराश्रयः आत्मसंगीचतत्त्वज्ञोमुच्यतेनात्रसंशयः ४६

३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७

४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ इत्याश्वमेधिकेपर्वणिटीकायांषट्चत्वारिंशोऽध्यायः ४६ संन्यासमित्यध्यायोपि



अपाद्पाणिपृष्ठंतदशिरस्कमनूदरम् प्रहीनगुणकर्माणंकेवलंविमलंस्थिरम् ४७ अगंधरसमस्पर्शमरूपाशब्दमेवच अनु
गम्यमनासक्तमसांसमापिच्चेवयत् ४८ निश्चितमव्ययंदिव्यंकूटस्थमपिसर्वदा सर्वभूतस्थमात्मानंयेपश्यतिनतेमृताः ४९ न
तत्रक्रमतेबुद्धिर्नेन्द्रियाणिनदेवताः वेदायज्ञाश्चलोकाश्चनतपोनव्रतानिच ५० यत्रज्ञानवतांप्राप्तिरलिंगग्रहणास्मृता तस्मा
दलिंगधर्मज्ञोधर्मतत्वमुपाचरेत् ५१ गूढधर्माश्रितोविद्वानज्ञानचरितंचरेत् अमूढोमूढरूपेणचरेद्धर्ममदूषयन् ५२ यथैव
मवमन्येरन्परेसततमेवहि तथावृत्तश्चरेच्छांतःसतांधर्मानकुत्सयन् ५३ यएवंवृत्तसंपन्नःसमुनिश्रेष्ठउच्यते इंद्रियाणीं
द्रियार्थाश्चमहाभूतानिपंचच ५४ मनोबुद्धिरहंकारमव्यक्तंपुरुषंतथा एतत्सर्वंसमाख्याययथावत्तत्वनिश्चयात् ५५ ततः
स्वर्गमवाप्नोतिविमुक्तःसर्वबंधनैः एतावदात्मवेलायांपरिसंख्यायतत्ववित् ५६ ध्यायदेकांतमास्थायमुच्यतेथनिराश्रयः निर्मु
क्तःसर्वसंगेभ्योवायुराकाशगोयथा ५७ क्षीणकोशोनिरातंकःआमोतिपरमंपदम् ५८ इतिश्रीमन्महाभारते आश्वमेधिके
पर्वणिब्राह्मणगीतासुगुरुशिष्यसंवादेषट्चत्वारिंशोऽध्यायः ४६ ब्रह्मोवाच संन्यासंतपइत्याहुर्वृद्धानिश्चितदर्शि
नः ब्राह्मणाब्रह्मयोनिस्थाज्ञानंब्रह्मपरंविदुः १ अतिदूरात्मकंब्रह्मवेदविद्याव्यपाश्रयम् निर्द्वंद्वंनिर्गुणंनित्यमचिंत्यगुणमुत्त
मम् २ ज्ञानेनतपसाचेवधीराःपश्यंतितत्परम् निर्णिक्तमनसःपूताव्युत्क्रांतरजसोमलाः ३ तपसाक्षेममध्वानंगच्छंतिपरमेश्व
रम् संन्यासनिरतानित्यंयेचब्रह्मविदोजनाः ४ तपःप्रदीपइत्याहुराचारोधर्मसाधकः ज्ञानंवेपरमंविद्यात्संन्यासस्तपउत्तमम्
५ यस्तुवेदनिराबाधज्ञानंतत्वविनिश्चयात् सर्वभूतस्थमात्मानंससर्वगतिरिष्यते ६ योविद्वान्सहवासंचविवासंचैवपश्यति
तथैवैकत्वनानात्वेसदुःखात्प्रतिमुच्यते ७ योनकामयतेकिंचिन्नकिंचिदवमन्यते इहलोकस्थएवैषब्रह्मभूयायकल्पते ८ प्र
धानगुणतत्वज्ञःसर्वभूतप्रधानवित् निर्ममोनिरहंकारोमुच्यतेनात्रसंशयः ९ निर्द्वंद्वोनिर्नमस्कारोनिःस्वधाकारएवच
निर्गुणंनित्यमद्वंद्वंप्रशमंनेवगच्छति १० हित्वागुणमयंसर्वंकर्मजंतुःशुभाशुभम् उभेसत्यानृतेहित्वामुच्यतेनात्रसंशयः ११
अव्यक्तयोनिप्रभवोबुद्धिस्कंधमयोमहान् महाहंकारविटपइंद्रियांकुरकोटरः १२ महाभूतविशालश्चविशेषप्रतिशाखिनः
सदापत्रःसदापुष्पःशुभाशुभफलोदयः १३

मुच्यतेनात्रसंशयइत्यंतोग्रंथःपूर्वमेवगतार्थः १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३

१४ १५ द्वाविमाविति पक्षिणौजीवेश्वरौ संक्षिप्येतेयथास्तौसंक्षेपौतयोरूपार्धाबुद्धिमायेतौ अचेतनौ सख्यायाविति पाठेतु अचेतनौप्रतिबिंबत्वेन दृश्यौय-
क्तनाभ्यां प्रतिबिंबरूपाभ्यामन्यःबिंबस्थानीयः सचेतनामात्रशरीरोपिचेतनावानित्युच्यते साक्ष्यसंसर्गात्साक्षीतिवत् १६ अचेतनइति अचेतनइ
वाहंधीगम्योदृश्योजीवइतियावत् सत्वसंख्याविमुक्तः सत्वानिप्राणिनः संख्यायंतेपृथक्त्वेनगण्यंतेयैस्तेदेहाद्युपाधयस्तैर्विमुक्तःसन्सत्वात्बुद्धेः
परंयदूक्तःयच्चचेतयतेबुद्ध्यादीन् अचेतनानपिचेतन्ययुक्तान्कुरुते सएवक्षेत्रज्ञसंज्ञअंतरात्मा कोसौसर्वसंख्यातबुद्धिःसर्वाःसंख्याताःबुद्धयोयेन
न सर्वासांबुद्धीनांसाक्षित्वेनसंख्यातापरिच्छेदकइत्यर्थः सएषगुणगुंफितःसन् सर्वैर्दोषैर्युज्यतेगुणातिगस्तुतैर्मुच्यतेइति १७ इत्याश्वमेधिके
पर्वणिटीकायांसप्तचत्वारिंशोऽध्यायः ४७ एवंससाधनांब्रह्मविद्यांसमाप्यशिष्यबुद्धिपरीक्षार्थंन्यामिश्रैर्वाक्यैस्तामेवानुवदति केचिदित्या

आजीव्यःसर्वभूतानांब्रह्मवृक्षःसनातनः एवंछित्वाचभित्वाचतत्वज्ञानासिनाबुधः १४ हित्वासंगमयान्पाशान्मृत्युजन्मज
रोदयान् निर्ममोनिरहंकारोमुच्यतेनात्रसंशयः १५ द्वाविमौपक्षिणौनित्यौसंक्षेपौचाप्यचेतनौ एताभ्यांतुपरोयोन्यश्चेतनावान्सउ-
च्यते १६ अचेतनःसत्वसंख्याविमुक्तःसत्वात्परंचेतयतेंतरात्मा सक्षेत्रवित्सर्वसंख्यातबुद्धिर्गुणातिगोमुच्यतेसर्वपापैः १७ इ
तिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिब्राह्मणगीतासुगुरुशिष्यसंवादेसप्तचत्वारिंशोऽध्यायः ४७ ब्रह्मोवाच केचिद्ब्र
ह्ममयंवृक्षंकेचिद्ब्रह्मवनंमहत् केचित्तुब्रह्मचाव्यक्तंकेचित्परमनामयम् मन्यंतेसर्वमप्येतदव्यक्तप्रभवाव्ययम् १ उच्छ्वासमा
त्रमपिचेद्योंतकालेसमोभवेत् आत्मानमुपसंगम्यसोमृतत्वायकल्पते २

दिना केचित्सप्रपंचब्रह्मेतिवदंतोवृक्षंसंसारंब्रह्ममयंब्रह्मणोविकारमाहुः ब्रह्मैवजगदाकारेणपरिणमतेइति तदात्मानंस्वयमकुरुत सच्चत्यच्चाभव
न् आत्मकृतेःपरिणामादित्यादिश्रुतयःस्मृतयश्च केचित्परंवक्तुअनामयंनिर्विकारं तत्रजगत्स्वप्नवत्कल्पितं सयदास्वपितितदेनंवाक्सर्वैर्नामभिः
सहाप्येतिचक्षुःसर्वैरूपैःसहाप्येतिसयदाप्रतिबुध्यतेयथाग्नेर्ज्वलतःसर्वादिशोविस्फुलिंगाविप्रतिष्ठेरन्नेवमेवैतस्मादात्मनःसर्वेप्राणायथायतनंविप्रतिष्ठंतेप्राणेभ्योदेवादेवेभ्योलोकाइतिसुप्तिप्रबोध
योर्नामरूपात्मकस्यात्मन्येवलयोदयौश्रूयते मायामात्रंतुकार्त्स्न्येनआत्मनिचैवंचित्राश्चहीतिस्मर्यतेच एवंश्रौतंमतद्वयमुक्त्वासांख्यमतमाह मन्यंतइति
१ तत्रप्रथमपक्षेउपासकानां आप्रायणादितिन्यायेन अंत्यप्रत्ययस्यावश्यकत्वमाह उच्छ्वासमात्रंतावन्मात्रकालंसमोनिर्विशेषःसर्वोवा समशब्द-
स्यसर्वपर्यायत्वात् सइदंसर्वंभवतीतिश्रुतेश्च आत्मानंहार्दंब्रह्मसंम्यगुपास्य अमृतत्वायकल्पतेब्रह्मलोकप्राप्तिद्वारेत्यर्थः २ ५ ७

द्वितीयपक्षे अंतकालादन्यत्रापि सारणिकानिर्विकल्पसाक्षात्कारान्मुच्यतइत्याह निमेषेति विदुषांप्राप्तिंप्राप्तंकैवल्यं ३ तृतीयपक्षेपिमनोनिरोधेनमुच्यत
इत्याह प्राणायामैरितिद्वाभ्याम् प्राणाः इंद्रियाणिबुद्धिमनः सहितानिद्वादशैते आयम्यंतेनिगृह्यंते यैस्तैः प्राणायामैः यमानियमादिभिः तेचयमासन-
प्राणायामप्रत्याहारधारणाध्यानसमाधयस्तर्कवैराग्याभ्यांसहदशवामैत्रीकरणादिभिःसह द्वादशवायमाः पंचनियमाः पंच प्राणायामादयः षट्मैत्र्या
दयश्चतत्रतर्कवैराग्येचेति द्वाविंशतिर्वा संयम्याभिरोध्य पुनःपुनरिति यावज्जीवमेवंकार्यंनतुसकृत्प्रत्ययेनात्रसिद्धिरस्तीतिदर्शितम् चतुर्विंशात्
अव्यक्तात्परं अन्यंपंचविंशंपुरुषंलभते ४ यद्यदिच्छतितदपिलभतेयोगसामर्थ्यात् प्रसन्नात्मा विशुद्धसत्वः यदातु अव्यक्तात् अव्यक्तं प्राप्यसत्वंस
त्वगुणः उद्रिक्तंउत्कृष्टतरंभवति तदामृतत्वायकल्पते पूर्णंशतसहस्रंचातिष्ठंत्यव्यक्ताचिंतकाइत्यव्यक्तमात्रनिष्ठानांस्वर्गकालावधिस्मरणात् चतुर्विं
शादव्यक्तात्परमितिवासंबंधः ५ धर्मज्ञानवैराग्यैश्वर्यादीनां आत्मप्राप्तिसाधनानांसत्वोत्कर्षफलभ्यत्वात्सत्वमेवश्रेयोनिसार्द्धेनसत्वादिति सत्वसंश्रयंतं

निमेषमात्रमपिचेत्संयम्यात्मानमात्मनि गच्छत्यात्मप्रसादेनविदुषांप्राप्तिमव्ययाम् ३ प्राणायामैरथप्राणान्संयम्यसपुनः
पुनः दशद्वादशभिर्वापिचतुर्विंशात्परंततः ४ एवंपूर्वंप्रसन्नात्मालभतेयद्यदिच्छति अव्यक्तात्सत्वमुद्रिक्तममृतत्वायकल्पते
५ सत्वात्परतरंनान्यत्प्रशंसंतीहतद्विदः अनुमानाद्विजानीमः पुरुषंसत्वसंश्रयम् नशक्यमन्यथागंतुंपुरुषंद्विजसत्तमाः
६ क्षमाधृतिरहिंसाचसमतासत्यमार्जवम् ज्ञानंत्यागोथसंन्यासःसात्विकंवृत्तमिष्यते ७ एतेनैवानुमानेनमन्यंतेथमनीषि-
णः सत्वंचपुरुषंचैवतत्रनास्तिविचारणा ८ आहुरेकत्वविद्वांसोयेज्ञानपरिनिष्ठिताः क्षेत्रज्ञसत्वयोरैक्यमित्येतन्नोपप
द्यते ९ पृथग्भूतंततःसत्वमित्येतदविचारितम् पृथग्भावश्चविज्ञेयः सहजश्चापितत्वतः १०

पुरुषंअन्यथासत्वासंश्रयइति-
गंतुंनशक्यंइतियोजना ६ वृत्तंपरिपाकः ७ पुरुषवत्सत्वस्यत्वात्पुरुषोपकारित्वाच्चसत्वंपुरुषादभिन्नमितिमन्यंतेतार्किकाः अतएवते आत्मनि
सत्वधर्मान्कर्तृत्वादीन्वास्तवान्मन्यंतेइत्याह एतेनेतिद्वाभ्यांतत्रापिमन्यंतेप्रातीतिकंएकत्वंसांख्यादयः ८ तार्किकास्तुतदेववास्तवमित्याहुरितिविवे
कः एतद्दूषयति आहुरिति ९ सांख्यंप्रत्याह पृथगिति यदिसत्वंततःपुरुषात्पृथक्अन्यत्भूतंनित्यनिर्वृत्तंचस्यात् तर्हिमुक्तमप्यात्मानंनजह्यात्भूतत्वे
नतस्यानिरन्वयनाशायोगात् तस्मादनिर्मोक्षप्रसक्तिः इदंमतमविचारितं एतेन एकत्वपक्षोपिप्रत्युक्तएव कर्तृत्वादेर्वास्तवत्वेधर्मिनाशमंतरेणानिवृत्तेर्नै
रात्म्यमनिर्मोक्षोवाप्रसज्यतइतिभावः सिद्धांतमाह पृथग्भावश्चविज्ञेयःसहजश्चापितत्वतः सत्वपुरुषयोःसमुद्रतरंगयोरिवशब्दतःप्रतीतितश्चपृथग्भावो ४
स्तिसत्वंचसमुद्रतरंगइवपुरुषेसहजं एवंचविलीनतरंगस्येवमुक्तसत्वस्यपुनरुत्पत्त्ययोगान्नाविर्मोक्षइतिकल्पितभेदेनसंसारयात्रानिर्वाहः अकल्पिता
भेदेनमोक्षोपपत्तिरित्यर्थः १०

एवमपिसत्वपुरुषयोरेकजात्यापत्तेर्जडाजडविभागोनस्यादित्याशंक्याह तथैवेति नयः युक्तिः तपइतिपाठे आलोचनपूर्वकोनिश्चयः यथाउदुंबरफलो
दरेबाह्यस्यान्यस्यप्रवेशायोगात्तदवयवएवमशकदेहस्ततोविजातीयःसन्नाविर्भवति एवंचिद्विलासएवसत्वंततःपृथग्भूयजडत्वेनाविर्भवतीत्यर्थः ११ सत्व
पुरुषयोःसंबंधेदृष्टांतःपर्णेइति असंगत्वात्पुरुषःसत्वधर्मैर्नलिप्यतेतत्रलेपप्रतीतिस्त्वाध्यासिकीतिभावः १२ उक्तेविद्यतेयेषुतेउक्तवंतःउक्तमर्थंस
म्यगवधृतवंतइत्यर्थः सहजस्यापिसत्वस्यपुरुषासंसर्गित्वंदुर्घटंब्रह्मणश्चवचनंममिथ्येति तर्कश्रद्धाभ्यामुभयतोविरुद्धत्वात्संशयमापन्नाः १३ इ
त्याश्वमेधिकेपर्वणिटीकायांअष्टचत्वारिंशोऽध्यायः ४८ एवंसंदिहानाः प्रथमंवेदशास्त्रेषुमतभेदंदर्शयंति कोवेति निवृत्तिधर्मोवाऽनुष्ठेयःनक
र्मणेति कुर्वन्नेवेहकर्माणीत्युभयविधश्रुतिदर्शनान्मुह्यामहेइतिभावः १ ऊर्ध्वंदेहात् देहनाशादूर्ध्वमपिआत्मास्तीत्येकेवदंतीतिसंबंधः नेतदितिलो

तथैवैकत्वनानात्वमिष्यतेविदुषांनयः मशकोदुंबरेचैक्यंपृथक्त्वमपिदृश्यते ११ मत्स्योयथान्यःस्यादप्सुसंप्रयोगस्तथातयोः
संबंधस्तोयबिंदूनांपर्णेकोकनदस्यच १२ गुरुरुवाच इत्युक्तवंतस्तेविप्रास्तदालोकपितामहम् पुनःसंशयमापन्नाः
पप्रच्छुर्मुनिसत्तमाः १३ इतिश्रीमन्महाभारतेआश्वमेधिकेपर्वणिब्राह्मणगीतासुगुरुशिष्यसंवादेअष्टचत्वारिंशोऽध्या
यः ४८ ऋषयऊचुः कोवास्विदिहकर्माणामनुष्ठेयतमोमतः व्याहतामिवपश्यामोधर्मस्यविविधांगतिम् १
ऊर्ध्वंदेहाद्वदंत्येकेनैतदस्तीतिचापरे केचित्संशयितंसर्वंनिःसंशयमथापरे २ अनित्यंनित्य मित्येकेनास्त्यस्तीत्यपिचापरे एकरू
पंद्विधेत्येकेव्यामिश्रमितिचापरे ३ मन्यंतेब्राह्मणाएवंब्रह्मज्ञास्तत्वदर्शिनः एवमेतेपृथक्चान्येबहुत्व मितिचापरे ४ देशका
लावुभौकेचित्नैतदस्तीतिचापरे जटाजिनधराश्चान्येमुंडाःकेचिदसंवृताः ५ अस्नानंकेचिदिच्छंतिस्नानमप्यपरेजनाः मन्यंतेब्रा
ह्मणादेवब्रह्मज्ञास्तत्वदर्शिनः ६ आहारंकेचिदिच्छंतिकेचिच्चानशनेरताः कर्मकेचित्प्रशंसंतिप्रशांतिंचापरेजनाः ७

कायतिकाः सर्वंसंशयितमितिस्याद्वादिनःसप्तभंगानयज्ञाः भिःसंशयमितिप्रातिस्विकंसर्वंतेतीर्थिकाः २ अनित्यंसर्वंसृष्टिप्रलययुक्तमितिनार्किका
दयः नित्यंप्रवाहनित्यमितिमीमांसकाः नास्तीतिशून्यवादिनः अस्तिपरंतुक्षणिकमितिसौगताः एकरूपंविज्ञानमेवाद्विधाइदमर्थाकारमहमर्थाका
रमिति योगाचाराः व्यामिश्रंभिन्नमभिन्नंचेत्यौडुलोमाः ३ एकेब्रह्मज्ञाः शास्त्रज्ञाःतत्वदर्शिनोपरोक्षज्ञानवंतः ब्राह्मणास्तुब्रह्मैवैकमस्तीतिमन्यंते
सगुणोपासकाः पृथक् असाधारणानि कर्माण्येवकारणानीत्यन्यः मीमांसकाः बहुत्वमपिकारणानांप्राहुःपरमाणुवादिनः ४ देशकालावितिज्योतिर्वि
दः एतत्दृश्यंसर्वंकालत्रयेपिनास्तिस्वप्नराज्यवच्चिद्विलासमात्रमितिवृद्धाः ५ अस्नानंनैष्ठिकब्रह्मचर्यस्नानंगार्हस्थ्यम् ६ ७ ८ ९

८ साधनं ध्यानादिकमुपास्य कृत्वापि नैतदस्तीति पश्चात्सर्वमपवदंति तथा च श्रुतिः नचनिरोधो नचोत्पत्तिर्नबद्धो नचसाधकः नमुमुक्षुर्नवैमुक्त इत्येषापर
मार्थतेति ९ पुण्येनपुण्यार्थमेवयतनेनेत्यन्ये एतत्पुण्यंनास्त्येवेत्यन्ये लोकायताः १० संशयितेकुतमासिनवेतिसंदिग्धेपथि दुःखात्दुःखनिवृत्त्यर्थं
सुखात्सुखप्राप्त्यर्थं ध्यानंकर्तव्यम् निष्काममेवेत्यपरे ११ १२ ज्ञानंसन्यासंसंन्यासैकप्राप्यम् भूतचिंतकाः वस्तुतत्वविकारकाः स्वभावंसाधनपो

देशकालावुभौ केचिन्नैतदस्तीति चापरे केचिन्मोक्षं प्रशंसंति केचिद्भोगान्पृथग्विधान् ८ धनानि केचिदिच्छंति निर्धनत्वमथा
परे उपास्यसाधनं त्वेके नैतदस्तीति चापरे ९ अहिंसानिरताश्चान्ये केचिद्धिंसापरायणाः पुण्येन यशसा चान्ये नैतदस्तीति
चापरे १० सद्भावनिरताश्चान्ये केचित्संशयमास्थिताः दुःखादन्ये सुखादन्ये ध्यानमित्यपरे जनाः ११ यज्ञमित्यपरे विप्राः प्रदान
मिति चापरे तपस्त्वन्ये प्रशंसंति स्वाध्यायमपरे जनाः १२ ज्ञानं संन्यासमित्येके स्वभावं भूतचिंतकाः सर्वमेके प्रशंसंति न सर्वमिति चा
परे १३ एवं व्युत्थापिते धर्मे बहुधा विप्रबाधिते निश्चयं नाधिगच्छामः संमूढाः सुरसत्तम १४ इदं श्रेय इदं श्रेय इत्येवं व्युत्थितो ज
नः यो हि यस्मिन्रतो धर्मे स तं पूजयते सदा १५ तेन नो विहिता प्रज्ञा मनश्च बहुलीकृतम् एतद्विज्ञातुमिच्छामः श्रेयः किमिति
सत्तम १६ अतः परं तु यद्गुह्यं तद्भवान्वक्तुमर्हति सत्वक्षेत्रज्ञयोश्चापि संबंधः केन हेतुना १७ एवमुक्तः स तैर्विप्रैर्भगवाँल्लोकभा
वनः तेभ्यः शशंस धर्मात्मा याथातथ्येन बुद्धिमान् १८ इतिश्रीमन्महाभारते आश्वमेधिके पर्वणि ब्राह्मणगीतासु गुरुशि
ष्यसंवादे एकोनपंचाशत्तमोऽध्यायः ४९ ब्रह्मोवाच हंत वः संप्रवक्ष्यामि यन्मां पृच्छथ सत्तमाः गुरुणा शिष्यमासा
द्य यदुक्तं तन्निबोधत १ समस्तमिह तच्छ्रुत्वा सम्यगेवावधार्यताम् अहिंसा सर्वभूतानामेतत्कृत्यतमं मतम् २ एतत्पदमनु
द्विग्नं वरिष्ठं धर्मलक्षणम् ज्ञानं निःश्रेय इत्याहुर्वृद्धा निश्चितदर्शिनः ३ तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वकिल्बिषैः हिंसापराश्च ये
लोके ये च नास्तिकवृत्तयः लोभमोहसमायुक्तास्ते वै निरयगामिनः ४ आशीर्युक्तानि कर्माणि कुर्वते ये त्वतंद्रिताः ते अस्मिँल्लो
के प्रमोदंते जायमानाः पुनः पुनः ५ कुर्वते ये तु कर्माणि श्रद्दधाना विपश्चितः अनाशीर्योगसंयुक्तास्ते धीराः साधुदर्शिनः ६ अतः प
रं प्रवक्ष्यामि सत्वक्षेत्रज्ञयोर्यथा संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः ७

कृत्यस्वाभाव्यादेवज्ञानमुत्पद्यते आश्रमांतरेपिनसं
न्यासमात्रेणेत्याहुः १३ १४ १५ अविहिता आशिक्षिता आख्यातंत्वयेतिशेषः १६ मुख्यंप्रष्टव्यमाह अतःपरमिति १७ १८ इतिश्रीमन्महा
भारते आश्वमेधिके पर्वणि टीकायां एकोनपंचाशत्तमोऽध्यायः ४९ पृष्टेष्वेतेषु पक्षेषु यद्धेयमुपादेयं च तत्संक्षेपेणाह हंत व इति १ २ ३ ४ ५ ६ ७

॥

८विषयविषयिभावो घटचक्षुषोरिवनकेवलंप्रकाश्यप्रकाशकभावः अपितुभोज्यभोक्तृभावोप्यस्तीत्याह व्याख्यातमिति सार्द्धेन उदुंबरवत्सत्वंस्वात्म
नंभोक्तारंचनवेत्तिभोक्तातुमशकवदुभयंवेत्तीत्यर्थः योविजानीतेसक्षेत्रज्ञइत्युत्तरेणान्वयः ९ सत्वपुरुषयोःसंबंधस्याध्यासिकत्वमाह नित्यमिति
नित्यंसर्वदासत्वंद्वंद्वैःसुखदुःखादिपरिणामैर्युक्तंगुणात्मकत्वात्सुखदुःखमोहात्मकंसंहतंचतद्विपरीतत्वात् निर्द्वंद्वःनित्यःनिष्कलोनिर्गुणश्चपुरुषःअत
स्तयोर्विषमस्वभावत्वान्नजतुकाष्ठादिवत्संबंधोयुज्यतेयथोक्तम् निःसंगस्यससंगेनकूटस्थस्यविकारिणा आत्मनोनात्मनायोगोवास्तवोनोपप-
द्यतइति १० कोयंतर्हितयोर्विषयविषयिभावसंबंधउक्तइत्याह समइति यथासर्वत्रस्वप्नमायेंद्रजालरज्जूरगादौअध्यस्तंअधिष्ठानेनसमंतुल्यंतदावरक
मित्यर्थः अधिष्ठानंचाध्यस्तसंज्ञानुगतंतत्रस्वकीयंसत्तास्फूर्तिसमर्पकंनथातदीयांसंज्ञामनुसरत्दृश्यतेतथासत्वंपुरुषेणसमंसत्वसंज्ञानुगतःपुरु

विषयोविषयित्वंचसंबंधोयमिहोच्यते विषयीपुरुषोनित्यंसत्वंचविषयःस्मृतः ८ व्याख्यातंपूर्वकल्पेनमशकोदुंबरंयथा भु
ज्यमानंनजानीतेनित्यंसत्वमचेतनम् यस्त्वेवंतंविजानीतेयोभुंक्तेयश्चभुज्यते ९ नित्यंद्वंद्वसमायुक्तंसत्वमाहुर्मनीषिणः
निर्द्वंद्वोनिष्कलोनित्यःक्षेत्रज्ञोनिर्गुणात्मकः १० समःसंज्ञानुगश्चैवसससर्वत्रव्यवस्थितः उपभुंक्तेसदासत्वमपःपुष्करपर्णवत्
११ सर्वैरपिगुणैर्विद्वान्व्यतिषिक्तोनलिप्यते जलबिंदुर्यथालोलःपद्मिनीपत्रसंस्थितः १२ एवमेवाप्यसंयुक्तःपुरुषःस्यान्नसं
शयः द्रव्यमात्रमभूत्सत्वंपुरुषस्येतिनिश्चयः १३ यथाद्रव्यंचकर्ताचसंयोगोप्यनयोस्तथा यथाप्रदीपमादायकश्चित्तमसिगच्छ
ति तथासत्वप्रदीपेनगच्छंतिपरमैषिणः १४ यावद्द्रव्यगुणस्तावत्प्रदीपःसंप्रकाशते क्षीणेद्रव्यगुणेज्योतिरंतर्धानायगच्छति १५

षःउपभुंक्ते तत्रदृष्टांतः अपइतियथापुष्करपर्णंआद्भिरसंसक्तमपिअपोभुंक्तेताभिस्तस्याप्यायनात् एवंसत्वेनावृतःपुरुषःसत्वसमानत्वंगतःसत्वध-
र्मान् आत्मन्यभिमन्वानःसत्वंभुंक्ते तथाचैवंकूटस्थविकारिणोरपिपुंप्रकृत्योराध्यासिकःसंबंधउपपादितोभवति ११ प्रकारांतरेणदृष्टांतंविवृणोतिसर्वै
रिति १२ समत्वमुपपादयतिएवमिति सर्पेणरज्जुरिवसत्वेन असंयुक्तोपिपुरुषःसइतिनिश्चितमेव तथापिसत्वंपुरुषश्चउभयंमिलित्वाद्रव्यमात्रंसत्वमात्र
मभूत् यथारज्जुभुजंगौमिलित्वाभुजंगमात्रंभवतितद्वत् इतिनिश्चयः इदमेवनत्वंकल्पनांतरंतुष्णींनिमात्रमितिभावः १३ इदमेवद्वयोःसत्वमात्रत्वम
नुसृत्यसत्वमेवात्मेतिमन्यमानाबौद्धाःपुरुषमपलपंतितत्राह यथेति. सत्वंपुरुषश्चेत्युभयंयथाद्रव्यमात्रमभूत्तथाद्रव्यंइदमर्थकर्ताहमर्थः तयोःसंयो
गोदर्शनंचेतित्रित्वान्त्रिष्वपिद्रव्यमभूदित्यर्थः कुतस्तर्हिद्रव्यात्पुरुषस्यपृथक्त्वमतआह प्रदीपेति यथादीपेनैवदीपमन्यंचजानंतिएवंसत्वस्यपरि-
णामविशेषेणाविद्याख्येनसत्वंपुरुषंचपृथक्जानीयादित्यर्थः १४ द्रव्यंतैलंगुणोवर्तिः १५ ७ ७ ७ ७

दार्ष्टांतिकमाह व्यक्तइति यथातैलवर्तिभ्यामवष्टब्धोदीप आत्मानंभवनाकाशंचव्याप्नोति तदभावेतुस्वयमेवांतर्द्धीयतेनतुभवनाकाशः एवंकर्मावष्टब्धः सत्वगुणश्चस्मरणनिरूपोऽपिव्यक्तःसन्स्वंचपुरुषंचपृथगवभासयति कर्मोपरमेतुस्वयमेवांतर्धीयतेपुरुषस्तुअव्यक्तःसमाधिसुषुप्तिसाक्षीकेवलइष्यते १६ १७ १८ १९ कर्मसुज्ञानसाधनेषु आत्मनिचित्ते श्रेयोविषयेशुभाशुभदृष्टांतः पूर्णपुण्यपापेयः बहुपुण्यःसः पूर्णयोगमाप्नोति अल्पपुण्यस्त्वतितरांम्रियतेइतिभावः २० यथाचेति शास्त्ररथेनैवसंसाराध्वातिलंघनीयइतिभावः २१ २२ ऊर्ध्वमिति परंपदमारुह्य शास्त्रमपित्याज्यमितिभावः २३ यावदिति चित्तशुद्धिपर्यंतंविधिशास्त्रैकेंकर्यंततस्तुयोगतत्वंजानन् उत्तरोत्तरंहंसंपरमहंसंवाश्रमंसम्यगवबुध्यगच्छेदित्यर्थः २४ २५

व्यक्तःसत्वगुणस्त्वेवंपुरुषोऽव्यक्तइष्यते एतद्धिचाविजानीत हंतभूयो ब्रवीमिवः १६ सहस्रेणापिदुर्मेधानबुद्धिमधिगच्छति चतुर्थेनाप्यथांशेनबुद्धिमान्सुखमेधते १७ एवंधर्मस्याविज्ञेयंसंसाधनमुपायतः उपायज्ञोहिमेधावीसुखमत्यंतमश्नुते १८ यथाध्वानमपाथेयःप्रपन्नोमनुजःक्वचित् क्लेशेनयातिमहताविनश्यत्यंतरापिच १९ तथाकर्मसुविज्ञेयंफलंभवतिवानवा पुरुषस्यात्मनिश्रेयःशुभाशुभनिदर्शनम् २० यथाचदीर्घमध्वानंपद्भ्यामेवप्रपद्यते अदृष्टपूर्वंसहसातत्वदर्शनवर्जितः २१ तमेवचयथाध्वानंरथेनेहाशुगामिना गच्छत्यश्वप्रयुक्तेनतथाबुद्धिमतांगतिः २२ उर्ध्वंपर्वतमारुह्यनान्ववेक्षतभूतलम् रथेनरथिनंपश्यन्क्लिश्यमानमचेतनम् २३ यावद्रथपथस्तावद्रथेनसतुगच्छति क्षीणेरथपथेविद्वान्रथमुत्सृज्यगच्छति २४ एवंगच्छतिमेधावीतत्वयोगविधानवित् परिज्ञायमहाबुद्धिरुत्तरादुत्तरोत्तरम् २५ यथार्णवंमहाघोरमप्लवःसंप्रगाहते बाहुभ्यामेवसंमोहाद्वधंवाच्छत्यसंशयम् २६ नावाचापियथाप्राज्ञोविभागज्ञःस्वरित्रया अश्रांतःसलिलंगच्छेच्छीघ्रंसंतरेत्ह्रदम् २७ तीर्णोगच्छेत्परंपारंनावमुत्सृज्यनिर्ममः व्याख्यातंपूर्वकल्पेनयथारथपदातिनोः २८ स्नेहात्संमोहमापन्नोनाविनाशयोयथातथा ममत्वेनाभिभूतःसंस्तत्रैवपरिवर्तते २९ नावंनशक्यमारुह्यस्थलेविपरिवर्तितुम् तथैवरथमारुह्यनाप्सुचर्याविधीयते ३०

आचार्यरूपांनावंश्रयेदित्याह त्रिभिःश्लोकैःयथेति २६ स्वरित्रयाशोभनानि अरित्राणि केनिपातनानियस्यांतया २७ तीर्णइतिसमाप्तश्रवणवत्निदिध्यासनार्थंगुरुमपित्यजेदितिभावः तावद्गुरुंसेवतेयावद्योगारूढोनभवतिरथमिवपर्वतारूढइतिपूर्वदृष्टांतंस्मारयति व्याख्यातमिति पदातिदृष्टांतोपिगुर्वभावेमार्गप्राप्तिरेवनभवतीत्यत्रबोध्यः २८ स्नेहादिति नात्यंतंगुरावेवस्थेयंसतिध्यानयोग्यत्वेइतिभावः २९ नावमिति कर्माधिकारिणायोगोयोगाधिकारिणाचकर्मनानुष्ठातुंयुक्तंइतिभावः ३० ५ ५ ५

४

कर्मकृतंकर्मफलंचित्रंनानाविधंविषयस्थंपृथक्पृथक् एवंकर्मगृहस्थस्यश्लाघ्यंपरिव्राजस्यपातित्यहेतुः एवंव्यतिरेकोपिज्ञेयः विषयः आश्र-
मः तत्स्थम् एनान्कर्तॄन् ३१ एवंज्ञानसाधनान्युक्त्वाज्ञेयमाह यदिति गंधिगंधवत् रस्यंरसवत् ३२ गुणः कार्यंमहद्रूपंयत्प्रधानकार्यंतस्यापि
गुणोहंकारः ३३ महाभूतकृतः वियदादिरूपत्वेनकल्पितः तेषांगुणास्तद्विषयाः शब्दादयएव ३४ बीजधर्मत्वंकारणत्वंप्रसवात्मकंकार्यरूपत्वं जी
वेतिपाठेपिजीवतोधान्यादेवधर्मोबीजत्वंनतुभर्जितधान्यादेरितिसएवार्थः यद्यपितेषांमते अव्यक्तस्यबीजत्वमेवास्तिनतुकार्यत्वंतथापिअहंतत्त्र

एवंकर्मकृतंचित्रंविषयस्थंपृथक्पृथक् यथाकर्मकृतंलोकेतथातदुपपद्यते ३१ यन्नैवगंधिनोरस्यंनरूपस्पर्शशब्दवत्
मन्यंतेमुनयोबुद्ध्यातत्प्रधानंप्रचक्षते ३२ तत्प्रधानमव्यक्तमव्यक्तस्यगुणोमहान् महत्प्रधानभूतस्यगुणोहंकारएवच ३३
अहंकारात्तुसंभूतोमहाभूतकृतोगुणः पृथक्त्वेनहिभूतानांविषयावैगुणाःस्मृताः ३४ बीजधर्मंतथाव्यक्तंप्रसवात्मकमेवच
३५ बीजधर्मामहानात्माप्रसवश्चेतिनःश्रुतम् बीजधर्मस्त्वहंकारःप्रसवश्चपुनःपुनः ३६ बीजप्रसवधर्माणिमहाभूतानिपंच
के बीजधर्मिणइत्याहुःप्रसवंचप्रकुर्वते विशेषाःपंचभूतानांतेषांचित्तंविशेषणम् ३७ तत्रैकगुणमाकाशंद्विगुणोवायुरुच्यते
त्रिगुणंज्योतिरित्याहुरापश्चापिचतुर्गुणाः ३८ पृथ्वीपंचगुणाज्ञेयाचरस्थावरसंकुला सर्वभूतकरीदेवीशुभाशुभनिदर्शना ३९
शब्दःस्पर्शस्तथारूपंरसोगंधश्चपंचमः एतेपंचगुणाभूमेर्विज्ञेयाद्विजसत्तमाः ४० पार्थिवश्चसदागंधोगंधश्चबहुधास्मृतः त
स्यगंधस्यवक्ष्यामिविस्तरेणबहून्गुणान् ४१ इष्टश्चानिष्टगंधश्चमधुरोम्लःकटुस्तथा निर्हारीसंहतःस्निग्धोरूक्षोविशदएव
च ४२ एवंदशविधोज्ञेयःपार्थिवोगंधइत्युत शब्दःस्पर्शस्तथारूपंद्रवश्चापांगुणाःस्मृताः ४३ रसज्ञानंतुवक्ष्यामिरसस्तुबहुधास्मृ
तः मधुरोम्लःकटुस्तिक्तःकषायोलवणस्तथा ४४ एवंषड्विधविस्तारोरसोवारिमयःस्मृतः शब्दःस्पर्शस्तथारूपंत्रिगुणंज्योतिरु
च्यते ४५ ज्योतिषश्चगुणोरूपंरूपंचबहुधास्मृतम् शुक्लंकृष्णंतथारक्तंनीलंपीतारुणंतथा ४६ ह्रस्वंदीर्घंकृशंस्थूलंचतुरस्रंतु
वृत्तवत् एवंद्वादशविस्तारंतेजसोरूपमुच्यते ४७

तिविरोधात्तदुपेक्ष्यमितिभावः ३५ पुनःपुनरितिद्वाभ्यांसृष्टिरुक्ता ३६ बीजधर्मिणइ-
तितामेवोपपादयति विशेषाः शब्दादयः प्रसवंभोगकालेकार्यरूपेण उपस्थिताअपिसंस्काररूपेणकालांतरेभोगदातृकारणात्मनाऽवतिष्ठंते अत
एतेकारणरूपाश्चकार्यंसर्वदाकुर्वंति पूर्वेषांमृद्घटन्यायेनकार्यकारणभावःविशेषाणांतुबीजांकुरन्यायेनेतिभेदः तेषांविशेषाणामपिविशेषणंव्यावर्तकं
चित्तमेवचित्तएवविशेषाःसर्वसंतिनबाहिरित्यर्थः ३७ पंचभूतानांतेषांचित्तंविशेषणं ३७ तत्रैकगुणमित्यादिग्रंथोव्याख्यातःमोक्षधर्मेषुस्पष्टार्थश्च
३८ ३९ ४० ४० ४२ ४३ ४४ ४५ ४६ ४७

४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ इत्याश्वमेधिकेटीकायांपंचाशोऽध्यायः ५० विशेषाःपंचभूतानामित्यत्रसूत्रितांसकलशास्त्ररहस्य
भूतांदृष्टिसृष्टिंप्रपंचयतिभूतानामित्यादिनानियमेसंहारेविसर्गेउत्पत्तौचभूतानांमनएवईश्वरंसमर्थंयथातथा वक्ष्यतइति शेषः भूतात्मास्थिरि
कालेपिमनएवभूतानामात्मास्वरूपंकनकमिवकुंडलादेः १ अधिष्ठातानिमित्तकारणमपिकुंडलादिस्थानीयंमनएव क्षेत्रज्ञोजीवोपिमनएव एवंम
नसऐश्वर्यंबुद्धिर्विवेकजाप्रज्ञेवआचष्टे स्वप्रतीतिग्राह्यंमनसऐश्वर्यमित्यर्थः २ मनसऐश्वर्ययोगैकगम्यमितितदधिगमार्थंयोगमाह इंद्रियाणी

विज्ञेयंब्राह्मणैर्वृद्धैर्धर्मज्ञैःसत्यवादिभिः शब्दस्पर्शौचविज्ञेयौद्विगुणोवायुरुच्यते ४८ वायोरप्यपिगुणःस्पर्शःस्पर्शश्चब
हुधास्मृतः रूक्षःशीतस्तथैवोष्णःस्निग्धोविशदएवच ४९ कठिनश्चिक्कणःश्लक्ष्णःपिच्छिलोदारुणोमृदुः एवंद्वादशविस्तारो
वायव्योगुणउच्यते ५० विधिवद्ब्राह्मणैःसिद्धैर्धर्मज्ञैस्तत्वदर्शिभिः ५१ तत्रैकगुणमाकाशंशब्दइत्येवचस्मृतः तस्यशब्दस्यवक्ष्या
मिविस्तरेणबहून्गुणान् ५२ षड्जर्षभःसगांधारोमध्यमःपंचमस्तथा अतःपरंतुविज्ञेयोनिषादोधैवतस्तथा इष्टश्चानिष्टशब्द
श्चसंहतःप्रविभागवान् ५३ एवंदशविधोज्ञेयःशब्दआकाशसंभवः आकाशमुत्तमंभूतमहंकारस्ततःपरः ५४ अहंकारात्परा
बुद्धिर्बुद्धेरात्माततःपरः तस्मात्तुपरमव्यक्तमव्यक्तात्पुरुषःपरः ५५ परापरज्ञोभूतानांविधिज्ञःसर्वकर्मणाम् सर्वभूतात्मभू
तात्मागच्छत्यात्मानमव्ययम् ५६ इतिश्रीमन्महाभारतेआश्वमेधिकपर्वणिब्राह्मणगीतासुगुरुशिष्यसंवादेपंचाशो
ऽध्यायः ५० ब्रह्मोवाच भूतानामथपंचानांयथैषामीश्वरंमनः नियमेचविसर्गेचभूतात्मामनएवच १ अधिष्ठा
तामनोनित्यंभूतानांमहतांतथा बुद्धिरैश्वर्यमाचष्टेक्षेत्रज्ञश्चसउच्यते २ इंद्रियाणिमनोयुंक्तेसदश्वानिवसारथिः इंद्रि
याणिमनोबुद्धिःक्षेत्रज्ञेयुज्यतेसदा ३ महदश्वसमायुक्तंबुद्धिसंयमनंरथम् समारुह्यसभूतात्मासमंतात्परिधावति ४
इंद्रियग्रामसंयुक्तोमनःसारथिरेवच बुद्धिसंयमनोनित्यंमहान्ब्रह्ममयोरथः

तिमनःकर्तृयुंक्तेप्रयुंक्ते आत्मेंद्रियमनोयुक्तंभोक्तेतिश्रुतिंव्याचष्टे इंद्रियाणीति आत्मपदस्यप्रतिपदंबुद्धिपदंभोक्तेत्यस्यप्रतिपदंक्षेत्रज्ञइति
३ महांतःइंद्रियाश्वास्तैःसमायुक्तंबुद्ध्यासारथिभूतयासंयमनंनिग्रहोयस्यतम् रथंब्रह्ममयंकारणविकारभूतंशरीरस्थंभूतात्मादेहाभिमा
नीसर्वतःस्खलितःधावति ४ अयमेवरथःइंद्रियग्रामेणवशीकृतेनसंयुक्तः सम्यक्समाहितःमनसाचसारथिनासंयुक्तःबुद्धिसंयमःबुद्धि
प्रतोदश्चेत् महान्भवति बहिर्मुखान्नींद्रियबुद्धिमनांसि आत्मनोजीवत्वमापादयंति अंतर्मुखानि त्वस्यब्रह्ममयत्वमाविष्कुर्वंतीत्यर्थः ५

एवंनिग्राह्यत्वेनयोवेदसधीरोध्यानशीलः ६ अव्यक्ताद्यात्मकेब्रह्मवनेस्मिन्चेतनः संचरतीत्याह अव्यक्तेतित्रिभिः ७ ८ ९ अस्मिन्नात्मनोलोके अग्रेनि
मेषमात्रेणस्थावरादिकंबाह्यंसर्वंलीयते नेत्रनिमीलनमात्रेणभूतानिप्रलीयंतेदृष्टिसृष्ट्यधिकारादित्यर्थः तदनंतरंभूतकृताः गुणाः शब्दादयोलीयंते ने
त्रवत्श्रोत्रादीनामपियुक्त्यानिमीलनेकृतेसतीत्यर्थः गुणेभ्यः लीनेभ्योनंतरंपंचभूतानिसूक्ष्मदेहारंभकाणिप्रलीयंते स्थूलानांप्रत्याहारेणैवसंहृत-
त्वात् एषदेहद्वयरूपोभूतसमुच्छ्रयइतिपंचभूतानीत्यस्यव्याख्याभूतानांलयेतुनिर्विशेषचिन्मात्रेणैवरूपेणावतिष्ठतइत्यर्थः सार्द्धश्लोकः १० देवा

एवंयोवेत्तिविद्वान्वैसदाब्रह्ममयंरथम् सधीरःसर्वभूतेषुनमोहमधिगच्छति ६ अव्यक्तादिविशेषांतंसहस्थावरजं
गमम् सूर्यचंद्रप्रभालोकंग्रहनक्षत्रमंडितम् ७ नदीपर्वतजालैश्चसर्वतःपरिभूषितम् विविधाभिस्तथाचाद्भिःसततंसम
लंकृतम् ८ आजीवंसर्वभूतानांसर्वप्राणभृतांगति एतद्ब्रह्मपरंनित्यंतस्मिंश्चरतिक्षेत्रवित् ९ लोकेस्मिन्यानिसत्वानिचरा
णिस्थावराणिच तान्येवाग्रेप्रलीयंतेपश्चाद्भूतकृतागुणाः गुणेभ्यःपंचभूतानिएषभूतसमुच्छ्रयः १० देवामनुष्यागंधर्वाःपिशाचासु
रराक्षसाः सर्वेस्वभावतःसृष्टानक्रियाभ्योनकारणात् ११ एतेविश्वसृजोविप्राजायंतीहपुनःपुनः तेभ्यःप्रसूतास्तेष्वेवमहाभूते
षुपंचसु १२ प्रलीयंतेयथाकालमूर्मयःसागरेयथा १२ विश्वसृग्भ्यस्तुभूतेभ्योमहाभूतास्तुसर्वशः भूतेभ्यश्चापिपंचभ्योमुक्तो
गच्छेत्परांगतिम् १३ प्रजापतिरिदंसर्वंमनसैवासृजत्प्रभुः तथैववेदानृषयस्तपसाप्रतिपेदिरे १४ तपसश्चानुपूर्व्येणफल
मूलाशिनस्तथा त्रैलोक्यंतपसासिद्धाःपश्यंतीहसमाहिताः १५ औषधान्यगदादीनिनानाविधाश्चसर्वशः तपसैवप्रसि
ध्यंतितपोमूलंहिसाधनम् १६ यद्दुरापंदुराम्नायंदुराधर्षंदुरन्वयम् तत्सर्वंतपसासाध्यंतपोहिदुरतिक्रमम् १७ सुरापोब्र
ह्महास्तेयीभ्रूणहागुरुतल्पगः तपसैवसुतप्तेनमुच्यंतेकिल्बिषात्ततः १८ मनुष्याःपितरोदेवाःपशवोमृगपक्षिणः यानिचा-
न्यानिभूतानित्रसाणिस्थावराणिच १९ तपःपरायणानित्यंसिध्यंतेतपसासदा तथैवतपसादेवामहामायादिवंगताः २०

दयः स्वामदेवादिवत्स्वभावत एवउत्पन्नाःनयज्ञादिनानापिब्रह्मादिनेत्याह देवाइति ११ विश्वसृजोमरीच्यादयोपिभौतिकत्वाद्भूतलयेलीयंत इत्याह ए
तइतिसार्द्धेन १२ विश्वसृग्भ्यःस्थूलभूतेभ्यः परेमहाभूताः सूक्ष्मभूतानि तेभ्योपिपरांगतिंयुक्तोगच्छेत् पाठांतरेभूतानांयोविश्वसृग्विराट्तस्मात्स्वापादानभू
तानिप्रतिगच्छंतीतिसर्वेत्यर्थः १३ मनसश्चेंद्रियाणांचएकाग्र्यंपरमंतपइत्युक्तलक्षणतपोबलेनसर्वंमनसैवसृज्यत इत्याह प्रजापतिरित्यादिना १४ तपसःसं
कल्पस्यआनुपूर्व्येणक्रमेण समाहिताःसमाधियुक्ताः १५ दुरापंइंद्रपदादिदुराम्नायंवेदादिदुराधर्षंवन्ध्यादिदुरन्वयंअसमाधेयंमहा
प्रलयादि १६ १७ १८ १९ २०

२१ २२ क्षरखोपचयम् लौकिकानांक्षरखानां उपचयोवृद्धिर्यस्मात्तंक्षरखोपचयं अखंडमानंदं एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतिप्र
सिद्धम् २३ उपगम्यपराहृत्यपूर्णध्यानयोगमप्राप्ययेम्रियंतेते प्रकृतिलीनाभवंतीति २४ स्वमसंज्ञांगतःस्वयमव्यक्तत्वंप्राप्तइत्यर्थः २५ यःकारण
त्वंप्राप्तःसर्वंसृजतितमेवानिष्कलंक्षेत्रज्ञंईश्वरमितिविद्यात् २६ चित्तंसम्यक्ज्ञानंचित्तासंज्ञानइत्यस्माद्भवेनिष्ठाचित्तात् मनसा हेतुनाउपागम्य
प्राप्यसंयतःसततंआसीत ततश्चयच्चित्तस्तन्मयोभवतिकीटकभृंगन्यायेनयद्रूपंभावयतितदेवायंभवतीत्यर्थः मनइतिपाठेयच्चित्तंतदेव ईश्वरस्त
ज्ञाव्यंदातुंसमर्थइत्यर्थः २७ तत्रदानार्थमाह अव्यक्तादीति यत्किंचिन्मदीयत्वेनकल्पितंतत्सर्वमाविद्यात्तोनिष्कलमात्मानमेवध्यायेदित्यर्थः २८ २९

आशीर्युक्तानिकर्माणिकुर्वतेयेत्वतंद्रिताः अहंकारसमायुक्तास्तेसकाशेप्रजापतेः २१ ध्यानयोगेनशुद्धेनानिर्ममानिरहंकृताः
प्राप्नुवंतिमहात्मानोमहांतंलोकमुत्तमम् २२ ध्यानयोगमुपागम्यप्रसन्नमतयःसदा क्षरखोपचयमव्यक्तंप्रविशंत्यात्मवित्तमाः
२३ ध्यानयोगादुपागम्यनिर्ममानिरहंकृताः अव्यक्तंप्रविशंतीहमहतांलोकमुत्तमम् २४ अव्यक्तादेवसंभूतःस्वमसंज्ञांगतः
पुनः तमोरजोभ्यांनिर्मुक्तःसत्वमास्थायकेवलम् २५ निर्मुक्तःसर्वपापेभ्यःसर्वंसृजातिनिष्कलम् क्षेत्रज्ञइतितंविद्याद्यस्तंवे
दसवेदवित् २६ चित्तंचित्तादुपागम्यमुनिरासीतसंयतः यच्चित्तंतन्मयोवश्यंगुह्यमेतत्सनातनम् २७ अव्यक्तादिविशेषां
तमविद्यालक्षणंस्मृतम् निबोधततथाहीदंगुणैर्लक्षणमित्युत २८ द्व्यक्षरस्तुभवेन्मृत्युस्त्र्यक्षरंब्रह्मशाश्वतम् ममेतिचभ
वेन्मृत्युर्नममेतिचशाश्वतम् २९ कर्मकेचित्प्रशंसंतिमंदबुद्धिरतानराः येतुवृद्धामहात्मानोनप्रशंसंतिकर्मते ३० कर्मणा
जायतेजंतुर्मूर्तिमान्षोडशात्मकः पुरुषंग्रसतेविद्यात्तद्ग्राह्यममृताशिनाम् ३१ तस्मात्कर्मसुनिःस्नेहायेकेचित्पारदर्शिनः वि
द्यामयोयंपुरुषोनतुकर्ममयःस्मृतः ३२ यएवममृतंनित्यमग्राह्यंशश्वदक्षरम् वश्यात्मानमसंश्लिष्टंयोवेदनमृतोभवेत् ३३
अपूर्वमकृतंनित्यंयएनमपराजितम् यएवंविंदेदात्मानमग्राह्यममृताशनम् अग्राह्योमृतोभवतिसएभिःकारणैर्ध्रुवः ३४

३० षोडशात्मकःपंचमहाभूतानिएकादशाविकाराश्चतदात्मकः तमेवशोडशात्मकंपुरुषंविद्याग्रसते तदेवचग्राह्यंउपादेयम् अमृतंदेवतादिशेषंअश्नंति
तेमृताशिनस्तेषां अशिताशनमितिपाठेतृप्तानामपितृप्तिकरं ३१ ३२ शश्वदक्षरंसर्वदाअपचयहीनं वश्यात्माजितचित्तः असंश्लिष्टंअसंगम् ३३ अ ५
पूर्वमानांतरानवगतंअकृतंअकृत्रिमम् अविचारिणंकूटस्थंपाठांतरेस्पष्टोर्थः अमृताशनंईश्वरग्रासकर्तारीयइतिश्रुतेःईश्वरस्यापिसंहर्तारं एभिर्वक्ष्य

चेतसः संस्कारामैत्र्यादयस्तान् आयोज्य दृढान् कृत्वा आत्मानं चित्तं आत्मनि हृदयपुंडरीके संयम्य निरुध्य ३५ प्रसादे नैर्मल्ये प्रसादे शांतिं चित्तप्रसा
दस्य लक्षणं तु यथा स्वप्ने देहासंगेनावस्थानमस्ति तथा यदा योगयुक्त्या चित्तं बहिः संज्ञाशून्यं अंतः प्रचारि भवति तदेव प्रसादचिन्हम् ३६ एषा प्रसादरूपा
गतिर्मार्गः प्रवर्तते ताः प्रवृत्तयः त्रैकालिकाः पदार्थाः तान् परिणामजान् अतीताननागतांश्च त्रपश्यंति योगिनः ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५

आयोज्य सर्वसंस्कारान् संयम्यात्मानमात्मनि संतद्ब्रह्मशाश्वतं वेत्ति यस्माद्भूयो न विद्यते ३५ प्रसादं चैव सत्वस्य प्रसादं समवाप्नु
यात् लक्षणं हि प्रसादस्य यथा स्यात्स्वप्नदर्शनम् ३६ गतिरेषा तु मुक्तानां ये ज्ञानपरिनिष्ठिताः प्रवृत्तयश्च याः सर्वाः पश्यति परि
णामजाः ३७. एषा गतिर्विरक्तानामेष धर्मः सनातनः एषा ज्ञानवतां प्राप्तिरेतद्वृत्तमनिंदितम् ३८ समेन सर्वभूतेषु निस्पृहेण निरा
शिषा शक्या गतिरियं गंतुं सर्वत्र समदर्शिना ३९ एतद्वः सर्वमाख्यातं मया विप्रर्षिसत्तमाः एवमाचरत क्षिप्रं ततः सिद्धिमवाप्स्य
थ ४० गुरुरुवाच इत्युक्तास्ते तु मुनयो गुरुणा ब्रह्मणा तथा कृतवंतो महात्मानस्ततो लोकमवाप्नुवन् ४१ त्वमप्ये
तन्महाभाग मयोक्तं ब्रह्मणो वचः सम्यगाचर शुद्धात्मंस्ततः सिद्धिमवाप्स्यसि ४२ वासुदेव उवाच इत्युक्तः सत
दा शिष्यो गुरुणा धर्ममुत्तमम् चकार सर्वं कौंतेय ततो मोक्षमवाप्तवान् ४३ कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह तत्प
दं समनुप्राप्तो यत्र गत्वा न शोचति ४४ अर्जुन उवाच को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन श्रोतव्यं चे
न्मयैतद्वै तत्त्वमाचक्ष्व मे विभो ४५ वासुदेव उवाच अहं गुरुर्महाबाहो मनः शिष्यं च विद्धि मे त्वत्प्रीत्या गुह्यमेतच्च
कथितं मे धनंजय ४६ मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत ४७ ततस्त्वं सम्य
गाचीर्णे धर्मेस्मिन्नरिकर्षण सर्वपापविनिर्मुक्तो मोक्षं प्राप्स्यसि केवलम् ४८ पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते मया त
व महाबाहो तस्मादत्र मनः कुरु ४९ मया तु भरतश्रेष्ठ चिरदृष्टः पिता प्रभुः तमहं द्रष्टुमिच्छामि संमते तव फाल्गुन ५०
वैशंपायन उवाच इत्युक्तवचनं कृष्णं प्रत्युवाच धनंजयः गच्छावो नगरं कृष्ण गजसाह्वयमद्य वै ५१

अहमिति अहं क्षेत्रज्ञो गुरुः मनो मदीयं मया बोधनीयम् एतेन आत्मनो गुरुरात्मैवेत्युक्तं भवति ४६ सम्यगाचर यमनियमादिनिष्ठो भ
व ४७ केवलमिति क्रममुक्तिव्यावृत्तिः ४८ प्रागुक्तं स्मारयति अस्य च तस्य च एकवाक्यतां कारयितुम् पूर्वमिति ४९ कथामनुसंधत्ते
मयात्वित्यादिना ५० ५१ श्रीकृष्णाभ्यां नमः

४३ ४४ इत्याश्वमेधिकपर्वणि टीकायां ऊननवतितमोऽध्यायः ८९ पितामहस्येत्यादिर्ग्रंथः क्लेशार्जितं न्यायतः श्रद्धया सत्पात्रेऽर्पितं अश्वमेधादप्यधि



दीयतां भुज्यतां चेष्टं दिवारात्रमवारितम् तं महोत्सवसंकाशं हृष्टपुष्टजनाकुलम् ४३ कथयंति स्म पुरुषा नानादेशनिवासिनः वर्षि
त्वा धनधाराभिः कामै रत्नै रसैस्तदा विपाप्मा भरतश्रेष्ठः कृतार्थः प्राविशत्पुरम् ४४ इति श्रीमन्महाभारते आ॰ पर्वणि अश्वमेधप
र्वणि ऊननवतितमोऽध्यायः ८९ जनमेजय उवाच पितामहस्य मे यज्ञे धर्मराजस्य धीमतः यदाश्चर्यमभूत्किंचित्तद्भ
वान्वक्तुमर्हति १ वैशंपायन उवाच श्रूयतां राजशार्दूल महदाश्चर्यमुत्तमं अश्वमेधे महायज्ञे निवृत्ते यदभूत्प्रभो २
तर्पितेषु द्विजाग्र्येषु ज्ञातिसंबंधिबंधुषु दीनांधकृपणे वापि तदा भरतसत्तम ३ घुष्यमाणे महादाने दिक्षु सर्वासु भारत पतत्सु पुष्प
वर्षेषु धर्मराजस्य मूर्द्धनि ४ नीलाक्षस्तत्र नकुलो रुक्मपार्श्वस्तदानघ वज्राशनिसमं नादममुंचद्वसुधाधिप ५ सकृदुत्सृज्य तं ना
दं त्रासयानो मृगद्विजान् मानुषं वचनं प्राह धृष्टो बिलशयो महान् ६ सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः उंछवृत्तेर्वदान्यस्य कुरु
क्षेत्रनिवासिनः ७ तस्य तद्वचनं श्रुत्वा नकुलस्य विशांपते विस्मयं परमं जग्मुः सर्वे ते ब्राह्मणर्षभाः ८ ततः समेत्य नकुलं पर्यपृच्छंत ते
द्विजाः कुतस्त्वं समनुप्राप्तो यज्ञं साधुसमागमम् ९ किं बलं परमं तुभ्यं किं श्रुतं किं परायणम् कथं भवंतं विद्याम यो नो यज्ञं विगर्हसे १०
अविलुप्यागमं कृत्स्नं विविधैर्यज्ञियैः कृतम् यथागमं यथान्यायं कर्तव्यं च तथा कृतम् ११ पूजार्हाः पूजिताश्चात्र विधिवच्छास्त्रदर्शना
त् मंत्राहुतिहुतश्चाग्निर्दत्तं देयममत्सरं १२ तुष्टा द्विजातयश्चात्र दानैर्बहुविधैरपि क्षत्रियाश्च सुयुद्धेन श्राद्धैश्चापि पितामहाः १४
पालनेन विशस्तुष्टाः कामैस्तुष्टा वरस्त्रियः अनुक्रोशैस्तथा शूद्रा दानशेषैः पृथक्जनाः १५ ज्ञातिसंबंधिनस्तुष्टाः शौचेन च नृपस्य नः
देवा हविर्भिः पुण्यैश्च रक्षणैः शरणागताः १६ यदत्र तथ्यं तद्ब्रूहि सत्यसत्यं द्विजातिषु यथाश्रुतं यथादृष्टं पृष्टो ब्राह्मणकाम्यया १७ श्रद्धेयवा
क्यः प्राज्ञस्त्वं दिव्यं रूपं बिभर्षि च समागतश्च विप्रैस्त्वं तद्भवान्वक्तुमर्हति १८ इति पृष्टो द्विजैस्तैः स प्रहसन्नकुलोऽब्रवीत् नैषा मृषा म
या वाणी प्रोक्ता दर्पेण वा द्विजाः १९ यन्मयोक्तमिदं वाक्यं युष्माभिश्चाप्युपश्रुतम् सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो द्विजर्षभाः २० इत्यव
श्यं मयैतद्वो वक्तव्यं द्विजसत्तमाः शृणुताव्यग्रमनसः शंसतो मे यथातथम् २१ अनुभूतं च दृष्टं च यन्मयाद्भुतमुत्तमम् उंछवृत्तेर्वदा
न्यस्य कुरुक्षेत्रनिवासिनः २२ स्वर्गं येन द्विजः प्राप्तः सभार्यः ससुतः स्नुषः यथा चार्द्धं शरीरस्य ममेदं कांचनीकृतम् २३

कमिति क्रोधजयः सर्वथा कर्तव्यः १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ ममेदं यत्रेति शेषः २२ ५५

२४ कापोतिः कपोतवदेकैकंकणंआदत्तेसकापोतिः २५ २६ २७ २८ २९ ३० उंच्छंकणशआदानंकर्तुमितिशेषः ३१ ३२ ३३ ३४ ३५ ३६

नकुलउवाच हंतवोवर्तयिष्यामिदानस्यफलमुत्तमम् न्यायलब्धस्यसूक्ष्मस्यविप्रलब्धस्यताद्विजाः २४ धर्मक्षेत्रेकुरुक्षेत्रेथ
मज्ञैर्बहुभिर्वृते उंछवृत्तिर्द्विजःकश्चित्कापोतिरभवत्तदा २५ सभार्यःसहपुत्रेणसस्नुषस्तपसिस्थितः बभूवशक्कवृत्तःसधर्मात्मा
नियतेंद्रियः २६ षष्ठेकालेसदाविप्रोभुंक्ततेःसहसुव्रतः षष्ठेकालेकदाचित्तुतस्याहारोनविद्यते २७ भुंक्तेन्यस्मिन्कदाचित्सषष्ठेकाले
द्विजोत्तमः कदाचिद्धर्मिणस्तस्यदुर्भिक्षसातिदारुणे २८ नविद्यतेतदाविप्राःसंचयस्तन्निबोधत क्षीणौषधिसमावेशेद्रव्यहीनोभव
त्तदा २९ कालेकालेस्यसंप्राप्तेनैवविद्यतभोजनम् क्षुधापरिगताःसर्वेप्रातिष्ठंततदातुते ३० उंछस्तदाशक्कपक्षेमध्यंतपतिभास्करे उ
ष्णार्तश्चक्षुधार्तश्चसविप्रस्तपसिस्थितः ३१ उंछमप्राप्तवानेवब्राह्मणःक्षुच्छमान्वितः सतथैवक्षुधाविष्टःसार्द्धंपरिजनेनह ३२
क्षपयामासतंकालंकृच्छ्रप्राणोद्विजोत्तमः अथषष्ठेगतेकालेयवप्रस्थमुपार्जयन् ३३ यवप्रस्थंतुतंसक्तूनकुर्वंततपस्विनः कृतज
प्याह्निकास्तेतुहुत्वाचाग्निंयथाविधि ३४ कुडवंकुडवंसर्वेव्यभजंततपस्विनः अथागच्छद्द्विजःकश्चिदतिथिर्भुंजतांतदा ३५ तेतंदृ
ष्ट्वातिथिंप्राप्तंप्रहृष्टमनसोभवन् तेभिवाद्यसुखप्रश्नंपृष्ट्वातमतिथिंतदा ३६ विशुद्धमनसोदांताःश्रद्धादमसमन्विताः अनसूय
वोविक्रोधाःसाधवोवीतमत्सराः ३७ त्यक्तमानमदक्रोधाधर्मज्ञाद्विजसत्तमाः सब्रह्मचर्यंगोत्रंतेतस्याख्यात्वापरस्परम् ३८ कुटींप्रवे
शयामासुःक्षुधार्तमतिथिंतदा इदमर्घ्यंचपाद्यंचबृषीचेयंतवानघ ३९ शुचयःसक्तवश्चेमेनियमोपार्जिताःप्रभो प्रतिगृण्हीष्वभद्रं
तेमयादत्ताद्विजर्षभ ४० इत्युक्तःपरिगृह्याथसक्तूनांकुडवंद्विजः भक्षयामासराजेंद्रनचतुष्टिंजगामसः ४१ सउंछवृत्तस्तंप्रेक्ष्य
क्षुधापरिगतंद्विजः आहारंचिंतयामासकथंतुष्टोभवेदिति ४२ तस्यभार्याब्रवीद्वाक्यमद्भागोदीयतामिति गच्छत्वेषयथाकामंप
रितुष्टोद्विजोत्तमः ४३ इतिब्रुवतींतांसाध्वींभार्यांसद्विजसत्तमः क्षुधापरिगतांज्ञात्वातान्सक्तून्नाभ्यनंदत ४४ आत्मानुमानतो
विद्वान्सतुविप्रर्षभस्तदा जानन्वृद्धांक्षुधार्तांचश्रांतांग्लानांतपस्विनीम् ४५ त्वगस्थिभूतांवेपंतींततोभार्यामुवाचह अपिकीटप
तंगानांमृगाणांचैवशोभने ४६ स्त्रियोरक्ष्याश्चपोष्याश्चनत्वेवंवक्तुमर्हसि अनुकंप्योनरःपत्न्यापुष्टोरक्षितएवसः ४७ धर्मकामा
र्थकार्याणिशुश्रूषाकुलसंततिः दारेष्वधीनोधर्मश्चपितॄणामात्मनस्तथा नवेत्तिकर्मतोभार्यारक्षणेयोऽक्षमःपुमान् ४८

अयशोमहदाप्नोतिनरकांश्चैवगच्छति प्रपतेद्यशसोदीप्तात्सर्वलोकान्नवाप्नुयात् इत्युक्तासाततःप्राहधर्मार्थौनौसमौहिज ४९ मनु
प्रस्थचतुर्भागंगृहाणेमंप्रसीदमे सत्यंरतिश्चधर्मश्चस्वर्गश्चगुणवर्जितः ५० स्त्रीणांपतिसमाधानंकांक्षितंचद्विजर्षभ ऋतुर्मातुःपितु
र्बीजंदैवतंपरमंपतिः ५१ भर्तुःप्रसादान्नारीणांरतिपुत्रफलंतथा पालनाद्धिपतिस्त्वंमेभर्तासिभरणाच्चमे ५२ पुत्रप्रदानाद्वरदस्तस्मा
त्सक्तून्प्रयच्छमे जरापरिगतोवृद्धःक्षुधार्तोदुर्बलोभृशम् ५३ उपवासपरिश्रांतोयदात्वमपिकर्षितः इत्युक्तःसतयासक्तून्प्रगृह्येदं
वचोब्रवीत् द्विजसक्तूनिमान्भूयःप्रतिगृण्हीष्वसत्तम सतान्प्रगृह्यभुक्त्वाचनतुष्टिमगमद्द्विजः ५५ तमुंछवृत्तिशालस्थंततश्चिंतापरो
भवत् ५६ पुत्रउवाच सक्तूनिमान्प्रगृह्यत्वंदेहिविप्रायसत्तम इत्येवसुकृतंमन्येतस्मादेतत्करोम्यहम् ५७ भवान्हिपरिपा
ल्योमेसर्वदेवप्रयत्नतः साधूनांकांक्षितंयस्मात्पितुर्वृद्धस्यपालनम् ५८ पुत्रार्थोविहितोह्येषवार्द्धकेपरिपालनं श्रुतिरेषाहिविप्रर्षे
त्रिषुलोकेषुशाश्वती ५९ प्राणधारणमात्रेणशक्यंकर्तुंतपस्त्वया प्राणोहिपरमोधर्मःस्थितोदेहेषुदेहिनाम् ६० पितोवाच
अपिवर्षसहस्रीत्वंबालएवमतोमम उत्पाद्यपुत्रंहिपिताकृतकृत्योभवत्सुतात् ६१ बालानांक्षुद्बलवतीजानाम्येतदहंप्रभो वृद्धो
हंधारयिष्यामित्वंबलीभवपुत्रक ६१ जीर्णेनवयसापुत्रनमेक्षुद्बाधतेपिच दीर्घकालंतपस्तप्तंनमेमरणतोभयम् ६३ पुत्रउवा
च अपत्यमस्मितेपुत्रस्त्राणात्पुत्रइतिश्रुतिः आत्मापुत्रःस्मृतस्तस्मात्त्राह्यात्मानमिहात्मना ६४ पितोवाच रूपेण
सदृशस्त्वंमेशीलेनचदमेनच परीक्षितश्चबहुधासक्तूनादद्मितेसुत ६५ इत्युक्त्वादायतान्सक्तून्प्रीतात्माद्विजसत्तमः प्रहसन्निव
विप्रायसतस्मैप्रददौतदा ६६ भुक्त्वातानपिसक्तून्सनैवतुष्टोबभूवह उंछवृत्तसुधर्मात्माव्रीडामनुजगामह ६७ तंवैवधूःस्थितासा
ध्वीब्राह्मणप्रियकाम्यया सक्तूनादायसंहृष्टाश्वशुरंवाक्यमब्रवीत् ६८ संतानात्तवसंतानंममविप्रभविष्यति सक्तूनिमानतिथयेगृ
हीत्वासंप्रयच्छमे ६९ तवप्रसादान्निर्वृत्तामममलोकाःकिलाक्षयाः पौत्रेणतानवाप्नोतियत्रगत्वानशोचति ७० पितॄनृणात्तारय
तिपुत्रइत्यनुशुश्रुमः पुत्रपौत्रैश्चनियतंसाधुलोकानुपाश्नुते ७२ श्वशुरउवाच वातातपविशीर्णांगींत्वांविवर्णांनिरीक्ष्यवै
कर्शितांसुव्रताचारेक्षुधाविह्वलचेतसाम् ७३ कथंसक्तून्ग्रहिष्यामिभूत्वाधर्मोपघातकः कल्याणवृत्तेकल्याणिनैवंत्वंवक्तुमर्हसि ७४

षष्ठेकालेव्रतवतींशौचशीलतपोन्विताम् कृच्छ्रवृत्तिंनिराहारांद्रक्ष्यामित्वांकथंशुभे ७५ बालाक्षुधार्तानारीचरक्ष्यात्वंसततंमया उ
पवासपरिश्रांतात्वंहिबांधवनंदिनी ७६ स्नुषोवाच गुरोर्ममगुरुस्त्वंवैयतोदैवतदैवतम् देवातिदेवस्तस्मात्त्वंसक्तूनादत्स्वमे
प्रभो ७७ देहःप्राणश्चधर्मश्चशुश्रूषार्थमिदंगुरोः तवविप्रप्रसादेनलोकान्प्राप्स्यामहेशुभान् ७८ अवेक्ष्याइतिकृत्वाहंदृढभक्तेतिवाद्वि
ज चिंत्याममेयमितिवासक्तूनादातुमर्हसि ७९ श्वशुरउवाच अनेननित्यंसाध्वित्वंशीलवृत्तेनशोभसे यात्वंधर्मव्रतोपेतागु
रुवृत्तिमवेक्षसे तस्मात्सक्तून्ग्रहीष्यामिवधुनार्हसिवंचनाम् ८० गणयित्वामहाभागेत्वंहिधर्मभृतांवर इत्युक्त्वातानुपादायसक्तून्प्रा
दाद्विजातये ८१ ततस्तुष्टोभवद्विप्रस्तस्यसाधोर्महात्मनः प्रीतात्मासतुतंवाक्यमिदमाहद्विजर्षभम् ८२ वाग्मीतदाद्विजश्रेष्ठोधर्मःपुरुष
विग्रहः शुद्धेनतवदानेनन्यायोपात्तेनधर्मतः ८३ यथाशक्तिविसृष्टेनप्रीतोस्मिद्विजसत्तम अहोदानंघुष्यतेतेस्वर्गेस्वर्गनिवासिभिः
८४ गगनात्पुष्पवर्षंचपश्यद्वंपातितंभुवि सुरर्षिदेवगंधर्वायेचदेवपुरःसराः ८५ स्तुवंतोदेवदूताश्चस्थितादानेन विस्मिताः ब्रह्म
र्षयोविमानस्थाब्रह्मलोकचराश्चये ८६ कांक्षंतोदर्शनंतुभ्यंदिवंव्रजद्विजर्षभ पितृलोकगताःसर्वेतारिताःपितरस्त्वया ८७ अनागताः
श्चबहवःसुबहूनियुगान्युत ब्रह्मचर्येणदानेनयज्ञेनतपसातथा ८८ असंकरेणधर्मेणतस्माद्गच्छदिवंद्विज श्रद्धयापरयायस्त्वंतप
श्चरसिसुव्रत ८९ तस्माद्देवास्त्वदानेनप्रीताब्राह्मणसत्तम सर्वमेतद्धियस्मात्तेदत्तंशुद्धेनचेतसा ९० कृच्छ्रकालेततःस्वर्गोविजितः
कर्मणात्वया क्षुधानिर्णुदतिप्रज्ञांधर्मबुद्धिंव्यपोहति ९१ क्षुधापरिगतज्ञानोधृतिंत्यजतिचैवहि बुभुक्षांजयतेयस्तुसस्वर्गंजयते
ध्रुवम् ९२ यदादानरुचिःस्यात्तुतदाधर्मोनसीदति अनवेक्ष्यसुतस्नेहंकलत्रस्नेहमेवच ९३ धर्ममेवगुरुंज्ञात्वातृष्णानगणितात्वया
द्रव्यागमोनृणांसूक्ष्मःपात्रेदानंततःपरम् ९४ कालःपरतरोदानात्श्रद्धाचैवततःपरा स्वर्गद्वारंसुसूक्ष्मंहिनरैर्मोहान्नदृश्यते ९५
स्वर्गार्गलंलोभबीजंरागगुप्तंदुरासदम् नंतुपश्यंतिपुरुषाजितक्रोधाजितेंद्रियाः ९६ ब्राह्मणास्तपसायुक्तायथाशक्तिप्रदायिनः स
हस्रशक्तिश्चशतंशतशक्तिर्दशापिच ९७ दद्यादपश्चयःशक्त्यासर्वेतुल्यफलाःस्मृताः रंतिदेवोहिनृपतिरपःप्रादादकिंचनः ९८ शुद्धेन
मनसाविप्रनाकपृष्ठंततोगतः नधर्मःप्रीयतेतातदानैर्दत्तैर्महाफलैः ९९ न्यायलब्धैर्यथासूक्ष्मैःश्रद्धापूतैःसतुष्यति गोप्रदानसह
स्राणिद्विजेभ्योदान्नृगोनृपः १००

एकांदत्वासपारक्यांनरकंसमपद्यत आत्ममांसप्रदानेनाशिबिरौशीनरोनृप: १०१ प्राप्यपुण्यकृतांल्लोकान्मोदतेदिविसत्व्रत: विभ
वोनतृणांपुण्यंस्वशक्त्यास्वर्जितंसतां १०२ नयज्ञैर्विविधैर्विप्रयथान्यायेनसंचितै: क्रोधाद्दानफलंहंतिलोभात्स्वर्गंनगच्छति १०३ न्याय
वृत्तिर्हितपसादानवित्स्वर्गमश्नुते नराजसूयैर्बहुभिरिष्ट्वाविपुलदक्षिणै: १०४ नचाश्वमेधैर्बहुभि: फलंसममिदंतव सक्तुप्रस्थेनवि
जितोब्रह्मलोकस्त्वयाक्षय: विरजोब्रह्मसदनंगच्छविप्रयथासुखम् सर्वेषांवोद्विजश्रेष्ठदिव्यंयानमुपस्थितम् १०६ आरोहतयथा
कामंधर्मोस्मिद्विजपश्यमां तारितोहित्वयादेहो लोकेकीर्तिस्थिराचते १०७ सभार्य:सहपुत्रश्चसस्नुषश्चदिवंव्रज इत्युक्तवाक्येधर्मे
तुयानमारुह्यसद्विज: १०८ सदार:ससुतश्चैवसस्नुषश्चदिवंगत: तस्मिन्विप्रेगतेस्वर्गेससुतेसस्नुषेतदा १०९ भार्याचतुर्थेधर्मे
ज्ञेततोहंनि:सृतोबिलात् ततस्तुसक्तुगंधेनक्लेदेनसलिलस्यच ११० दिव्यपुष्पावमर्दाच्चसाधोदानलवैश्चतै: विप्रस्यतपसातस्य
शिरोमेकांचनीकृतम् १११ तस्यसत्याभिसंधस्यसक्तुदानेनचैवह शरीरार्धंचमेविप्राःशातकुंभमयंकृतम् ११२ पश्यतेमंसुविपुलं
तपसातस्यधीमत: कथमेवंविधंस्याद्वैपार्श्वमन्यदितिद्विजा: ११३ तपोवनानियज्ञांश्चहृष्टोभ्येमिपुन:पुन: यज्ञंत्वहमिमंश्रुत्वाकु
रुराजस्यधीमत: ११४ आशयापरयाप्राप्तोनचाहंकांचनीकृत: ततोमयोक्तंतद्वाक्यंप्रहस्यब्राह्मणर्षभा: ११५ सक्तुप्रस्थेनयज्ञोयंसं
मितोनेतिसर्वथासक्तुप्रस्थलवैस्तैर्हितदाहंकांचनीकृत: ११६ नहियज्ञोमहानेषसदृशस्तैर्मतोमम इत्युक्त्वानकुल:सर्वान्यज्ञेद्विजव
रांस्तदा ११७ जगामादर्शनंतेषांविप्रास्तेचययुर्गृहान् ११७ वैशंपायनउवाच एतत्तेसर्वमाख्यातंमयापरपुरंजय यदा
श्चर्यमभूत्तत्रवाजिमेधेमहाक्रतौ ११८ नविस्मयस्तेनृपतेयज्ञेकार्य:कथंचन ऋषिकोटिसहस्राणितपोभिर्येदिवंगता: ११९ अद्रोह:
सर्वभूतेषुसंतोष:शीलमार्जवम् तपोदमश्चसत्यंचप्रदानंचेतिसंमितम् १२० इतिश्रीमन्महाभारतेआश्व·र्वणिनकुलाख्यानंन
वतितमोध्याय: ९० जनमेजयउवाच यज्ञेसक्तानृपतयस्तप:सक्तामहर्षय: शांतिव्यवस्थिताविप्रा:शमोदमइतिप्रभो
१ तस्माद्यज्ञफलैस्तुल्यंनकिंचिदिहदृश्यते इतिमेवर्ततेबुद्धिस्तथाचैतदसंशयम् २ यज्ञैरिष्ट्वातुबहवोराजानोद्विजसत्तम इ
हकीर्तिंपरांप्राप्यप्रेत्यस्वर्गमवाप्नुयु: ३ देवराज:सहस्राक्ष:क्रतुभिर्भूरिदक्षिणै: देवराज्यंमहातेजा:प्राप्तवानखिलंविभु: ४

५ ६ ७ ८ ९ १० ११ १२ १३ हिंसामिश्रस्यधर्मस्यनिंदार्थं१४१५ १६ १७ १८ १९ रसैः पयोघृतादिभिः २० २१ वितर्यहिंसाहिंसयोः फलोः तुल्यत्वादनृ

यदायुधिष्ठिरोराजाभीमार्जुनपुरःसरः सदृशोदेवराजेनसमृद्ध्याविक्रमेणच ५ अथकस्मात्सनकुलोगर्हयामासतंक्रतुम् अश्वमेधंमहा
यज्ञंराज्ञस्तस्यमहात्मनः ६ वैशंपायनउवाच यज्ञस्यविधिमग्र्यंवैफलंचापिनराधिप गदतःशृणुमेराजन्यथावदिहभारत ७
पुराशक्रस्ययजतःसर्वऊचुर्महर्षयः ऋत्विक्षुकर्मव्यग्रेषुविततेयज्ञकर्मणि ८ हूयमानेतथावह्नौहोत्रेगुणसमन्विते देवेष्वाहूयमाने
षुस्थितेषुपरमर्षिषु ९ सुप्रतीतैस्तथाविप्रैःस्वागमैःसुस्वरैर्नृप अश्रांतैश्चापिलघुभिरध्वर्युवृषभैस्तथा १० आलंभसमयेतस्मिन्गृहीते
षुपशुष्वथ महर्षयोमहाराजबभूवुःकृपयान्विताः ११ ततोदीनान्पशून्दृष्ट्वाऋषयस्तेतपोधनाः ऊचुःशक्रंसमागम्यनायंयज्ञविधिःशुभः १२
अपरिज्ञानमेतत्तेमहांतंधर्ममिच्छतः नहियज्ञेपशुगणाविधिदृष्टाःपुरंदर १३ धर्मोपघातकस्त्वेषसमारंभस्तवप्रभो नायंधर्मकृतोयज्ञोन
हिंसाधर्मउच्यते आगमेनैवतेयज्ञंकुर्वंतुयदिचेच्छसि १४ विधिदृष्टेनयज्ञेनधर्मस्तेसुमहान्भवेत् यजबीजैःसहस्राक्षत्रिवर्षपरमो
षितैः १५ एषधर्मोमहान्शक्रमहागुणफलोदयः शतक्रतुस्तुतद्वाक्यमृषिभिस्तत्त्वदर्शिभिः १६ उक्तंनप्रतिजग्राहमानान्मोहवशंगतः
तेषांविवादःसुमहान्शक्रयज्ञेतपस्विनाम् १७ जंगमैःस्थावरैर्वापियष्टव्यमितिभारत तेतुखिन्नाविवादेनऋषयस्तत्त्वदर्शिनः १८ त
दासंधायशक्रेणपप्रच्छुर्नृपतिंवसुम् १९ महाभागकथंयज्ञेष्वागमोनृपसत्तमः यष्टव्यंपशुभिर्मुख्यैरथोबीजैरसैरिति २० तच्छ्रुत्वातुवसु
स्तेषामविचार्यबलाबलम् यथोपनीतैर्यष्टव्यमितिप्रोवाचपार्थिवः २१ एवमुक्त्वासनृपतिःप्रविवेशरसातलम् उक्त्वाथवितथंप्रश्नंचेदी
नामीश्वरःप्रभुः २२ तस्मान्नवाच्यंह्येकेनबहुज्ञेनापिसंशये प्रजापतिमपाहायस्वयंभुवमृतेप्रभुम् २३ तेनदत्तानिदानानिपापेनाशुद्धबु
द्धिना तानिसर्वाण्यनादृत्यनश्यंतिविपुलान्यपि २४ तस्याधर्मप्रवृत्तस्यहिंसकस्यदुरात्मनः दानेनाकीर्तिर्भवतिनप्रेत्यहचदुर्मतेः २५ अ
न्यायोपगतंद्रव्यमभीक्ष्णंयोह्यपंडितः धर्माभिशंकीयजतेनसधर्मफलंलभेत् २६ धर्मवैतंसिकोयस्तुपापात्मापुरुषाधमः ददातिदानंविप्रे
भ्योलोकविश्वासकारणम् २७ पापेनकर्मणाविप्रोधनंप्राप्यनिरंकुशः रागमोहान्वितःसोंतेकलुषांगतिमश्नुते २८ अपिसंचयबुद्धिर्हि
लोभमोहवशंगतः उद्वेजयतिभूतानिपापेनाशुद्धबुद्धिना २९ एवंलब्ध्वाधनंमोहाद्योहिदद्याद्यजेतवा नतस्यसफलंप्रेत्यभुंक्तेपापधना
गमात् ३० उंछंमूलंफलंशाकमुदपात्रंतपोधनाः दानंविभवतोदत्त्वानराःस्वर्यांतिधार्मिकाः ३१ एषधर्मोमहायोगोदानंभूतदयातथा
ब्रह्मचर्यंतथासत्यमनुक्रोशोधृतिःक्षमा ३२ सनातनस्यधर्मस्यमूलमेतत्सनातनम् श्रूयंतेहिपुराविप्राविश्वामित्रादयोनृपाः ३३ विश्वा
मित्रोसितश्चैवजनकश्चमहीपतिः कक्षसेनार्ष्टिषेणौचसिंधुद्वीपश्चपार्थिवः ३४ तम् २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४

३५ ३६ इत्याश्वमेधिकेपर्वणिटीकायांएकनवतितमोऽध्यायः ९१ धर्मागतेनेत्यध्यायःसर्वसाधनहीना अपिमहांतोयज्ञांनिवर्तयंत्येवेतिवक्तुंआरभ्यते १ २ ३ ४ ५ म
रीचिपाश्चंद्रमरीचिपा नमात्रनृपाः ६ परिपृष्टंचेदेवगृण्हंतिनान्यथातेपरिपृष्टिकाःपाठांतरेपरिगृष्टिका अपितएव प्रक्षालास्तत्कालमात्रसंग्रहाः अप्रक्षालाइतिपा
ठेशेषहीनाः ७ ८ ९ १० ११ १२ १३ १४ १५ १६ चिंतायज्ञंमानसंयज्ञं संकल्पमात्रेणैवदेवानृषींश्चतर्पयिष्यामीत्यर्थः १७ स्पर्शयज्ञंउपाहृतद्रव्यस्यव्ययमकृत्वातस्य

एतेचान्येचबहवःसिद्धिंपरमिकांगताः नृपाःसत्यैश्चदानैश्चन्यायलब्धैस्तपोधनाः ३५ ब्राह्मणाःक्षत्रियावैश्याःशूद्रायेचाश्रितास्तपः दानध
र्माग्निनाशुद्धास्तेस्वर्गंयांतिभारत ३६ इत्याश्वमेधिकेपर्वणिएकनवतितमोऽध्यायः ९१ जनमेजयउवाच धर्मागतेनत्यागेनभगवन्
स्वर्गमस्तिचेत् एतन्मेसर्वमाचक्ष्वकुशलोह्यसिभाषितुं १ तस्योंछवृत्तेर्यद्वृत्तंसक्तुदानेफलंमहत् कथितंतुममब्रह्मन्तथ्यमेतदसंशयम् २ कथं
हिसर्वयज्ञेषुनिश्चयःपरमोभवेत् एतदर्हसिमेवक्तुंनिखिलेनद्विजर्षभ ३ वैशंपायनउ॰ अत्राप्युदाहरंतीममितिहासंपुरातनं अ
गस्त्यस्यमहायज्ञेपुरावृत्तमरिंदम ४ पुरागस्त्योमहातेजादीक्षांद्वादशवार्षिकीं प्रविवेशमहाराजसर्वभूतहितेरतः ५ तत्राग्निकल्पाहोतार आसन्
सत्रेमहात्मनः मूलाहाराःफलाहाराःसाश्मकुट्टामरीचिपाः ६ परिपृष्टिकावैघसिकास्तेप्रक्षालास्तथैवच यतयोभिक्षवश्चात्रबभूवुःपर्यवस्थिताः ७ स
र्वेप्रत्यक्षधर्माणोजितक्रोधाजितेंद्रियाः दमेस्थिताश्चसर्वेतेदंभदंभविवर्जिताः ८ वृत्तेशुद्धेस्थितानित्यमिंद्रियैश्चाप्यबाधिताः उपासितंततंयज्ञंयज्
नास्तेमहर्षयः ९ यथाशक्त्याभगवतातदन्नंसमुपार्जितं तस्मिन्सत्रेतुयद्वृत्तंयद्योग्यंचतदाभवत् १० तथाह्यनेकैर्मुनिभिर्महांतःक्रतवःकृताः एवंविधे
त्वगस्त्यस्यवर्तमानेतथाध्वरे नववर्षसहस्राक्षस्तदाभरतसत्तम ११ ततःकर्मांतरेराजन्नगस्त्यस्यमहात्मनः कथेयमभिनिर्वृत्तामुनीनांभावितात्म
नाम् १२ अगस्त्योयजमानोसौददात्यन्नंविमत्सरः नचवर्षतिपर्जन्यःकथमन्नंभविष्यति सत्रंचेदंमहद्विप्रामुनेर्द्वादशवार्षिकम् १३ नवर्षिष्यतिदे
वश्चवर्षाण्येतानिद्वादश एतद्भवंतःसंचिंत्यमहर्षेरस्यधीमतः अगस्त्यस्यातितपसःकर्तुमर्हंत्यनुग्रहम् १४ इत्येवमुक्तेवचनेततोगस्त्यःप्रताप
वान् १५ प्रोवाचवाक्यंसतदाप्रसाद्यशिरसामुनीन् यदिद्वादशवर्षाणिनवर्षिष्यतिवासवः १६ चिंतायज्ञंकरिष्यामिविधिरेषसनातनः यदि
द्वादशवर्षाणिनवर्षिष्यतिवासवः १७ स्पर्शयज्ञंकरिष्यामिविधिरेषसनातनः यदिद्वादशवर्षाणिनवर्षिष्यतिवासवः १८ ध्येयात्मनाहरिष्यामियज्ञा
नन्यानतिव्रतान् बीजयज्ञोमयायंवैबहुवर्षसमाचितः १९ बीजैर्हितंकरिष्यामिनात्रविघ्नोभविष्यति नेदंशक्यंवृथाकर्तुंममसत्रंकथंचन २० व
र्षिष्यतीहवादेवोनवादेवोभविष्यति २१ अथवाभ्यर्थनामिंद्रोनकरिष्यतिकामतः स्वयमिंद्रोभविष्यामिजीवयिष्यामिचप्रजाः योयदाहारजात
श्चसतथैवभविष्यति २२ विशेषंचैवकर्तास्मिपुनःपुनरतीवहि अद्येहस्वर्णमभ्येतुयच्चान्यद्वसुकिंचन २३ त्रिषुलोकेषुयच्चास्तितदिहागम्यतांस्व
यं दिव्याश्चाप्सरसांसंघागंधर्वाश्चसकिन्नराः २४ र्शेनैवतांस्तर्पयिष्यामि एवंदृष्टियज्ञोपिज्ञेयः १८ सिद्धद्रव्याभावेध्यानमात्रेणद्रव्याण्याहरिष्यामीत्याह
ध्येयात्मनेति पाठांतरेध्यायामेनशरीरक्लेशेन १९ २० २१ ध्येयात्मनेत्यस्यप्रपंचोथवेत्यादि २२ २३ २४

२५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ कोसावित्यादिविशेषकं क्रोधजयस्योत्कर्षवर्णनार्थं ३९ ४० ४१ पिठरं पात्रं धर्मं आविशत् तत्पयः पीतवानित्यर्थः ४२ ४३

विश्वावसुश्च ये चान्ये तेऽप्युपासंतु मे सदा उत्तरेभ्यः कुरुभ्यश्च यत्किंचिद्वसु विद्यते २५ सर्वं तदिह यज्ञे तु स्वयमेवोपतिष्ठतु स्वर्गः स्वर्गसदश्चैव धर्मश्च
स्वयमेव तु २६ इत्युक्ते सर्वमेवैतदभवत्तपसा मुनेः तस्य दीप्ताग्निमनसस्त्वगस्त्यस्यामितौजसः २७ ततस्ते मुनयो हृष्टा ददृशुस्तत्तपोबलम् विस्मिता व
चनं प्राहुरिदं सर्वं महार्थवत् २८ ऋषय ऊचुः प्रीताः स्मस्तव वाक्येन नत्विच्छामस्तपोव्ययम् तैरेव यज्ञैस्तुष्टाः स्म न्यायेनेच्छामहे वयं २९ यज्ञान्दीक्षां
तथा होमान्यच्चान्यन्मृगयामहे तन्नोऽस्तु न्यायाजिताहाराः स्वकर्माभिरता वयं ३० वेदांश्च ब्रह्मचर्येण न्यायतः प्रार्थयामहे न्यायेनोत्तरकालं च गृहेभ्यो निः
सृता वयम् ३१ धर्मदृष्टेन विधिना तपस्तप्स्यामहे वयं भवतः सम्यगिष्टा तु बुद्धिर्हिंसाविवर्जिता ३२ एतामहिंसां यज्ञेषु ब्रूयास्त्वं सततं प्रभो प्रीता
स्ततो भविष्यामो वयं तु द्विजसत्तम ३३ विसर्जिताः समाप्तौ च सत्रादस्माद्व्रजामहे तथा कथयतां तेषां देवराजः पुरंदरः ३४ ववर्ष सुमहातेजा दृष्ट्वा
तस्य तपोबलं आसमाप्तेश्च यज्ञस्य तस्यामितपराक्रमः ३५ निकामवर्षी पर्जन्यो बभूव जनमेजय प्रसादयामास च तमगस्त्यं त्रिदशेश्वरः ३६ स्वयमभ्ये
त्य राजर्षे पुरस्कृत्य बृहस्पतिम् ३७ ततो यज्ञसमाप्तौ तान्विससर्ज महामुनीन् अगस्त्यः परमप्रीतः पूजयित्वा यथाविधि ३८ जनमेजय उवाच
कोऽसौ नकुलरूपेण शिरसा काञ्चनेन वै प्राह मानुषवद्वाचमेतत्पृष्टो वदस्व मे ३९ वैशंपायन उवाच एतत्पूर्वं न पृष्टोऽहं न चास्माभिः प्रभाषितं श्रूयतां न
कुलो योऽसौ यथा वाक्तस्य मानुषी ४० श्राद्धं संकल्पयामास जमदग्निः पुरा किल होमधेनुस्तमागाच्च स्वयमेव दुदोह ताम् ४१ तत्पयः स्थापयामास नवे भा
ण्डे दृढे शुचौ तच्च क्रोधः स्वरूपेण पिठरं धर्म आविशत् ४२ जिज्ञासुस्तमृषिश्रेष्ठं किं कुर्याद्विप्रियं कृते इति संचिन्त्य धर्मः स धर्षयामास तत्पयः ४३ त
माज्ञाय मुनिः क्रोधं नैवास्य स चुकोप ह स तु क्रोधस्ततो राजन्ब्राह्मणीं मूर्तिमास्थितः ४४ जिते तस्मिन्भृगुश्रेष्ठमभ्यभाषदमर्षणः ४५ जितोऽस्मीति
भृगुश्रेष्ठ भृगवो ह्यतिरोषणाः लोके मिथ्याप्रवादोऽयं यत्त्वयास्मि विनिर्जितः ४६ वशे स्थितोऽहं त्वय्यद्य क्षमावति महात्मनि बिभेमि तपसः साधो प्रसा
दं कुरु मे प्रभो ४७ जमदग्निरुवाच साक्षाद्दृष्टोऽसि मे क्रोध गच्छ त्वं विगतज्वरः न त्वयापकृतं मेऽद्य न च मे मन्युरस्ति वै ४८ यान्समुद्दिश्य संकल्पः
पयसोऽस्य कृतो मया पितरस्ते महाभागास्तेभ्यो बुध्यस्व गम्यताम् ४९ इत्युक्तो जातसंत्रासस्तत्रैवान्तरधीयत पितॄणामभिषङ्गाच्च नकुलत्वमुपा
गतः ५० स तान्प्रसादयामास शापस्यान्तो भवेदिति तैश्चाप्युक्तः क्षिपन्धर्मं शापस्यान्तमवाप्स्यसि ५१ तैश्चोक्तो यज्ञियान्देशान्धर्मारण्यं त
थैव च जुगुप्समानो धावन्स तं यज्ञं समुपासदत् ५२ धर्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः मुक्तः शापात्ततः क्रोधो धर्मो ह्यासीद्युधिष्ठिरः ५३
एवमेतत्तदा वृत्तं यज्ञे तस्य महात्मनः पश्यतां चापि नस्तत्र नकुलोऽन्तर्हितस्तदा ५४ इति श्रीमन्महाभारते आश्वमेधिके नकुलोपाख्याने द्विनवतित
मोऽध्यायः ९२ अत्र व्यासोक्ताध्यायश्लोकसंख्यान्यूनाधिक्ये लेखकप्रमादाद्बोध्यं श्रीकृष्णार्पणमस्तु शुभं भवतु अश्वमेधपर्व समाप्तं

४४ ४५ रोषणत्वमेव मिथ्या रोषस्याजितत्वात्तया ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ इति श्रीपदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविन्दसूरिसूनोर्नील
कण्ठस्य कृतौ भारतभावदीपे आश्वमेधिके पर्वणि टीकायां द्विनवतितमोऽध्यायः ९२













# अथश्रीमन्महाभारते आश्रमवासिकपर्वप्रारंभः











श्रीगणेशायनमः श्रीनारायणलक्ष्मणौनतपदंधरेशगंगाधरौगोपालंचानिधायचेतसिशिवांचिंतामणिंचादरात् पूर्वस्याश्रमवासिकादिषुचतुर्ष्वारभ्यते भारतेपूर्वा
चार्यमतानुगेनविदुषाभावप्रदीपोद्भुतः १ पूर्वत्रअंगोपांगसहिताब्रह्मविद्यासमापितातत्रसर्वभोगत्यागपूर्वकशमाद्युपपत्तिर्वनवासिनामेवभवतीतिधृतराष्ट्राचारप्रदर्श
नेनसूचयन् ततोधिगंतव्यंजगज्जीवेश्वरतत्त्वाश्चर्यप्रदर्शनव्याजेनप्रतिपादयिष्यन्ननंतरग्रंथमारभते प्राप्यराज्यंमहात्मानइत्यादिना १ २ ३ ४ ७

श्रीगणेशायनमः नारायणंनमस्कृत्यनरंचैवनरोत्तमं देवींसरस्वतींचैवततोजयमुदीरयेत् १ जनमेजयउवाच प्राप्यराज्यंमहात्मा
नःपांडवामेपितामहाः कथमासन्महाराज्ञिधृतराष्ट्रेमहात्मनि १ सतुराजाहतामात्योहतपुत्रोनिराश्रयः कथमासीद्धतैश्वर्योगांधारी
चयशस्विनी २ कियंतंचैवकालंतेममपूर्वपितामहाः स्थिताराज्येमहात्मानस्तन्मेव्याख्यातुमर्हसि ३ वैशंपायनउवाच प्राप्यरा
ज्यंमहात्मानःपांडवाहतशत्रवः धृतराष्ट्रंपुरस्कृत्यपृथिवींपर्यपालयन् ४ धृतराष्ट्रमुपातिष्ठद्विदुरःसंजयस्तथा वैश्यापुत्रश्चमे
धावीयुयुत्सुःकुरुसत्तम ५ पांडवाःसर्वकार्याणिसंपृच्छंतिस्मतंनृपं चक्रुस्तेनाभ्यनुज्ञातावर्षाणिदशपंचच ६ सदाहिगत्वाते
वीराःपर्युपासंततंनृपं पादाभिवादनंकृत्वाधर्मराजमतेस्थिताः ७ तेमूर्ध्निसमुपाघ्राताःसर्वकार्याणिचक्रिरे कुंतिभोजसुताचै
वगांधारीमन्ववर्तत ८ द्रौपदीचसुभद्राचयाश्चान्याःपांडवस्त्रियः समांवृत्तिमवर्त्तंततयोःश्वश्र्वोर्यथाविधि ९ शयनानि
महार्हाणिवासांस्याभरणानिच राजार्हाणिचसर्वाणिभक्ष्यभोज्यान्यनेकशः १० युधिष्ठिरोमहाराजधृतराष्ट्रेभ्युपाहरत् तथैव
कुंतीगांधार्यांगुरुवृत्तिमवर्त्तत ११ विदुरःसंजयश्चैवयुयुत्सुश्चैवकौरव उपास्मतेस्मतंवृद्धंहतपुत्रंजनाधिपं १२ श्यालोद्रोण
स्ययश्चासीद्दयितोब्राह्मणोमहान् सचतस्मिन्महेष्वासःकृपःसमभवत्तदा १३ व्यासश्चभगवान्नित्यमासांचक्रेनृपेणह क
थाःकुर्वन्पुराणर्षिर्देवर्षिपितृरक्षसां १४ धर्मयुक्तानिकार्याणिव्यवहारान्वितानिच धृतराष्ट्राभ्यनुज्ञातोविदुरस्तान्यकारयत्
१५ सामंतेभ्यःप्रियाण्यस्यकार्याणिसुबहून्यपि प्राप्यंतेर्थैःसुलघुभिःप्रभावाद्विदुरस्यवै १६ अकरोद्बंधमोक्षांश्चवध्या
नांमोक्षणंतथा नचधर्मसुतोराजाकदाचित्किंचिदब्रवीत् १७ विहारयात्रासुपुनःकुरुराजोयुधिष्ठिरः सर्वान्कामान्महातेजाः
प्रददावंबिकासुते १८ आरालिकाःसूपकारारागखांडविकास्तथा उपातिष्ठंतराजानंधृतराष्ट्रंयथापुरा १९ ७ ७

उपातिष्ठत् आराधितवान् ५ ६ ७ ८ ९ १० ११ १२ तस्मिन्समभवत् १३ १४ १५ १६ १७ १८ आरालिकाः आरयाशस्त्रविशेषेणलूनंछिन्नं
शाकादिआलुतत्संस्कुर्वंतितेआरालिकाःशाकविशेषकर्त्तारः रागखांडवापिप्पलीशुंठीशर्करोपेतामुद्गपिष्टसत्कर्त्तारः रागखांडविकाः १९ ७ ७

२० २१ २२ २३ २४ २५ अन्वशात् अनुशिष्टवान् २६ २७ इतिश्रीनैलकंठीये भारतभावदीपे आश्रमवासिकपर्वणि टीकायां प्रथमोऽध्यायः १

वासांसि च महार्हाणि माल्यानि विविधानि च उपाजह्रुर्यथान्यायं धृतराष्ट्रस्य पांडवाः २० मैरेयमत्स्यमांसानि पानकानि मधूनि च
चित्रान्भक्ष्यविकारांश्च चक्रुस्तस्य यथापुरा २१ येचापि पृथिवीपालाः समाजग्मुस्ततस्ततः उपातिष्ठंत ते सर्वे कौरवेंद्रं यथापुरा २२
कुंती च द्रौपदी चैव सात्वती च यशस्विनी उलूपी नागकन्या च देवी चित्रांगदा तथा २३ धृष्टकेतोश्च भगिनी जरासंधसुतास्तथा ए-
ताश्चान्याश्च बह्व्यो वै योषितः पुरुषर्षभ २४ किंकराः पर्युपातिष्ठन्सर्वाः सुबलजां तदा यथापुत्रविमुक्तोयं न किंचिद्दुःखमाप्नुया-
त् २५ इति तानन्वशाद्भ्रातॄन्नित्यमेव युधिष्ठिरः एवं तद्धर्मराजस्य श्रुत्वा वचनमर्थवत् २६ सविशेषमवर्तंत भीममेकं तदा विना
नहि तत्तस्य वीरस्य हृदयादपसर्पति धृतराष्ट्रस्य दुर्बुद्धेर्यद्वृत्तं द्यूतकारितं २७ इतिश्रीमहाभारते आश्रमवासिकेपर्वणि प्रथमोऽध्यायः १
वैशंपायनउवाच एवं संपूजितो राजा पांडवैरंबिकासुतः विजहार यथापूर्वमृषिभिः पर्युपासितः १ ब्रह्मदेयाग्रहारांश्च प्रददौ-
स कुरूद्वहः तच्च कुंतीसुतो राजा सर्वमेवान्वपद्यत २ आनृशंस्यपरो राजा प्रीयमाणो युधिष्ठिरः उवाच स तदा भ्रातॄनमात्यांश्च म-
हीपतिः ३ मया चैव भवद्भिश्च मान्य एष नराधिपः निदेशे धृतराष्ट्रस्य यस्तिष्ठति स मे सुहृत् ४ विपरीतश्च मे शत्रुर्निरस्यश्च
भवेन्नरः पितृवृत्तेषु चाहःसु पुत्राणां श्राद्धकर्मणि ५ सुहृदां चैव सर्वेषां यावदस्य चिकीर्षितं ततः स राजा कौरव्यो धृतराष्ट्रो म-
हामनाः ६ ब्राह्मणेभ्यो यथार्हेभ्यो ददौ वित्तान्यनेकशः धर्मराजश्च भीमश्च सव्यसाची यमावपि ७ तत्सर्वमन्ववर्तंत तस्य प्रि-
यचिकीर्षया कथं नु राजा वृद्धः स पुत्रपौत्रवधार्दितः ८ शोकमस्मत्कृतं प्राप्य न म्रियेतेति चिंत्यते यावद्धि कुरुवीरस्य जीवत्पुत्र-
स्य वै सुखं ९ बभूव तदवाप्नोतु भोगांश्चेति व्यवस्थिताः ततस्ते सहिताः पंच भ्रातरः पांडुनंदनाः १० तथाशीलाः समातस्थुर्धृत-
राष्ट्रस्य शासने धृतराष्ट्रश्च तान्सर्वान्विनीतान्नियमे स्थितान् ११ शिष्यवृत्तिं समापन्नान्गुरुवत्प्रत्यपद्यत गांधारी चैव पुत्राणां
विविधैः श्राद्धकर्मभिः १२ आनृण्यमगमत्कामान्विप्रेभ्यः प्रतिपाद्य सा एवं धर्मभृतां श्रेष्ठो धर्मराजो युधिष्ठिरः १३ भ्रातृभिः
सहितो धीमान्पूजयामास तं नृप वैशंपायनउवाच स राजा सुमहातेजा वृद्धः कुरुकुलोद्वहः न ददर्श तदा किंचिदप्रियं पांडुनंदने
१४ वर्तमानेषु सद्वृत्तिं पांडवेषु महात्मसु प्रीतिमानभवद्राजा धृतराष्ट्रोंबिकासुतः १५ सौबलेयी च गांधारी पुत्रशोकमपास्य
तं सदैव प्रीतिमत्यासीत्तनयेषु निजेष्विव १६

एवमिति १ २ ३ ४ पितृ-
वृत्तेषु पिता वृतः प्रमीतो येषु तेषु दस्याहःसु ५ ६ ७ ८ चिंत्यते विचिंत्यते व्यवस्थिता इत्यग्रिमेणान्वयः ९ १० ११
१२ १३ १४ १५ १६

प्रियाण्येवतुकौरव्योनाप्रियाणिकुरूद्वहः वैचित्रवीर्यंनृपतौसमाचरतवीर्यवान् १७ यद्यद्ब्रूतेचकिंचित्सधृतराष्ट्रोजनाधिपः गुरुवाल
घुवाकार्यंगांधारीचतपस्विनी १८ तेसराजामहाराजपांडवानांधुरंधरः पूजयित्वावचस्तत्तदकार्षीत्परवीरहा १९ तेनतस्याभवत्प्रीतो
वृत्तेनसनराधिपः अन्वतप्यच्चसंस्मृत्यपुत्रंतंमंदचेतसं २० सदाचप्रातरुत्थायकृतजप्यःशुचिर्नृपः आशास्तेपांडुपुत्राणांसमरेष्वपरा
जयं २१ ब्राह्मणान्स्वस्तिवाच्याथहुत्वाचैवहुताशनं आयूंषिपांडुपुत्राणामाशंसतनराधिपः २२ नतांप्रीतिंपरामापपुत्रेभ्यःसकु
रूद्वहः यांप्रीतिंपांडुपुत्रेभ्यःसदावापतदानृपः २३ ब्राह्मणानांयथावृत्तःक्षत्रियाणांयथाविधः तथाविट्शूद्रसंघानामभवत्सप्रि
यस्तदा २४ यच्चकिंचित्तदापापंधृतराष्ट्रसुतैःकृतं अकृत्वाहृदितत्पापंतंनृपंसोऽन्ववर्तत २५ यश्चकश्चिन्नरःकिंचिदप्रियंचां
बिकासुते कुरुतेद्वेष्यतामेतिसकौंतेयस्यधीमतः २६ नराज्ञोधृतराष्ट्रस्यनचदुर्योधनस्यवै उवाचदुष्कृतंकश्चिद्युधिष्ठिरभया
न्नरः २७ धृत्यातुष्टोनरेंद्रस्यगांधारीविदुरस्तथा शौचेनचाजातशत्रोर्नतुभीमस्यशत्रुहन् २८ अन्ववर्त्ततंचापिनिश्चितोध
र्मजोनृपं धृतराष्ट्रंचसंप्रेक्ष्यसदाभवतिदुर्मनाः २९ राजानमनुवर्त्ततंधर्मपुत्रमभित्रहा अन्ववर्ततकौरव्योहृदयेनपराजितः ३०
इतिश्रीमहाभारतेआश्रमवासिकेपर्वणिद्वितीयोऽध्यायः २ वैशंपायनउवाच युधिष्ठिरस्यनृपतेर्दुर्योधनपितुस्तथा नांतरं
ददृशूराज्येपुरुषाःप्रणयंप्रति १ यदातुकौरवोराजापुत्रंसस्मारदुर्मतिं तदाभीमंहृदाराजन्नपध्यातिसपार्थिवः २ तथैवभीमसे
नोपिधृतराष्ट्रंजनाधिपं नामर्षयतराजेंद्रसदैवदुष्टवद्धृदा ३ अप्रकाशान्यप्रियाणिचकारास्यवृकोदरः आज्ञांप्रत्यहरच्चापिकृत
कैःपुरुषैःसदा ४ स्मरन्दुर्मंत्रितंतस्यवृत्तान्यप्यस्यकानिचित् अथभीमःसुहृन्मध्येबाहुशब्दंतथाकरोत् ५ संश्रवेधृतराष्ट्र
स्यगांधार्याश्चाप्यमर्षणः स्मृत्वादुर्योधनंशत्रुंकर्णदुःशासनावपि ६ प्रोवाचेदंसुसंरब्धोभीमःसपरुषंवचः अंधस्यनृपतेःपुत्रा
मयापरिघबाहुना ७ नीतालोकममुंसर्वेनानाशस्त्रास्त्रयोधिनः इमौतौपरिघप्रख्यौभुजौममदुरासदौ ८ ययोरंतरमासाद्य
धार्त्तराष्ट्राःक्षयंगताः ताविमौचंदनेनाक्तौचंदनार्हौचमेभुजौ ९ याभ्यांदुर्योधनोनीतःक्षयंससुतबांधवः एताश्चान्याश्चविवि
धाःशल्यभूतानराधिप १० वृकोदरस्यतावाचःश्रुत्वानिर्वेदमागमत् साचबुद्धिमतीदेवीकालपर्यायवेदिनी ११ ५९ ५.

गांधारीसर्वधर्मज्ञातान्यलीकानिशुश्रुवे ततःपंचदशेवर्षेसमतीतेनराधिपः १२ राजानिर्वेदमापेदेभीमवाग्बाणपीडितः नान्वबुध्यत
तद्राजाकुंतीपुत्रोयुधिष्ठिरः १३ श्वेताश्वोवाथकुंतीवाद्रौपदीवायशस्विनी माद्रीपुत्रौचधर्मज्ञौचित्तंतस्यान्ववर्तंतौ १४ राज्ञस्तुचित्तं
रक्षंतौनोचतुःकिंचिदप्रियं ततःसमानयामाससधृतराष्ट्रःसुहृज्जनं १५ बाष्पसंदिग्धमत्यर्थमिदमाहवचोभृशं धृतराष्ट्रउवाच
विदितंभवतामेतद्यथावृत्तःकुरुक्षयः ममापराधात्तत्सर्वमनुज्ञातंचकौरवैः १६ योहंदुष्टमतिंमंदोज्ञातीनांभयवर्धनं दुर्योधनंकौरवा
णामाधिपत्येभ्यषेचयं १७ यच्चाहंवासुदेवस्यनाश्रौषंवाक्यमर्थवत् वध्यतांसाध्वयंपापःसामात्यइतिदुर्मतिः १८ पुत्रस्नेहाभिभू
तस्तुहितमुक्तोमनीषिभिः विदुरेणाथभीष्मेणद्रोणेनचकृपेणच १९ पदेपदेभगवताव्यासेनचमहात्मना संजयेनाथगांधार्यातं
दिदंतप्यतेचमां २० यच्चाहंपांडुपुत्रेषुगुणवत्सुमहात्मसु नदत्तवानश्रियंदीप्तांपितृपैतामहीमिमां २१ विनाशंपश्यमानोहिसर्वरा
ज्ञांगदाग्रजः एतच्छ्रेयस्तुपरमममन्यतजनार्दनः २२ सोहमेतान्यलीकानिनिवृत्तान्यात्मनस्तदा हृदयेशल्यभूतानिधारयामिसहस्र
शः २३ विशेषतस्तुपश्यामिवर्षेपंचदशेद्यवै अस्यपापस्यशुध्यर्थंनियतोस्मिसुदुर्मतिः २४ चतुर्थेनियतेकालेकदाचिदपिचाष्टमे
तृष्णाविनयनंभुंजेगांधारीवेदतन्मम २५ करोत्याहारमितिमांसर्वःपरिजनःसदा युधिष्ठिरभयाद्वेत्तिभृशंतप्यतिपांडवः २६
भूमौशयेजप्यपरोदर्भेष्वजिनसंवृतः नियमव्यपदेशेनगांधारीचयशस्विनी २७ हतंशतंतुपुत्राणांययोर्युद्धेपलायिनां नानुतप्या
मितच्चाहंक्षत्रधर्मंहिमेविदुः २८ इत्युक्त्वाधर्मराजानमभ्यभाषतकौरवः भद्रंतेयादवीमातर्वचश्चेदंनिबोधमे २९ सुखमस्म्युषि
तःपुत्रत्वयासुपरिपालितः महादानानिदत्तानिश्राद्धानिचपुनःपुनः ३० प्रकृष्टंचमयापुत्रपुण्यंचीर्णंयथाबलं गांधारीहतपुत्रेयंधैर्ये
णोदीक्षतेचमां ३१ द्रौपद्याह्यपकर्तारस्तवचैश्वर्यहारिणः समतीतानृशंसास्तेस्वधर्मेणहतायुधि ३२ नतेषुप्रतिकर्तव्यंपश्यामि
कुरुनंदन सर्वेशस्त्रजितांल्लोकान्गतास्तेभिमुखंहताः ३३ आत्मनस्तुहितंपुण्यंप्रतिकर्तव्यमद्यवै गांधार्याश्चैवराजेंद्रतदनुज्ञातुमर्ह
सि ३४ त्वंतुधर्मभृतांश्रेष्ठःसततंधर्मवत्सलः राजागुरुःप्राणभृतांतस्मादेतद्ब्रवीम्यहं ३५ अनुज्ञातस्त्वयावीरसंश्रयेयंवनान्यहं
चीरवल्कलभृद्राजन्गांधार्यासहितोनया ३६ तवाशिषःप्रयुंजानोभविष्यामिवनेचरः उचितंनःकुलेतातसर्वेषांभरतर्षभ ३७

३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५०

पुत्रेष्वैश्वर्यमाधायवयसोंतेवनंनृप तत्राहंवायुभक्षोवानिराहारोपिवावसन् ३८ पत्न्यासहानयावीरचरिष्यामितपःपरं त्वंचापिफलभा
क्तततपसःपार्थिवोह्यसि फलभाजोहिराजानःकल्याणस्येतरस्यवा ३९ युधिष्ठिरउवाच नमांप्रीणयतेराज्यंत्वय्येवंदुःखितेनृप
धिङ्मामस्तुसुदुर्बुद्धिंराज्यसक्तंप्रमादिनं ४० योहंभवंतंदुःखार्तमुपवासकृशंभृशं जिताहारंक्षितिशयंनविंदेभ्रातृभिःसह ४१
अहोस्मिवंचितोमूढोभवतागूढबुद्धिना विश्वासयित्वापूर्वंमांयदिदंदुःखमश्नुथाः ४२ किंमेराज्येनभोगैर्वाकिंयज्ञैःकिंसुखेनवा य
स्यमेत्वंमहीपालदुःखान्येतान्यवाप्तवान् ४३ पीडितंचापिजानामिराज्यमात्मानमेवच अनेनवचसातुभ्यंदुःखितस्यजनेश्वर ४४
भवान्पिताभवान्माताभवान्नःपरमोगुरुः भवताविप्रहीनाहिक्वनुतिष्ठामहेवयं ४५ औरसोभवतःपुत्रोयुयुत्सुर्नृपसत्तम अस्तुरा
जामहाराजयमन्यंमन्यसेभवान् ४६ अहंवनंगमिष्यामिभवान्राज्यंप्रशास्तु नमामयशसादग्धंभूयस्त्वंदग्धुमर्हसि ४७ नाहंराजाभवानु
राजाभवतःपरवानहं कथंगुरुंत्वांधर्मज्ञमनुज्ञातुमिहोत्सहे ४८ नमन्युर्हृदिनःकश्चित्सुयोधनकृतेनघ भावितव्यंतथातद्धिवयंचान्ये
चमोहिताः ४९ वयंपुत्राहिभवतोयथादुर्योधनादयः गांधारीचैवकुंतीचनिर्विशेषामतिर्मम ५० समांत्वंयदिराजेंद्रपरित्यज्यगमि
ष्यसिपृष्ठतस्त्वानुयास्यामिसत्यमात्मानमालभे ५१ इयंहिवसुसंपूर्णामहीसागरमेखला भवताविप्रहीणास्यनमेप्रीतिकरीभवेत् ५२
भवदीयमिदंसर्वंशिरसात्वांप्रसादये त्वदधीनास्मराजेंद्रव्येतुतेमानसोज्वरः ५३ भवितव्यमनुप्राप्तोमन्येत्वंवसुधाधिप दिष्ट्याशुश्रूष
माणस्त्वांमोक्षिष्येमनसोज्वरं ५४ धृतराष्ट्रउवाच तापस्येमेमनस्तातवर्ततेकुरुनंदन उचितंचकुलेस्माकमरण्यगमनंप्रभो ५५ चि
रमस्म्युषितःपुत्रचिरंशुश्रूषितस्त्वया वृद्धंमामप्यनुज्ञातुमर्हसित्वंनराधिप ५६ वैशंपायनउवाच इत्युक्त्वाधर्मराजानंवेपमानःकृतांजलिः
उवाचवचनंराजाधृतराष्ट्रोंबिकासुतः ५७ संजयंचमहात्मानंकृपंचापिमहारथं अनुनेतुमिहेच्छामिभवद्भिर्वसुधाधिपं ५८ ग्लायतेमे
मनोहीदमुखंचपरिशुष्यति वयसाचप्रकृष्टेनवाग्व्यायामेनचैवह ५९ इत्युक्त्वासतुधर्मात्मावृद्धोराजाकुरूद्वहः गांधारींशिश्रियेधीमा
न्सहसैवगतासुवत् ६० तंतुदृष्ट्वासमासीनंविसंज्ञमिवकौरवं आर्तिराजागमत्तीव्रांकौंतेयःपरवीरहा ६१ युधिष्ठिरउवाच
यस्यनागसहस्रेणशतसंख्येनवैबलं सोयंनारीव्यपाश्रित्यशेतेराजागतासुवत् ६२ ५ ५ ५ ५ ५

५१ ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२

६३ ६४ ६५ ६६ ६७ ६८ ६९ ७० ७१ ७२ ७३ ७४ ७५ ७६ ७७

आयसी प्रतिमा येन भीमसेनस्य सा पुरा चूर्णीकृत्वा बलवता सो बलामाश्रितः स्त्रियं ६३ धिगस्तु मामधर्मज्ञं धिग्बुद्धिं धिक्च मे श्रुतं य
त्कृते पृथिवीपालः शेते यमतथोचितः ६४ अहमप्युपवत्स्यामि यथैवायं गुरुर्मम यदि राजा न भुंक्तेयं गांधारी च यशस्विनी ६५ वैशं
पायन उवाच ततोस्य पाणिना राजन् जलशीतेन पांडवः उरो मुखं च शनकैः पर्यमार्जत धर्मवित् ६६ तेन रत्नौषधिमता पुण्येन च सुगंधि
ना पाणिस्पर्शेन राज्ञः स राजा संज्ञामवापह ६७ धृतराष्ट्र उवाच स्पृश मां पाणिना भूयः परिष्वज च पांडव जीवामीव हि संस्पर्शा
त्तव राजीवलोचन ६८ मूर्द्धानं च न वा घ्रातुमिच्छामि मनुजाधिप पाणिभ्यां च परिस्प्रष्टुं प्राणनं हि महन्मम ६९ अष्टमो ह्यद्य का
लोयमाहारस्य कृतस्य मे येनाहं कुरुशार्दूल शक्नोमि न विचेष्टितुं ७० व्यायामश्चायमत्यर्थं कृतस्त्वामभियाचता ततो ग्लानमना
स्तात नष्टसंज्ञ इवाभवं ७१ तवामृतरसप्रख्यं हस्तस्पर्शमिमं प्रभो लब्ध्वा संजीवितोस्मीति मन्ये कुरुकुलोद्वह ७२ वैशंपायन उवा०
एवमुक्तस्तु कौंतेयः पित्रा ज्येष्ठेन भारत पस्पर्श सर्वगात्रेषु सौहार्दात्तं शनैस्तदा ७३ उपलभ्य ततः प्राणान् धृतराष्ट्रो महीपतिः बाहुभ्यां
संपरिष्वज्य मूर्ध्न्याजिघ्रत पांडवं ७४ विदुरादयश्च ते सर्वे रुरुदुर्दुःखिता भृशं अतिदुःखात्तु राजानं नोचुः किंचन पांडवं ७५ गांधा
री त्वेव धर्मज्ञा मनसोद्वहती भृशं दुःखान्यधारयद्राजन्मैवमित्येव चाब्रवीत् ७६ इतरास्तु स्त्रियः सर्वाः कुंत्या सह सुदुःखिताः नेत्रै
रागतविक्लेदैः परिवार्य स्थिताभवन् ७७ अथाब्रवीत्पुनर्वाक्यं धृतराष्ट्रो युधिष्ठिरं अनुजानीहि मां राजंस्तापस्ये भरतर्षभ ७८ ग्ला
यते मे मनस्तात भूयो भूयः प्रजल्पतः न मामतः परं पुत्र परिक्लेष्टुमिहार्हसि ७९ तस्मिंस्तु कौरवेंद्रे तं तथा ब्रुवति पांडवं सर्वेषाम
वरोधानामार्त्तनादो भवन्महान् ८० दृष्ट्वा कृशं विवर्णं च राजानमतथोचितं उपवासपरिश्रांतं त्वगस्थिपरिवारणं ८१ धर्मपुत्रः
स्वपितरं परिष्वज्य महाप्रभुं शोकजं बाष्पमुत्सृज्य पुनर्वचनमब्रवीत् ८२ न कामये नरश्रेष्ठ जीवितं पृथिवीं तथा यथा तव प्रियं राज
न्चिकीर्षामि परंतप ८३ यदि त्वाहमनुग्राह्यो भवतो दयितोपि वा क्रियतां तावदाहारस्ततो वेत्स्याम्यहं परं ८४ ततोब्रवीन्महातेजा
धृतराष्ट्रो युधिष्ठिरं अनुज्ञातस्त्वया पुत्र भुंजीयामिति कामये ८५ इति ब्रुवति राजेंद्रे धृतराष्ट्रे युधिष्ठिरं ऋषिः सत्यवतीपुत्रो व्यासो
भ्येत्य वचोब्रवीत् ८६ इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आश्रमवासिकपर्वणि तृतीयोऽध्यायः ३ ६१ ७

७८ ७९ ८० ८१ ८२ ८३ ८४ ८५ ८६ इति श्रीनैलकंठीये भारतभावदीपे आश्रमवासिकपर्वणि टीकायां तृतीयोऽध्यायः ३

युधिष्ठिरेति १ २ ३ ४ ५ ६ ७ अहमिति पौत्रोपि आत्मावैपुत्रनामासीतिपुत्राभिन्नत्वात्पुत्रएवाहंतेनयत्वंतुमेममपितागुरुश्च ८ ९ परम

व्यासउवाच युधिष्ठिरमहाबाहोयथाहकुरुनंदन धृतराष्ट्रोमहातेजास्तत्कुरुष्वाविचारयन् १ अयंहिवृद्धोनृपतिर्हतपुत्रोविशेषतः ने
दंकृच्छ्रंविचारयितुंसुहृदितिमतिर्मम २ गांधारीचमहाभागाप्राज्ञाकरुणवेदिनी पुत्रशोकंमहाराजधैर्येणोद्वहतेभृशं ३ अहमप्येतदे
वत्वांब्रवीमिकुरुमेवचः अनुज्ञांलभतांराजामावृथेहमरिष्यति ४ राजर्षीणांपुराणानामनुयातुगतिंनृपः राजर्षीणांचसर्वेषामंतेवन
मुपाश्रयः ५ वैशंपायनउवाच इत्युक्तःसतदाराजाव्यासेनाद्भुतकर्मणा प्रत्युवाचमहातेजाधर्मराजोमहामुनिं ६ भगवानेवनोमान्यो
भगवानेवनोगुरुः भगवानस्यराज्यस्यकुलस्यचपरायणं ७ अहंतुपुत्रोभगवान्पिताराजागुरुश्चमे निदेशवर्तीचपितुःपुत्रोभवतिध
र्मतः ८ वैशंपायनउवाच इत्युक्तःसततंप्राहव्यासोवेदविदांवरः युधिष्ठिरंमहातेजाःपुनरेवमहाकविः ९ एवमेतन्महाबाहोयथावद
सिभारत राजायंवृद्धतांप्राप्तःप्रमाणेपरमेस्थितः १० सोयंमयाभ्यनुज्ञातस्त्वयाचपृथिवीपतिः करोतुस्वमभिप्रायंमास्यविघ्नकरो
भव ११ एषएवपरोधर्मोराजर्षीणांयुधिष्ठिर समरेवाभवेन्मृत्युर्वनेवाविधिपूर्वकं १२ पित्रातुतवराजेंद्रपांडुनापृथिवीक्षिता शिष्य
वृत्तेनराजायंगुरुवत्पर्युपासितः १३ क्रतुभिर्दक्षिणावद्भी रत्नपर्वतशोभितैः भवद्भिरिष्टंगौर्मुक्ताप्रजाश्चपरिपालिताः १४ पुत्रसंस्थंच
विपुलंराज्यंविप्रोषितेत्वयि त्रयोदशसमाभुक्तंदत्तंचाविविधंवसु १५ त्वयाचायंनरव्याघ्रगुरुशुश्रूषयानघ आराधितःसभृत्येनगां
धारीचयशस्विनी १६ अनुजानीहिपितरंसमयोस्यतपोविधौ नमृत्युर्विद्यतेचास्यसूक्ष्मापियुधिष्ठिर १७ वैशंपायनउवाच ए
तावदुक्त्वावचनमनुमान्यचपार्थिवं तथास्त्वितिचतेनोक्तःकौंतेयेनययौवनं १८ गतेभगवतिव्यासेराजापांडुसुतस्तदा प्रोवाचपित
रंवृद्धंमंदमंदमिवाननतः १९ यदाहभगवान्व्यासोयच्चापिभवतोमतं यथाहचमहेष्वासःकृपोविदुरएवच २० युयुत्सुःसंजयश्चैवत
त्कर्तास्म्यहमंजसा सर्वएवहिमान्यामेकुलस्यास्यहितैषिणः २१ इदंतुयाचेनृपतेत्वामहंशिरसानतः क्रियतांतावदाहारस्ततो
गच्छाश्रमंप्रति २२ इत्याश्रमवासिकेपर्वणिचतुर्थोऽध्यायः ४ वैशंपायनउवाच ततोराजाभ्यनुज्ञातोधृतराष्ट्रःप्रतापवान् य
यौस्वभवनंराजागांधार्यानुगतस्तदा १ मंदप्राणगतिर्धीमान्कृच्छ्रादिवसमुद्वहन् पदानिसमहीपालोजीर्णोगजपतिर्यथा २
तमन्वगच्छद्विदुरोविद्वान्सूतश्चसंजयः सचापिपरमेष्वासःकृपःशारद्वतस्तथा ३

प्रमाणेउषनिपन्नते १० ११ १२ १३ १४ १५ १६ नपोविधौतपःकरणे १७ १८ १९ २० २१ २२ इ॰टी॰-चतुर्थोऽध्यायः ४ १ २ ३

४ ५ ६ ७ अष्टांगेस्वाम्यमात्यादियुत ८ ९ १० ११ १२ १३ क्रमसः शुचीन् जन्मनाचपुण्यान्अमात्यान्चारयेथाइत्युत्तरेणान्वयः १४ १५
अष्टः दुर्गोपरिभागस्थानानिषट्पदंषड्भिःपदैः पदनीयैःस्थानैर्युक्तंतेनसप्राकारमितिगम्यतेतत्रसप्तमस्यांतः पुरत्वाततृषडेवान्येषां स्थानानि १६ १७ १८ १९

संप्रविश्यगृहंराजनकृतपूर्वाह्णिकक्रियः तर्पयित्वाद्विजश्रेष्ठानाहारमकरोत्तदा ४ गांधारींचैवधर्मज्ञाकुंत्यासहमनस्विनी वधूभिरुपचारेण पूजिताभुंक्तभारत ५ कृताहारंकृताहाराःसर्वेतेविदुरादयः पांडवाश्चकुरुश्रेष्ठमुपातिष्ठंततंनृपं ६ ततोऽब्रवीन्महाराजकुंतीपुत्रमुपह्वरे निषण्णंपाणिनापृष्ठेसंस्पृशन्नंबिकासुतः ७ अप्रमादस्त्वयाकार्यःसर्वथाकुरुनंदन अष्टांगेराजशार्दूलराज्येधर्मपुरस्कृते ८ तत्तुशक्यंमहाराजरक्षितुंपांडुनंदन राज्यंधर्मेणकौंतेयविद्वानसिनिबोधतत ९ विद्यावृद्धान्सदैवत्वमुपासीथायुधिष्ठिर शृणुयास्तेचयद्ब्रूयुःकुर्याश्चैवाविचारयन् १० प्रातरुत्थायतान्राजन्पूजयित्वायथाविधि कृत्यकालेसमुत्पन्नेपृच्छेथाःकार्यमात्मनः ११ तेतुसंमानितराजंस्त्वयाकार्यहितार्थिना प्रवक्ष्यंतिहितंतातसर्वथातवभारत १२ इंद्रियाणिचसर्वाणिवाजिवत्परिपालय हितायवपोनिवर्त्स्यंतिरक्षितंद्रविणंयथा १३ अमात्यानुपधातीतान्पितृपैतामहान्शुचीन् दांतान्कर्मसुपुण्यांश्चपुण्यान्सर्वेषुयोजयेः १४ चारयेथाश्चसततंचारैरविदितःपरैः परीक्षितैर्बहुविधैःस्वराष्ट्रप्रतिवासिभिः १५ पुरंचतेसुगुप्तस्यात्दृढप्राकारतोरणं अट्टाट्टालकसंबाधंषट्पदंसर्वतोदिशं १६ तस्यद्वाराणिसर्वाणिपर्याप्तानिबृहंतिच सर्वतःसुविभक्तानियंत्रैरारक्षितानिच १७ पुरुषैरलमर्थज्ञैर्विदितैःकुलशीलतः आत्माचरक्ष्यःसततंभोजनादिषुभारत १८ विहाराहारकालेषुमाल्यशय्यासनेषुच स्त्रियश्चतेसुगुप्ताःस्युर्वृद्धैराप्तैरधिष्ठिताः १९ शीलवद्भिःकुलीनैश्चविद्वद्भिश्चयुधिष्ठिर मंत्रिणश्चैवकुर्वीथाद्विजान्विद्याविशारदान् २० विनीतांश्चकुलीनांश्चधर्मार्थकुशलानृजून् तैःसार्धंमंत्रयेथास्त्वंनात्यर्थंबहुभिःसह २१ समस्तैरपिचव्यस्तैर्व्यपदेशेनकेनचित् सुसंवृतंमंत्रगृहंस्थलंचारुह्यमंत्रयेः २२ अरण्येनिःशलाकेवानचरात्रौकथंचन वानराःपक्षिणश्चैवयमनुष्यानुसारिणः २३ सर्वेमंत्रगृहेवर्ज्यायेचापिजडपंगवः मंत्रभेदेहियेदोषाभवंतिपृथिवीक्षितां २४ नतेशक्याःसमाधातुंकर्यंचिदितिमेमतिः दोषांश्चमंत्रभेदस्यब्रूयास्त्वंमंत्रिमंडले २५ अभेदेचगुणाराजन्पुनःपुनररिंदम पौरजानपदानांचशौचाशौचेयुधिष्ठिर २६ यथास्याद्विदितंराजंस्तथाकार्यंकुरूद्वह व्यवहारश्चतेतातनित्यमाप्तैरधिष्ठितः परिमाणविदितत्वाच्चदंडदर्श्यपुभारत २७ प्रणयेयुर्यथान्यायंपुरुषास्तेयुधिष्ठिर आदानरुचयश्चैवपरदारावमर्षिणः २८ उग्रदंडप्रधानाश्चमिथ्याव्याहारिणस्तथा आक्रोष्टारश्चलुब्धाश्चहंतारःसाहसप्रियाः २९ सभाविहारभेत्तारोवर्णानांचप्रदूषकाः हिरण्यदंड्यावध्याश्चकर्तव्यादेशकालतः ३०

२० २१ २२ निःशलाके अतृणेत्यासन्नःपरिवारेज्ञातुमशक्यइति २३ २४ २५ २६ परिमाणंदंडधनस्यापराधस्यच २७ अदानरुचयःउत्कोचग्राहिणः नग्नौराधा २८ २९ हिरण्यदंडअवध्याःपूर्वोक्ताःसर्वेदेशकालानुरोधेनदंड्यावध्या श्चेतिनिश्चयः ३०

३१ प्रदोषेरजनीमुखेदूतानांदर्शनकालः तेभ्यःश्रुतानामर्थानांनिर्णयेअपररात्रांतः चराअपिआहारमात्रवेतनाःविशिष्टगृहीतानामप्याहारमात्रंदेयमित्यर्थः ३२ ३३
३४ ३५ ३६ ३७ ३८ ३९ व्यवहारिणःकारुशिल्पिप्रभृतयः ४० ४१ ४२ ४३ इतिश्रीनैलकंठीये आश्रमवासिकेभारतभावदीपेपंचमोऽध्यायः ५ ७५



प्रातरेवहिपश्येथायेकुर्युर्व्ययकर्मते अलंकारमथोभोज्यमतऊर्ध्वंसमाचरेः ३१ पश्येथाश्चततोयोधान्सदात्वंप्रतिहर्षयन् दूतानांचचराणांचप्रदोषस्तेसदाभवेत् ३२ सदाचापररात्रांतेभवेत्कार्यार्थनिर्णयः मध्यरात्रेविहारस्तेमध्याह्नेचसदाभवेत् ३३ सर्वेत्वौपयिकाःकालाःकार्याणांभरतर्षभ तथैवालंकृतःकालेतिष्ठेथाभूरिदक्षिण ३४ चक्रवत्तातकार्याणांपर्यायोदृश्यतेसदा कोशस्यनिचयेयत्नंकुर्वीथान्यायतःसदा ३५ विविधस्यमहाराजविपरीतंविवर्जयेः चारैर्विदित्वाशत्रूंश्चयेराज्ञामंतरैषिणः ३६ तानाप्तैःपुरुषैर्दूराद्घातयेथानराधिप कर्मदृष्ट्वाथभृत्यांस्त्वंवरयेथाःकुरूद्वह ३७ कारयेथाश्चकर्माणियुक्तायुक्तैरधिष्ठितैः सेनाप्रणेताचभवेत्तवतातदृढव्रतः ३८ शूरःक्लेशसहश्चैवहितोभक्तश्चपूरुषः सर्वेजनपदाश्चैवततवकर्माणिपांडव ३९ गोवद्रासभवच्चैवकुर्युर्येव्यवहारिणः स्वरंध्रपररंध्रेषुस्वेषुचैवपरेषुच ४० उपलक्षयितव्यंतेनित्यमेवयुधिष्ठिर देशजाश्चैवपुरुषाविक्रांताःस्वेषुकर्मसु ४१ यात्राभिरनुरूपाभिरनुग्राह्याहितास्त्वया गुणार्थिनांगुणःकार्योविदुषावैजनाधिप ४२ अविचाल्याश्चतेतेस्युरचलाइवनित्यशः ४३ इत्याश्रमवासिकेपर्वणिपंचमोऽध्यायः ५ धृतराष्ट्रउवाच मंडलानिचबुध्येथाःपरेषामात्मनस्तथा उदासीनगणानांचमध्यस्थानांचभारत १ चतुर्णांशत्रुजातानांसर्वेषामाततायिनां मित्रंचमित्रमित्रंचबोद्धव्यंतेरिकर्शन २ तथामात्याजनपदादुर्गाणिविविधानिच बलानिचकुरुश्रेष्ठभवंत्येषांयथेच्छकं ३ तेचद्वादशकौंतेयराज्ञांवैविषयात्मकाः मंत्रिप्रधानाश्चगुणाःषष्टिर्द्वादशचप्रभो ४ एतन्मंडलमित्याहुराचार्यानीतिकोविदाः तत्रषाड्गुण्यमायत्तंयुधिष्ठिरनिबोधतत् ५ वृद्धिक्षयौचविज्ञेयौस्थानंचकुरुसत्तम द्विसप्तत्यांमहाबाहोततःषाड्गुण्यजागुणाः ६ यदास्वपक्षोबलवान्परपक्षस्तथाबलः विगृह्यशत्रून्कौंतेयजेयःक्षितिपतिस्तदा ७ यदापरेतुबलिनःस्वपक्षश्चैवदुर्बलः सार्धंविद्वांस्तदाक्षीणःपरैःसंधिंसमाश्रयेत ८ द्रव्याणांसंचयश्चैवकर्तव्यःस्यान्महांस्तथा यदासमर्थोयानायनचिरेणैवभारत ९ तदासर्वंविधेयंस्यात्स्थानेनसंविचारयेत् भूमिरल्पफलादेयाविपरीतस्यभारत १० हिरण्यंकुप्यभूयिष्ठंमित्रंक्षीणमथोबलं विपरीतान्निगृह्णीयात्स्वयंसंधिविशारदः ११ संध्यर्थंराजपुत्रंवालिप्सेथाभरतर्षभ विपरीतंनतच्छ्रेयःपुत्रकस्यांचिदापदि १२

मंडलानिअरिमित्रमित्यादीनि उदासीनादन्यःमध्यमोद्वयोरपिइच्छाक्षी ५
क्षीचतुर्णांशत्रुपक्षजातानांशत्रुमित्राणांउभयोर्जयीपरार्यीच १ २ यथेच्छकंपरैर्भेद्यत्वाभेद्यत्वंचभवतितस्मादवहितस्तिष्ठेतयथाभेदोनभवेदितिः ३ ४ ५ ६ ७
८ ९ १० ११ संध्यर्थमिति यःसंधिंकरोतितस्यपुत्रंविश्वासार्थंस्वनिकटेस्थापयेदित्यर्थःतदकरणेमहदापदायाति कदाचित् १२ ७६ ७७

१६ १७ १८ १९ २० २१ २२ २३ इतिश्रीनैलकंठीये भारतभावदीपे आश्रमवासिकेपर्वणिटीकायांसप्तमोऽध्यायः ७ ७

धारयित्वापरबलेकृत्वासबलदर्शनं स्वभूमौयोजयेद्युद्धंपरभूमौतथैवच १६ बलंप्रसादयेद्राजानिक्षिपेत्बलिनोनरान् ज्ञात्वास्वविष
यंतत्रसामादिभिरुपक्रमेत् १७ सर्वथैवमहाराजशरीरंधारयेदिह प्रेत्यचेहचकर्त्तव्यमात्मनिश्रेयसंपरं १८ एवमेतन्महाराजराजासम्य
कसमाचरन् प्रेत्यस्वर्गमवाप्नोतिप्रजाधर्मेणपालयन् १९ एवंत्वयाकुरुश्रेष्ठवर्त्तितव्यंप्रजाहितं उभयोर्लोकयोस्तातप्राप्तयेनित्य
मेवहि २० भीष्मेणसर्वमुक्तोसिकृष्णेनविदुरेणच ममाप्यवश्यंवक्तव्यंप्रीत्यातेनृपसत्तम २१ एतत्सर्वंयथान्यायंकुर्वीथाभूरिदक्षि
ण प्रियस्तथाप्रजानांत्वंस्वर्गेसुखमवाप्स्यसि २२ अश्वमेधसहस्रेणयोजयेत्पार्थिवोपतिः पालयेद्वापिधर्मेणप्रजास्तुल्यंफलंभ
भवेत् २३ इतिश्रीआश्रमवासिकेपर्वणिसप्तमोऽध्यायः ७ युधिष्ठिरउवाच एवमेतत्करिष्यामियथात्थपृथिवीपते भूयश्चैवानुशा
स्योहंभवतोपार्थिवर्षभ १ भीष्मेस्वर्गमनुप्राप्तेगतेचमधुसूदने विदुरेसंजयेचैवकोन्योमांवक्तुमर्हति २ यत्तुमामनुशास्तीहभ
वान्धर्महितेस्थितः कर्त्तास्मितन्महीपालनिर्वृतोभवपार्थिव ३ वैशंपायनउवाच एवमुक्तःसराजर्षिर्धर्मराजेनधीमता कौंतेयंसम
नुज्ञातुमियेषभरतर्षभ ४ पुत्रसंशाम्यतांतावन्ममापिबलवान्श्रमः इत्युक्त्वाप्राविशद्राजागांधार्याभवनंतदा ५ तमासनगतंदे
वीगांधारीधर्मचारिणी उवाचकालेकालज्ञाप्रजापतिसमंपतिं ६ अनुज्ञातःस्वयंतेनव्यासेनत्वंमहर्षिणा युधिष्ठिरस्यानुमतेक
दारण्यंगमिष्यसि ७ धृतराष्ट्रउवाच गांधार्यहमनुज्ञातःस्वयंपित्रामहात्मना युधिष्ठिरस्यानुमतेगंतास्मिनचिराद्वने ८ अहंहिता
वत्सर्वेषांतेषांदुर्द्यूतदेविनां पुत्राणांदातुमिच्छामिप्रेतभावानुगंवसु सर्वप्रकृतिसांनिध्यंकारयित्वास्ववेश्मनि ९ वैशंपायनउवाच
इत्युक्त्वाधर्मराजायप्रेषयामासवैतदा सचतद्वचनात्सर्वंसमानिन्येमहीपतेः १० ततःप्रतीतमनसोब्राह्मणाःकुरुजांगलाः क्ष
त्रियाश्चैववैश्याश्चशूद्राश्चैवसमाययुः ११ ततोनिष्क्रम्यनृपतिस्तस्मादंतःपुरात्तदा ददृशेतंजनंसर्वंसर्वाश्चप्रकृतीस्तथा १२
समवेतांश्चतान्सर्वान्पौरान्जानपदांस्तथा तानागतानभिप्रेक्ष्यसमस्तांश्चसुहृज्जनं १३ ब्राह्मणांश्चमहीपालनानादेशसमागता
न् उवाचमतिमान्राजाधृतराष्ट्रोविशांपते १४ भवंतःकुरवश्चैवचिरंकालंसहोषिताः परस्परस्यसुहृदःपरस्परहितेरताः १५
यदिदानीमहंब्रूयामस्मिन्कालउपस्थिते तथाभवद्भिःकर्त्तव्यमविचार्यवचोमम १६ ७ ७ ७ ७ ७

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ ७ ७ ७ ७

१७ १८ १९ २० २१ २२ २३ इतिश्रीनैलकंठीयेभारतभावदीपेआश्रमवासिकेपर्वणिटीकायामष्टमोऽध्यायः ८ १ २ ३ ४

अरण्यगमनेबुद्धिर्गांधारीसहितस्यमे व्यासस्यानुमतेराजंस्तथाकुंतीसुतस्यमे १७ भवंतोप्यनु जानंतुमाचवोभूद्विचारणा अस्माकं
भवतांचैवयेयंप्रीतिर्हिशाश्वती १८ नचसान्येषुदेशेषुराज्ञामितिमतिर्मम श्रांतोस्मिवयसानेनतथापुत्रविनाकृतः १९ उपवासकृशोस्म्यस्मि
गांधारीसहितोनघाः युधिष्ठिरगतेराज्येप्राप्तश्चास्मिसुखंमहत् २० मन्येदुर्योधनैश्वर्याद्विशिष्टमितिसत्तमाः ममचांधस्यवृद्धस्यहत
पुत्रस्यकागतिः २१ ऋतेवनंमहाभागास्तन्मानुज्ञातुमर्हथ तस्यतद्वचनंश्रुत्वासर्वेतेकुरुजांगलाः २२ बाष्पसंदिग्धयावाचारुरुदुर्भरत
र्षभ तान्नविब्रुवतःकिंचित्सर्वान्शोकपरायणान् पुनरेवमहातेजाधृतराष्ट्रोब्रवीदिदं २३ इतिआश्रमवासिकेपर्वणिअष्टमोऽध्यायः ८
धृतराष्ट्रउवाच शांतनुःपालयामासयथावद्वसुधामिमां तथाविचित्रवीर्यश्चभीष्मेणपरिपालितः १ तथापालयनस्तातविदितार्थोनसंश
यः यथाचपांडुर्भ्रातामेदयितोभवतामभूत् २ सचापिपालयामासयथावत्तच्चवेत्थह मयाचभवतांसम्यक्शुश्रूषायाकृतानघाः ३ अ
सम्यग्वामहाभागास्तत्क्षंतव्यमतंद्रितैः यदादुर्योधनेनेदंभुक्तंराज्यमकंटकं ४ अपितत्रनवोमंदादुर्बुद्धिरपराद्धवान् तस्यापराधाद्
बुद्धेरभिमानान्महीक्षितां ५ विमर्दःसुमहानासीदनयात्स्वकृतादथ तन्मयासाधुवापीदंयदिवासाधुवैकृतं ६ तद्वोहृदिनकर्तव्यंमयाब
द्धोयमंजलिः वृद्धोयंहतपुत्रोयंदुःखितोयंनराधिपः ७ पूर्वराज्ञांचपुत्रोयमितिकृत्वानुजानथ इयंचकृपणावृद्धाहतपुत्रातपस्विनी ८
गांधारीपुत्रशोकार्तायुष्मान्याचतिवैमया हतपुत्राविमौवृद्धौविदित्वादुःखितौतथा ९ अनुजानीतभद्रंवोव्रजावःशरणंचवः अयंचकौरवो
राजाकुंतीपुत्रोयुधिष्ठिरः १० सर्वैर्भवद्भिर्द्रष्टव्यःसमेषुविषमेषुच नजातुविषमंचैवगमिष्यतिकदाचन ११ चत्वारःसचिवायस्यभ्रा
तरोविपुलौजसः लोकपालसमाह्येतेसर्वधर्मार्थदर्शिनः १२ ब्रह्मेवभगवानेषसर्वभूतजगत्पतिः युधिष्ठिरोमहातेजाभवतःपालयि
ष्यति १३ अवश्यमेववक्तव्यमितिकृत्वाब्रवीमिवः एषन्यासोमयादत्तःसर्वेषांवोयुधिष्ठिरः १४ भवंतोस्यचवीरस्यन्यासभूताःकृतामया
यदेवैतैःकृतंकिंचिद्व्यलीकंवःसुतैर्मम १५ यदन्येनमदीयेनतदनुज्ञातुमर्हथ भवद्भिर्नहिमेमन्युःकृतपूर्वःकथंचन १६ अत्यंतगु
रुभक्तानामेषोंजलिरिदंनमः तेषामस्थिरबुद्धीनांलुब्धानांकामचारिणां १७ कृतेयाचेद्यवःसर्वान्गांधारीसहितोनघाः इत्युक्तास्ते
नतेसर्वेपौरजानपदाजनाःनोचुर्बाष्पकलाःकिंचिद्वीक्षांचक्रुःपरस्परं १८ इत्याश्रमवासिकेपर्वणिनवमोऽध्यायः ९ ७ ७

५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ इतिश्रीनैलकंठीयेभारतभावदीपेआश्रमवासिकेपर्वणिटी०नवमोऽध्यायः ९

वैशंपायन उवाच एवमुक्तास्ततस्तेन पौरजानपदा जनाः वृद्धेन राज्ञा कौरव्य नष्टसंज्ञा इवाभवन् १ तूष्णींभूतांस्ततस्तांस्तु बाष्पकंठा
न्महीपतिः धृतराष्ट्रो महीपालः पुनरेवाभ्यभाषत २ वृद्धं च हतपुत्रं च धर्मपत्न्या सहानया विलपंतं बहुविधं कृपणं चैव सत्तमाः ३
पित्रा स्वयमनुज्ञातं कृष्णद्वैपायनेन वै वनवासाय धर्मज्ञा धर्मज्ञेन नृपेण ह ४ सोहं पुनः पुनश्चैव शिरसावनतोनघाः गांधार्या सहितं
तन्मां समनुज्ञातुमर्हथ ५ वैशंपायन उवाच तच्छ्रुत्वा कुरुराजस्य वाक्यानि करुणानि ते रुरुदुः सर्वशो राजन् समेताः कुरुजांगलाः ६
उत्तरीयैः करैश्चापि संछाद्य वदनानि ते रुरुदुः शोकसंतप्ता मुहूर्तं पितृमातृवत् ७ हृदयैः शून्यभूतैस्ते धृतराष्ट्रप्रवासजं दुःखं संधार
यन्तो हि नष्टसंज्ञा इवाभवन् ८ ते विनीय तमायासं धृतराष्ट्रवियोगजं शनैः शनैस्तदान्योन्यमब्रुवन्स्वमतान्युत ९ ततः संधाय ते सर्वे वा
क्यान्यथ समासतः एकस्मिन्ब्राह्मणे राजन्निवेश्योचुर्नराधिप १० ततः स्वाचरणो विप्रः संमतोर्थविशारदः सांबाख्यो बह्वृचो राजन् वक्तुं
समुपचक्रमे ११ अनुमान्य महाराजं तत्सदः संप्रसाद्य च विप्रः प्रगल्भो मेधावी स राजानमुवाच ह १२ राजन्वाक्यं जनस्यास्य म
यि सर्वं समर्पितं वक्ष्यामि तदहं वीर तज्जुषस्व नराधिप १३ यथा वदसि राजेंद्र सर्वमेतत्तथा विभो नात्र मिथ्या वचः किंचित्सुहृत्त्वं नः
परस्परं १४ न जात्वस्य च वंशस्य राज्ञां कश्चित्कदाचन राजासीद्यः प्रजापालः प्रजानामप्रियोभवत् १५ पितृवद्भ्रातृवच्चैव भवंतः
पालयंति नः न च दुर्योधनः किंचिदयुक्तं कृतवान्नृपः १६ यथा ब्रवीति धर्मात्मा मुनिः सत्यवतीसुतः तथा कुरु महाराज स हि नः प
रमो गुरुः त्यक्ता वयं तु भवता दुःखशोकपरायणाः भविष्यामश्चिरं राजन् भवद्गुणशतैर्युताः १८ यथा शांतनुना गुप्ता राज्ञा चित्रांगदे
न च भीष्मवीर्योपगूढेन पित्रा तव च पार्थिव १९ भवद्बुद्धीक्षणाच्चैव पांडुना पृथिवीक्षिता तथा दुर्योधनेनापि राज्ञा सुपरिपालिताः
२० न स्वल्पमपि पुत्रस्ते व्यलीकं कृतवान्नृप पितरीव सुविश्वस्तास्तस्मिन्नपि नराधिप २१ वयमास्म यथा सम्यक् भवतो विदितं तथा
तथा वर्षसहस्राणि कुंतीपुत्रेण धीमता २२ पाल्यमाना धृतिमता सुखं विंदामहे नृप राजर्षीणां पुराणानां भवतां पुण्यकर्मणां २३
कुरुसंवरणादीनां भरतस्य च धीमतः वृत्तं समनुयात्येष धर्मात्मा भूरिदक्षिणः २४ नात्र वाच्यं महाराज सुसूक्ष्ममपि विद्यते उषिताः स्म सु
खं नित्यं भवता परिपालिताः २५ सुसूक्ष्मं च व्यलीकं ते सपुत्रस्य न विद्यते यत्तु ज्ञातिविमर्देस्मिन्नात्थ दुर्योधनं प्रति २६ ७ ७

असौहृदंपरित्यज्यसौहृद्येपर्यवास्थिताः एवंसमागताःसर्वेगुरुभिर्बांधवैःसह ७ पुत्रैश्चपुरुषव्याघ्राःकुरवोन्येचपार्थिव तांरा
त्रिमखिलामेवंविहृत्यप्रीतमानसाः ८ मेनिरेपरितोषेणनृपाःस्वर्गसदोयथा नात्रशोकोभयंत्रासोनारतिर्नायशोभवत् ९ परस्परंस
मागम्ययोधानांभरतर्षभ समागतास्ताःपितृभिर्भ्रातृभिःपतिभिःसुतैः १० मुदंपरमिकांप्राप्यनार्योदुःखमथात्यजन् एकांरात्रिंविहृत्यै
वंतेवीरास्ताश्चयोषितः ११ आमंत्र्यान्योन्यमाश्लिष्यततोजग्मुर्यथागतं ततोविसर्जयामासलोकांस्तान्मुनिपुंगवः १२ क्षणेनांतर्हिताश्चैव
प्रेक्षतामेवतेभवन् अवगाह्यमहात्मानःपुण्यांभागीरथींनदीं १३ सरथाःसध्वजाश्चैवस्वानिवेश्मानिभेजिरे देवलोकंययुःकेचित्के
चिद्ब्रह्मसदस्तथा १४ केचिच्चवारुणंलोकंकेचित्कौबेरमाप्नुवन् ततोवैवस्वतंलोकंकेचिच्चैवाप्नुवन्नृपाः १५ राक्षसानांपिशा
चानांकेचिच्चाप्युत्तरान्कुरून् विचित्रगतयश्चान्येयानवाप्यामरैःसह १६ आजग्मुस्तेमहात्मानःसवाहाःसपदानुगाः गते
षुतेषुसर्वेषुसलिलस्थोमहामुनिः १७ धर्मशीलोमहातेजाःकुरूणांहितकृत्तथा ततःप्रोवाचताःसर्वाःक्षत्रियानिहतेश्वराः १८
यायाःपतिकृतांल्लोकानिच्छंतिपरमास्त्रियः ताजान्हवीजलंक्षिप्रमवगाहंत्वतंद्रिताः १९ ततस्तस्यवचःश्रुत्वाश्रद्दधानावरांगनाः
श्वशुरंसमनुज्ञाप्यविविशुर्जान्हवीजलं २० विमुक्तामानुषैर्देहैस्ततस्ताभर्तृभिःसह समाजग्मुस्तदासाध्व्यःसर्वाएवविशांपते
२१ एवंक्रमेणसर्वास्ताःशीलवत्यःपतिव्रताः प्रविश्यक्षत्रियामुक्ताजग्मुर्भर्तृसलोकतां २२ दिव्यरूपसमायुक्तादिव्याभरणभूषि
ताः दिव्यमाल्यांबरधरायथासांपतयस्तथा २३ ताःशीलगुणसंपन्नाविमानस्थागतक्लमाः सर्वाःसर्वगुणोपेताःस्वस्थानंप्रतिपे
दिरे २४ यस्ययस्यतुयःकामस्तस्मिन्कालेबभूवह तंतंविसृष्टवान्व्यासोवरदोधर्मवत्सलः २५ तच्छ्रुत्वानरदेवानांपुनरागमनंनराः
जहृषुर्मुदिताश्चासन्नानादेशगताअपि २६ प्रियैःसमागमस्तेषांयःसम्यक्शृणुयान्नरः प्रियाणिलभतेनित्यमिहचप्रेत्यचै
वह २७ इष्टबांधवसंयोगमनायासमनामयं यश्चैतच्छ्रावयेद्विद्वान्विदुषोधर्मवित्तमः २८ सयशःप्राप्नुयाल्लोकेपरत्र
चशुभांगतिं स्वाध्याययुक्तामनुजास्तपोयुक्ताश्चभारत २९ साध्वाचारादमोपेतादाननिर्धूतकल्मषाः ऋजवःशुचयःशांताहिं
सानृतविवर्जिताः ३१ आस्तिकाःश्रद्दधानाश्चधृतिमंतश्चमानवाः श्रुत्वाश्चर्यमिदंसर्वंह्यवाप्स्यंतिपरांगतिं ३१ इत्याश्रमवा०प०त्रयस्त्रिंशो
ध्यायः ३३ १९

इममेवार्थंश्रोत्तराभ्यांनिरूपयति एतच्छ्रुत्वेत्यादिना १ कथंनुत्यक्ता भ.स्मीभूतायेदेहास्तेषां तद्रूपेणैवपूर्वरूपेणैवदर्शनंजातमित्यर्थ २ इतीतिसर्वेषांदेवोरगमनु
ष्याणांकर्मणिकुर्वतांकर्मणांकर्मनाशोभोगमंतरेणकदापिनास्ति यथास्वंमशभै. कर्मभिः शुभमशुभंवास्यात्रंदेहंप्राप्य तत्तद्भोगेकर्मफलंसुखदुःखाद्यनुभवतिदेहस्तुत
दानीमविकृतएवतिष्ठति एवंकर्मजेषुमानुषादिदेहेषुनश्यत्स्वपिद्यावापृथिव्याकाशस्थाःपित्रादिदेहाः अविनश्यएववर्तंते अतएवतमात्मानं ममतिथ इन्यताथ्यमन्यानुकामान्
भुंजते कामचारोभवतिसयदिपितृलोकोभवतिसंकल्पादेवास्यपितरः समुत्तिष्ठंति तेनस्वापित्तृलोकेनसंपन्नोमहीयतइतिश्रुतिः गन्यानामपित्रादीनाम्न्यथानदर्शयति
३४ तदेतदाह महाभूतानीति महाभूतानांप्राणिनामधिपतेरीश्वरस्यसंश्रयात् महाभूतानि अस्मदादिशरीरापेक्षयाअविनाशित्वादियोगात् महाभूतानिद्यावापृथिव्याकाश

सौतिरुवाच एतच्छ्रुत्वानृपोविद्वान् हृष्टोभूज्जनमेजयः पितामहानांसर्वेषांगमनागमनंतदा १ अब्रवीच्चमुदायुक्तःपुनरागमनंप्रति
कथंनुत्यक्तदेहानांपुनस्तद्रूपदर्शनं २ इत्युक्तःसद्विजश्रेष्ठोव्यासशिष्यःप्रतापवान् प्रोवाचवदतांश्रेष्ठस्तंनृपंजनमेजयं ३ वैशंपा
यनउवाच अविप्रणाशःसर्वेषांकर्मणामितिनिश्चयः कर्मजानिशरीराणितथैवाकृतयोनृप ४ महाभूतानिनित्यानिभूताधिपतिसंश्र
यात् तेषांचानित्यसंवासोनविनाशोवियुज्यतां ५ अनायासकृतंकर्मसत्यःश्रेष्ठःफलागमः आत्माचैभिःसमायुक्तः सुखदुःखमुपा
श्नुते ६ अविनाशयस्तथायुक्तःक्षेत्रज्ञइतिनिश्चयः भूतानामात्मकोभावोयथासौनवियुज्यते ७ यावन्नक्षीयतेकर्मतावत्त
स्यस्वरूपता क्षीणकर्मानरोलोकेरूपान्यत्वंनियच्छति ८

स्थाः पित्रादयस्तत्स्वंथानित्यादिकर्मजानितुभूतानांकर्मक्षयेविनश्यंतइतिभाव तेषांचमहाभूतानां
नित्यानांशरीराणामनित्येशरीरेसहसंवासस्तादात्म्येनावस्थानंसंसारदशायामस्ति वियुज्यतां अनित्यानांनाशेऽपि सद्भिर्वियुज्यमानानांनाशोऽस्ति येनयथेनात्मदृश्यते एतस्म
त्यंब्रह्मपुरमितिश्रुतेः तस्मात्कर्मजानांनाशेऽप्यकर्मजानांद्यावापृथिव्याकाशस्थानांपित्रादिदेहानामविनाशात्पुनस्तद्रूपेणतेषांदर्शनंयुक्तमेव ५ कथमेतदवगम्यतइत्यतआ
ह अनायासकृतेतिप्रवृत्तिरूपंकर्म आयासकृतं तद्विपरीतंतुनिवृत्तिरूपंकर्म अनायासकृतं तस्मात्सत्यःश्रेष्ठश्चउक्तविधःफलागमोभवति एभिः आयासकृत
कर्मभि ६ नहिकर्मसंबंधादात्मानश्यतीत्याह यद्यपिदुःखभोगआत्मनोऽस्तितथापिक्षेत्रज्ञ आत्मातेंदुःखैर्नविनाश्यएव अविकार्यएवअसंगत्वातदुक्त
मातमाह भूतानामिति यथासौभूतानामस्मदादिशरीराणांआत्मकः आत्मनःप्रकृतिकःदर्पणादौप्रतिबिंब दर्पणधर्मान्मलिनत्वादीननुकरोत्यपि
तन्नाशान्नश्यतिनवियुज्यतइत्यस्यननश्यतीत्यर्थः एवंक्षेत्रक्षेत्रज्ञयोरपिद्रष्टव्यं ७ यावत्कर्मदेहारंभकमस्तितावत्तस्यदेहस्यस्वरूपेणात्मन
ताध्यासइत्यर्थ कर्मक्षयेतुदेहांतरे आत्मनोऽध्यासोभवतीत्याह क्षीणेति ८ ७ ७ ७ ७ ७
श्रीगीतासामचंद्रार्पणमस्तु ७. श्री रामसहितशंकराभ्यांनम. ७ ७ ७ ७ ७

येनानाभावाभूतेंद्रियादयोऽतत्पदार्थाःशरीरंप्राप्यएकत्वंदेहादितादात्म्यंसंहताःसंप्राप्तास्तएवभावाःदेहादीनांआत्मनःपृथक्त्वंविजानतांयोगिनांनित्याभवंति
अज्ञानिनांयेअनित्याभावास्तएवयोगिनांनित्यात्मरूपाभवंतीत्यर्थः ९ संज्ञपनंमारणंतदाहसूर्यंतेचक्षुःवातंप्राणाइत्यादयोमंत्राःपठ्यंतेऽतोलिंगादव
गम्यतेयेतेशरीरिणांप्राणाःइंद्रियाणिनित्यंनिश्चितंनित्यंसर्वदालोकांतरगताइति तेनशर्वशरीरीविभुरेवास्तिनतूपाधिपरिछिन्नत्वाभिमानत्वस्यआविद्य
कइतिभावः १० नवतुज्ञानेऽधिकाराभावात्त्वंसोयसनकर्मप्राप्यदेवयानमार्गमाश्रयस्वेत्याह तवयोग्यइतिशेषः ११ यत्रकालेत्वयायज्ञआहृतःकृतःत
त्रचदेवास्तवदृताःसखायोभवन्तेदेवाःयशूनांजीवानांगमनेतत्तल्लोकप्राप्तौईश्वराःनिग्रहानुग्रहकराः १२ यस्मादेवंतस्मान्नित्याःजीवाःदेवातृइष्ट
गतिमंतोभवंतिनान्येअयजमानाःएवंकर्मानुष्ठानंउक्त्वाज्ञाननिष्ठामाहसार्द्धेननित्यइति पांचभौतिकोदेववर्गःसर्वोपिनित्यःपुरुषश्चतद्वत्नित्यःकु

नानाभावास्तथैकत्वंशरीरंप्राप्यसंहताः भवंतितेतथानित्याःपृथक्भावंविजानतां ९ अश्वमेधेश्रुतिश्चेयमश्वसंज्ञपनंप्रति
लोकांतरगतानित्यंप्राणानित्याशरीरिणां १० अहंहितंवदाम्येतत्त्वियंनेत्तवपार्थिव देवयानाहिपंथानःश्रुतास्तेयज्ञसंस्तरे
११ आहृतोयत्रयज्ञस्तेतत्रदेवाहितास्तव यदासमन्वितादेवाःपशूनांगमनेश्वराः १२ गतिमंतश्चतेनेष्वानान्येनित्याभवं
त्युत निन्त्येस्मिन्यंचकेवर्गेनित्येचात्मनिपूरुषः १३ अस्यनानासमायोगंयःपश्यतिवृथामतिः वियोगेशोचतेत्यर्थंसबाल
इतिमेमतिः १४ वियोगदोषदर्शीयःसंयोगंसविसर्जयेत् असंगेसंगमोनास्तिदुःखंभुविवियोगजं १५ परापरज्ञ
स्यपरोनाभिमानादुदीरितः अपरज्ञःपराबुद्धिंज्ञात्वामोहाद्विमुच्यते १६ अदर्शनादापतितःपुनश्चादर्शनंगतः नाहंतंवे
द्मिनासौमांनचमेस्तिविरागता १७

खयोरपिनित्ययोःसतोः योऽस्यजीवस्यनानायोगंअनेकदेहसंबंधपश्यति सवृथामतिः वियोगेपुत्रादिदेहनाशे-
शोचतिचउक्तरीत्यानदेहोनश्यतिनापिआत्मेतिनिर्निमित्तस्तेषांशोकइतिभावः १३ १४ सयदिस्त्र्यादिनादुःखंपश्यतितर्हिस्त्र्यादीनापरिग्रहएवनकर्तव्यःनहिवं
ध्यायाःपुत्रशोकार्तिरस्ति वस्तुतस्त्वसंगेआत्मनिवियोगदुःखादिसंगमोवानास्तीत्याह असंगइति १५ परेति अपरस्तुउक्तविधंज्ञाननिष्ठामप्राप्तस्तुपरापरतो-
नित्यविभागमात्रज्ञः अभिमानादेहादितादात्म्यादुपासनाबलेनउदीरितउत्क्षिप्तःअपरज्ञः सगुणब्रह्मवित्भूत्वापश्चात्परांबुद्धिंनिर्विशेषवस्तुज्ञानंप्राप्यमोहात्-
मिथ्याज्ञानाद्विमुच्यते १६ मुक्तस्यलक्षणमाह अदर्शनादिति कर्मकर्तरिभावेघञ्दर्शनेक्रियानास्तितद्दर्शनंप्रत्यक्चैतन्यंतस्मात् आयतितत्रैवलीनः
नः अतस्तंअमुकंनवेद्मिअगोचरत्वात् असौचमांनवेत्तिकारणाभावात् तर्हित्वमपिताहृशःकुतोनभवसीत्याह नचमेस्तिविरागतेति परंवैराग्यमेवमुख्यंमोक्षसाध
नमित्यर्थः १७

येनेति मनसाकृतंपापंमानसतापेनैवानुभूयते एवंशरीरोपतापेनेति कायवाङ्मनसांचापल्यंत्यक्त्वा वायुनिरोधंकुर्यादितिसार्द्धश्लोकार्थः १८ इतिश्रीनील
कंठीयेभारतभावदीपे आश्रमवासिकेपर्वणिटीकायांचतुस्त्रिंशोऽध्यायः ३४ ७. अद्दृष्ट्वेति १ २ मथधृतराष्ट्रोराजाविदुरश्चसिद्धिंययोर्दर्शनं ह्य

येनयेनशरीरेणकरोत्ययमनीश्वरः तेनतेनशरीरेणतदवश्यमुपाश्नुते मानसंमनसाप्नोति शारीरंचशरीरवान् १८ इत्याश्रम-
वासिकेपर्वणिचतुस्त्रिंशोऽध्यायः ३४ वैशंपायनउवाच अदृष्ट्वातुनृपःपुत्रान्दर्शनंप्रतिलब्धवान् ऋषेःप्रसादात्पुत्रा
णांस्वरूपाणांकुरूद्वह १ सराजाराजधर्मांश्चब्रह्मोपनिषदंतथा अवाप्तवान्नरश्रेष्ठोबुद्धिनिश्चयमेवच २ विदुरश्च
महाप्राज्ञोययौसिद्धिंतपोबलात् धृतराष्ट्रःसमासाद्यव्यासंचैवतपस्विनं ३ जनमेजयउवाच ममापिवरदोव्यासोदर्शयेत्पित
रंयदि तद्रूपवेशवयसंश्रद्दध्यांसर्वमेवते ४ प्रियंमेस्यात्कृतार्थश्चस्यामहंकृतनिश्चयः प्रसादादृषिमुख्यस्यममकामःसमृध्य
तां ५ सौतिरुवाच इत्युक्तवचनेतस्मिन्नृपेव्यासःप्रतापवान् प्रसादमकरोद्धीमानानयच्चपरीक्षितं ६ ततस्तद्रूपवयसमा
गतंनृपतिंदिवः श्रीमंतंपितरंराजाददर्शजनमेजयः ७ शमीकंचमहात्मानंपुत्रंतंचास्यशृंगिणं अमात्यायेबभूवुश्चराज्ञस्तांश्च
ददर्शह ततःसोवभृथेराजामुदितोजनमेजयः ८ पितरंस्नापयामासस्वयंसस्नौचपार्थिवः स्नात्वासनृपतिर्विप्रमास्तीकमिदमब्र
वीत् ९ यायावरकुलोत्पन्नंजरत्कारुसुतंतदा आस्तीकविविधाश्चर्यंयज्ञोयममितिस्मर्मातः १० यद्यायंपिताप्राप्तोममशोकप्रणाशनः
आस्तीकउवाच ऋषिर्द्वैपायनोयत्रपुराणस्तपसोनिधिः यज्ञेकुरुकुलश्रेष्ठतस्यलोकावुभौजितौ ११ श्रुतंविचित्रमाख्यानंत्वयापांडवनं
दन सर्पाश्चभस्मसान्नीतागतश्चपदवींपितुः १२ कथंचित्तक्षकोमुक्तःसत्यत्वात्तवपार्थिव ऋषयःपूजिताःसर्वेगतिर्दृष्टामहात्मनः
१३ प्राप्तःसुविपुलोधर्मःश्रुत्वापापविनाशनं विमुक्तोहृदयग्रंथिरुदारजनदर्शनात् १४ येचपक्षधरधर्मेसद्वृत्तरुचयश्चये यान्दृष्ट्वा
हीयतेपापंतेभ्यःकार्यानमस्क्रिया १५ सौतिरुवाच एतच्छ्रुत्वाद्विजश्रेष्ठात्सराजाजनमेजयः पूजयामासतमृषिमनुमान्यपुनः
पुनः १६

येःसंबंधः तत्रापिविदुरस्तपोबलाद्धृतराष्ट्रःव्यासंसमासाद्येतिसंबंधः ३ ४ ५ ६ ७ ८ ज्ञापयामास आज्ञापितवान्
स्नापयामासेतिपाठःस्पष्टः ९ १० ११ १२ १३ पापविनाशनमितिहासमितिशेषः १४ पक्षधराःपक्षस्यापक्षा-
१५ १६

दृष्ट्वेति १७ इतिश्रीनीलकंठीयेभारतभावदीपेआश्रमवासिकेपर्वणिटीकायांपंचत्रिंशोऽध्यायः ३५ १ २ ३ ४ आश्रमपदंआश्रमप्रांतं ५



प्रश्रच्छतमृषिंचापिवैशंपायनमच्युतं कथावशेषंधर्मज्ञोवनवासस्यसत्तम १७ इत्याश्रमवासिकेपर्वणिपंचत्रिंशोऽध्यायः
३५ जनमेजयउवाच दृष्ट्वापुत्रांस्तथापौत्रान्सानुबंधान्जनाधिपः धृतराष्ट्रः किमकरोद्राजाचैवयुधिष्ठिरः १ वैशं
पायनउवाच तद्दृष्ट्वामहदाश्चर्यंपुत्राणांदर्शनंनृपः वीतशोकःसराजर्षिःपुनराश्रममागमत् २ इतरस्तुजनःसर्वस्तेचैवपरमर्ष
यः प्रतिजग्मुर्यथाकामंधृतराष्ट्राभ्यनुज्ञया ३ पांडवास्तुमहात्मानोलघुभूयिष्ठसैनिकाः पुनर्जग्मुर्महात्मानंसदारास्तंमहीप
तिं ४ तमाश्रमपदंधीमान्ब्रह्मर्षिर्लोकपूजितः मुनिःसत्यवतीपुत्रोधृतराष्ट्रमभाषत ५ धृतराष्ट्रमहाबाहोशृणुकौरवनंद
न श्रुतंतेज्ञानवृद्धानामृषीणांपुण्यकर्मणां ६ ऋद्धाभिजनवृद्धानांवेदवेदांगवेदिनां धर्मज्ञानांपुराणानांवदतांविविधाः
कथाः ७ मास्मशोकेमनःकार्षीर्दिष्टेनव्यथतेबुधः श्रुतंदेवरहस्यंतेनारदाद्देवदर्शनात् ८ गतास्तेक्षत्रधर्मेणशस्त्रपू
तांगतिंशुभां यथादृष्टास्त्वयापुत्रास्तथाकामविहारिणः ९ युधिष्ठिरस्त्वयंधीमान्भवंतमनुरुध्यते सहितोभ्रातृभिःसर्वैःसदारः
ससुहृज्जनः १० विसर्जयैनंयात्वेषःस्वराज्यमनुशासतां मासःसमधिकस्तेषामतीतोवसतांमुने ११ एतद्धिनित्यंयत्नेन
पदंरक्ष्यंनराधिप बहुप्रत्यर्थिकंह्येतद्राज्यंनामकुरूद्वह १२ इत्युक्तःकौरवोराजाव्यासेनातुलतेजसा युधिष्ठिरमथाहूयवाग्मी
वचनमब्रवीत् १३ अजातशत्रोभद्रंतेशृणुमेभ्रातृभिःसह त्वत्प्रसादान्महीपालशोकोनास्मान्प्रबाधते १४ रमेचाहंत्वयापुत्र
पुरेवगजसाह्वये नाथेनानुगतोविद्वान्प्रियेषुपरिवर्तिना १५ प्राप्तंपुत्रफलंत्वत्तःप्रीतिर्मेपरमात्वयि नमेमन्युर्महाबाहोगम्यतां
पुत्रमाचिरं १६ भवंतंचेहसंप्रेक्ष्यतपोमेपरिहीयते तपोयुक्तंशरीरंचत्वांदृष्ट्वाधारितंमनः १७ मातरौतेतथैवेमेशीर्णपर्णकृ
ताशने ममतुल्यव्रतेपुत्रनचिरंवर्तयिष्यतः १८ दुर्योधनप्रभृतयोदृष्टालोकांतरंगताः व्यासस्यतपसोवीर्याद्भवतश्चस
मागमात् १९ प्रयोजनंचनिर्वृत्तंजीवितस्यममानघ उग्रंतपःसमास्थास्येत्वमनुज्ञातुमर्हसि २० त्वय्यद्यपिंडःकीर्तिश्च
कुलंचेदंप्रतिष्ठितं श्वोवाद्यवामहाबाहोगम्यतांपुत्रमाचिरं २१ राजनीतिःसुबहुशःश्रुतातेभरतर्षभ संदेष्टव्यंनपश्यामिकृतंमेभव
ताप्रभो २२

६ ७ ८ ९ १० ११ बहवःप्रत्यर्थिनःप्रार्थयानाःशत्रवोयत्रतत् १२ १३ १४
नाथेनत्वया १५ १६ १७ १८ १९ २० २१ २२

२३ अन्विष्येमृगयिष्ये २४ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३

वैशंपायनउवाच इत्युक्त्वावचनंतंतुनृपोराजानमब्रवीत् नमामर्हसिधर्मज्ञपरित्यक्तुमनागमं २३ कामंगच्छंतुमेसर्वेभ्रातरोनुचरास्त
था भवंतमहमन्विष्येमातरंचयतव्रत २४ तमुवाचाथगांधारीमैवंपुत्रशृणुष्वह त्वय्यधीनंकुरुकुलंपिंडश्चश्वशुरस्यमे २५ गम्य
तांपुत्रपर्याप्तमेतावत्पूजितावयं राजायदाहतत्कार्यंत्वयापुत्रपितुर्वचः २६ वैशंपायनउवाच इत्युक्तःसतुगांधार्याकुंतीमिदमभा
षत स्नेहबाष्पाकुलेनेत्रेप्रमृज्यरुदतीवचः २७ विसर्जयतिमांराजागांधारीचयशस्विनी भवत्यांबद्धचित्तस्तुकथंयास्यामिदुःखितः
२८ नचोत्सहेतपोविघ्नंकर्तुंतेधर्मचारिणि तपसोहिपरंनास्तितपसाविंदतेमहत् २९ ममापिनतथाराज्ञिराज्येबुद्धिर्यथापुरा त
पस्येवानुरक्तंमेमनःसर्वात्मनातथा ३० शून्येयंचमहीकृत्स्नानमेप्रीतिकरीशुभे बांधवानःपरिक्षीणाबलंनोनयथापुरा ३१
पांचालाःसुभृशंक्षीणाःकथामात्रावशेषिताः नतेषांकुलकर्तारंकंचित्पश्याम्यहंशुभे ३२ सर्वेहिभस्मसान्नीतास्तेद्रोणेनरणाजि
रे अवशिष्टाश्चनिहताद्रोणपुत्रेणवैनिशि ३३ चेदयश्चैवमत्स्याश्चदृष्टपूर्वास्तथैवनः केवलंवृष्णिचक्रंचवासुदेवपरिग्रहात् ३४
यद्दृष्ट्वास्थातुमिच्छामिधर्मार्थंनार्थहेतुतः शिवेनपश्यनःसर्वान्दुर्लभंतेवदर्शनं ३५ अविषह्यंचराजाहितीव्रंचारप्स्यतेतप
एतच्छ्रुत्वामहाबाहुःसहदेवोयुधांपतिः ३६ युधिष्ठिरमुवाचेदंबाष्पव्याकुललोचनः नोत्सहेहंपरित्यक्तुंमातरंभरतर्षभ ३७ प्र
तियातुभवान्क्षिप्रंतपस्तप्स्याम्यहंविभो इहैवशोषयिष्यामितपसेदंकलेवरं ३८ पादशुश्रूषणेरक्तोराज्ञोमात्रोस्तथानयोः तमु
वाचततःकुंतीपरिष्वज्यमहाभुजं गम्यतांपुत्रमैवंत्वंवोचःकुरुवचोमम आगमावःशिवाःसंतुस्वस्थाभवतपुत्रकाः ४० उपरोधो
भवेदेवमस्माकंतपसःकृत त्वत्स्नेहपाशबद्धाचहीयेयंतपसःपरात् ४१ तस्मात्पुत्रकगच्छत्वंशिष्टमल्पंचनःप्रभो एवंसं
स्तंभितंवाक्यैःकुंत्याबहुविधैर्मनः ४२ सहदेवस्यराजेंद्रराज्ञश्चैवविशेषतः तेमात्रासमनुज्ञाताराज्ञाचकुरुपुंगवाः ४३
अभिवाद्यकुरुश्रेष्ठमामंत्रयितुमारभन् युधिष्ठिरउवाच राज्यंप्रतिगमिष्यामःशिवेनप्रतिनंदिताः अनुज्ञातास्त्वयाराजन्गमि
ष्यामोविकल्मषाः ४४ एवमुक्तःसराजर्षिर्धर्मराज्ञामहात्मना अनुजज्ञेसकौरव्यमभिनंद्ययुधिष्ठिरं ४५ भीमंचबलिनांश्रेष्ठंसां
त्वयामासपार्थिवः सचास्यसम्यक्मेधावीप्रत्यपद्यतवीर्यवान् ४६ ७, ७, ७, ७,

३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ शिष्टमायुरितिशेष ४२ ४३ ४४ ४५ ४६

४७ ४८ नृपंप्रदक्षिणंचक्रुर्निवारणेस्तनपानादिशेषः ४९ ५० ५१ ५२ ५३ इतिश्रीनैलकंठीयेभारतभावदीपेआश्रमवासिकेपर्वणिटीकायांषट्त्रिं



अर्जुनंचसमाश्लिष्ययमौचपुरुषर्षभौ अनुजज्ञेसकौरव्यःपरिष्वज्याभिनंद्यच ४७ गांधार्याचाभ्यनुज्ञाताःकृतपादाभिवादनाः जनन्या
समुपाघ्राताःपरिमुक्ताश्चतेनृप ४८ चक्रुःप्रदक्षिणंसर्वेवत्सा इवनिवारणे पुनःपुनर्निरीक्षंतःप्रचक्रुस्तेप्रदक्षिणं ४९ द्रौपदीप्रमुखा
श्चैवसर्वाःकौरवयोषितः न्यायतःश्वशुरेवृत्तिंप्रयुज्यप्रययुस्ततः ५० श्वश्रूभ्यांसमनुज्ञाताःपरिष्वज्याभिनंदिताः संदिष्टाश्चेतिकर्त्तव्यं
प्रययुर्भर्तृभिःसह ५१ ततःप्रजज्ञेनिनदःसूतानांयुज्यतामिति उष्ट्राणांक्रोशतांचापिहयानांहेषतामपि ५२ ततोयुधिष्ठिरोराजा
सदारःसहसैनिकः नगरंहास्तिनपुरंपुनरायात्सबांधवः ५३ इत्याश्रमवासिकेपर्वणिषट्त्रिंशोऽध्यायः ३६ वैशंपायनउवाच
द्विवर्षोपनिवृत्तेषुपांडवेषुयदृच्छया देवर्षिर्नारदोराजन्नाजगामयुधिष्ठिरं १ तमभ्यर्च्यमहाबाहुःकुरुराजोयुधिष्ठिरः आसीनंपरि
विश्वस्तंप्रोवाचवदतांवरः २ चिरात्तुनानुपश्यामिभगवंतमुपस्थितं कच्चित्तेकुशलंविप्रशुभंवाप्रत्युपस्थितं ३ केदेशाःपरिदृष्टास्तेकिं
चकार्यंकरोमिते तद्ब्रूहिद्विजमुख्यस्त्वंत्वमस्माकंचपरागतिः ४ नारदउवाच चिरदृष्टोसिमेत्येवमागतोहंतपोवनात् परिदृष्टानि
तीर्थानिगंगाचैवमयानृप ५ युधिष्ठिरउवाच वदंतिपुरुषामेद्यगंगातीरनिवासिनः धृतराष्ट्रंमहात्मानमास्थितंपरमंतपः ६ प
रिदृष्टस्त्वयातत्रकुशलीसकुरूद्वहः गांधारीचपृथाचैवसूतपुत्रश्चसंजयः ७ कथंचवर्त्ततेचाद्यपितामममसपार्थिवः श्रोतुमिच्छामि
भगवन्यदिदृष्टस्त्वयानृपः ८ नारदउवाच स्थिरीभूयमहाराजशृणुवृत्तंयथातथं यथाश्रुतंचदृष्टंचमयातस्मिंस्तपोवने ९ वनवास
निवृत्तेषुभवत्सुकुरुनंदन कुरुक्षेत्रात्पितातुभ्यंगंगाद्वारंययौनृप १० गांधार्यासहितोधीमान्वध्वाकुंत्यासमन्वितः संजयेनच
सूतेनसाग्निहोत्रःसयाजकः ११ आतस्थेसतपस्तीव्रंपितातवतपोधनः वीटांमुखेसमादायवायुभक्षोभवन्मुनिः १२ वनेसमुनिभिः
सर्वैःपूज्यमानोमहातपाः त्वगस्थिमात्रशेषःसषण्मासानभवन्नृपः १३ गांधारीतुजलाहाराकुंतीमासोपवासिनी संजयःषष्ठभ
क्तेनवर्तयामासभारत १४ अग्नींस्तुयाजकास्तत्रजुहुवुर्विधिवत्प्रभो दृश्यतोदृश्यतश्चैववनेतस्मिन्नृपस्यवै १५ अनिकेतोथ
राजासबभूववनगोचरः तेचापिसहितेदेव्यौसंजयश्चतमन्वयुः १६ संजयोनृपतेर्नेतासमेषुविषमेषुच गांधार्यास्तुपृथाराजंश्चक्षु
रासीदनिंदिता १७ ततःकदाचिद्गंगायाःकच्छेसनृपसत्तमः गंगायामाप्लुतोधीमानाश्रमाभिमुखोभवत् १८

शोऽध्यायः ३६ द्विवर्षेति १ २ ३ ४
मेमया अतिचिरंदृष्टोसीत्यर्थः ५ ६ ७ ८ ९ १० ११ १२ १३ १४ दृश्यतोऽदृश्यतइति पश्यंतमपश्यंतंचानादृत्येत्यर्थःनियमेनसान्निध्याभावात् १५
१६ १७ १८

१९ २० २१ २२ २३ २४ २५ २६ विकर्षणंअनशनं २७ २८ २९ ऋषिपुत्रोव्यासपुत्रइतियोगसामर्थ्यंसूचितं ३० गां-

अथवायुःसमुद्भूतोदावाग्निरभवन्महान् ददाहतद्वनंसर्वंपरिगृह्यसमंततः १९ दह्यत्सुमृगयूथेषुद्विजिह्वेषुसमंततः वराहाणांचयूथेषुसं
श्रयत्सुजलाशयात् २० समाविष्टेवनेतस्मिन्प्राप्तेव्यसनउत्तमे निराहारतयाराजामंदप्राणोविचेष्टितः २१ असमर्थोपसरणेसुकृ
शौमातरौचते ततःसनृपतिर्दृष्ट्वावन्हिमायांतमंतिकात् २२ इदमाहततःसूतंसंजयंजयतांवरः गच्छसंजययत्राग्निर्नत्वांदहतिकर्हि
चित् २३ वयमत्राग्निनायुक्तागमिष्यामःपरांगतिं तमुवाचकिलोद्विग्नःसंजयोवदतांवरः २४ राजन्मृत्युरनिष्टोयंभवितातेवृथाग्नि
ना नचोपायंप्रपश्यामिमोक्षणेजातवेदसः २५ यदत्रानंतरंकार्यंतद्भवान्वक्तुमर्हसि इत्युक्तःसंजयेनेदंपुनराहसपार्थिवः २६ नै
षमृत्युरनिष्टोनोनिःसृतानांगृहात्स्वयं जलमग्निस्तथावायुरथवापिविकर्षणं २७ तापसानांप्रशस्यंतेगच्छसंजयमाचिरं इत्युक्त्वासंज
यंराजासमाधायमनस्तथा २८ प्राङ्मुखःसहगांधार्याकुंत्याचोपाविशत्तदा संजयस्तंतथादृष्ट्वाप्रदक्षिणमथाकरोत् २९ उवाचचै
नंमेधावीयुंक्ष्वात्मानमितिप्रभो ऋषिपुत्रोमनीषीसराजाचक्रेस्यतद्वचः ३० सन्निरुध्येंद्रियग्राममासीत्काष्ठोपमस्तदा गांधारीचम
हाभागाजननीचपृथातव ३१ दावाग्निनासमायुक्तेसचराजापितातव संजयस्तुमहामात्रस्तस्माद्दावादमुच्यत ३२ गंगाकूलेमया
दृष्टस्तापसैःपरिवारितः सतानामंत्र्यतेजस्वीनिवेद्यैतच्चसर्वशः ३३ प्रययौसंजयोधीमान्हिमवंतंमहीधरं एवंसनिधनंप्राप्तःकुरु
राजोमहामनाः ३४ गांधारीचपृथाचैवजनन्यौतेविशांपते यदृच्छयानुव्रजतामयाराज्ञःकलेवरं ३५ तयोश्चदेव्योरुभयोर्मयादृष्टं
निभारत ततस्तपोवनेतस्मिन्समाजग्मुस्तपोधनाः ३६ श्रुत्वाराज्ञस्तदानिधनंनत्वशोचन्गतीश्चते तत्राश्रौषमहंसर्वमेतत्पुरुषस
त्तम ३७ यथाचनृपतिर्दग्धोदेव्यौतेचेतिपांडव नशोचितव्यंराजेंद्रस्वतःसपृथिवीपतिः ३८ प्राप्तवानग्निसंयोगंगांधारीजननी
चते वैशंपायनउवाच एतच्छ्रुत्वाचसर्वेषांपांडवानांमहात्मनां निर्याणंधृतराष्ट्रस्यशोकःसमभवन्महान् ३९ अंतःपुराणां
चतदामहानार्तस्वरोभवत् पौराणांचमहाराजश्रुत्वाराज्ञस्तदागतिं ४० अहोधिगितिराजातुविक्रुश्यभृशदुःखितः ऊर्ध्वबाहुःस्मरं
न्मातुःप्ररुरोदयुधिष्ठिरः ४१ भीमसेनपुरोगाश्चभ्रातरःसर्वएवते अंतःपुरेषुचतदासुमहान्रुदितस्वनः ४२ प्रादुरासीन्महाराज
पृथांश्रुत्वातथागतां तंचवृद्धंतथादग्धंहतपुत्रंनराधिपं ४३ ७ ७ ७ ७ ७ ७

धारीपृथाचतवव्यक्तेशरमेभस्तामित्यन्वयः ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३

अन्वशोचंततेसर्वेगांधारींचतपस्विनीं तस्मिन्नुपरतेशब्देमुहूर्त्तादिवभारत ४४ निगृह्यबाष्पंधैर्येणधर्मराजोऽब्रवीदिदं ४५ इत्याश्रमवासिकेपर्वणिसप्तत्रिंशोऽध्यायः ३७ युधिष्ठिरउवाच तथामहात्मनस्तस्यतपस्युग्रेचवर्त्ततः अनाथस्येवचवनेतिष्ठत्स्वस्मासुबंधुषु १ दुर्विज्ञेयागतिर्ब्रह्मन्पुरुषाणांमतिर्मम यत्रवैचित्रवीर्योऽसौदग्धएवंवनाग्निना २ तस्यपुत्रशतंश्रीमदभवद्बाहुशालिनः नागायुतबलोराजासदग्धोहिदवाग्निना ३ यंपुरापर्यवीजंतताल्वृंतैर्वरस्त्रियः तंगृध्राःपर्यवीजंतदावाग्निपरिकालितं ४ सूतमागधसंघैश्चशयानोयःप्रबोध्यते धरण्यांसनृपःशेतेपापस्यममकर्मभिः ५ नचशोचामिगांधारींहतपुत्रांयशस्विनीं पतिलोकमनुप्राप्तांतथाभर्तृव्रतेस्थितां ६ पृथामेवचशोचामियापुत्रैश्वर्यमृद्धिमत् उत्सृज्यसुमहद्दीप्तंवनवासमरोचयत् ७ धिग्राज्यमिदमस्माकंधिग्बलंधिक्पराक्रमं क्षत्रधर्मंचधिग्यस्मान्मृताजीवामहेवयं ८ सुसूक्ष्माकिलकालस्यगतिर्द्विजवरोत्तम य-त्समुत्सृज्यराज्यंसावनवासमरोचयत् ९ युधिष्ठिरस्यजननीभीमस्यविजयस्यच अनाथवत्कथंदग्धाइतिमुह्यामिचिंतयन् १० वृथासंतर्पितोवह्निःखांडवेसव्यसाचिना उपकारमजानन्सकृतघ्नइतिमेमतिः ११ यत्रादहत्सभगवान्मातरंसव्यसाचिनः कृत्वायोब्राह्मणच्छद्मभिक्षार्थीसमुपागतः १२ धिगग्निंधिक्चपार्थस्यविश्रुतांसत्यसंधतां इदंकष्टतरंचान्यत्भगवन्प्रतिभातिमे १३ वृथाग्निनासमायोगोयदभून्पृथिवीपतेः तथातपस्विनस्तस्यराजर्षेःकौरवस्यह १४ कथमेवंविधोमृत्युःप्रशास्यपृथिवीमिमां तिष्ठत्सुमंत्रपूतेषुतस्याग्निषुमहावने १५ वृथाग्निनासमायुक्तोनिष्ठांप्राप्तःपितामम मन्येपृथावेपमानाकृशाधमनिसंतता १६ हातातधर्मराजेतिसमाक्रंदन्महाभये भीमपर्याप्नुहिभयादितिचैवाभिवाशती १७ समंततःपरिक्षिप्तामाताभून्मेदवाग्निना सहदेवःप्रियस्तस्याःपुत्रेभ्योऽधिकएवतु १८ नचैनांमोक्षयामासवीरोमाद्रवतीसुतः तच्छ्रुत्वारुरुदुःसर्वेसमालिंग्यपरस्परं १९ पांडवाःपंचदुःखार्त्ताभूतानीवयुगक्षये तेषांतुपुरुषेंद्राणांरुदतांरुदितस्वनः २० प्रासादाभोगसंरुद्धोअन्वरौत्सीत्सरोदसी इत्याश्रमवासिकेपर्वणिअष्टत्रिंशोऽध्यायः ३८ नारदउवाच नासौवृथाग्निनादग्धोयथातत्रश्रुतंमया वैचित्रवीर्योनृपतिस्तत्तेवक्ष्यामिभारत १ वनंप्रविशतातेनवायुभक्षेणधीमता अग्नयःकारयित्वेष्टिमुत्सृष्टाइतिनःश्रुतं २ याजकास्तुततस्तस्यतानग्नीन्निर्जनेवने समुत्सृज्ययथाकामंजग्मुर्भरतसत्तम ३

४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ संकल्प्य एकीकृत्य कु

सविप्रदग्धस्तदा वह्निर्वने तस्मिन्निभूत्किल तेन तद्वनमादीप्तमिति ते तापसाब्रुवन् ४ स राजा जाह्नवीकक्षे यथा ते कथितं मया तेनाग्निना समा
युक्तः स्वेनैव भरतर्षभ ५ एवमावेदयामासुर्मुनयस्ते ममानघ ये ते भागीरथीतीरे मया दृष्टा युधिष्ठिर ६ एवं स्वेनाग्निना राजा समायुक्तो
महीपते मा शोचिथास्त्वं नृपतिं गतः स परमां गतिं ७ गुरुशुश्रूषया चैव जननी तव जनाधिप प्राप्ता सुमहतीं सिद्धिमिति मे नात्र संशयः ८
कर्तुमर्हसि राजेंद्र तेषां त्वमुदकक्रियां भ्रातृभिः सहितः सर्वैरेतदत्र विधीयतां ९ वैशंपायन उवाच ततः स पृथिवीपालः पांडवानां धुरंधरः
निर्ययौ सह सोदर्यैः सदारश्च नरर्षभः १० पौरजानपदाश्चैव राजभक्तिपुरस्कृताः गंगां प्रजग्मुरभितो वाससैकेन संवृताः ११ ततो वगाह्य सलि
लं सर्वे ते नरपुंगवाः युयुत्सुमग्रतः कृत्वा ददुस्तोयं महात्मने १२ गांधार्याश्च पृथायाश्च विधिवन्नामगोत्रतः शौचं निर्वर्तयंतस्ते तत्रोषुर्न
गराद्बहिः १३ प्रेषयामास स नरान् विधिज्ञानाप्तकारिणः गंगाद्वारं नरश्रेष्ठो यत्र ते दग्धा अभवन्नृप १४ तत्रैव तेषां कुल्यानि गंगाद्वारेन्व
शात्तदा कर्तव्यानीति पुरुषान् दत्तदेयान्महीपतिः १५ द्वादशेऽहनि तेभ्यः स कृतशौचो नराधिप ददौ श्राद्धानि विधिवद्दक्षिणावंति पां
डवः १६ धृतराष्ट्रं समुद्दिश्य ददौ स पृथिवीपतिः सुवर्णं रजतं गाश्च शय्याश्च सुमहाधनाः १७ गांधार्याश्चैव तेजस्वी पृथायाश्च पृथक्
पृथक् संकीर्त्य नामनी राजा ददौ दानमनुत्तमं १८ यो यदिच्छति यावच्च तावत्स लभते नरः शयनं भोजनं दानं मणिरत्नमथो धनं १९ यानमा
च्छादनं भोगान् दासीश्च समलंकृताः ददौ राजा समुद्दिश्य तयोर्मात्रोर्महीपतिः २० ततः स पृथिवीपालो दत्त्वा श्राद्धान्यनेकशः प्रविवेश पुरं
राजा नगरं वारणाह्वयं २१ ते चापि राजवचनात्पुरुषा ये गता अभवन् संकल्प्य तेषां कुल्यानि पुनः प्रत्यागमंस्ततः २२ माल्यैर्गंधैश्च विविधै
रर्चयित्वा यथाविधि कुल्यानि तेषां संयोज्य तदाचख्युर्महीपतेः २३ समाश्वास्य तु राजानं धर्मात्मानं युधिष्ठिरं नारदोप्यगमद्राजन् परमर्षि
र्यथेप्सितं २४ एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमतः वनवासे तथा त्रीणि नगरे दश पंच च २५ हतपुत्रस्य संग्रामे दानानि ददतः सदा
ज्ञातिसंबंधिमात्राणां भ्रातॄणां स्वजनस्य च २६ युधिष्ठिरस्तु नृपतिर्नातिप्रीतमनास्तदा धारयामास तद्राज्यं निहतज्ञातिबांधवः २७ तथा
श्रमवासिके तु पर्वण्यपि समाहितः गंधमाल्यादियुक्तं च हविष्यं भोजयेद्द्विजान् २८ इतिश्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
आश्रमवासिके पर्वणि ऊनचत्वारिंशोऽध्यायः ३९ अस्यानंतरं मौसलपर्व भविष्यति तस्यायमाद्यः श्लोकः वैशंपायन उवाच षट्त्रिंशेऽथ
संप्राप्ते वर्षे कौरवनंदनः ददर्श विपरीतानि निमित्तानि युधिष्ठिरः १ श्रीकृष्णार्पणमस्तु शुभं भवतु ७.

ल्यानि अस्थीनि कुल्यं स्यात्कीकसं चेति मेदिनी प्रत्यागमं गता इति शेष २२ २३ २४ २५ २६ २७ २८ इतिश्रीमन्म० आश्रमवा० नील० भा० पर्वणि टी० ऊनचत्वारिंशोऽध्यायः

३०

श्रीगणेशायनमः     एवंआदिपर्वणिसूत्रितानांधर्मार्थकाममोक्षाणांमध्ये सम्भावनयोर्यज्ञसत्यधृतिगुरुसत्तीर्थसेवनादिनाधर्मः प्रतिपादित. विराटाद्यष्टकेसे-
वानीतिहिंसानृतकुलक्षयादिनार्थः शोकप्रदोनिरूपितः द्वादशेर्थफलभूतः कामः सोपसर्गोनिरुपप्लवंचमोक्षप्रदंनिरूपितं त्रयोदशादित्रयेमोक्षहेतून्दानवि

श्रीगणेशायनमः नारायणंनमस्कृत्यनरंचैवनरोत्तमम् देवींसरस्वतींचैवततोजयमुदीरयेत् १ वैशंपायनउवाच षट्त्रिंशेत्व
थसंप्राप्तेवर्षेकौरवनंदनः ददर्शविपरीतानिनिमित्तानियुधिष्ठिरः १ ववुर्वाताश्चनिर्घातारूक्षाः शर्करवर्षिणः अपसव्यानिशकुनामंड
लानिप्रचक्रिरे २ प्रत्यगूहुर्महानद्योदिशोनीहारसंवृताः उल्काश्चांगारवर्षिण्यः प्रापतन्गगनाद्भुवि ३ आदित्योरजसाराजन्समवच्छन्नमं
डलः विरश्मिरुदयेनित्यकबंधैःसमदृश्यत ४ परिवेषाश्चदृश्यंतदारुणाःसूर्यचंद्रयोः त्रिवर्णाःश्यामरूक्षांतास्तथाभस्मारुणप्रभाः
५ एतेचान्येचबहवउत्पाताभयशंसिनः दृश्यंतेबहवोराजन्हृदयोद्वेगकारकाः ६ कस्यचित्त्वथकालस्यकुरुराजोयुधिष्ठिरः शुश्रा
ववृष्णिचक्रस्यमौसलेकदनंकृतं ७ विमुक्तंवासुदेवंचश्रुत्वारामंचपांडवः समानीयाब्रवीद्भ्रातॄन्किंकरिष्यामइत्युत ८ परस्परंसमासा
द्यब्रह्मदंडबलात्कृतान् वृष्णीन्विनष्टांस्तेश्रुत्वाव्यथिताःपांडवाभवन् ९ निधनंवासुदेवस्यसमुद्रस्येवशोषणं वीरानश्रद्दधुस्तस्यवि
नाशंशार्ङ्गधन्वनः १० मौसलंतंसमाश्रित्यदुःखशोकसमन्विताः विषण्णाहतसंकल्पाःपांडवाःसमुपाविशन् ११ जनमेजयउवाच
कथंविनष्टाभगवन्नंधकावृष्णिभिःसह पश्यतोवासुदेवस्यभोजाश्चैवमहारथाः १२ वैशंपायनउवाच षट्त्रिंशेथततोवर्षेवृ
ष्णीनामनयोमहान् अन्योन्यंमुसलैस्तेतुनिजघ्नुःकालचोदिताः १३ जनमेजयउवाच केनानुशप्तास्तेवीराःक्षयंवृष्ण्यंधकागताः
भोजाश्चद्विजवर्यत्वंविस्तरेणवदस्वमे १४ वैशंपायनउवाच विश्वामित्रंचकण्वंचनारदंचतपोधनं सारणप्रमुखावीराददृशुर्द्वार
कांगतान् १५ तेतान्सांबंपुरस्कृत्यभूषयित्वास्त्रियंयथा अब्रुवन्नुपसंगम्यदैवदंडनिपीडिताः १६ इयंस्त्रीपुत्रकामस्यबभ्रोरमिततेज
सः ऋषयःसाधुजानीतकिमियंजनयिष्यति १७ इत्युक्तास्तेतदाराजन्विप्रलंभप्रधर्षिताः प्रत्यब्रुवंस्तान्मुनयोयत्तच्छृणुनराधिप १८
वृष्ण्यंधकविनाशायमुसलंघोरमायसं वासुदेवस्यदायादःसांबोयंजनयिष्यति १९ येनयूयंसुदुर्वृत्तानृशंसाजातमन्यवः उच्छेत्तारःकु
लंकृत्स्नमृतेरामजनार्दनौ २० समुद्रंयास्यतिश्रीमांस्त्यक्त्वादेहंहलायुधः जराकृष्णंमहात्मानंशयानंभुविभेत्स्यति २१

द्यावनवासाश्चनिरू
प्यषोडशेधृतराष्ट्रवद्रूनमाश्रित्ययेकेवलंअर्थकामसक्तास्तेमदिरादिकलहेनव्यसनेनविनश्यंतीतिप्रतिपाद्यते सप्तदशेनिष्कामधर्मस्यफलंगृहादेस्त्यागोष्टा
दशेतन्मूर्विकास्वर्गप्राप्तिश्चनिरूपयिष्यते तत्रराज्यप्राप्त्यनंतरं षट्त्रिंशत्तमेवर्षेसर्वनाशसूचकानुत्पातानाह वैशंपायनः षट्त्रिंशइति १ २ ३ ४ ५ ६ ७ ८ भवन्नुआ
भवन् ९ १० मौसलंमुसलकृतंकदनंसमाश्रित्यमनसिधृत्वा ११ १२ मुसलैः एरकाख्यैर्मुसलकणैः १३ १४ १५ १६ १७ १८ १९ २० जरानामाकश्चित्कैवर्तः २१

अभ्यसुर्मनसा अस्याभिदंतः शापस्त्वयाक्षंतव्यइति २२ २३ २४ २५ किंकरोयमदूनस्तत्तुल्यं २६ २७ २८ २९ स्वयंकृत्वास्वयंकर्ता ३० ३१
इतिनैलकंठीयेभारतभावदीपेमौसलपर्वणिप्रथमोध्यायः १ एवंकालः कपोतोलूकादिरूपेण १ यएवंकश्चित्कालादिरूपोदृश्यतेकश्चिन्न आवेश्यप

इत्यब्रुवंस्ततोराजन्प्रलब्धास्तैर्दुरात्मभिः मुनयः क्रोधरक्ताक्षाः समीक्ष्याथपरस्परम् नथोक्तामुनयस्तेतुततः केशवमभ्ययुः २२अथा
ब्रवीत्तदावृष्णीञ्श्रुत्वैवमधुसूदनः अंतज्ञोमतिमांस्तस्य नैतदन्यथेतितान् २३ एवमुक्त्वाहृषीकेशः प्रविवेशपुरंतदा कृतांतमन्यथानै
च्छत्तुंसजगतःप्रभुः २४ श्वोभूतेऽथततःसांबोमुशलंतदसूतवै येनवृष्ण्यंधककुलेपुरुषाभस्मसात्कृताः २५ वृष्ण्यंधकविनाशायकिंक
रमितिममहत् असूतशापजंघोरंतच्चराज्ञेन्यवेदयन् २६ विषण्णरूपस्तद्राजासूक्ष्मंचूर्णमकारयत् तच्चूर्णंसागरेचापिप्राक्षिपत्पुरुषान्नृ
प २७ अघोषयंश्चनगरेवचनादाहुकस्यते जनार्दनस्यरामस्यबभ्रोश्चैवमहात्मनः २८ अद्यप्रभृतिसर्वेषुवृष्ण्यंधककुलेष्विह सुरासवोन
कर्तव्यःसर्वैर्नगरवासिभिः २९ यश्चनोविदितंकुर्यात्पेयंकश्चिन्नरःक्वचित् जीवन्सशूलमारोहेत्स्वयंकृत्वासबांधवः ३० ततोराजभयात्सर्वे
नियमंचक्रिरेतदा नराःशासनमाज्ञायरामस्याक्लिष्टकर्मणः ३१ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांमौसलपर्वणिप्रथमोऽध्या
यः १ वैशंपायनउवाच एवंप्रयतमानानांवृष्णीनामंधकैःसह कालोगृहाणिसर्वेषांपरिचक्रामनित्यशः १ करालोविकटोमुंडःपु
रुषःकृष्णपिंगलः गृहाण्यावेक्ष्यवृष्णीनांनादृश्यतकर्हिचित् २ नमभ्रंतमहेष्वासाः शरैः शतसहस्रशः नचाशक्यतवेद्धुंसर्वभूतात्यय
स्तदा ३ उत्पेदिरेमहावाताःदारुणाश्चदिनेदिने वृष्ण्यंधकविनाशायबहवोलोमहर्षणाः ४ विवृद्धमूषिकारथ्याविभिन्नमणिकास्तथा केशा
नखाश्चसुप्तानामद्यंतेमूषिकैर्निशि ५ चीचीकूचीतिवाशंतिसारिकावृष्णिवेश्मसु नोपशाम्यतिशब्दश्चससदिवारात्रमेवहि ६ अनुकुर्वन्नुलू
कानांसारसाविरुतंतथा अजाःशिवानांविरुतमन्वकुर्वतभारत ७ पांडुरारक्तपादाश्चविहगाःकालचोदिताः वृष्ण्यंधकानांगेहेषुकपोता
व्यचरंस्तदा ८ व्यजायंतखरागोषुकरभाश्वतरीषुच ९ नापत्रपंतपापानिकुर्वंतोवृष्णयस्तदा प्राद्विषन्ब्राह्मणांश्चापिपितॄन्देवांस्तथैवच १०
गुरूंश्चाप्यवमन्यंतनतुरामजनार्दनौ पत्न्यःपतीन्व्युच्चरंतपत्नीश्चपतयस्तथा ११ विभावसुःप्रज्वलितोवामंविपरिवर्तते नीललोहितमांजिष्ठा
विसृजन्नर्चिषःपृथक् १२ उदयास्तमनेनित्यंपुर्यांतस्यांदिवाकरः व्यदृश्यतासकृत्पुंभिःकबंधैःपरिवारितः १३ महानसेषुसिद्धेषुसंस्कृते
तीवभारत आहार्यमाणेकृमयोव्यदृश्यंतसहस्रशः १४

विकारोऽनिर्गतिरोध २ सर्वभूतानांअन्ययंनाशोयस्मात् ३ ४ मणिकामृत्पात्राणि ५ ६
७ ८ ९ १० उच्चरंतवंचितवत्यः ११ १२ १३ आहार्यमाणेअन्ने १४

१५ परेति स्वनक्षत्रादर्शनमपिस्वमृत्युसूचकमित्यर्थः १६·१७ एवमितित्रयोदशदिवसाः कृष्णपक्षोऽभूदित्यर्थः १८ एवंसत्यग्रिमपक्षेऽप्यध्याभाव्यं



पुण्याहेवाच्यमानेतुजपत्सुचमहात्मसु अभिधावन्तःश्रूयन्तेनचादृश्यतकश्चन १५ परस्परंचनक्षत्रंहन्यमानंपुनःपुनः ग्रहैरपश्यन्सर्वेते
नात्मनस्तुकथंचन १६ नदन्तंपाञ्चजन्यंचवृष्ण्यन्धकनिवेशने समन्तात्प्रत्यवाश्यन्तरासभादारुणस्वराः १७ एवंपश्यन्हृषीकेशःसंप्रा
प्तंकालपर्ययं त्रयोदश्याममावास्यांतांदृष्ट्वाप्राब्रवीदिदं १८ चतुर्दशीपञ्चदशीकृतेयंराहुणापुनः प्राप्तेवैभारतेयुद्धेप्राप्ताचाद्यक्षयाय
नः १९ विमृशन्नेवकालंतंपरिचिन्त्यजनार्दनः मेनेप्राप्तंसषट्त्रिंशंवर्षंवैकेशिसूदनः २० पुत्रशोकाभिसंतप्तागान्धारीहतबान्धवा-
यदनुव्याजहारार्तातदिदंसमुपागमत् २१ इदंचतदनुप्राप्तमब्रवीद्यद्युधिष्ठिरः पुराव्यूढेष्वनीकेषुदृष्ट्वोत्पातान्सुदारुणान् २२ इत्युक्त्वा
वासुदेवस्तुचिकीर्षुःसत्यमेवतत् आज्ञापयामासतदातीर्थयात्रामरिंदमः २३ अघोषयन्तपुरुषास्तत्रकेशवशासनात् तीर्थयात्रास-
मुद्रेवःकार्येतिपुरुषर्षभाः २४ इतिश्रीमहाभारतेमौसलपर्वणिद्वितीयोऽध्यायः २ वैशंपायनउवाच कालीस्त्रीपा-
ण्डुरैर्दन्तैःप्रविश्यहसतीनिशि स्त्रियःस्वप्नेषुमुष्णन्तीद्वारकांपरिधावति १ अग्निहोत्रनिकेतेषुवास्तुमध्येषुवेश्मसु वृष्ण्यन्धकान-
खादन्स्वप्नेगृध्राभयानकाः २ अलंकाराश्चछत्रंचध्वजाश्चकवचानिच ह्रियमाणान्यदृश्यन्तरक्षोभिःसुभयानकैः ३ तच्चाग्निद
त्तंकृष्णस्यवज्रनाभमयस्मयं दिवमाचक्रमेचक्रंवृष्णीनांपश्यतांतदा ४ युक्तंरथंदिव्यमादित्यवर्णंह्याहरत्पश्यतोदारुकस्य
तेसागरस्योपरिष्टादवर्तन्मनोजवाश्चतुरोवाजिमुख्याः ५ तालःसुपर्णश्चमहाध्वजौतौसुपूजितौरामजनार्दनाभ्यां उच्चैर्जह्रु
रप्सरसोदिवानिशंवाचश्चोचुर्गम्यतांतीर्थयात्रा ६ ततोजिगमिषन्तस्तेवृष्ण्यन्धकमहारथाः सान्तःपुरास्तदातीर्थयात्रामैच्छन्न
रर्षभाः ७ ततोभोज्यंचभक्ष्यंचपेयंचान्धकवृष्णयः बहुनानाविधंचक्रुर्मद्यंमांसमनेकशः ८ ततःसैनिकवर्गाश्चनिर्ययुर्नगरा-
द्बहिः यानैरश्वैर्गजैश्चैवश्रीमन्तस्तिग्मतेजसः ९ ततःप्रभासेन्यवसन्यथोद्देशंयथागृहं प्रभूतभक्ष्यपेयास्तेसदारायादवास्त
दा १० निविष्टांस्तान्निशम्याथसमुद्रान्तेसयोगवित् जगामामन्त्र्यतान्वीरानुद्धवोऽर्थविशारदः ११ तंप्रस्थितंमहात्मानमभिवाद्य
कृताञ्जलिं जानन्विनाशंवृष्णीनांनैच्छद्वारयितुंहरिः १२ ततःकालपरीतास्तेवृष्ण्यन्धकमहारथाः अपश्यन्नुद्धवंयान्तंतेजसा
व्याप्यरोदसी १३

तन्नजातं मन्युत एकातिथिः क्षीणा तत्रग्रहणंचजातमित्याह चतुर्दशीति १९ २० २१ २२ २३ २४ इति
श्रीमहाभारतेमौ०श० द्वितीयोऽध्यायः २ कालीमुष्णन्ती स्त्रीणांमंगलसूत्रादिकंचोरयंती १ २ ३ ४ ५ ६ ७ ८ ९ १० निशम्यदृष्ट्वा अर्थ-
विशारदः मोक्षपंडितः ११ १२ १३

ब्राह्मणार्थेषुयत्सिद्धमन्नंतेषांमहात्मनां तद्वानरेभ्यः प्रददुः सुरागंधसमन्वितं १४ ततस्तूर्यशताकीर्णंनटनर्तकसंकुलं प्रवर्ततमहापा
नंप्रभासेतिग्मतेजसां १५ कृष्णस्यसंनिधौरामः सहितः कृतवर्मणा अपिबद्युयुधानश्चगदोबभ्रुस्तथैवच १६ ततः परिषदोमध्येयुयु
धानोमदोत्कटः अब्रवीत्कृतवर्माणमवहस्यावमन्यच १७ कः क्षत्रियोहन्यमानः सुप्तान्हन्यान्मृतानिव तन्नमृष्यंतिहार्दिक्ययादवा
यत्त्वयाकृतं १८ इत्युक्तेयुयुधानेनपूजयामासतद्वचः प्रद्युम्नोरथिनांश्रेष्ठोहार्दिक्यमवमन्यच १९ ततः परमसंक्रुद्धः कृतवर्मातमब्रवी
त् निर्दिश्यन्निवसावज्ञंतथासव्येनपाणिना २० भूरिश्रवाश्छिन्नबाहुर्युद्धेप्रायगतस्त्वया वधेनसुनृशंसेनकथंवीरेणपातितः २१ इ
तितस्यवचः श्रुत्वाकेशवः परवीरहा तिर्यक्सरोषयादृष्ट्यावीक्षांचक्रेसमन्युमान् २२ मणिः स्यमंतकश्चैवयः ससत्राजितोभवत् तांक
थांस्मारयामाससात्यकिर्मधुसूदनं २३ तच्छ्रुत्वाकेशवस्यांकमगमद्रुदतीतदा सत्यभामाप्रकुपिताकोपयंतीजनार्दनं २४ ततउत्थाय-
सक्रोधः सात्यकिर्वाक्यमब्रवीत् पंचानांद्रौपदेयानांधृष्टद्युम्नशिखंडिनोः २५ एषगच्छामिपदवींसत्येनचतथाशपे सौप्तिकेयेचनिह
ताः सुप्तायेनदुरात्मना २६ द्रोणपुत्रसहायेनपापेनकृतवर्मणा समाप्तमायुरस्याद्ययशश्चैवसुमध्यमे २७ इत्येवमुक्त्वाखड्गेनकेशवस्य
समीपतः अभिद्रुत्यशिरः क्रुद्धश्चिच्छेदकृतवर्मणः २८ तथान्यानपिनिघ्नंतंयुयुधानंसमंततः अभ्यधावद्धृषीकेशोविनिवारयि
षुस्तदा २९ एकीभूतास्ततः सर्वेकालपर्यायचोदिताः भोजांधकामहाराजशैनेयंपर्यवारयन् तान्दृष्ट्वापततस्तूर्णमभिक्रुद्धाञ्जनार्दनः
नचुक्रोधमहातेजाजानन्कालस्यपर्ययं ३१ तेतुपानमदाविष्टाश्चोदिताःकालकर्मणा युयुधानमथाभ्यघ्नन्नुच्छिष्टैर्भाजनैस्तदा ३२ ह
न्यमानेतुशैनेयेक्रुद्धोरुक्मिणिनंदनः तदंतरमुपागच्छन्मोक्षयिष्यन्शिनेः सुतं ३३ सभोजैः सहसंयुक्तः सात्यकिश्चांधकैः सह व्यायच्छ
मानौतौवीरौबाहुद्रविणशालिनौ ३४ बहुत्वान्निहतौतत्र उभौकृष्णस्यपश्यतः हतंदृष्ट्वातुशैनेयंपुत्रंचयदुनंदनः ३५ एरकाणांतदामु
ष्टिंकोपाज्जग्राहकेशवः तदभून्मुसलंघोरंवज्रकल्पमयोमयं ३६ जघानकृष्णस्तांस्तेनयेयेप्रमुखतोभवन् ततोंधकाश्चभोजाश्चशै
नेयावृष्णयस्तथा ३७ जघ्नुरन्योन्यमाक्रंदेमुसलैःकालचोदिताः यस्तेषामेरकांकश्चिज्जग्राहरुषितोनृप ३८ वज्रभूतेवसाराजन्न
दृश्यततदाविभो तृणंचमुसलीभूतमपितत्रव्यदृश्यत ३९

विधास्ताडनंतदनर्हान् अविध्यान् तोदादिकाद्विधेरिगुपधलक्षणः कः ततोहर्येवः विध्यविध्य ४० ४१ ४२ तत्रैतियन्मुसलमपश्यत् तदेवावष्टभ्यतस्थौ



ब्रह्मदंडकृतंसर्वमितितद्विद्धिपार्थिव अविध्यान्निध्नतेराजन्प्रक्षिपंतिस्मयत्तृणं ४० तद्वज्रभूतंमुसलंव्यदृश्यततदादृढं अवधीत्पितरं पुत्रः पितापुत्रंचभारत ४१ मत्ताः परिपतंतिस्मयोधयंतः परस्परं पतंगाइवचाग्नौतेनिपेतुः कुकुराधकाः ४२ नासीत्पलायनेबुद्धिर्वध्यमानस्यकस्यचित् ४२ तत्रापश्यन्महाबाहुर्जानन्कालस्यपर्ययं मुसलंसमवष्टभ्यतस्थौसमधुसूदनः ४३ सांबंचनिहतंदृष्ट्वाचारुदेष्णंचमाधवः प्रद्युम्नंचानिरुद्धंचततश्चुक्रोधमाधवः ४४ गदंवीक्ष्यशयानंचभृशंकोपसमन्वितः सनिःशेषंतदाचक्रेशार्ङ्गचक्रगदाधरः ४५ तंनिघ्नंतंमहातेजाबभ्रुःपरपुरंजयः दारुकश्चैवदाशार्हमूचतुर्यन्निबोधतत् ४६ भगवन्निहताःसर्वेत्वयाभूयिष्ठशोनराः रामस्यपदमन्विच्छतत्रगच्छामयत्रसः ४७ इतिश्रीमहाभा॰मौसलपर्वणितृतीयोऽध्यायः ३ वैशंपायनउवाच ततोययुर्दारुकःकेशवश्चबभ्रुश्चरामस्यपदंपतंतः अथापश्यन्राममनंतवीर्यंवृक्षेस्थितंचिंतयानंविविक्ते ततःसमासाद्यमहानुभावंकृष्णस्तदादारुकमन्वशासत् गत्वाकुरून्सर्वमिदंमहांतंपार्थायशंसस्ववधंयदूनां २ ततोर्जुनःक्षिप्रमिहोपयातुश्रुत्वामृतान्यादवान्ब्रह्मशापात् इत्येवमुक्तःसययौरथेनकुरूंस्तथादारुकोनष्टचेताः ३ ततोगतेदारुकेकेशवोथदृष्ट्वांतिकेबभ्रुमुवाचवाक्यं स्त्रियोभवान्रक्षितुयातुशीघ्रंनैताहिंस्युर्दस्यवोवित्तलोभात् ४ सप्रस्थितःकेशवेनानुशिष्टोमदातुरोज्ञातिवधार्दितश्च तंविश्रांतंसन्निधौकेशवस्यदुरंतमेकंसहसैवबभ्रुं ब्रह्मानुशप्तमवधीन्महद्वैकूटेयुक्तंमुसलंलुब्धकस्य ५ ततोदृष्ट्वानिहतंबभ्रुमाहकृष्णोग्रजंभ्रातरमुग्रतेजाः इहैवत्वंमांप्रतीक्षस्वरामयावत्स्त्रियोज्ञातिवशाःकरोमि ६ ततःपुरींद्वारवतींप्रविश्यजनार्दनःपितरंप्राहवाक्यं स्त्रियोभवान्रक्षतुनःसमग्राधनंजयस्यागमनंप्रतीक्षन् ७ रामोवनांतेप्रतिपालयन्मामास्तेद्याहंतेनसमागमिष्ये दृष्टंमयेदंनिधनंयदूनांराज्ञांचपूर्वंकुरुपुंगवानां ८ नाहंविनायदुभिर्यादवानांपुरीमिमामशकंद्रष्टुमद्य तपश्चरिष्यामिनिबोधतन्मेरामेणसार्धंवनमभ्युपेत्य ९ इतीदमुक्त्वाशिरसाचपादौसंस्पृश्यकृष्णस्त्वरितोजगाम ततोमहान्निनदःप्रादुरासीत्सस्त्रीकुमारस्यपुरस्यतस्य १० अथाब्रवीत्केशवःसन्निवर्त्यशब्दंश्रुत्वायोषितांक्रोशतीनां पुरीमिमामेष्यतिसव्यसाचीसवोदुःखान्मोक्षयितानराग्र्यः ११ ततोगत्वाकेशवस्तंददर्शरामंवनेस्थितमेकंविविक्ते अथापश्यद्योगयुक्तस्यतस्यनागंमुखान्निश्चरंतंमहांतं १२

४३ ४४ ४५ ४६ ४७ इतिश्रीमहाभारतेमौसलप॰ टीकायांतृतीयोऽध्यायः ३ ततोपनंतःशीघ्रंगच्छंतः १ २ ३ ४ कूटेलोहमुद्गरेयुक्तंबद्धंमुसलंब्राह्मणशापजंमुसलंस्वयमेवनिपत्यावधीत्सार्द्धश्लोकः ५ ६ ७ ८ ९ १० ११ १२ ७

श्वेतंययौसततः प्रेक्ष्यमाणोमहार्णवंयेनमहानुभावः सहस्रशीर्षः पर्वताभोगवर्ष्मारक्ताननःस्वांतनुंतांविमुच्य १३ सम्यक्चतंसागरः प्र
त्यगृह्णान्नागादिव्याःसरितश्चैवपुण्याः कर्कोटकोवासुकिस्तक्षकश्चपृथुश्रवावरुणःकुंजरश्च १४ मिश्रीशंखःकुमुदःपुंडरीकस्तथानागोधृ
तराष्ट्रोमहात्मा ह्रादःक्राथःशितिकंठोग्रतेजास्तथानागौचक्रमंदातिषंडौ १५ नागश्रेष्ठोदुर्मुखश्चांबरीषःस्वयंराजावरुणश्चापिराजन्
प्रत्युद्गम्यस्वागतेनाभ्यनंदंस्तेपूजयंश्चार्घ्यपाद्यक्रियाभिः १६ ततोगतेभ्रातरिवासुदेवोजानन्सर्वांगतयोदिव्यदृष्टिः वनेशून्येविचर
श्चिंतयानोभूमौचाथसंविवेशाग्र्यतेजाः १७ सर्वंहितेनप्राक्तदाचिंतितमासीद्गांधार्यायद्वाक्यमुक्तं सपूर्वं दुर्वाससापायसोच्छिष्टलिप्तेयच्चा
प्युक्तंतच्चसस्मारवाक्यं १८ संचिंतयन्नंधकवृष्णिनाशंकुरुक्षयंचैवमहानुभावः मेनेततःसंक्रमणस्यकालंततश्चकारेंद्रियसन्निरोधं
१९ तथाचलोकत्रयपालनार्थंमात्रेयवाक्यप्रतिपालनाय देवोपिसंदेहविमोक्षहेतोर्निर्णीतमेच्छत्सकलार्थतत्त्ववित् २० ससंनिरुद्धेंद्रि
यवाङ्मनास्तुशिश्येमहायोगमुपेत्यकृष्णः जराथतंदेशमुपाजगामलुब्धस्तदानींमृगलिप्सुरुग्रः २१ सकेशवंयोगयुक्तंशयानंमृगाशंकीलु
ब्धकःसायकेन जराविध्यत्पादतलेत्वरावांस्तंचाभितस्तज्जिघृक्षुर्जगाम २२ अथापश्यत्पुरुषंयोगयुक्तंपीतांबरंलुब्धकोनेकबाहुं मत्वा
त्मानंत्वपराद्धंसतस्यपादौजराजगृहेशंकितात्मा २३ आश्वासयंस्तंमहात्मातदानींगच्छन्नूर्ध्वंरोदसीव्याप्यलक्ष्म्या दिवंप्राप्तंवासवोथाश्वि
नौचरुद्रादित्यावसवश्चाथविश्वे २४ प्रत्युद्ययुर्मुनयश्चापिसिद्धागंधर्वमुख्याश्चसहाप्सरोभिः ततोराजन्भगवानुग्रतेजानारायणःप्रभ
वश्चाव्ययश्च २५ योगाचार्योरोदसीव्याप्यलक्ष्म्यास्थानंप्रापस्वंमहात्माप्रमेयं ततोदेवैर्ऋषिभिश्चापिकृष्णःसमागतश्चारणैश्चैवराजन्
२६ गंधर्वाग्र्यैरप्सरोभिर्वराभिःसिद्धैःसाध्यैश्चानतैःपूज्यमानः तेवैदेवाःप्रत्यनंदंतराजन्मुनिश्रेष्ठावाग्भिरानर्चुरीशं गंधर्वाश्चापि
तस्थुःस्तुवंतःप्रीत्याचैनंपुरुहूतोभ्यनंदत् २७ इतिश्रीमहाभारतेमौस० चतुर्थोऽध्यायः ४ वैशंपायनउवाच दारु
कोपिकुरून्गत्वादृष्ट्वापार्थान्महारथान् आचष्टमौसलेवृष्णीनन्योन्येननिपातितान् १ श्रुत्वाविनष्टान्वार्ष्णेयान्सभोजांधककुकुरान् पां
डवाःशोकसंतप्ताविसस्तमनसोभवन् २ ततोर्जुनस्तानामंत्र्यकेशवस्यप्रियःसखा प्रययौमातुलंद्रष्टुंनेदमस्तीतिचाब्रवीत् ३ सवृष्णिनि
लयंगत्वादारुकेणसहप्रभो ददर्शद्वारकांवीरोमृतनाथामिवस्त्रियं ४ याःस्मतालोकनाथेननाथवत्यःपुराभवन् तास्त्वनाथास्तदानाथ
पार्थंदृष्ट्वाविचुक्रुशुः ५

षोडशस्त्रीसहस्त्राणिवासुदेवपरिग्रहः तासामासीन्महानादोदृष्ट्वैवार्जुनमागतं ६ तास्तुदृष्ट्वैवकौरव्योबाष्पेणापिहितेक्षणः हीनाःकृ
ष्णेनपुत्रैश्चनाशकत्सोभिवीक्षितुं ७ सतांवृष्ण्यंधकजलांहयमीनांरथोडुपां वादित्ररथघोषौघांवेश्मतीर्थमहाहृदां ८ रत्नशैवलसंघातांव
ज्रप्राकारमालिनीं रथ्यास्रोतोजलावर्तांचत्वरस्तिमितह्रदां ९ रामकृष्णमहाग्राहांद्वारकांसरितंतदा कालपाशग्रहांभीमांनदींवैतरणीमि
व १० ददर्शवासविधीमान्विहीनांवृष्णिपुंगवैः गतश्रियंनिरानंदांपद्मिनींशिशिरेयथा ११ तांदृष्ट्वाद्वारकांपार्थस्ताश्चकृष्णस्ययोषितः
सस्वनंबाष्पमुत्सृज्यनिपपातमहीतले १२ सात्राजितीततःसत्यारुक्मिणीचविशांपते अभिपत्यप्ररुरुदुःपरिवार्यधनंजयं १३ ततस्तं
कांचनेपीठेसमुत्थाप्योपवेश्यच अब्रुवंत्योमहात्मानंपरिवार्योपतस्थिरे १४ ततःसंस्तूयगोविंदंकथयित्वाचपांडवः आश्वास्यताःस्त्रि
यश्चापिमातुलंद्रष्टुमभ्यगात् १५ इतिश्रीमहाभार॰पंचमोऽध्यायः५ वैशंपायनउवाच तंशयानंमहात्मानं
वीरमानकदुंदुभिं पुत्रशोकेनसंतप्तंददर्शकुरुपुंगवः १ तस्याश्रुपरिपूर्णाक्षोव्यूढोरस्कोमहाभुजः आर्तस्यार्ततरःपार्थःपादौजग्राह
भारत २ तस्यमूर्धानमाघ्रातुमियेषानकदुंदुभिः स्वस्रीयस्यमहाबाहुर्नशशाकचशत्रुहन् ३ समालिंग्यार्जुनंवृद्धःसभुजाभ्यांमहाभुजः
रुदन्पुत्रान्स्मरन्सर्वान्विललापसुविह्वलः भ्रातॄन्पुत्रांश्चपौत्रांश्चदौहित्रान्ससखीनपि ४ वसुदेवउवाच यैर्जिताभूमिपाश्चैवदैत्या
श्चशतशोऽर्जुन तान्दृष्ट्वानेहपश्यामिजीवाम्यर्जुनदुर्मरः ५ यौतावर्जुनशिष्यौतेप्रियौबहुमतौसदा तयोरपनयात्पार्थवृष्णयोनिधनं
गताः ६ यौतौवृष्णिप्रवीराणांद्वावेवातिरथौमतौ प्रद्युम्नोयुयुधानश्चकथयन्कत्थसेचयौ ७ तौसदाकुरुशार्दूलकृष्णस्यप्रियभाजनौ
तावुभौवृष्णिनाशस्यमुखमास्तांधनंजय ८ नतुगर्हामिशैनेयंहार्दिक्यंचाहमर्जुन अक्रूरंरौक्मिणेयंवैशापोह्येवात्रकारणं ९ केशिनं
यस्तुकंसंचविक्रम्यजगतःप्रभुः विदेहावकरोत्पार्थचैद्यंचबलगर्वितं १० नैषादिमेकलव्यंचचक्रेकालिंगमागधान् गांधारान्काशि
राजंचमरुभूमौचपार्थिवान् ११ प्राच्यांश्चदाक्षिणात्यांश्चपार्वतीयांस्तथानृपान् सोभ्युपेक्षितवानेवमनयान्मधुसूदनः १२ त्वंहितंनारद
श्चैवमुनयश्चसनातनं गोविंदमनघंदेवमभिजानीध्वमच्युतं १३ प्रत्यपश्यच्चसर्वंविभुर्ज्ञातिक्षयमधोक्षजः समुपेक्षितवान्नित्यंस्वयंसममम
पुत्रकः १४ गांधार्यावचनंयत्तदृषीणांचपरंतप तन्नूनमन्यथाकर्तुंनैच्छत्सजगतःप्रभुः १५ प्रत्यक्षंभवतश्चापितवपौत्रःपरंतप अश्वत्था
म्नाहतश्चापिजीवितस्तस्यतेजसा १६

पौंड्रकं ११ एवंवंशक्षयंअनयात्बालानामपराधात्सत्यपिसामर्थ्येंतृपेक्षाकरणमनयस्तस्माद्वा १२ सामर्थ्यमेवा
हत्वायितेति १३ १४ १५ १६

१७ १८ १९ २० योहमिति नरनारायणयोर्जीवपरमात्मनोरत्यंतिहारेण भगवता अभेद उक्तस्तं ज्ञात्वानुवदन्नपि वसुदेवो न शोकं मुंचतीत्याश्चर्यं भगवन्मा-

इमांस्तु नैच्छत्स्वान्ज्ञातीन्रक्षितुं स सखा तव ततः पुत्रांश्च पौत्रांश्च भ्रातॄनथ सखीनपि १७ शयानान्निहतान्दृष्ट्वा ततो मामब्रवीदिदं संप्राप्तो
द्यायमस्यांतः कुलस्य भरतर्षभ आगमिष्यति बीभत्सुरिमां द्वारवतीं पुरीं आख्येयं यदस्य तद्वृत्तं वृष्णीनां वैशसं महत् १९ स तु श्रुत्वा महातेजा
यदूनां निधनं प्रभो आगंता क्षिप्रमेवेह न मेऽत्रास्ति विचारणा २० योहं तमर्जुनं विद्धि योर्जुनः सोहमेव तु यद्ब्रूयात्तत्तथा कार्यमिति बु-
ध्यस्व भारत २१ स स्त्रीषु प्राप्तकालासु पांडवो बालकेषु च प्रतिपत्स्यति बीभत्सुर्भवतश्चौर्ध्वदैहिकं २२ इमां च नगरीं सद्यः प्रतियाते ध
नंजये प्राकाराट्टालकोपेतां समुद्रः प्लावयिष्यति २३ अहं देशे तु कस्मिंश्चित्पुण्ये नियममास्थितः कालं कर्ता सद्य एव रामेण सह धीमता २४
एवमुक्त्वा हृषीकेशो मामचिंत्यपराक्रमः हित्वा मां बालकैः सार्द्धं दिशं कामप्यगात्प्रभुः २५ सोहं तौ च महात्मानौ चिंतयन्भ्रातरौ तव घोरं
ज्ञातिवधं चैव न भुंजे शोककर्शितः २६ न भोक्ष्ये न च जीविष्ये दिष्ट्या प्राप्तोसि पांडव यदुक्तं पार्थ कृष्णेन तत्सर्वमखिलं कुरु २७ एतत्ते पा
र्थ राज्यं च स्त्रियो रत्नानि चैव हि इष्टान्प्राणानहं हीमांस्त्यक्ष्यामि मधुसूदन २८ इति श्रीमहाभारते मौस० षष्ठोऽध्यायः ६ ६
वैशंपायन उवाच एवमुक्तः स बीभत्सुर्मातुलेन परंतप दुर्मना दीनमनसं वसुदेवमुवाच ह १ नाहं वृष्णिप्रवीरेण बंधुभिश्चैव मातुल वि
हीनां पृथिवीं द्रष्टुं शक्तश्चिरमिहाथ च २ राजा च भीमसेनश्च सहदेवश्च पांडवः नकुलो याज्ञसेनी च षडेकमनसो वयं ३ राज्ञः संक्रमणे चा
पि कालोयं वर्तते ध्रुवं तमिमं विद्धि संप्राप्तं कालं कालविदांवर ४ सर्वथा वृष्णिदारांस्तु बालवृद्धांस्तथैव च नयिष्ये परिगृह्याहमिंद्रप्रस्थम
रिंदम ५ इत्युक्त्वा दारुकमिदं वाक्यमाह धनंजयः अमात्यान्वृष्णिवीराणां द्रष्टुमिच्छामि माचिरं ६ इत्येवमुक्त्वा वचनं सुधर्मां यादवीं स
भां प्रविवेशार्जुनः शूरः शोचमानो महारथान् ७ तमासनगतं तत्र सर्वाः प्रकृतयस्तथा ब्राह्मणा नैगमास्तत्र परिवार्योपतस्थिरे ८
तान्दीनमनसः सर्वान्निभृतान्गतचेतसः उवाचेदं वचः काले पार्थो दीनतरस्तथा ९ शक्रप्रस्थमहं नेष्ये वृष्ण्यंधकजनं स्वयं इदं तु न
गरं सर्वं समुद्रः प्लावयिष्यति १० सज्जीकुरुत यानानि रत्नानि विविधानि च वज्रोयं भवतां राजा शक्रप्रस्थे भविष्यति ११ सप्तमे दिव-
से चैव रवौ विमल उद्गते बहिर्वत्स्यामहे सर्वे सज्जीभवत माचिरं १२ इत्युक्तास्तेन ते पौराः पार्थेनाक्लिष्टकर्मणा सज्जमाशु ततश्चक्रुः स्व-
सिद्ध्यर्थं समुत्सुकाः १३

यादव्यामिति सभाव २१ २२ २३ अहमिति कालं मृत्युं आत्मनः कर्तास्मि गमिष्यामि गदन्यतेन नगर्यामस्यां सगर्यो नन्न तं व्यक्त्य
फ २४ २५ २६ २७ २८ इति श्रीमहाभारते मौसलपर्वणि टीकायां षष्ठोऽध्याय ६ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११
१२ १३

१४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१



तांरात्रिमवसत्पार्थः केशवस्यनिवेशनं महताशोकमोहेनसहसाभिपरिप्लुतः १४ श्वोभूतेथततःशौरिर्वसुदेवःप्रतापवान् युक्त्वात्मानं-
महातेजाजगामगतिमुत्तमां १५ ततःशब्दोमहानासीद्वसुदेवनिवेशने दारुणःक्रोशतीनांचरुदतीनांचयोषितां १६ प्रकीर्णमूर्धजाः
सर्वाविमुक्ताभरणस्रजः उरांसिपाणिभिर्घ्नंत्योव्यलपन्करुणंस्त्रियः १७ तंदेवकीचभद्राचरोहिणीमदिरातथा अन्वारोहंतचतं
दाभर्तारंयोषितांवराः १८ ततःशौरिंनृयुक्तेनबहुमौल्येनभारत यानेनमहतापार्थोबहिर्निष्क्रामयत्तदा १९ तमन्वयुस्तत्रतत्र दुः
खशोकसमाहताः द्वारकावासिनःसर्वेपौरजानपदाहिताः २० तस्याश्वमेधिकंछत्रंदीप्यमानाश्चपावकाः पुरस्तात्तस्ययानस्य
याजकाश्चततोययुः २१ अनुजग्मुश्चतंवीरंदेव्यस्तावस्वलंकृताः स्त्रीसहस्रैःपरिवृतावधूभिश्चसहस्रशः २२ यस्तुदेशःप्रिय-
स्तस्यजीवतोभून्महात्मनः यत्रैनमुपसंकल्प्यपितृमेधंप्रचक्रिरे २३ तंचिताग्निगतंवीरंशूरपुत्रंवरांगनाः ततोन्वारुरुहुःपत्न्यश्चतस्रः
पतिलोकगाः २४ तंवैचतसृभिःस्त्रीभिरन्वितंपांडुनंदनः अदाहयच्चंदनैश्चगंधैरुच्चावचैरपि २५ ततःप्रादुरभूच्छब्दःसमिद्धस्यवि
भावसोः सामगानांचनिर्घोषोनराणारुदतामपि २६ ततोवज्रप्रधानास्तेवृष्ण्यंधककुमारकाः सर्वेचैवोदकंचक्रुःस्त्रियश्चैवमहा
त्मनः २७ अलुप्तधर्मस्तंधर्मंकारयित्वासफाल्गुनः जगामवृष्णयोयत्रविनष्टाभरतर्षभ २८ सतान्दृष्ट्वानिपतितान्कदनेभृश
दुःखितः बभूवातीवकौरव्यःप्राप्तकालंचकारह २९ यथाप्रधानतश्चैवचक्रेसर्वास्तथाक्रियाः तेहताब्रह्मशापेनमुशलैरेरकोद्भ
वैः ३० ततःशरीरेरामस्यवासुदेवस्यचोभयोः अन्विष्यदाहयामासपुरुषैराप्तकारिभिः ३१ सतेषांविधिवत्कृत्वाप्रेतकार्याणिपां
डवः सप्तमेदिवसेप्रायाद्रथमारुह्यसत्वरः ३२ अश्वयुक्तैरथैश्चापिगोखरोष्ट्रयुतैरपि स्त्रियस्तावृष्णिवीराणांरुदत्यःशोककर्षि-
ताः ३३ अनुजग्मुर्महात्मानंपांडुपुत्रंधनंजयं भृत्यास्त्वंधकवृष्णीनांसादिनोरथिनश्चये ३४ वीरहीनंवृद्धबालंपौरजानपदास्तथा
ययुस्तेपरिवार्याथकलत्रंपार्थशासनात् ३५ कुंजरैश्चगजारोहाययुःशैलनिभैस्तथा सपादरक्षैःसंयुक्ताःसांतरायुधिकाययुः
३६ पुत्राश्चांधकवृष्णीनांसर्वेपार्थमनुव्रताः ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवमहाधनाः ३७ दशषट्चसहस्राणिवासुदेवा
वरोधनं पुरस्कृत्यययुर्वज्रंपौत्रंकृष्णस्यधीमतः ३८ बहूनिचसहस्राणिप्रयुतान्यर्बुदानिच भोजवृष्ण्यंधकस्त्रीणांहतनाथा
विनिर्ययुः ३९

३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२

४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४

तत्सागरसमप्रख्यंवृष्णिचक्रंमहर्धिमत् उवाहरथिनांश्रेष्ठःपार्थःपरपुरंजयः ४० निर्यातेतुजनेतस्मिन्सागरोमकरालयः द्वारकां
रत्नसंपूर्णांजलेनाप्लावयत्तदा ४१ यद्यद्धिपुरुषव्याघ्रोभूमेस्तस्याभ्यमुंचत तत्तत्संप्लावयामाससलिलेनससागरः ४२ तद-
द्भुतमभिप्रेक्ष्यद्वारकावासिनोजनाः तूर्णात्तूर्णतरंजग्मुरहोदैवमितिब्रुवन् ४३ काननेषुचरम्येषुपर्वतेषुनदीषुच निवसन्ना
नयामासवृष्णिदारान्धनंजयः ४४ सपंचनदमासाद्यधीमानतिसमृद्धिमत् देशंगोपशुधान्याढ्यंनिवासमकरोत्प्रभुः ४५ ततो
लोभःसमभवद्दस्यूनांनिहतेश्वराः दृष्ट्वास्त्रियोनीयमानाःपार्थेनैकेनभारत ४६ ततस्तेपापकर्माणोलोभोपहतचेतसः आ
भीरामंत्रयामासुःसामात्याःशुभदर्शनाः ४७ अयमेकोर्जुनोधन्वीवृद्धबालंहतेश्वरं नयत्यस्मानतिक्रम्ययोधाश्चेमेहतौ
जसः ४८ ततोयष्टिप्रहरणादस्यवस्तेसहस्रशः अभ्यधावंतवृष्णीनांतंजनंलोमहारिणः ४९ महतासिंहनादेनत्रास
यंतःपृथक्जनं अभिपेतुर्वधार्थंतेकालपर्यायचोदिताः ५० ततोनिवृत्तःकौंतेयःसहसासपदानुगः उवाचतान्महाबाहु
रर्जुनःप्रहसन्निव ५० निवर्तध्वमधर्मज्ञायदिजीवितुमिच्छथ इदानींशरनिर्भिन्नाःशोचध्वंनिहतामया ५१ तथोक्ता
स्तेनवीरेणकदर्थीकृत्यतद्वचः अभिपेतुर्जनंमूढावार्यमाणाःपुनःपुनः ५३ ततोर्जुनोधनुर्दिव्यंगांडीवमजरंमहत् आ
रोपयितुमारेभेयत्नादिवकथंचन ५४ चकारसज्यंकृच्छ्रेणसंभ्रमेतुमुलेसति चिंतयामासशस्त्राणिनचसस्मारतान्य
पि ५५ वैकल्यंतन्महद्दृष्ट्वाभुजवीर्येतथायुधि दिव्यानांमहदस्त्राणांविनाशाद्व्रीडितोऽभवत् ५६ वृष्णियोधाश्चते
सर्वेगजाश्वरथयोधिनः नशेकुरावर्तयितुंह्रियमाणंचतंजनं ५७ कलत्रस्यबहुत्वाद्धिसंपतत्सुततस्ततः प्रयत्न
मकरोत्पार्थोजनस्यपरिरक्षणे ५८ मिषतांसर्वयोधानांततस्ताःप्रमदोत्तमाः समंततोवकृष्यंतकामाश्चान्याःप्र-
वव्रजुः ५० ततोगांडीवनिर्मुक्तैःशरैःपार्थोधनंजयः जघानदस्यून्सोद्वेगाद्वृष्णिभृत्यैःसहप्रभुः ६० क्षणेनतस्य
तेराजन्क्षयंजग्मुरजिह्मगाः अक्षयाहिपुराभूत्वाक्षीणाःक्षतजभोजनाः ६१ सशरक्षयमासाद्यदुःखशोक
समाहतः धनुष्कोट्यातदादस्यूनवधीत्पाकशासनिः ६२ प्रेक्षतस्त्वेवपार्थस्यवृष्ण्यंधकवरस्त्रियः जग्मुरादाय
तेम्लेच्छाःसमंताज्जनमेजय ६३

५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४

धनंजयस्तु देवं तन्मनसाचिंतयत्प्रभुः दुःखशोकसमाविष्टोनिःश्वासपरमोभवत् ६४ अस्त्राणांचप्रणाशेनबाहुवी-
र्यस्यसंक्षयात् धनुषश्चाविधेयत्वाच्छराणांसंक्षयेणच ६५ बभूवविमनाःपार्थोदैवमित्यनुचिंतयन् न्यवर्ततततो
राजन्नेदमस्तीतिचाब्रवीत् ६६ ततःसशेषमादायकलत्रस्यमहामतिः हतभूयिष्ठरत्नस्यकुरुक्षेत्रमवातरत् ६७
एवंकलत्रमानीयवृष्णीनांहृतशेषितं न्यवेशयतकौरव्यस्तत्रतत्रधनंजयः ६८ हार्दिक्यतनयंपार्थोनगरंमार्तिका
वतं भोजराजकलत्रंचहृतशेषंनरोत्तमः ६९ ततोबालांश्चवृद्धांश्चस्त्रियश्चादायपांडवः वीरैर्विहीनान्सर्वांस्तान्
शक्रप्रस्थेन्यवेशयत् ७० यौयुधानिंसरस्वत्यांपुत्रंसात्यकिनःप्रियं न्यवेशयतधर्मात्मावृद्धबालपुरस्कृतं ७१ इंद्र-
प्रस्थेददौराज्यंवज्रायपरवीरहा व्रजेणाक्रूरदारास्तुवार्यमाणाःप्रवव्रजुः ७२ रुक्मिणीत्वथगांधारीशैब्याहैम-
वतीत्यपि देवीजांबवतीचैवविविशुर्जातवेदसं ७३ सत्यभामातथैवान्यादेव्यःकृष्णस्यसंमताः वनंप्रविविशू-
राजंस्तापस्येधृतनिश्चयाः ७४ फलमूलादिभोजिन्योहरिध्यानैकतत्पराः हिमवंतमभिक्रम्यकलापग्राममाविशन्
७५ द्वारकावासिनोयेतुपुरुषाःपार्थमभ्ययुः यथार्हंसंविभज्यैनान्वज्रेपर्यददज्जयः ७६ सतत्कृत्वाप्राप्तकालंबा
ष्पेणापिहितोर्जुनः कृष्णद्वैपायनंव्यासंददर्शासीनमाश्रमे ७७ इतिश्रीमहाभारतेशतसाहस्र्यांसंहिता
यांवैयासिक्यांमौसलपर्वणिसप्तमोऽध्यायः ७ वैशंपायनउवाच प्रविशन्नर्जुनोराजन्नाश्र
मंसत्यवादिनः ददर्शासीनमेकांतेमुनिंसत्यवतीसुतं १ सतमासाद्यधर्मज्ञमुपतस्थेमहाव्रतं अर्जुनोस्मीति
नामास्मैनिवेद्याभ्यवदत्ततः २ स्वागतंतेस्त्वितिप्राहमुनिःसत्यवतीसुतः आस्यतामितिचोवाचप्रसन्नात्माम
हामुनिः ३ तमप्रतीतमनसंनिःश्वसंतंपुनःपुनः निर्विण्णमनसंदृष्ट्वापार्थंव्यासोब्रवीदिदं ४

नखोदकं केशोदकं वस्त्रप्रांतोदशा तासां उदकं कुंभमुखोदकं च अवीरजा नारी रजस्वला तस्या रज प्रस्रवकाले दिनत्रयादर्वाक् अनुगमनं तस्यां मैथुनं ब्रा
ह्मणस्य वधः युद्धे पराजयश्चेति सप्तभिर्निमित्तैः पुरुष श्व प्र श्रीभ्रंशं वर्तिते ५ प्रभिन्नं पराजितं त्वां कदाचिदपि न जानामि ६ ७ ८ हृतं मृ

नखकेशदशाकुंभवारिणा किं समुक्षितः अवीरजानुगमनं ब्राह्मणो वाहनस्त्वया ५ युद्धे पराजितो वासि गतश्रीरि
व लक्ष्यसे न त्वां प्रभिन्नं जानामि किमिदं भरंतपंम श्रोतव्यं च न मया पार्थ सम्प्रमार्ख्यातुमर्हसि ६ अर्जुन उवा
च यः समेघवपुः श्रीमान्पृहत्पंकजलोचनः सकृष्णः सुहृदां मणस्त्यक्त्वादर्शाद्दिवं गतः ७ मौसले वृष्णिवीराणां विना
शो ब्रह्मशापजः बभूव वीरातकरः प्रभासे लामहर्षण ८ यत्र शूरा महात्मानः सिंहदर्पा महाबलाः भोजवृष्ण्यंधका
ब्रह्मन्नन्योन्यं तैर्हतं युधि ९ गदापरिघशक्तीनां सहाः परिघबाहवः तैरकाभिर्निहताः पश्य कालस्य पर्ययं १० हृ
तं पंचशतं तस्यां सहस्रं बाहुशालिना निधनं समनुप्राप्तं समासाद्य तरं नर ११ पुनः पुनर्न मृष्यामि विनाशं प्रमितौ
जसा चिंतयानो यदूनां च कृष्णस्य च यशस्विनः १२ शोषणं सागरस्येव पर्वतस्येव चालनं नभसः पतनं चैव शै
त्यमग्नेस्तथैव च १३ अश्रद्धेयमहं मन्ये विनाशं शार्ङ्गधन्वनः न च हस्थातुमिच्छामि लोके कृष्णविनाकृतः
१४ इतः कष्टतरं चान्यच्छृणु तद्वै तपोधन मनो मर्दयति यन्मुनश्चिंतयानस्य वै मुहुः १५ पश्यतां वृष्णिदाराश्च मम
ब्रह्मन्सहस्रशः आभीरैरनुसृत्याजौ हृता पंचजनालयः १६ धनुरादाय तस्याहं नाशकं तस्य पूरणे यथा पुरा
च मे वीर्यं भुजयोर्न तथा भवत् १७ अस्त्राणि मे मनस्थानि विविधानि महामुने शराश्च क्षयमापन्नाः क्षणेनैव
समंततः १८ पुरुषश्चाप्रमेयात्मा शंखचक्रगदाधरः चतुर्भुजः पीतवासाः श्यामः पद्मदलेक्षणः १९ यश्च
याति पुरस्तान्मे रथस्य सुमहाद्युतिः प्रदहन्रिपुसैन्यानि न पश्याम्यहमच्युतं २० येन पूर्वं प्रदग्धानि शत्रुसै
न्यानि तेजसा शरैर्गांडीवनिर्मुक्तैरहं पश्चाद्धिनाशयं २१

तं मार्गितवंतः इत्यर्थः ९ १० पंचशतं सहस्रगुणितं सह
स्रपंचलक्षाणीत्यर्थः न केवलं हतं ताडितं अपितु निधनं प्राप्तं ११ १२ १३ १४ १५ पश्यतां अनादरे षष्ठी मां पश्यंतं मनादृत्य
इत्यर्थः १६ १७ १८ पुरुषश्चेति इदमेव रूपं चतुर्भुजं नित्यमर्जुनदृग्गोचरोस्ति अत एव विश्वरूपदर्शनानंतरमुक्तं तेनैव रूपेण
चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते अन्यथा द्विभुजेनेत्यवक्ष्यत् चतुर्भुजेति नावक्ष्यच्च १९ २० २१ ६ ६

२२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ बुद्धिः उपस्थितकार्यावधारणं तेजः प्रागल्भ्यं प्र
तिपत्तिः अनागतावेक्षणं भवंतिउत्पद्यंते भवकालेषु ऐश्वर्यवत्समयेषु विपर्यये विनाशकाले विपद्यंते विनश्यंति ३२ कालईश्वरः जगद्बीजंविय



नमपश्यान्विषीदामिघूर्णामीवचसत्तम परिनिर्विण्णचेताश्चशांतिंनोपलभेपिच २२ विनाजनार्दनंवीरंनाहंजीवितुमुत्सहे
श्रुत्वैवहिगतंविष्णुंममापिमुमुहुर्दिशः २३ नष्टज्ञातिवीर्यस्यशून्यस्यपरिधावतः उपदेष्टुममश्रेयोभवानर्हतिसत्तम
२४ व्यासउवाच ब्रह्मशापविनिर्दग्धावृष्ण्यंधकमहारथाः विनष्टाःकुरुशार्दूलनतान्शोचितुमर्हसि २५ भवित
व्यंतथातच्चदिष्टमेतन्महात्मनां उपेक्षितंचकृष्णेनशक्तेनापिव्यपोहितुं २६ त्रैलोक्यमपिगोविंदः कृत्स्नंस्थावरजंगमं
प्रसहेदन्यथाकर्तुंकुतःशापंमहात्मनः २७ रथस्यपुरतोयातियःसचक्रगदाधरः तवस्नेहात्पुराणर्षिर्वासुदेवश्चतुर्भुजः
२८ कृत्वाभारावतरणंपृथिव्याःपृथुलोचनः मोक्षयित्वातनुंप्राप्तःकृष्णःस्वस्थानमुत्तमं त्वयापीहमहत्कर्मदेवा
नांपुरुषर्षभ कृतंभीमसहायेनयमाभ्यांचमहाभुज ३० कृतकृत्यांश्चवोमन्येसंसिद्धान्कुरुपुंगव गमनंप्राप्तकाल
चइदंश्रेयस्करंविभो ३१ एवंबुद्धिश्चतेजश्चप्रतिपत्तिश्चभारत भवंतिभवकालेषुविपद्यंतेविपर्यये ३२ कालमू
लमिदंसर्वंजगद्बीजंधनंजय कालएवसमादत्तेपुनरेवयदृच्छया ३३ सएवबलवान्भूत्वापुनर्भवतिदुर्बलः सएवे
शश्चभूत्वेहपरैराज्ञाप्यतेपुनः ३४ कृतकृत्यानिचास्त्राणिगतान्यद्ययथागतं पुनरेष्यंतितेहस्तंयदाकालोभविष्यति
३५ कालोगंतुंगतिंमुख्यांभवतामपिभारत एतच्छ्रेयोहिवोमन्येपरमंभरतर्षभ ३६ वैशंपायनउवाच
एतद्वचनमाज्ञायव्यासस्यामिततेजसः अनुज्ञातोययौपार्थोनगरंनागसाह्वयं ३७

दादिपंचकं समादत्तेसंहरति यदाभूता
नामपिसंहारोभवतिकियान् तत्रभौतिकानांनाशइतिनदर्थेशोकोनुचितइतिभावः ३३ सएवबलवान्सएवदुर्बलोभवत्येवंविजयोपिकालमू
लोज्ञेयः ३४ कृतेतिभवंतोपिअस्त्रवत्कृतकृत्याइतिभावः पुनर्युगांतरे ३५ मुख्यांगतिंस्वर्गंगंतुं एततप्रस्थानं ३६
३९ श्रीनृपंचास्यायनमः ७ ७ ७ ७

३८ इतिश्रीमत्सदवाक्यप्रमाण मर्यादाधुरंधर चतुर्धर वंशावतंस श्रीगोविंदसूरिसूनोर्नीलकंठस्यकृतौ भारत भावदीपे मौसलपर्वणि अष्टमो-

प्रविश्यचपुरींवीरः समासाद्ययुधिष्ठिरं आचष्टतद्यथावृत्तंवृष्ण्यंधककुलंप्रति ३८ इ
तिश्रीमहाभारते शतसाहस्र्यांसंहितायांवैय्यासिक्यांमौसलपर्वणिअष्टमोऽध्यायः समाप्तः
इदंपर्वसमाप्तिमगमत् १६ श्रीलक्ष्मीनारायणार्पणमस्तु शुभंभवतु श्रीकृष्णा

ऽध्यायः ८ श्रीकृष्णार्पणमस्तु शके १७८४ दुंदुभिनामसंवत्सरे ज्येष्ठशुक्लपंचम्यांइंदुवासरेसमाप्तिमगमत श्रीसीतारामचंद्राभ्यांनमः

इतिश्रीमन्महाभारतेमौसलपर्वसमाप्तम्










# अथश्रीमन्महाभारतेमहाप्रास्थानिकपर्वप्रारंभः






श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीवेदव्यासायनमः कृतकृत्यानांदुःसहदुःखग्रस्तानांमहाप्रस्थानादिनाउपायेनदेहत्यागोयुक्तइतिपांडवाचा
रेणप्रदर्शयन्महाप्रस्थानिकंपर्वारभते प्रसंगाच्चस्वर्गनिर्हेतृन्गुणान्स्वर्गतिप्रतिबंधकान्दोषांश्चदर्शयतिसंक्षेपेण एवंवृष्ण्यंधककुलेइत्यादिना
१ प्रस्थानेस्वर्गंतुंगृहान्निःसरणे २ पाशतन्कृतमाकर्षंमरणमितियावत् तदहंमन्येअंगीकरोमि त्वमप्येतत् द्रष्टुंआलोचितुं ३ कालःकालइ-
तिनित्यार्थेद्वित्वं अपरिहार्यःकालोमृत्युःसोदैवास्तुकिंचिरेणेत्याशयः ४ ५ धर्मकाम्ययाप्रव्रजनंनतुउद्वेगेन परिददौतदधीनंकृतवान् तस्या

श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीगुरुभ्योनमः श्रीवेदव्यासायनमः नारायणंनमस्कृत्यनरंचैवनरोत्तमम् देवींसरस्वतींचैवततो
जयमुदीरयेत् १ जनमेजयउवाच एवंवृष्ण्यंधककुलेश्रुत्वामौसलमाहवम् पांडवाःकिमकुर्वंततथाकृष्णेदिवंगते १ वैशंपायन
उवाच श्रुत्वैवंकौरवोराजावृष्णीनांकदनंमहत् प्रस्थानेमतिमाधायवाक्यमर्जुनमब्रवीत् २ कालःपचतिभूतानिसर्वाण्येवमहा
मते कालपाशमहंमन्येत्वमपिद्रष्टुमर्हसि ३ इत्युक्तःसतुकौंतेयःकालःकालइतिब्रुवन् अन्वपद्यततद्वाक्यंभ्रातुर्ज्येष्ठस्यधीमतः ४
अर्जुनस्यमतंज्ञात्वाभीमसेनोयमौतथा अन्वपद्यंततद्वाक्यंयदुक्तंसव्यसाचिना ५ ततोयुयुत्सुमानाय्यप्रव्रजन्धर्मकाम्यया रा-
ज्यंपरिददौसर्वंवैश्यापुत्रेयुधिष्ठिरः ६ अभिषिच्यस्वराज्येचराजानंचपरीक्षितम् दुःखार्त्तश्चाब्रवीद्राजासुभद्रांपांडवाग्रजः ७
एषपुत्रस्यतेपुत्रःकुरुराजोभविष्यति यदूनांपरिशेषश्चवज्रोराजाकृतश्चह ८ परीक्षिद्धास्तिनपुरेशक्रप्रस्थेचयादवः वज्रोराजा
त्वयारक्ष्योमाचाधर्मेमनःकृथाः ९ इत्युक्त्वाधर्मराजस्सवासुदेवस्यधीमतः मातुलस्यचवृद्धस्यरामादीनांतथैवच १० भ्रातृभिः
सहधर्मात्माकृत्वोदकमतंद्रितः श्राद्धान्युद्दिश्यसर्वेषांचकारविधिवत्तदा ११ द्वैपायनंनारदंचमार्कंडेयंतपोधनम् भारद्वाजंयाज्ञव
ल्क्यंहरिमुद्दिश्ययत्नवान् १२ अभोजयत्स्वादुभोज्यंकीर्त्तयित्वाचशार्ङ्गिणम् ददौरत्नानिवासांसिग्रामानश्वान्रथांस्तथा १३
स्त्रियश्चद्विजमुख्येभ्यस्तदाशतसहस्रशः कृपमभ्यर्च्यचगुरुमथपौरपुरस्कृतम् १४ शिष्यंपरिक्षितंतस्मैददौभरतसत्तम ततस्तुप्र
कृतीःसर्वाःसमानाय्ययुधिष्ठिरः १५ सर्वमाचष्टराजर्षिश्चिकीर्षितमथात्मनः तेश्रुत्वैववचस्तस्यपौरजानपदाजनाः १६ भृशमुद्विग्न
मनसोनाभ्यनंदंततद्वचः नैवंकर्तव्यमितितेतदोचुस्तंनराधिपम् १७

भिषेकेऽनधिकारात स्वराज्येहास्तिनपुरे ७ ८ अ-
धर्मेपरीक्षिद्वज्रयोर्बालयोररक्षणजे महाप्रस्थानमियंमाकुर्यादितिभावः ९ १० ११ १२ १३ स्त्रियःदासीः १४ १५ १६ १७ १७

अनुमान्यअनुमतिंप्रदंकृत्वा १८ १९ २० नैष्ठिकींपर्यंतिकीं उत्सर्गेष्टिमित्यर्थः २१ आत्मनिअग्नीन्समारोप्याप्सुअग्नीनुत्सृज्येतिज्ञेयं
२२ २३ २४ २५ २६ २७ अन्याःयुधिष्ठिरादीनांभार्याःश्रुतसोमादीनांमातरः २८ २९ ३० ३१ ३२ लौहित्यं

नचराजातथाकार्षीत्कालपर्यायधर्मवित् ततोनुमान्यधर्मात्मापौरजानपदंजनम् १८ गमनायमतिंचक्रेभ्रातरश्चास्यतेतदा ततःस
राजाकौरव्योधर्मपुत्रोयुधिष्ठिरः १९ उत्सृज्याभरणान्यंगाज्जगृहेवल्कलान्युत भीमार्जुनयमाश्चैवद्रौपदीचयशस्विनी २० तथै
वजगृहुःसर्वेवल्कलानिनराधिप विधिवत्कारयित्वेष्टिंनैष्ठिकींभरतर्षभ २१ समुत्सृज्याप्सुसर्वेग्नीन्प्रतस्थुर्नरपुंगवाः ततःप्ररु
रुदुःसर्वाःस्त्रियोदृष्ट्वानरोत्तमान् २२ प्रस्थितान्द्रौपदीषष्ठान्पुराद्यूतजितान्यथा हर्षोभवच्चसर्वेषांभ्रातॄणांगमनंप्रति २३ युधि
ष्ठिरमतंज्ञात्वावृष्णिक्षयमवेक्ष्यच भ्रातरःपंचकृष्णाचषष्ठीश्वाचैवसप्तमः २४ आत्मनासप्तमोराजानिर्ययौगजसाह्वयात् पौरै
रनुगतोदूरंसर्वैरंतःपुरैस्तथा २५ नचैनमशकत्कश्चिन्निवर्तस्वेतिभाषितुम् न्यवर्तंततततःसर्वेनरानगरवासिनः २६ कृपप्रभृतयश्चैव
युयुत्सुंपर्यवारयन् विवेशगंगांकौरव्यउलूपीभुजगात्मजा २७ चित्रांगदाययौचापिमणिपूरपुरंप्रति शिष्टाःपरिक्षितंत्वन्यामात
रःपर्यवारयन् २८ पांडवाश्चमहात्मानोद्रौपदीचयशस्विनी कृतोपवासाःकौरव्यप्रययुःप्राङ्मुखास्ततः २९ योगयुक्तामहात्मानस्त्या
गधर्ममुपेयुषः अभिजग्मुर्बहून्देशान्सरितःसागरांस्तथा ३० युधिष्ठिरोययावग्रेभीमस्तुतदनंतरम् अर्जुनस्तस्यचान्वेवयमौचापिय
थाक्रमम् ३१ पृष्ठतस्तुवरारोहाश्यामापद्मदलेक्षणा द्रौपदीयोषितांश्रेष्ठाययौभरतसत्तम ३२ श्वाचैवानुययावेकःप्रस्थितान्पांड
वान्वनम् क्रमेणतेययुर्वीरालौहित्यंसलिलार्णवम् ३३ गांडीवंतुधनुर्दिव्यंनमुमोचधनंजयः रत्नलोभान्महाराजतेचाक्षय्येमहेषु-
धी ३४ अग्निंतेददृशुस्तत्रस्थितंशैलमिवाग्रतः मार्गमावृत्यतिष्ठंतंसाक्षात्पुरुषविग्रहम् ३५ ततोदेवःससप्तार्चिःपांडवानिदमब्र
वीत् भोभोःपांडुसुतावीराःपावकंमांनिबोधत ३६ युधिष्ठिरमहाबाहोभीमसेनपरंतप अर्जुनाश्विसुतौवीरौनिबोधतवचोमम ३७
अहमग्निःकुरुश्रेष्ठामयादग्धंचखांडवम् अर्जुनस्यप्रभावेनतथानारायणस्यच ३८ अयंवःफाल्गुनोभ्रातागांडीवंपरमायुधम्
परित्यज्यवनंयातुनानेनार्थोस्तिकश्चन ३९ चक्ररत्नंतुयत्कृष्णेस्थितमासीन्महात्मनि गतंतच्चपुनर्हस्तेकालेनैष्यतितस्यह ४० वरु-
णादाहृतंपूर्वंमयैतत्पार्थकारणात् गांडीवंधनुषांश्रेष्ठंवरुणायैवदीयताम् ४१ ततस्तेभ्रातरःसर्वेधनंजयमचोदयन् सजलेप्राक्षि
पत्तेतत्तथाक्षय्येमहेषुधी ४२

उदयाचलप्रांतस्थंसमुद्रम् ३३ ३४ ३५ ३६ ३७ ३८ अनेनगांडीवेनअर्थःप्रयोजनं ३९ कालेनअवतारांतरे ४० ४१ ४२

४३ ४४ ४५ ४६ इतिश्रीमहाभारतेमहाप्रास्थानिकेपर्वणिटीकायांप्रथमोऽध्यायः १ ततःदिक्चक्रप्रदक्षिणीकरणानंतरं योगयुक्ताःसमाहित
मनसः १ २ भ्रष्टयोगाध्यानात्स्खलितमानसा ३ ४ ५ पक्षेतितुल्येष्वपिवैषम्येणपूजानकार्येतिभावः ६ अनवेक्ष्यस्वर्गांतरायरूपःस्नेहोमाभूदिति

ततोग्निर्भरतश्रेष्ठतत्रैवांतरधीयत ययुश्चपांडवावीरास्ततस्तेदक्षिणामुखाः ४३ ततस्तेतूत्तरेणैवतीरेणलवणांभसः जग्मुर्भरत
शार्दूलदिशंदक्षिणपश्चिमाम् ४४ ततःपुनःसमावृत्ताःपश्चिमांदिशमेववने ददृशुर्द्वारकांचापिसागरेणपरिप्लुताम् ४५ उदीचींपु
नरावृत्त्यययुर्भरतसत्तमाः प्रादक्षिण्यंचिकीर्षंतःपृथिव्यायोगधर्मिणः ४६ इतिश्रीमहाभारतेमहाप्रास्थानिकेपर्वणिप्रथमोऽध्या
यः १ वैशंपायनउवाच ततस्तेनियतात्मानउदीचींदिशमास्थिताः ददृशुर्योगयुक्ताश्चहिमवंतंमहागिरिम् १ तंचाप्यतिक्र
मंतस्तेददृशुर्वालुकार्णवम् अवैक्षंतमहाशैलंमेरुंशिखरिणांवरम् २ तेषांतुगच्छतांशीघ्रंसर्वेषांयोगधर्मिणाम् याज्ञसेनीभ्रष्ट
योगानिपपातमहीतले ३ तांतुप्रपतितांदृष्ट्वाभीमसेनोमहाबलः उवाचधर्मराजानंयाज्ञसेनीमवेक्ष्यह ४ नाधर्मश्चरितःक
श्चिद्राजपुत्र्यापरंतप कारणंकिंनुतद्ब्रूहियत्कृष्णापतिताभुवि ५ युधिष्ठिरउवाच पक्षपातोमहानस्याविशेषेणधनंजये त
स्यैतत्फलमद्यैषाभुंक्तेपुरुषसत्तम ६ वैशंपायनउवाच एवमुक्त्वानवेक्ष्यैनांययौभरतसत्तमः समाधायमनोधीमान्धर्मा
त्मापुरुषर्षभः ७ सहदेवस्ततोविद्वान्निपपातमहीतले तंचापिपतितंदृष्ट्वाभीमोराजानमब्रवीत् ८ योयमस्मासुसर्वेषुशुश्रू
षुरनहंकृतः सोयंमाद्रवतीपुत्रःकस्मान्निपतितोभुवि ९ युधिष्ठिरउवाच आत्मनःसदृशंप्राज्ञंनैषोमन्यतकंचन तेनदोषेण
पतितस्तस्मादेषनृपात्मजः १० वैशंपायनउवाच इत्युक्त्वातंसमुत्सृज्यसहदेवंययौतदा भ्रातृभिःसहकौंतेयःशुनाचैवयुधि
ष्ठिरः ११ कृष्णांनिपतितांदृष्ट्वासहदेवंचपांडवम् आर्त्तोबंधुःप्रियःशूरोनकुलोनिपपातह १२ तस्मिन्निपतितेवीरेनकुलेचारुद
र्शने पुनरेवतदाभीमोराजानमिदमब्रवीत् १३ योयमक्षततधर्मात्माभ्रातावचनकारकः रूपेणाप्रतिमोलोकेनकुलःपतितोभुवि १४
इत्युक्तोभीमसेनेनप्रत्युवाचयुधिष्ठिरः नकुलंप्रतिधर्मात्मासर्वबुद्धिमतांवरः १५ रूपेणमत्समोनास्तिकश्चिदित्यस्यदर्शनम् अ
धिकश्चाहमेवैकइत्यस्यमनसिस्थितम् १६ नकुलःपतितस्तस्मादागच्छत्वंवृकोदर यस्ययद्विहितंवीरसोवश्यंतदुपाश्नुते १७
तांस्तुप्रपतितान्दृष्ट्वापांडवःश्वेतवाहनः पपातशोकसंतप्तस्ततोनुपरवीरहा १८

भावः ७ ८ ९ आत्मनइति प्राज्ञ
त्वाभिमानोपिपतनहेतुरितिभावः १० ११ १२ १३ १४ १५ रूपेणेतिरूपगर्वान्नकुलःपपातेत्यर्थः १६ १७ १८ छ

१९ २० एकान्हेति शौर्यगर्वादर्जुनोपिमिथ्याप्रतिज्ञत्वात्पपात २१ २२ २३ २४ अत्याशनाद्बलगर्वाच्चभीमसेनःपपातेत्याहातिभुक्त-
मिति २५ २६ इतिश्रीमहाभारतेमहाप्रस्थानपर्वणिटीकायांद्वितीयोऽध्यायः २ ततःसन्नादयन्नित्यस्यबांधवभोज्येवलक्ष्मीश्रेयसीनत्व

तस्मिंस्तुपुरुषव्याघ्रेपतितेशक्रतेजसि म्रियमाणेदुराधर्षेभीमोराजानमब्रवीत् १९ अनृतंनस्मराम्यस्यस्वैरेष्वपिमहात्मनः अथकस्य
विकारोयंयेनायंपतितोभुवि २० युधिष्ठिरउवाच एकान्हानिर्दहेयंवैशत्रूनित्यर्जुनोब्रवीत् नचतत्कृतवानेषशूरमानीततोपतत् २१
अवमेनेधनुर्ग्राहानेषसर्वांश्चफाल्गुनः तथाचैतन्नतुतथाकर्त्तव्यंभूतिमिच्छता २२ वैशंपायनउवाच इत्युक्त्वाप्रस्थितोराजाभी
मोथनिपपातह पतितश्चाब्रवीद्भीमोधर्मराजंयुधिष्ठिरम् २३ भोभोराजन्नवेक्षस्वपतितोहंप्रियस्तव किंनिमित्तंचपतनंब्रूहिमे-
यदिवेत्थह २४ युधिष्ठिरउवाच अतिभुक्तंचभवताप्राणेनचविकत्थसे अनवेक्ष्यपरंपार्थतेनासिपतितःक्षितौ २५ इत्यु
क्त्वातंमहाबाहुर्जगामानवलोकयन् श्वाप्येकोनुययौयस्तेबहुशःकीर्त्तितोमया २६ इतिश्रीमहाभारतेमहाप्रस्थानिकेपर्वणिद्विती
योऽध्यायः २ वैशंपायनउवाच ततःसन्नादयन्शक्रोदिवंभूमिंचसर्वशः रथेनोपययौपार्थमारोहेत्यब्रवीच्चतम् १ सभ्रातॄन्पति
तान्दृष्ट्वाधर्मराजोयुधिष्ठिरः अब्रवीच्छोकसंतप्तःसहस्राक्षमिदंवचः २ भ्रातरःपतितामेत्रगच्छेयुस्तेमयासह नविनाभ्रातृभिः
स्वर्गमिच्छेगंतुंसुरेश्वर ३ सुकुमारीसुखार्हाचराजपुत्रीपुरंदर साऽस्माभिःसहगच्छेततद्भवाननुमन्यताम् ४ शक्रउवाच
भ्रातॄन्द्रक्ष्यसिस्वर्गेत्वमग्रतस्त्रिदिवंगतान् कृष्णयासहितान्सर्वान्माशुचोभरतर्षभ ५ निक्षिप्यमानुषंदेहंगतास्तेभरतर्षभ अ
नेनत्वंशरीरेणस्वर्गंगंतानसंशयः ६ युधिष्ठिरउवाच अयंश्वाभूतभव्येशभक्तोमांनित्यमेवह सगच्छेतमयासार्धमानृश-
स्याहिमेमतिः ७ शक्रउवाच अमर्त्यत्वंमत्समत्वंचराजन्श्रियंचकृत्स्नांमहतींचैवसिद्धिम् संप्राप्तोद्यस्वर्गसुखानिचत्वंत्यज-
श्वानंनात्रनृशंसमस्ति ८ युधिष्ठिरउवाच अनार्यमार्येणसहस्रनेत्रशक्यंकर्त्तुंदुष्करमेतदार्य मामेश्रियासंगमनंतयास्तुयस्याः
कृतेभक्तजनंत्यजेयम् ९ इंद्रउवाच स्वर्गेलोकेश्ववतांनास्तिधिष्ण्यमिष्टापूर्त्तंक्रोधवशाहरंति ततोविचार्यक्रियतांधर्मराजत्यज
श्वानंनात्रनृशंसमस्ति १० युधिष्ठिरउवाच भक्तत्यागंप्राहुरत्यंतपापंतुल्यंलोकेब्रह्मवध्याकृतेन तस्मान्नाहंजातुकथंचनाद्यत्यक्ष्या
म्येनंस्वसुखार्थीमहेंद्र ११

मात्रभोज्येतितात्पर्यं १ २ ३ ४ ५ ६ अयंश्वेत्यादेर्नीचतरमपिसंनिहितंप्रथमंस्वसुखविभागेनसंभावयेत्पश्चा
त्स्वयंतद्भोक्तव्यमितितात्पर्यं ७ नात्रेतिअस्पृश्यसंगत्यागेनृशंसंनिर्दयत्वंनास्ति ८ ९ श्ववतामशुचिमतांधिष्ण्यंस्थानंस्वर्गेनास्ति क्रोधवशानामदेवगणाः
अशुचेरिष्टापूर्त्तफलंघ्नंति १० ११ ५२

१२ १३ १४ १५ १६ १७ अभिजातोसिकुलीनोसिपितुःपांडोः १८ १९ २० २१ २२ २३ २४ २५ निकायस्थोनिकायस्थः २६



भीतंभक्तंनान्यदस्तीतिचार्तंप्राप्तंक्षीणंरक्षणेप्राणलिप्सुम् प्राणत्यागादप्यहंनैवमोक्तुंयतेयंवैनित्यमेतद्व्रतंमे १२ इंद्रउवाच शु-
नादृष्टेक्रोधवशाहरंतियद्दत्तमिष्टंविवृतमथोहुतंच तस्माच्छुनस्त्यागमिमंकुरुष्व शुनस्त्यागात्प्राप्स्यसेदेवलोकम् १३ त्यक्त्वाभ्रा-
तॄन्दयितांचापिकृष्णांप्राप्तोलोकःकर्मणास्वेनवीर श्वानंचैनंनत्यजसेकथंनुत्यागंकृत्स्नंचास्थितोमुह्यसेद्य १४ युधिष्ठिरउवाच
नविद्यतेसंधिरथापिविग्रहोमृतैर्मर्त्यैरितिलोकेषुनिष्ठा नतेमयाजीवयितुंहिशक्यास्तस्मात्त्यागस्तेषुकृतोनजीवताम् १५ भीतिप्र
दानंशरणागतस्यस्त्रियावधोब्राह्मणस्वापहारः मित्रद्रोहस्तानिचत्वारिशक्रभक्तत्यागश्चैवसमोमतोमे १६ वैशंपायनउवाच
तद्धर्मराजस्यवचोनिशम्यधर्मस्वरूपीभगवानुवाच युधिष्ठिरंप्रीतियुक्तोनरेंद्रंश्लक्ष्णैर्वाक्यैःसंस्तवसंप्रयुक्तैः १७ धर्मराजउवा
च अभिजातोसिराजेंद्रपितुर्वृत्तेनमेधया अनुक्रोशेनचानेनसर्वभूतेषुभारत १८ पुराद्वैतवनेचासिमयापुत्रपरीक्षितः पा
नीयार्थेपराक्रांतायत्रतेभ्रातरोहताः १९ भीमार्जुनौपरित्यज्ययत्रत्वंभ्रातरावुभौ मात्रोःसाम्यमभीप्सन्वैनकुलंजीवमिच्छसि
२० अयंश्वाभक्तइत्येवंत्यक्तोदेवरथस्त्वया तस्मात्स्वर्गेनतेतुल्यःकश्चिदस्तिनराधिप २१ अतस्तवाक्षयालोकाःस्वशरीरेणभार
त प्राप्तोसिभरतश्रेष्ठदिव्यांगतिमनुत्तमाम् २२ वैशंपायनउवाच ततोधर्मश्चशक्रश्चमरुतश्चाश्विनावपि देवादेवर्षयश्चैवर
थमारोप्यपांडवम् २३ प्रययुःस्वैर्विमानैस्तेसिद्धाःकामविहारिणः सर्वेविरजसःपुण्याःपुण्यवाग्बुद्धिकर्मिणः २४ सतंरथंसमा
स्थायराजाकुरुकुलोद्वहः ऊर्ध्वमाचक्रमेशीघ्रंतेजसावृत्यरोदसी २५ ततोदेवनिकायस्थोनारदःसर्वलोकवित् उवाचोच्चैस्तदावा-
क्यंबृहद्वादीबृहत्तपाः २६ येपिराजर्षयःसर्वेतेचापिसमुपस्थिताः कीर्तिंप्रच्छाद्यतेषांवैकुरुराजोधितिष्ठति २७ लोकानावृत्यय
शसातेजसावृत्तसंपदा स्वशरीरेणसंप्राप्तंनान्यंशुश्रुमपांडवात् २८ नारदस्यवचःश्रुत्वाराजावचनमब्रवीत् देवानामंत्र्यधर्मा
त्मास्वपक्षांश्चैवपार्थिवान् २९ शुभंवायदिवापापंभ्रातॄणांस्थानमद्यमे तदेवप्राप्तुमिच्छामिलोकानन्यान्नकामये ३० राज्ञ
स्तुवचनंश्रुत्वादेवराजःपुरंदरः आनृशंस्यसमायुक्तंप्रत्युवाचयुधिष्ठिरम् ३१

वाक्यमेवादयंपीति समुपस्थिताःस्मृतिविषयाःसंति २७ २८ २९ यदेवभ्रातॄणांस्थानंतदेवप्राप्तुमिच्छामि ३० ३१ ७ ७ ७

३२ ३३ ३४ ३५ ३६ बृहतीश्यामा बृहतीपुष्पवत्श्यामा श्यामारुणवर्णेत्यर्थः सायत्रवागमिष्यतितत्रैवाहंगमिष्यामीत्यर्थः ३७

स्थानेस्मिन्वससराजेंद्रकर्मभिर्निर्जितेशुभैः किंत्वंमानुष्यकंस्नेहमद्यापिपरिकर्षसि ३२ सिद्धिंप्राप्तोसिपरमांयथाना-
न्यःपुमान्क्वचित् नैवतेंभ्रातरःस्थानंसंप्राप्ताःकुरुनंदन ३३ अद्यापिमानुषोभावःस्पृशतेत्वांनराधिप स्वर्गोयंपश्य
देवर्षीन्सिद्धांश्चत्रिदिवालयान् ३४ युधिष्ठिरस्तुदेवेंद्रमेवंवादिनमीश्वरम् पुनरेवाब्रवीद्धीमानिदंवचनमर्थवत् ३५
तैर्विनानोत्सहेवस्तुमिहदैत्यनिबर्हण गंतुमिच्छामितत्राहंयत्रमेभ्रातरोगताः ३६ यत्रसाबृहतीश्यामाबुद्धिसत्त्वगुणा
न्विता द्रौपदीयोषितांश्रेष्ठायत्रचैवगताामम ३७ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यांमहाप्रस्था
निकेपर्वणितृतीयोऽध्यायःसमाप्तः ३ ७ ७ ७ श्रीकृष्णार्पणमस्तु शुभमस्तु ७ ७
अस्यानंतरंस्वर्गारोहणपर्वभविष्यति तस्यायमाद्यःश्लोकः जनमेजयउवाच स्वर्गंत्रिविष्टपंप्राप्यममपूर्वपि
तामहाः पांडवाधार्तराष्ट्राश्चकानिस्थानानिभेजिरे १ ७ ७ ७ ७ ७ ७

इतिनैलकंठीयेभारतभावदीपेमहाप्रास्थानिकार्थप्रकाशेतृतीयोऽध्यायः ३ श्रीकृष्णार्पणमस्तु शुभमस्तु ७ ७ ७ ७

इतिश्रीमन्महाभारतेमहाभास्यानिकंपर्वसमाप्तम्


कौरवसभा
दुर्योधन
वैकुंठ
भगवान
धर्म
भीम
अर्जुन
नकुल
सहदेव
जनमे
नारद
अथश्रीमन्महाभारतेस्वर्गारोहणपर्वप्रारंभः
यमधर्म
धर्म
भीम
अर्जुन
द्रौपदी

श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीगुरुभ्योनमः पूर्वस्मिन्पर्वणिधर्मस्यफलभूतास्त्यागनृशंस्यादयोयुधिष्ठिरदृष्टांतेनेनदर्शिताः इदानींतस्यमुख्यंफलंदर्शयितुंस्वर्गारोहणपर्वआरभ्यते स्वर्गंत्रिविष्टपमिति यथाभूयस्यांसंख्यायामल्पसंख्यांतर्भवति एवंत्रीणिविष्टपानिभुवनानिफलोत्कर्षवशात्यत्रांतर्भवंति तादृशमपिस्वर्गंप्राप्य विष्टपंभुवनंजगदित्यमरः १ २ ३ ४ ५ ततइति स्वर्गेप्यमर्षोदुस्त्यजइतिसंस्काराणांप्राबल्यमुक्तम् ६ ७ हताः अस्माभिःसंधि



श्रीगणेशायनमः नारायणंनमस्कृत्यनरंचैवनरोत्तमम् देवींसरस्वतींचैवततोजयमुदीरयेत् १ जनमेजयउवाच स्वर्गंत्रिविष्टपंप्राप्यममपूर्वपितामहाः पांडवाधार्त्तराष्ट्राश्चकानिस्थानानिभेजिरे १ एतदिच्छाम्यहंश्रोतुंसर्वविच्चासिमेमतः महर्षिणाभ्यनुज्ञातोव्यासेनाद्भुतकर्मणा २ वैशंपायनउवाच स्वर्गंत्रिविष्टपंप्राप्यतवपूर्वपितामहाः युधिष्ठिरप्रभृतयोयदकुर्वंततच्छृणु ३ स्वर्गंत्रिविष्टपंप्राप्यधर्मराजोयुधिष्ठिरः दुर्योधनंश्रियाजुष्टंददर्शासीनमासने ४ भ्राजमानमिवादित्यंवीरलक्ष्म्याभिसंवृतम् देवैर्भ्राजिष्णुभिःसाध्यैःसहितंपुण्यकर्मभिः ५ ततोयुधिष्ठिरोदृष्ट्वादुर्योधनममर्षितः सहसासन्निवृत्तोभूच्छ्रियंदृष्ट्वासुयोधने ६ ब्रुवन्नुच्चैर्वचस्तान्वैनाहंदुर्योधनेनवै सहितःकामयेलोकान्लुब्धेनादीर्घदर्शिना ७ यत्कृतेपृथिवीसर्वासुहृदोबांधवास्तथा हतास्माभिःप्रसह्याजौक्लिष्टैःपूर्वंमहावने ८ द्रौपदीचसभामध्येपांचालीधर्मचारिणी पर्यक्लेशनवद्यांगीपत्नीनोगुरुसन्निधौ ९ अस्तिदेवानसंकामःसुयोधनमुदीक्षितुम् तत्राहंगंतुमिच्छामियत्रतेभ्रातरोमम १० नैवमित्यब्रवीत्तंतुनारदःप्रहसन्निव स्वर्गेनिवासेराजेंद्रविरुद्धंचापिनश्यति ११ युधिष्ठिरमहाबाहोमैवंवोचःकथंचन दुर्योधनंप्रतिनृपंशृणुचेदंवचोमम १२ एषदुर्योधनोराजापूज्यतेत्रिदशैःसह सद्भिश्चराजप्रवरैर्यइमेस्वर्गवासिनः १३ वीरलोकगतिंप्राप्तोयुद्धेहुत्वात्मनस्तनुम् यूयंसर्वेसुरसमाःसदैवानेनहिंसिताः १४ सएषःक्षत्रधर्मेणस्थानमेतदवाप्तवान् भयेमहतियोभीतोबभूवपृथिवीपतिः १५ नतन्मनसिकर्त्तव्यंपुत्रयद्द्यूतकारितम् द्रौपद्याश्चपरिक्लेशंनचिंतयितुमर्हसि १६ येचान्येपिपरिक्लेशायुष्माकंज्ञातिकारिताः संग्रामेष्वथवान्यत्रनतान्संस्मर्त्तुमर्हसि १७ समागच्छयथान्यायंराजादुर्योधनेनवै स्वर्गोयंनेहवैराणिभवंतिमनुजाधिप १८

रार्थः ८ ९ १० विरुद्धंवैरादिकंनश्यतिअंतर्धीयते ११ १२
१३ १४ अभीतइतिच्छेदः १५ १६ १७ १८ ॥ ॥ ॥ ॥ ॥ ॥

१९ सुहृदइत्यदंतःशब्दः २० २१ २२ २३ २४ २५ २६ इतिस्वर्गारोहणपर्वणिटीकायांप्रथमोऽध्यायः १ १ २ ३ ४

नारदेनैवमुक्तस्तुकुरुराजोयुधिष्ठिरः भ्रातॄन्प्रपच्छमेधावीवाक्यमेतदुवाचह १९ यदिदुर्योधनस्यैतेवीरलोकाःसनातनाः अध
र्मज्ञस्यपापस्यपृथिवीसुहृदद्रुहः २० यत्कृतेपृथिवीनष्टासहयासनरद्विपा वयंचमन्युनादग्धावैरंप्रतिचिकीर्षवः २१ येतेवीरामहा
त्मानोभ्रातरोमेमहाव्रताः सत्यप्रतिज्ञालोकस्यशूरावैसत्यवादिनः २२ तेषामिदानींकेलोकाद्रष्टुमिच्छामितानहम् कर्णंचैवमहात्मा
नंकौंतेयंसत्यसंगरम् २३ धृष्टद्युम्नंसात्यकिंचधृष्टद्युम्नस्यचात्मजान् येचशस्त्रैर्वधंप्राप्ताःक्षत्रधर्मेणपार्थिवाः २४ क्वनुतेपार्थिवाब्र
ह्मन्नैनान्पश्यामिनारद विराटद्रुपदौचैवधृष्टकेतुमुखांश्चतान् २५ शिखंडिनंतुपांचाल्यंद्रौपदेयांश्चसर्वशः अभिमन्युंचदुर्धर्षंद्रष्टुमि
च्छामिनारद २६ इतिश्रीमहाभारतेस्वर्गारोहणपर्वणिप्रथमोऽध्यायः १ युधिष्ठिरउवाच नेहपश्यामिविबुधाराधेयममितौ
जसम् भ्रातरौचमहात्मानौयुधामन्यूत्तमौजसौ १ जुहुवुर्येशरीराणिरणवह्नौमहारथाः राजानोराजपुत्राश्चयेमदर्थेहतारणे २ क्वतेम
हारथाःसर्वेशार्दूलसमविक्रमाः तैरप्ययंजितोलोकःकच्चित्पुरुषसत्तमैः ३ यदिलोकानिमान्प्राप्तास्तेचसर्वेमहारथाः स्थितंवित्तहिमांदे
वाःसहितंतैर्महात्मभिः ४ कच्चिन्नतैरवाप्तोयंनृपैर्लोकोऽक्षयःप्रभुः नतैरहंविनारंस्येभ्रातृभिर्ज्ञातिभिस्तथा ५ मातुर्हिवचनंश्रुत्वात
दासलिलकर्मणि कर्णस्यक्रियतांतोयमितितप्यामितेनवै ६ इदंचपरितप्यामिपुनःपुनरहंसुराः यन्मातुःसदृशौपादौतस्याहममितात्म
नः ७ दृष्ट्वैवतौनानुगतःकर्णंपरबलार्दनम् नह्यस्मान्कर्णसहितान्जयेच्छक्रोपिसंयुगे ८ तमहंयत्रतत्रस्थंद्रष्टुमिच्छामिसूर्यज
म् अविज्ञातोमयायोसौघातितःसव्यसाचिना ९ भीमंचभीमविक्रांतंप्राणेभ्योपिप्रियंमम अर्जुनंचेंद्रसंकाशंयमौचैवयमोपमौ १०
द्रष्टुमिच्छामितांचाहंपांचालींधर्मचारिणीम् नचेहस्थातुमिच्छामिसत्यमेतद्ब्रवीमिवः ११ किंमेभ्रातृविहीनस्यस्वर्गेणसुरसत्तमाः य
त्रतेममसस्वर्गोनायंस्वर्गोमतोमम १२ देवाऊचुः यदिवैतत्रतेश्रद्धागम्यतांपुत्रमाचिरम् प्रियेहितववर्त्तामोदेवराजस्यशासना
त् १३ वैशंपायनउवाच इत्युक्त्वातंततोदेवादेवदूतमुपादिशन् युधिष्ठिरस्यसुहृदोदर्शयेतिपरंतप १४ ततःकुंतीसुतोराजादेव
दूतश्चजग्मतुः सहितौराजशार्दूलयत्रतेपुरुषर्षभाः १५ अग्रतोदेवदूतस्तुययौराजाचपृष्ठतः पंथानमशुभंदुर्गंसेवितंपापकर्मभिः १६

५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ छ. छ. छ. छ. छ. छ.

नमसासंवृतंघोरंकेशशैवलशाड्वलम् युक्तंपापकृतांगंधैर्मांसशोणितकर्दमम् १७ दंशोत्पातकभल्लूकमक्षिकामशकावृतम् इ-
तश्चेतश्चकुणपैःसमंतात्परिवारितम् १८ अस्थिकेशसमाकीर्णंकृमिकीटसमाकुलम् ज्वलनेनप्रदीप्तेनसमंतात्परिवेष्टितम् १९ अ
योमुखैश्चकाकाद्यैर्गृध्रैश्चसमभिद्रुतम् सूचीमुखैस्तथाप्रेतैर्विंध्यशैलोपमैर्वृतम् २० मेदोरुधिरयुक्तैश्चच्छिन्नबाहूरुपाणिभिः नि
कृत्तोदरपादैश्चतत्रतत्रप्रवेरितैः २१ सतत्कुणपदुर्गंधमशिवंलोमहर्षणम् जगामराजाधर्मात्मामध्येबहुविचिंतयन् २२ ददर्शोष्णोद
कैःकीर्णांनदींचापिसुदुर्गमाम् असिपत्रवनंचैवनिशितक्षुरसंवृतम् २३ करंभवालुकास्तप्ताआयसीश्चशिलाःपृथक् लोहकुंभी
श्चतैलस्यक्वथ्यमानाःसमंततः २४ कूटशाल्मलिकंचापिदुःस्पर्शंतीक्ष्णकंटकम् ददर्शचापिकौंतेयोयातनाःपापकर्मिणाम् २५ स
तंदुर्गंधमालक्ष्यदेवदूतमुवाचह कियद्दध्वानमस्माभिर्गंतव्यमिममीदृशम् २६ क्वचतेभ्रातरोमह्यंतन्ममाख्यातुमर्हसि देशोयंक
श्चदेवानामेतदिच्छामिवेदितुम् २७ ससन्निववृतेश्रुत्वाधर्मराजस्यभाषितम् देवदूतोब्रवीच्चैनमेतावद्गमनंतव २८ निवर्त्तितव्यो
हिमयातथास्म्युक्तोदिवौकसैः यदिश्रांतोसिराजेंद्रत्वमथागंतुमर्हसि २९ युधिष्ठिरस्तुनिर्विण्णस्तेनगंधेनमूर्छितः निवर्त्तनेधृत
मनाःपर्यावर्त्ततभारत ३० ससन्निवृत्तोधर्मात्मादुःखशोकसमाहतः शुश्रावतत्रवदतांदीनावाचःसमंततः ३१ भोभोधर्मजराज
र्षेपुण्याभिजनपांडव अनुग्रहार्थमस्माकंतिष्ठतावन्मुहूर्त्तकम् ३२ आयातित्वयिदुर्धर्षेवातिपुण्यःसमीरणः तवगंधानुगस्तात
येनास्मान्सुखमागमत् ३३ तवयंपार्थदीर्घस्यकालस्यपुरुषर्षभ सुखमासादयिष्यामस्त्वांदृष्ट्वाराजसत्तम ३४ संतिष्ठस्वमहाबा
होमुहूर्त्तमपिभारत त्वयितिष्ठतिकौरव्ययातनास्मान्नबाधते ३५ एवंबहुविधावाचःकृपणावेदनावताम् तस्मिन्देशेसशुश्राव-
समंताद्वदतांनृप ३६ तेषांतुवचनंश्रुत्वादयावान्दीनभाषिणाम् अहोकृच्छ्रमितिप्राहतस्थौसचयुधिष्ठिरः ३७ सतागिरःपुर-
स्ताद्वैश्रुतपूर्वाःपुनःपुनः ग्लानानांदुःखितानांचनाभ्यजानतपांडवः ३८ अबुध्यमानस्तावाचोधर्मपुत्रोयुधिष्ठिरः उवाचकेभवंतोवै
किमर्थंचेहतिष्ठत ३९ इत्युक्तास्ततेततःसर्वेसमंतादवभाषिरे कर्णोहंभीमसेनोहमर्जुनोहमितिप्रभो ४० नकुलःसहदेवोहंधृष्टद्युम्नोह
मित्यत द्रौपदीद्रौपदेयाश्चइत्येवंतेविचुक्रुशुः ४१

४२ ४३ ४४ ४५ ४६ ४७ ४८ विममर्षविचारंकृतवान् ४९ ५० ५१ ५२ ५३ ५४ इतिस्वर्गारोहणप

ताञ्चाचः सततदाऽभ्युत्थानदेशंसंददर्शानृप ततोविममृषेराजाकिंन्विदंदैवकारितम् ४२ किंतुनत्कलुषंकर्मकृतमेभिर्महात्मभिः क
र्णेनद्रौपदेयैर्वापांचाल्यावास्कमध्यया ४३ यइमेपापगंधेस्मिन्देशेसंतिस्कदारुणे नाहंजानामिसर्वेषांदुष्कृतंपुण्यकर्मणाम् ४४
किंकृत्वाधृतराष्ट्रस्यपुत्रोराजासुयोधनः तथाश्रियासुतःपापैःसहसर्वैःपदानुगैः ४५ महेंद्रइवलक्ष्मीवानास्तेपरमपूजितः कस्येदा
नींविकारोयंयइमेनरकंगताः ४६ सर्वधर्मविदःशूराःसत्यागमपरायणाः क्षत्रधर्मपराःसंतोयज्वानोभूरिदक्षिणाः ४७ किंनुसुप्तोः
स्मिजागर्मिचेतयामिनचेतये अहोचित्तविकारोयंस्याद्वामेचित्तविभ्रमः ४८ एवंबहुविधंराजाविममर्शयुधिष्ठिरः दुःखशोकसमाविष्ट-
श्चिंताव्याकुलितेंद्रियः ४९ क्रोधमाहारयच्चैवतीव्रंधर्मसुतोनृपः देवांश्चगर्हयामासधर्मंचैवयुधिष्ठिरः ५० सतीव्रगंधसंतप्तोदेवदूतमु
वाचह गम्यतांयत्रयेषांत्वंततस्तेषामुपांतिकम् ५१ नह्यहंतत्रयास्यामिस्थितोस्मीतिनिवेद्यताम् मत्संश्रयादिमेदूतसुखिनोभ्रातरोहि
मे ५२ इत्युक्तःसतदादूतःपांडुपुत्रेणधीमता जगामतत्रयत्रास्तेदेवराजःशतक्रतुः ५३ निवेदयामासचतद्धर्मराजचिकीर्षितम् यथोक्तं
धर्मपुत्रेणसर्वमेवजनाधिप ५४ इतिश्रीमहाभारतेस्वर्गारोहणपर्वणिद्वितीयोऽध्यायः २ वैशंपायनउवाच स्थितेमुहूर्तंपा
र्थेतुधर्मराजेयुधिष्ठिरे आजग्मुस्तत्रकौरव्यदेवाःशक्रपुरोगमाः १ सचविग्रहवान्धर्मोराजानंप्रसमीक्षितुम् तत्राजगामयत्रासौकुरुरा
जोयुधिष्ठिरः २ तेषुभासुरदेहेषुपुण्याभिजनकर्मसु समागतेषुदेवेषुव्यगमत्तत्तमोनृप ३ नादृश्यंतचतास्तत्रयातनाःपापकर्मिणाम्
नदीवैतरणीचैवकूटशाल्मलिनासह ४ लोहकुंभ्यःशिलाश्चैवनादृश्यंतभयानकाः विकृतानिशरीराणियानितत्रसमंततः ५ ददर्श
राजाकौरव्यस्तान्यदृश्यानिचाभवन् ततोवायुःसुखस्पर्शःपुण्यगंधवहःशुचिः ६ ववौदेवसमीपस्थःशीतलोतीवभारत मरुतःसह
शक्रेणवसवश्चाश्विनौसह ७ साध्यारुद्रास्तथादित्यायेचान्येपिदिवौकसः सर्वेतत्रसमाजग्मुःसिद्धाश्चपरमर्षयः ८ यत्रराजामहा
ताधर्मसुतःस्थितोऽभवत् ततःशक्रःसुरपतिःश्रियापरमयायुतः ९ युधिष्ठिरमुवाचेदंसांत्वपूर्वमिदंवचः युधिष्ठिरमहाबाहो
ल्लोकाश्चाप्यक्षयास्तव १० एह्येहिपुरुषव्याघ्रकृतमेतावताविभो सिद्धिःप्राप्तामहाबाहोलोकाश्चाप्यक्षयास्तव ११

र्वणिटीकायांद्वितीयोऽध्यायः २ ७. १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ ७.

१२ शत्रूणांस्वर्गः भ्रातॄणांनरकइति युधिष्ठिरस्यईर्ष्याविषादावपनयतिपइति १३ १४ हतः कुंजरइति अश्वत्थामवधेद्रोणमुपाचीर्णः वंचितः गजवा-



नचमन्युस्त्वयाकार्यःशृणुचेदंवचोमम अवश्यंनरकस्तातद्रष्टव्यःसर्वराजभिः १२ शुभानामशुभानांचद्वौराशीपुरुषर्षभ यः
पूर्वंसुकृतंभुंक्तेपश्चान्निरयमेवसः १३ पूर्वंनरकभाग्यस्तुपश्चात्स्वर्गमुपैतिसः भूयिष्ठंपापकर्मायःसपूर्वंस्वर्गमश्नुते १४ तेनत्वमेवं
गमितोमयाश्रेयोर्थिनानृप व्याजेनहित्वयाद्रोणउपचीर्णःसुतंप्रति १५ व्याजेनैवततोराजन्दर्शितोनरकस्तव यथैवत्वंतथाभीमस्त
थापार्थोयमौतथा १६ द्रौपदीचतथाकृष्णाव्याजेननरकंगताः आगच्छनरशार्दूलमुक्तास्तेचैवकल्मषात् १७ स्वपक्षाश्चैवयेतुभ्यंपा
र्थिवानिहतारणे सर्वेस्वर्गमनुप्राप्तास्तान्पश्यभरतर्षभ १८ कर्णश्चैवमहेष्वासःसर्वशस्त्रभृतांवरः सगतःपरमांसिद्धिंयदर्थंपरितप्य
से १९ तंपश्यपुरुषव्याघ्रमादित्यतनयंविभो स्वस्थानस्थंमहाबाहोजहिशोकंनरर्षभ २० भ्रातॄंश्चान्यांस्तथापश्यस्वपक्षांश्चैवपार्थि
वान् स्वंस्वंस्थानमनुप्राप्तान्व्येतुतेमानसोज्वरः २१ कृच्छ्रंपूर्वंचानुभूयइतःप्रभृतिकौरव विहरस्वमयासार्धंगतशोकोनिरामयः २२
कर्मणांतातपुण्यानांजितानांतपसास्वयम् दानानांचमहाबाहोफलंप्राप्नुहिपार्थिव २३ अद्यत्वांदेवगंधर्वादिव्याश्चाप्सरसोदिवि उप
सेवंतुकल्याणविरजोंबरभूषणाः २४ राजसूयजिताँल्लोकान्स्वयमेवासिऋद्धितान् प्राप्नुहित्वंमहाबाहोतपसश्चमहाफलम् २५ उ
पर्युपरिराज्ञांहितवलोकायुधिष्ठिर हरिश्चंद्रसमाःपार्थयेषुत्वंविहरिष्यसि २६ मांधातायत्रराजर्षिर्यत्रराजाभगीरथः दौष्यंतिर्यत्रभ
रतस्तत्रत्वंविहरिष्यसि २७ एषादेवनदीपुण्यापार्थत्रैलोक्यपावनी आकाशगंगाराजेंद्रतत्राप्लुत्यगमिष्यसि २८ अत्रस्नातस्यभा
वस्तेमानुषोविगमिष्यति गतशोकोनिरायासोमुक्तवैरोभविष्यसि २९ एवंब्रुवतिदेवेंद्रेकौरवेंद्रंयुधिष्ठिरम् धर्मोविग्रहवान्साक्षा-
दुवाचसुतमात्मनः ३० भोभोराजन्महाप्राज्ञप्रीतोऽस्मितवपुत्रक मद्भक्त्यासत्यवाक्येनक्षमयाचदमेनच ३१ एषातृतीयाजिज्ञासा
तवराजन्कृतामया नशक्यसेचालयितुंस्वभावात्पार्थहेतुतः ३२ पूर्वंपरीक्षितोहित्वमाप्रश्नाद्द्वैतवनेमया अरणीसहितस्यार्थेतच्चानि
स्तीर्णवानसि ३३ सोदर्येषुविनष्टेषुद्रौपद्यातत्रभारत श्वरूपधारिणापुत्रपुनस्त्वंमेपरीक्षितः ३४ इदंतृतीयंभ्रातॄणामर्थेयत्स्था
तुमिच्छसि विशुद्धोसिमहाभागसुखीविगतकल्मषः ३५

चीशब्दोमनुष्यपरत्वेनज्ञापितइत्युपचारच्छलेनेत्यर्थः १५ १६ १७ १८ १९ २० २१ २२ २३ २४ असिऋद्धितान्
खड्गबलेनवृद्धिंप्रापितान् २५ २६ २७ २८ २९ ३० ३१ जिज्ञासापरीक्षा ३२ ३३ स्वर्गाधिरोहणेद्रौपद्यासहसोदर्येषुविनष्टेषुसत्सु श्वरूपधारिणाशुनकरूपिणा
द्रौपद्याइतिपंचमीपाठेतामारभ्येत्यर्थः ३४ ३५

नचतेभ्रातरःपार्थनरकार्हाविशांपते मायैषादेवराजेनमहेंद्रेणप्रयोजिता ३६ अवश्यंनरकास्तातद्रष्टव्याःसर्वराजभिः ततस्त्व-
याप्राप्तमिदंमुहूर्त्तंदुःखमुत्तमम् ३७ नसव्यसाचीभीमोवायमौवापुरुषर्षभौ कर्णोवासत्यवाक्शूरोनरकार्हाश्चिरंनृप ३८ न
कृष्णाराजपुत्रीचनरकार्हायुधिष्ठिर एह्येहिभरतश्रेष्ठपश्यगंगांत्रिलोकगाम् ३९ एवमुक्तःसराजर्षिस्तवपूर्वपितामहः जगामस
हधर्मेणसर्वैश्चत्रिदिवालयैः ४० गंगांदेवनदींपुण्यांपावनीमृषिसंस्तुताम् अवगाह्यततोराजातनुंतत्याजमानुषीम् ४१ ततोदिव्य
वपुर्भूत्वाधर्मराजोयुधिष्ठिरः निर्वैरोगतसंतापोजलेतस्मिन्समाप्लुतः ४२ ततोययौवृतोदेवैःकुरुराजोयुधिष्ठिरः धर्मेणसहितोधी
मान्स्तूयमानोमहर्षिभिः ४३ यत्रतेपुरुषव्याघ्राःशूराविगतमन्यवः पांडवाधार्त्तराष्ट्राश्चस्वानिस्थानानिभेजिरे ४४ इतिश्रीमहा
भारतेस्वर्गारोहणपर्वणियुधिष्ठिरतनुत्यागेतृतीयोऽध्यायः ३ वैशंपायनउवाच ततोयुधिष्ठिरोराजादेवैःसर्षिमरुद्गणैः स्तू
यमानोययौतत्रयत्रतेकुरुपुंगवाः १ ददर्शतत्रगोविंदंब्राह्मेणवपुषान्वितम् तेनैवदृष्टपूर्वेणसादृश्येनैवसूचितम् २ दीप्यमानंस्व
वपुषादिव्यैरस्त्रैरुपस्थितम् चक्रप्रभृतिभिर्घोरैर्दिव्यैःपुरुषविग्रहैः ३ उपास्यमानंवीरेणफाल्गुनेनसुवर्चसा तथास्वरूपंकौंते
योददर्शमधुसूदनम ४ तावुभौपुरुषव्याघ्रौसमुद्वीक्ष्ययुधिष्ठिरम् यथावत्प्रतिपेदातेपूजयादेवपूजितौ ५ अपरस्मिन्नथोद्देशेक
र्णंशस्त्रभृतांवरम् द्वादशादित्यसहितंददर्शकुरुनंदनः ६ अथापरस्मिन्नुद्देशेमरुद्गणवृतंविभुम् भीमसेनमथापश्यत्तेनवपुषा-
न्वितम् ७ वायोर्मूर्तिमतःपार्श्वेदिव्यमूर्तिसमन्वितम श्रियापरमयायुक्तंसिद्धिंपरमिकांगतम् ८ अश्विनोस्तुतथास्थानेदीप्यमा
नौस्वतेजसा नकुलंसहदेवंचददर्शकुरुनंदनः ९ तथाददर्शपांचालींकमलोत्पलमालिनीम् वपुषास्वर्गमाक्रम्यतिष्ठंतीमर्कवर्चस
म् १० अथैनांसहसाराजाप्रष्टुमैच्छद्युधिष्ठिरः ततोस्यभगवानिंद्रःकथयामासदेवराट् ११ श्रीरेषाद्रौपदीरूपात्वदर्थेमानुषंगता
अयोनिजालोककांतापुण्यगंधायुधिष्ठिर १२ रत्यर्थंभवतांह्येषानिर्मिताशूलपाणिना द्रुपदस्यकुलेजाताभवद्भिश्चोपजीविता
१३ एतेपंचमहाभागागंधर्वाःपावकप्रभाः द्रौपद्यास्तनयाराजन्युष्माकममितौजसः १४

१५ १६ १७ १८ १९ २० २१ २२ २३ इतिस्वर्गारोहणपर्वणिटीकायांचतुर्थोऽध्यायः ४ ७. पूर्वस्मिन्नध्यायेयोयोयोधोयस्यदेव
स्यांशः सस्वर्गगत्वास्वस्यस्वस्य अंशिनः सान्निध्यंप्रापेत्युक्तम् तत्रसंशयः किमेते अंशाः कांडरूपाणांवृक्षाणामंशाइवपृथक्संसारित्वंप्राप्ताः उततेष्वेवांशिषु-
लीयंते आद्येकर्मजदेहपरंपरायास्तत्वज्ञानमंतरेणोच्छेदायोगात् तेषांनित्यसंसारित्वमस्मदादिवत्स्यात् द्वितीयेमानुष्यभावेतैः कृतानांकर्मणांनाशप्रसक्ति

पश्यगंधर्वराजानंधृतराष्ट्रंमनीषिणम् एनंचत्वंविजानीहिभ्रातरंपूर्वजंपितुः १५ अयंतेपूर्वजोभ्राताकौंतेयःपावकद्युतिः सूर्य-
पुत्रोग्रजः श्रेष्ठोराधेयइतिविश्रुतः १६ आदित्यसहशोयातिपश्यैनंपुरुषर्षभम् साध्यानामथदेवानांविश्वेषांमरुतामपि १७ गणेषु
पश्यराजेंद्रवृष्ण्यंधकमहारथान् सात्यकिप्रमुखान्वीरान्भोजांश्चैवमहाबलान् १८ सोमेनसहितंपश्यसौभद्रमपराजितम् अ
भिमन्युंमहेष्वासंनिशाकरसमद्युतिम् १९ एषपांडुर्महेष्वासःकुंत्यामाद्र्याचसंगतः विमानेनसदाभ्येतिपितातवममांतिकम् २०
वसुभिःसहितंपश्यभीष्मंशांतनवंनृपम् द्रोणंबृहस्पतेःपार्श्वेगुरुमेनंनिशामय. २१ एतेचान्येमहीपालायोधास्तवचपांडव गंध-
र्वसहितायांतियक्षपुण्यजनैस्तथा २२ गुह्यकानांगतिंचापिकेचित्प्राप्तानराधिपाः त्यक्त्वादेहंजितःस्वर्गःपुण्यवाग्बुद्धिकर्मभिः
२३ इतिश्रीमहाभारतेस्वर्गारोहणपर्वणिचतुर्थोऽध्यायः ४ जनमेजयउवाच भीष्मद्रोणौमहात्मानौधृतराष्ट्रश्च
पार्थिवः विराटद्रुपदौचोभौशंखश्चैवोत्तरस्तथा. १ धृतकेतुर्जयत्सेनोराजाचैवससत्यजित् दुर्योधनसुताश्चैवशकुनिश्चैवसौ
बलः २ कर्णपुत्राश्चविक्रांताराजाचैवजयद्रथः घटोत्कचादयश्चैवयेचान्येनानुकीर्तिताः ३ येचान्येकीर्तितावीराराजानोदी
प्तमूर्तयः स्वर्गेकालंकियंतंतेतस्थुस्तदपिशंसमे ४ आहोस्विच्छाश्वतंस्थानंतेषांतत्रद्विजोत्तम अंतेवाकर्मणांकांगतिंप्राप्तानर
र्षभाः ५ एतदिच्छाम्यहंश्रोतुंप्रोच्यमानंद्विजोत्तम तपसाहिप्रदीप्तेनसर्वंत्वमनुपश्यसि ६ सौतिरुवाच इत्युक्तःसतुविप्रर्षि
रनुज्ञातोमहात्मना व्यासेनतस्यनृपतेराख्यातुमुपचक्रमे ७ वैशंपायनउवाच नशक्यंकर्मणामंतेसर्वेणमनुजाधिप प्रकृतिंकिं
नुसम्यक्तेपृच्छैषासंप्रयोजिता ८

रितिसंदिहानोजनमेजयः पृच्छति भीष्मद्रोणाविति १ २ ३ ४ तेअंतेकांगतिंपुण्यभोगांतेअंशिनासहऐक्यंवासालोक्यंवाशाश्व-
तंप्राप्नुवंति उतभूमावेवावतरंतीतिप्रश्नः ५ ६ ७ अत्रोत्तरमाहनशक्यमिति कर्मणामंतेसर्वेणप्रकृतिंप्रतिगंतुंनशक्यमित्यध्याहृत्ययोज्यं यदिसर्वोपिजंतुःप्रारब्धेकर्मां
तेस्वांप्रकृतिंगच्छेत्तर्हिसर्वेपिमुक्ताःस्युःसंसारश्चादिमान्भवेत ततश्चकृतहानाकृताभ्यागमप्रसंगोविधिप्रतिषेधशास्त्रानर्थक्यंचस्यात्केचिदेवकर्मणामंतेस्वांप्रकृतिंभुंजते ४
नसर्वेइति किंतर्हियेप्रकृतिंनप्राप्तास्तानुद्दिश्यतेत्वयैषापृच्छासम्यक्प्रयोजिता ८

तत्र कांश्चित्स्वर्गप्रापककर्मणामंते स्वैःस्वैः शरीरैः सह तत्तादात्म्यं प्राप्तान् योगसामर्थ्यात् योगजदृष्ट्या पश्यन् परिगणयति शृण्वित्यादिना इतरे स्वर्गगता अपि पुनश्च्यवंते एते तु उ
त्तरामुत्तरां भूमिं ऊर्ध्वक्रमेण गतिं प्राप्य अंते ब्रह्मणा सह मुच्यंते तेन देवत्वप्राप्त्यर्थं कर्माणि यज्ञदानतपआदीनि कर्तव्यान्येव न चोक्तदोष इति सर्वमनवद्यं ९ १० ११

शृणु गुह्यमिदं राजन्देवानां भरतर्षभ यदुवाच महातेजा दिव्यचक्षुः प्रतापवान् ९ मुनिः पुराणः कौरव्य पाराशर्यो महाव्रतः अगाधबु
द्धिः सर्वज्ञो गतिज्ञः सर्वकर्मणाम् १० वसूनेव महातेजा भीष्मः प्राप महाद्युतिः अष्टावेव हि दृश्यन्ते वसवो भरतर्षभ ११ बृहस्पतिं विवेशा
थ द्रोणो ह्यङ्गिरसां वरम् कृतवर्मा तु हार्दिक्यः प्रविवेश मरुद्गणान् १२ सनत्कुमारं प्रद्युम्नः प्रविवेश यथागतम् धृतराष्ट्रो धनेशस्य लो
कान्प्राप दुरासदान् १३ धृतराष्ट्रेण सहिता गान्धारी च यशस्विनी पत्नीभ्यां सहितः पाण्डुर्महेन्द्रसदनं ययौ १४ विराटद्रुपदौ चोभौ धृष्टके
तुश्च पार्थिवः निशठाक्रूरसाम्बाश्च भानुः कम्पो विदूरथः १५ भूरिश्रवाः शलश्चैव भूरिश्च पृथिवीपतिः कंसश्चैवोग्रसेनश्च वसुदेवस्तथैव
च १६ उत्तरश्च सह भ्रात्रा शङ्खेन नरपुंगवः विश्वेषां देवतानां ते विविशुर्नरसत्तमाः १७ वर्चा नाम महातेजाः सोमपुत्रः प्रतापवान् सो
ऽभिमन्युर्नृसिंहस्य फाल्गुनस्य सुतोऽभवत् १८ स युद्ध्वा क्षत्रधर्मेण यथा नान्यः पुमान्क्वचित् विवेश सोमं धर्मात्मा कर्मणोऽन्ते महारथः १९
आविवेश रविं कर्णो निहतः पुरुषर्षभ द्वापरं शकुनिः प्राप धृष्टद्युम्नस्तु पावकम् २० धृतराष्ट्रात्मजाः सर्वे यातुधाना बलोत्कटाः ऋद्धि
मन्तो महात्मानः शस्त्रपूता दिवं गताः २१ धर्ममेवाविशत्क्षत्ता राजा चैव युधिष्ठिरः अनन्तो भगवान्देवः प्रविवेश रसातलम् २२ पिता
महनियोगाद्धि यो योगाद्गामधारयत् यः स नारायणो नाम देवदेवः सनातनः २३ तस्यांशो वासुदेवस्तु कर्मणान्ते विवेश ह षोडश स्त्रीस
हस्राणि वासुदेवपरिग्रहः २४ अमज्जंस्ताः सरस्वत्यां कालेन जनमेजय तत्र त्यक्त्वा शरीराणि दिवमारुरुहुः पुनः २५ ताश्चैवाप्सरसो
भूत्वा वासुदेवमुपागमन् हतास्तस्मिन्महायुद्धे ये वीरास्तु महारथाः २६ घटोत्कचादयः सर्वे देवान्यक्षांश्च भेजिरे दुर्योधनसहायाश्च
राक्षसाः परिकीर्तिताः २७ प्राप्तास्ते क्रमशो राजन्सर्वल्लोकाननुत्तमान् भवनं च महेन्द्रस्य कुबेरस्य च धीमतः २८ वरुणस्य तथा लोका
न्विविशुः पुरुषर्षभाः एतत्ते सर्वमाख्यातं विस्तरेण महाद्युते २९ कुरूणां चरितं कृत्स्नं पाण्डवानां च भारत सौतिरुवाच एतच्छ्रु
त्वा द्विजश्रेष्ठाः स राजा जनमेजयः विस्मितोऽभवदत्यर्थं यज्ञकर्मान्तरेष्वथ ३०

१२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ एवं पांड
वानां कथां समाप्य जनमेजयस्य यज्ञे वैशंपायनेनैतां कथामुक्तवानिति प्रकृतमनुसंदधानः सौतिरुवाच एतच्छ्रुत्वेत्यादि ३० ७ ७ ७ ७

 ३१ ३२ ३३ समाज्ञातंमयासूतेन व्यासाज्ञयावैशंपायनेनकीर्त्तितंन ३४ ३५ विधिज्ञेनदैवज्ञेन अतींद्रियेणइंद्रियाण्यतिक्रांतेन योगबलादेवसर्व 
दर्शनसिद्धेरित्याह तपसेतिभाविनात्मनाशोधितचित्तेन ३६ ३७ सर्वेषांनृपतीयानांनामनिर्मितमित्यनेनान्वयः अन्येषामपिकीर्तिमथयतेतिसंबंधः ३८ ब्रह्मभूया 
यमोक्षायकल्पते॰ प्रोक्तसाधनानुष्ठानुक्रमेण ३९ ४० अंततःनिकटं ४१ अन्हेतिमहाभारतस्यअल्पमपिपश्चिमायांसंध्यायांपठ्यतेचेद्दिनकृतंपापंनश्यति

ततःसमापयामासुःकर्मतत्तस्ययाजकाः आस्तीकश्चाभवत्प्रीतःपरिमोक्ष्यभुजंगमान् ३१ ततोद्विजातीन्सर्वांस्तान्दक्षिणाभिरतोषयत्
पूजिताश्चापितेराज्ञाततोजग्मुर्यथागतम् ३२ विसर्जयित्वाविप्रांस्तान्राजापिजनमेजयः ततस्तक्षशिलायाःसपुनरायाद्गजाह्वयम्
३३ एतत्तेसर्वमाख्यातंवैशंपायनकीर्त्तितम् व्यासाज्ञयासमाज्ञातंसर्पसत्रेनृपस्यहि ३४ पुण्योऽयमितिहासाख्यःपवित्रंचेदमुत्तमम् कृ-
ष्णेनमुनिनाविप्रनिर्मितंसत्यवादिना ३५ सर्वज्ञेनविधिज्ञेनधर्मज्ञानवतासता अतींद्रियेणशुचिनातपसाभावितात्मना ३६ ऐश्वर्येवर्त्त
ताचैवसांख्ययोगवतातथा नैकतंत्रविबुद्धेनदृष्ट्वादिव्येनचक्षुषा ३७ कीर्तिंप्रथयतालोकेपांडवानांमहात्मनाम् अन्येषांक्षत्रिया-
णांचभूरिद्रविणतेजसाम् ३८ यश्चेदंश्रावयेद्विद्वान्सदापर्वणिपर्वणि धूतपाप्माजितस्वर्गोब्रह्मभूयायकल्पते ३९ कार्त्स्न्यंवेदमिमंस
र्वंशृणुयाद्यःसमाहितः ब्रह्महत्यादिपापानांकोटिस्तस्यविनश्यति ४० यश्चेदंश्रावयेच्छ्राद्धेब्राह्मणान्पादमंततः अक्षय्यमन्नपानंवै-
पितॄंस्तस्योपतिष्ठते ४१ अन्हायदेनःकुरुतेइंद्रियैर्मनसापिवा महाभारतमाख्यायपश्चात्संध्यांप्रमुच्यते ४२ यद्रात्रौकुरुतेपापंब्राह्मण
स्त्रीगणैर्वृतः महाभारतमाख्यायपूर्वांसंध्यांप्रमुच्यते ४३ महत्त्वाद्भारतत्वाच्चमहाभारतमुच्यते निरुक्तमस्ययोवेदसर्वपापैःप्रमुच्यते
४४ धर्मेचार्थेचकामेचमोक्षेचभरतर्षभ यदिहास्तितदन्यत्रयन्नेहास्तिनकुत्रचित् ४५ जयोनामेतिहासोऽयंश्रोतव्योमोक्षमिच्छता
ब्राह्मणेनचराज्ञाचगर्भिण्याचैवयोषिता ४६ स्वर्गकामोलभेत्स्वर्गंजयकामोलभेज्जयम् गर्भिणीलभतेपुत्रंकन्यांवाबहुभागिनीम्
४७ अनागतश्चमोक्षश्चकृष्णद्वैपायनःप्रभुः संदर्भंभारतस्यास्यकृतवान्धर्मकाम्यया ४८ षष्टिंशतसहस्राणिचकारान्यांससंहि-
ताम् त्रिंशच्छतसहस्राणिदेवलोकेप्रतिष्ठितम् ४९

एवंप्रातःसंध्यायांरात्रिकृतमित्यर्थः ४२ ४३ निरुक्तंनामनिर्वचनं ४४ धर्मेचेतिचकारश्चतुष्टयादधर्मादि
चतुष्टयमप्यत्रोक्तंहानार्थमितिबोध्यं ४५ ४६ ४७ अनागतोनागंतुकोनित्यसिद्धइतियावत् एवंविधोयोमोक्षःकैवल्यंतदेवस्वरूपंयस्यसमोक्षःयद्वामोक्तुमिच्छन्मु 
मुचोकर्मकस्यगुणोवेतिसनिर्गुणोऽभ्यासलोपश्चमुमुक्षुरित्यर्थः लोकहितइतिभावः ४८ अन्यांवेदचतुष्टयसंहिताभ्यःपृथग्भूतांतदर्थवतीम् ४९ ७ ७

५० ५१ श्रूयते येन यः शृणोतीत्यर्थः उभयत्र विभक्तिव्यत्यय आर्षः ५२ ५३ भारताध्ययनादिति सार्धश्लोकः यः व्यासः इमां संहितां शुकं पुत्रं अध्यापयत् य-
स्य अधीयतो भारताख्यमितिहासं स्मरतः स्मृत्वा च ग्रंथरूपेण प्रणयतः भक्त्या परया श्रद्धया व्यास एव पूज्यस्तस्य वाक्यं प्रमाणमेवेत्यास्तिक्यबुद्ध्या येन पुंसा इदं श्रा-

पित्र्ये पंचदश ज्ञेयं यक्षलोके चतुर्दश एकं शतसहस्रं तु मानुषेषु प्रभाषितम् ५० नारदोऽश्रावयद्देवानसितो देवलः पितॄन् रक्षोयक्षा-
ञ्छुको मर्त्यान्वैशंपायन एव तु ५१ इतिहासमिमं पुण्यं महार्थं वेदसंमितम् व्यासोक्तं श्रूयते येन कृत्वा ब्राह्मणमग्रतः ५२ स नरः सर्व-
कामांश्च कीर्तिं प्राप्येह शौनक गच्छेत्परमिकां सिद्धिमत्र मे नास्ति संशयः ५३ भारताध्ययनात्पुण्यादपि पादमधीयतः श्रद्धया परया भ-
क्त्या श्राव्यते चापि येन तु य इमां संहितां पुण्यां पुत्रमध्यापयच्छुकम् ५४ मातापितृसहस्राणि पुत्रदारशतानि च संसारेष्वनुभूतानि यांति
यास्यंति चापरे ५५ हर्षस्थानसहस्राणि भयस्थानशतानि च दिवसे दिवसे मूढमाविशंति न पंडितम् ५६ ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृ-
णोति मे धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ५७ न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः नित्यो धर्मः सुखदुःखे त्व-
नित्ये जीवो नित्यो हेतुरस्य त्वनित्यः ५८ इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ५९ यथा समु-
द्रो भगवान्यथा च हिमवान्गिरिः ख्यातावुभौ रत्ननिधी तथा भारतमुच्यते ६० इदं भारतमाख्यानं यः पठेत्सुसमाहितः स गच्छेत्परमां
सिद्धिमिति मे नास्ति संशयः ६१ द्वैपायनोष्ठपुटनिःसृतमप्रमेयं पुण्यं पवित्रमथ पापहरं शिवं च यो भारतं समधिगच्छति वाच्यमानं किं तस्य
पुष्करजलैरभिषेचनेन ६२ इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्वर्गारोहणपर्वणि पंचमोऽध्यायः ५
जनमेजय उवाच भगवन्केन विधिना श्रोतव्यं भारतं बुधैः फलं किं के च देवाश्च पूज्या वै पारणेऽपि ह १ देयं समाप्ते भगवन्किं च पर्वणि
पर्वणि वाचकः कीदृशश्चात्र एष्टव्यस्तद्ब्रवीहि मे २ वैशंपायन उवाच शृणु राजन्विधिमिमं फलं यच्चापि भारत श्रुताद्भारत राजेंद्र
यत्त्वं मामनुपृच्छसि ३ दिवि देवा महीपाल क्रीडार्थमवनिं गताः कृत्वा कार्यमिदं चैव ततश्च दिवमागताः ४

व्यंतं स पुण्यवान् पुण्यकृत् अपि पादं
श्लोकपादं ग्रंथ पादं वा भारतस्याध्ययनात् परमिकां सिद्धिं गच्छेदिति पूर्वेणान्वयः व्यासेन ह्यं बध्वा भारतं पठनीयमित्यर्थः ५४ संध्यायां भारतं पठनीय-
मित्युक्तम् तत्र पठनयोग्यं भारतसारसंग्रहं च तु श्लोकीरूपमाह मातेति ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ इति स्वर्गारोहणपर्वणि टीकायां
पंचमोऽध्यायः ५ ६ ६ १ २ ३ ४ ६ ६ ६ ६ ६ ६ ६

आदित्यावश्विनौदेवौलोकपालामहर्षयः गुह्यकाश्चसगंधर्वानागाविद्याधरास्तथा ५ सिद्धाधर्मःस्वयंभूश्चमुनिःकात्यायनोवरः गिर-
यःसागरानद्यस्तथैवाप्सरसांगणाः ६ ग्रहाःसंवत्सराश्चैव अयनान्यृतवस्तथा स्थावरंजंगमंचैवजगत्सर्वंसुरासुरम् ७ भारतेभरतश्रेष्ठ
एकस्थमिहदृश्यते तेषांश्रुत्वाप्रतिष्ठानंनामकर्मानुकीर्तनात् ८ कृत्वापिपातकंघोरंसद्योमुच्येतमानवः इतिहासमिमंश्रुत्वायथावदनुपूर्व
शः ९ संयतात्मासुचिर्भूत्वापारंगत्वाचभारते तेषांश्राद्धानिदेयानिश्रुत्वाभारतभारतम् १० ब्राह्मणेभ्योयथाशक्त्याभक्त्याचभरतर्षभ महादा
नानिदेयानिरत्नानिविविधानिच ११ गावःकांस्योपदोहाश्चकन्याश्चैवस्वलंकृताः सर्वकामगुणोपेतापानानिविविधानिच १२ भवनानिवि
चित्राणिभूमिर्वासांसिकांचनम् वाहनानिचदेयानिहयामत्ताश्चवारणाः १३ शयनंशिबिकाश्चैवस्यंदनाश्चस्वलंकृताः यद्यद्गृहेवरंकिंचि
द्यदस्तिमहिमहत्सु १४ तत्तद्देयंद्विजातिभ्य आत्मादाराश्चसूनवः श्रद्धयापरयादत्तंक्रमशस्तस्यपारगः १५ शक्तितःसुमनाहृष्टःशुश्रूषुर-
विकल्पकः सत्यार्जवरतोदांतःशुचिःशौचसमन्वितः १६ श्रद्दधानोजितक्रोधोयथासिध्यतितच्छृणु शुचिःशीलान्विताचारःशुक्लवा-
साजितेंद्रियः १७ संस्कृतःसर्वशास्त्रज्ञःश्रद्दधानोनसूयकः रूपवान्सुभगोदांतःसत्यवादीजितेंद्रियः १८ दानमानगृहीतश्चका
र्योभवतिवाचकः अविलंबमनायस्तमद्रुतंधीरमूर्जितम् १९ असंसक्ताक्षरपदंस्वरभावसमन्वितम् त्रिषष्टिवर्णसंयुक्तमष्टस्थानसमी
रितम् वाचयेद्वाचकःस्वस्थःस्वासीनःसुसमाहितः २० नारायणंनमस्कृत्यनरंचैवनरोत्तमम् देवींसरस्वतींचैवततोजयमुदीरयेत्
२१ ईदृशाद्वाचकाद्राजन्श्रुत्वाभारतभारतम् नियमस्थःशुचिःश्रोताशृण्वन्सफलमश्नुते २२ पारणंप्रथमंप्राप्य द्विजान्कामैश्चत
र्पयेत् अग्निष्टोमस्ययज्ञस्यफलंवैलभतेनरः २३ अप्सरोगणसंकीर्णंविमानंलभतेमहत् प्रहृष्टःसतुदेवैश्चदिव्ययातिसमाहि
तः २४ द्वितीयंपारणंप्राप्यसोतिरात्रफलंलभेत् सर्वरत्नमयंदिव्यंविमानमधिरोहति २५ दिव्यमाल्यांबरधरोदिव्यगंधविभूषितः
दिव्यांगदधरोनित्यंदेवलोकेमहीयते २६ तृतीयंपारणंप्राप्यद्वादशाहफलंलभेत् वसत्यमरसंकाशोवर्षाण्ययुतशोदिवि २७ चतु
र्थेवाजपेयस्यपंचमेद्विगुणंफलम् उदितादित्यसंकाशंज्वलंतमनलोपमं २८ विमानंविबुधैःसार्धमारुह्यदिविगच्छति वर्षायुतानि
भवनेशक्रस्यदिविमोदते २९ षष्ठेद्विगुणमस्तीतिसप्तमेत्रिगुणंफलम् कैलासशिखराकारंवैडूर्यमणिवेदिकम् ३०

३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३

परिक्षिप्तंच बहुधा मणिविद्रुमभूषितम् विमानं समधिष्ठाय कामगं साप्सरोगणम् ३१ सर्वाल्लोकाननुविचरते द्वितीय इव भास्करः अष्टमे रा
जसूयस्य पारणे लभते फलम् ३२ चंद्रोदयनिभं रम्यं विमानमभिरोहति चंद्ररश्मिप्रतीकाशैर्हयैर्युक्तं मनोजवैः ३३ सेव्यमानो वरस्त्रीणां
चंद्रात्कांततरैर्मुखैः मेखलानां निनादेन नूपुराणां च निःस्वनैः ३४ अंके परमनारीणां सुखसुप्तो विबुध्यते नवमे क्रतुराजस्य वाजिमेधस्य भा
रत ३५ कांचनस्तंभनिर्व्यूहं वैडूर्यकृतवेदिकम् जांबूनदमयैर्दिव्यैर्गवाक्षैः सर्वतोवृतम् ३६ सेवितं चाप्सरःसंघैर्गंधर्वैर्दिविचारिभिः विमा
नं समधिष्ठाय श्रिया परमया ज्वलन् ३७ दिव्यमाल्यांबरधरो दिव्यचंदनभूषितः मोदते दैवतैः सार्द्धं दिवि देव इवापरः ३८ दशमं पारणं प्राप्य
द्विजातीनभिवंद्य च किंकिणीजालनिर्घोषपताकाध्वजशोभितम् ३९ रत्नवेदिकसंबाधं वैडूर्यमणितोरणम् हेमजालपरिक्षिप्तं प्रवालवल
भीमुखम् ४० गंधर्वैर्गीतकुशलैरप्सरोभिश्च शोभितम् विमानं सुकृतावासं सुखेनैवोपपद्यते ४१ मुकुटेनाग्निवर्णेन जांबूनदविभूषिणा
दिव्यचंदनदिग्धांगो दिव्यमाल्यविभूषितः ४२ दिव्यान्लोकान्विचरति दिव्यैर्भोगैः समन्वितः विबुधानां प्रसादेन श्रिया परमया युतः ४३
अथ वर्षगणानेवं स्वर्गलोके महीयते अयं गंधर्वसहितः सहस्राण्येकविंशतिम् ४४ पुरंदरपुरे रम्ये शक्रेण सह मोदते दिव्ययानविमानेषु
लोकेषु विविधेषु च ४५ दिव्यनारीगणाकीर्णो निवसत्यमरो यथा ततः सूर्यस्य भवने चंद्रस्य भवने तथा ४६ शिवस्य भवने राजन् विष्णोर्या
ति सलोकताम् एवमेतन्महाराज नात्र कार्या विचारणा ४७ श्रद्धानेन वै भाव्यमेवमाह गुरुर्मम वाचकस्य तु दातव्यं मनसा यद्यदिच्छति ४८
हस्त्यश्वरथयानानि वाहनानि विशेषतः कटकं कुंडले चैव ब्रह्मसूत्रं तथापरम् ४९ वस्त्रं चैव विचित्रं च गंधं चैव विशेषतः देववत्पूजयेत्त
तु विष्णुलोकमवाप्नुयात् ५० अतः परं प्रवक्ष्यामि यानि देयानि भारते वाच्यमाने तु विप्रेभ्यो राजन्पर्वणि पर्वणि ५१ जातिं देशं च सत्यं
च माहात्म्यं भरतर्षभ धर्मवृत्तिं च विज्ञाय क्षत्रियाणां नराधिप ५२ स्वस्ति वाच्य द्विजानादौ ततः कार्यं प्रवर्तितं समाप्ते पर्वणि ततः स्वश-
क्त्या पूजयेद्द्विजान् ५३ आदौ तु वाचकं चैव वस्त्रगंधसमन्वितम् विधिवद्भोजयेद्राजन्मधुपायसमुत्तमम् ५४

४४ ४५ ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ [illegible] [illegible] [illegible] [illegible]

ततोमूलफलप्रायंपायसंमधुसर्पिषा आस्तिकेभोजयेद्राजन्दद्याच्चैवगुडोदनम् ५५ अपूपैश्चैवपूपैश्चमोदकैश्चसमन्वितम्
सभापर्वणिराजेंद्रहविष्यंभोजयेद्द्विजान् ५६ आरण्यकेमूलमूलैस्तर्पयेत्तुद्विजोत्तमान् अरणीपर्वआसाद्यजलकुंभान्प्रदापयेत्
५७ तर्पणानिचमुख्यानिवन्यमूलफलानिच सर्वकामगुणोपेतंविप्रेभ्योन्नंप्रदापयेत् ५८ विराटपर्वणितथावासांसिविविधानिच
उद्योगेभरतश्रेष्ठसर्वकामगुणान्वितम् ५९ भोजनंभोजयेद्विप्रान्गंधमाल्यैरलंकृतान् भीष्मपर्वणिराजेंद्रदत्वायानमनुत्तमम्
६० ततःसर्वगुणोपेतमन्नंदद्यात्सुसंस्कृतम् द्रोणपर्वणिविप्रेभ्योभोजनंपरमार्चितम् ६१ शय्याश्चदेयाराजेंद्रचापान्यसिवरास्तथा
कर्णपर्वण्यपितथाभोजनंसार्वकामिकम् ६२ विप्रेभ्यःसंस्कृतंसम्यक्दद्यात्संयतमानसः शल्यपर्वणिराजेंद्रमोदकैःसगुडोदनैः ६३ अ
पूपैस्तर्पणैश्चैवसर्वमन्नंप्रदापयेत् गदापर्वण्यपितथासुद्गमिश्रंप्रदापयेत् ६४ स्त्रीपर्वणितथारत्नैस्तर्पयेत्तुद्विजोत्तमान् घृतोदनंपु
रस्ताच्चऐषीकेदापयेत्पुनः ६५ ततःसर्वगुणोपेतमन्नंदद्यात्सुसंस्कृतम् शांतिपर्वण्यपितथाहविष्यंभोजयेद्द्विजान् ६६ आश्वमेधि-
कमासाद्यभोजनंसार्वकामिकम् तथाश्रमनिवासेतुहविष्यंभोजयेद्द्विजान् ६७ मौसलेसार्वगुणिकंगंधमाल्यानुलेपनम् महाप्र
स्थानिकेतद्वत्सर्वकामगुणान्वितम् ६८ स्वर्गपर्वण्यपितथाहविष्यंभोजयेद्द्विजान् हरिवंशसमाप्तौतुसहस्रंभोजयेद्द्विजान् ६९ गा
मेकांनिष्कसंयुक्तांब्राह्मणायनिवेदयेत् तदर्धेनापिदातव्यादरिद्रेणापिपार्थिव ७० प्रतिपर्वसमाप्तौतुपुस्तकंवैविचक्षणः सुवर्णेन-
चसंयुक्तंवाचकायनिवेदयेत् ७१ हरिवंशेपर्वणिचपायसंतत्रभोजयेत् पारणेपारणेराजन्यथावद्भरतर्षभ समाप्यसर्वाःप्रयतःसं
हिताःशास्त्रकोविदः शुभेदेशेनिवेश्याथक्षौमवस्त्राभिसंवृतः शुक्लांबरधरःस्रग्वीशुचिर्भूत्वास्वलंकृतः अर्चयेतयथान्यायंगंधमाल्यैः
पृथक्पृथक् संहितापुस्तकान्राजन्प्रयतःसुसमाहितः ७२ भक्ष्यैर्मांसैश्चपेयैश्चकामैश्चविविधैःशुभैः हिरण्यंचसुवर्णंचदक्षिणामथदा
पयेत् ७३ देवताःकीर्तयेत्सर्वानरनारायणौतथा ततोगंधैश्चमाल्यैश्चस्वलंकृत्यद्विजोत्तमान् ७४ तर्पयेद्विविधैःकामैर्दानैश्चोच्चावचैस्त
था अतिरात्रस्ययज्ञस्यफलंप्राप्नोतिमानवः ७५

प्राप्नुयाच्चक्रतुफलंतथापर्वणिपर्वणि वाचकोभरतश्रेष्ठव्यक्ताक्षरपदस्वरः ७६ भविष्यंश्रावयेद्विद्वान्भारतंभरतर्षभ भुक्तवत्सुद्वि
जेंद्रेषुयथावत्संप्रदापयेत् ७७ वाचकंभरतश्रेष्ठभोजयित्वास्वलंकृतम् वाचकेपरितुष्टेतुशुभाप्रीतिरनुत्तमा ब्राह्मणेषुतुतुष्टेषुप्रसन्नाः
सर्वदेवताः ७८ ततोहिवरणंकार्यंद्विजानांभरतर्षभ सर्वकामैर्यथान्यायंसाधुभिश्चपृथग्विधैः ७९ इत्येषविधिरुद्दिष्टोमयातेद्विपदां-
वर श्रद्दधानेनवैभाव्यंयन्मांत्वंपरिपृच्छसि ८० भारतश्रवणेराजन्पारणेचनृपोत्तम सदायत्नवताभाव्यंश्रेयस्तुपरमिच्छता ८१ भा
रतंशृणुयान्नित्यंभारतंपरिकीर्तयेत् भारतंभवनेयस्यतस्यहस्तगतोजयः ८२ भारतंपरमंपुण्यंभारतेविविधाःकथाः भारतंसेव्यतेदे
वैर्भारतंपरमंपदम् ८३ भारतंसर्वशास्त्राणामुत्तमंभरतर्षभ भारतात्प्राप्यतेमोक्षस्तत्त्वमेतद्ब्रवीमिते ८४ महाभारतमाख्यानंक्षि
तिंगांचसरस्वतीम् ब्राह्मणान्केशवंचैवकीर्तयन्नावसीदति ८५ वेदेरामायणेपुण्येभारतेभरतर्षभ आदौचान्तेचमध्येचहरिःसर्वत्र
गीयते ८६ यत्रविष्णुकथादिव्याःश्रुतयश्चसनातनाः तच्छ्रोतव्यंमनुष्येणपरंपदमिहेच्छता ८७ एतत्पवित्रंपरममेतद्धर्मनिदर्शनम् ए
तत्सर्वगुणोपेतंश्रोतव्यंभूतिमिच्छता ८८ कायिकंवाचिकंचैवमनसासमुपार्जितम् तत्सर्वंनाशमायातितमःसूर्योदयेयथा ८९ अष्टाद
शपुराणानांश्रवणाद्यत्फलंभवेत् तत्फलंसमवाप्नोतिवैष्णवोनात्रसंशयः ९० स्त्रियश्चपुरुषाश्चैववैष्णवंपदमाप्नुयुः स्त्रीभिश्चपुत्रका
माभिःश्रोतव्यंवैष्णवंयशः ९१ दक्षिणाचात्रदेयावैनिष्कपंचसुवर्णकम् वाचकाययथाशक्त्यायथोक्तफलमिच्छता ९२ स्वर्णशृंगींचकपि
लांसवत्सांवस्त्रसंस्कृताम् वाचकायचदद्याद्धिआत्मनःश्रेयमिच्छता ९३ अलंकारंप्रदद्याच्चपाण्योर्वैभरतर्षभ कर्णस्याभरणंदद्याद्ध
नंचैवविशेषतः ९४ भूमिदानंसमाद्याद्वाचकायनराधिप भूमिदानसमंदानंनभूतंनभविष्यति ९५ शृणोतिश्रावयेद्वापिसततंचैवयो
नरः सर्वपापविनिर्मुक्तोवैष्णवंपदमाप्नुयात् ९६ पितॄनुद्धरतेसर्वानेकादशसमुद्भवान् आत्मानंससुतंचैवस्त्रियंचभरतर्षभ ९७ दशां
शश्चैवहोमोपिकर्त्तव्योत्रनराधिप इदंमयातवाग्रेचप्रोक्तंसर्वंनरर्षभ ९८ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यां
स्वर्गारोहणपर्वणिसर्वपर्वानुकीर्त्तननामषष्ठोऽध्यायः ६ श्रीकृष्णार्पणमस्तु शुभंभवतु ॥ ॥

इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरव
शावतंसश्रीगोविंदसूरिसूनोर्नीलकंठस्यकृतौभारतभावदीपेस्वर्गारोहणपर्वार्थप्रकाशेसमाप्तइतिषष्ठोऽध्यायः ६ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

श्रीवर्द्धने निवसता दधता ह्युपाह्वां हेगिष्ट इत्यनितरां स्वशिलाक्षयंत्रे आपूसदाशिव इति प्रथितेन नाम्ना श्रीमन्महाभारतमंकितं किल १ अधुना मुंबा
पुर्यां प्रथितं तस्येदमत्र यंत्रवरम् एतस्मात्खलु जनितं विद्वन्मोदाय मस्कशिवदंतत् २ एतद्धि शोधनपटुः प्रथमः सुशीलः कर्वेकुकरोपाभिधबालकृष्णः
राजापुराख्येन गरे निवासी ह्यासीत्सदायं शिवभक्तितत्परः ३ तदन्वितः कृष्णशर्मा ससर्षिनगर स्थितः गुर्जरोपाभिधश्चास्ति तेनापीदं विशोधितं ४ बा
पूनाम्ना च विदुषा शास्त्रिणा रामशर्मणा गुर्जरोपाभिधानेन विद्वज्जनसुशालिना ५ घंटोपाह्वाभिधानेन गोपालेनापि मार्जितम् गोविंदशर्मणा तद्व
कुंतापुरनिवासिना ६ एतैरपीदं कतिचिद्भागशः शोधितं त्विदम् यथामतिविवेकेन रसज्ञानां मुदे स्तु तत् ७ सर्वैर्विशोधिते चापि यत्किंचिदवशिष्यते
श्रीमद्भिः सूरिभिस्तत्र क्षंतव्यं साधुशीलिभिः ८ वेदाष्टसप्तेंदुमिते शाके सुंबाख्यपत्तने शुचौ शुक्लद्वितीयायां रवौ पुष्ये समापितम् ९

शाके १७८४ दुंदुभिनामसंवत्सरे आषाढेमासे शुक्लपक्षे द्वितीयायां तिथौ रविवासरे पुष्यनक्षत्रे तद्दिने ग्रंथः समाप्तः 

इतिश्रीमन्महाभारतंनीलकंठकृतटीकासहितंसमाप्तिमगमत्